वक्ष्यमाणलक्षणः । **अपि** शब्दः प्रत्येकमभिसम्बध्यते । **धर्मोऽपि**, अपि शब्दात् **पक्षधर्मोऽपि अयं शब्दे** सत्त्वादिः शकटोदये[२] कृत्तिकोदयः प्रत्यक्षप्रतीयमानो **हेतुतां** गमकत्वमेवेति (कत्वम् एति) तथा **तदंशेन व्याप्तोऽपि** । अत्रापि अपिशब्दात् तेनाव्याप्तोऽपि ताम् एति । त[द्दे]-शोदाहरणम्–अनित्यः शब्दः सत्त्वात् घटवत् श्रावणत्वाद्वा इति । तदंशपदम् अत्रैव वृत्तौ निरूप-
५ यिष्यते । [३००ख] किंभूतस्ताम् एति ? इत्यत्राह–**अन्यथा** साध्याभावप्रकारेण **अनुप-पन्नः** । किं सर्वोऽपि स तथाविधः तामेति ? **न**; इत्याह–**लक्ष्यते** निश्चीयते । **अन्यथानु-पपन्नोऽयं चेत्** यदि । केन ? इत्याह–**तर्केण** । अस्यानभ्युपगमे दोषमाह–**न चेदम्(चेत्)** अन्यथानुपपन्नो न हेतुतामेति, अन्यथा स श्यामः तत्पुत्रत्वात् इत्यादिरपि आगच्छेत । तथा परमार्थतोऽन्यथानुपपन्नोऽपि **न चेत् तर्केण अन्यथानुपपन्नोऽयम् इति न लक्ष्यते हेतु-**
१० **ताम् एति** इतरथा कचिद् धूमदर्शनात् नालिकेरद्वीपादागतस्य अग्निप्रतिपत्तिः स्यात् । अथवा तर्केण लक्ष्यते चेद् अन्यथानुपपन्नोऽयं नैनु हेतुतामेति किन्तु एत्येवेति ।

कारिकां व्याचष्टे **स्वार्थ** इत्यादिना । **स्वार्थं** यद् **अनुमानं** तत्र **धर्मी पक्षः** । किंभूतः ? **जिज्ञासितविशेषः** । परस्मै पदार्थं **(परार्थं)** यद् **अनुमानं** तत्र **पुनः** इति पक्षान्तरसूचने **जिज्ञा-पयिषितविशेषो धर्मी** 'पक्षः' इत्यनुवर्तते । कुत एतत् ? इत्यत्राह–**स्वनिश्चयं चेद् (यत्)**
१५ इत्यादि । **इव (स्व)** इत्यनेन प्रतिपादकः परामृश्यते । तस्य निश्चयः अनुमेयप्रतिपत्तिः तेन तुल्यं वर्तते इति **तद्वद् अन्येषां** प्रतिपाद्यानाम् **निश्चयोत्पादनाय** अनुमेयप्रतीतिजननाय **पक्ष-परिग्रहात्** प्रतिपादकस्य कारणात् **जिज्ञापयिषितविशेषः** स इत्युच्यते । यत्र हि परं प्रति असिद्धो धर्मः प्रतिपादयितुमिष्टो भवति स एव तथोच्यते ।

ननु स्वनिश्चयवदन्येषां निश्चयोत्पादनाय पक्षपरिग्रहेऽपि यदि प्रतिपाद्याभिमतस्य तत्र
२० धर्मजिज्ञासा नास्ति [३०१ क] कथमसौ जिज्ञापयिषितविशेषः ? तत्र विशेषं ज्ञातुम् इच्छन्तं प्रतिपादयितुमिष्टविशेषः जिज्ञापयिषितविशेष इत्युच्यते इति चेत् ; अत्राह–**सत्यां च** इत्यादि । सत्यामेव **परस्य** प्रतिपाद्यस्य **जिज्ञासायां** जिज्ञापयिषितविशेषो धर्मी पक्ष उच्यते ।

ननु तत्र तस्य यदि जिज्ञासा [स्या]त्तर्हि यथा स्वार्थे अनुमाने[४]तद्वत एव पक्षव्यपदेशः तथा परार्थेऽपि परस्य तद्वतः[५] तद्व्यपदेश इति तद्गुणदोषाभ्यां [६]परस्यैव सम्बन्धो न प्रति-
२५ पादकस्येति चेत् ; अत्राह–**वक्त्रभिप्रायस्यैव** इत्यादि । **'सत्यां च'** इत्यादि अनुवर्तते । ततोऽ-यमर्थः–सत्यामपि परस्य जिज्ञासायां **तत्** अप्रतीतार्थं **प्रतिपादयिषोः** प्रतिपादकस्य इत्यर्थः । पक्षेण व्यपदेशः **पक्षव्यपदेशः** तस्य स पक्ष इति यावत् नेतरस्य । कुतः ? इत्यत्राह–**वक्तुः** प्रतिपादकस्य योऽ**भिप्रायः** तदप्रतीतार्थप्रतिपादनाभिसन्धिः **तस्यैव** न इतराभिप्रायस्य **प्रत्यासत्तेः** कारणात् । तथाहि–प्रथमं परस्य तत्त्वबुभुत्सा तदनन्तरं तन्निवेदनं पुनः प्रतिपादकस्य तत्प्रति-
३० पादनाभिप्रायः पक्षपरिग्रहश्च इति पक्षपरिग्रहं प्रति वक्त्रभिप्रायस्य प्रत्यासत्तिः । [उभ]यत्र [७]साधितं निदर्शनमाह–**परार्थव्यपदेशवद्** इति ।

(१) शब्दानित्यत्वे साध्ये । (२) साध्ये । (३) 'ननु' इति वितर्के । (४) जिज्ञासावतः । (५) जिज्ञासावतः । (६) प्रतिपाद्यस्यैव । (७) प्रसिद्धमित्यर्थः ।

एवं पक्षस्य लक्षणं प्रतिपाद्य प्रयोगं दर्शयन्नाह–तादृशस्य उक्तरूपस्य पक्षस्य धर्मः तदाश्रितत्वात्। अत्र पूर्वापरावधारणनियमचिन्ता न कृता उभयत्रापि दोषाभावस्य निरूपयिष्यमाणत्वात्। 'हेतुः' इति सम्बन्धः। किंभूतः ? व्याप्तः इति। तत्र व्याप्तियोगाद् [३०१ ख] व्याप्त उच्यते। व्याप्तिश्च व्याप्यव्यापकोभयगता[1]। व्याप्यगता तत्रैव[2] तत्र (तस्य[3]) भावः, व्यापकगता तत्र[4] भाव एव[5] व्यापकस्य इति। केन ? इत्याह–तदे दंशेन (तदंशेन) तच्छब्देन ५ [पक्षः] परामृश्यते। यद्यपि च शाब्द्या वृत्त्या[6] [7]पक्षस्य धर्मविशेषणतया अप्राधान्यं तथापि आर्थन्यायानुसारि तस्य[8] प्राधान्यं [9]तदाश्रितत्वाद् धर्मस्य इति। तस्य अंशेन अवयवेन। [10]अनेन सर्वेण पक्षधर्म-[11]अन्वय-[12]व्यतिरेकलक्षणं रूपत्रयमस्य दर्शयति। किंभूतस्य ? इत्यत्राह–निरुपचरितस्य मुख्यस्य इत्यर्थः।

तदंशपदं व्याचष्टे–तस्य पक्षस्य अंशः तदंशः। अंशपर्यायम् आह–तद्धर्मः। पुनरपि १० तदन्तरमाह–तदेकदेश इति।

ननु यदि धर्मः; न तद्देशः (तदंशः[13]) तदवयवः। [14]स चेत्; न [15]तद्धर्मः। [तद्धर्मश्च] तदेकदेशश्च इति परस्परविरुद्धमेतत्, [16]तयोर्भेदात्। अत एव धर्मकीर्तिना [17]उक्तम्–*"तद्धर्मो न तदेकदेशः" [हेतुबि० टी० पृ० १७] इति चेत्; नैतत्सारम्; धर्मैकदेशयोः भेदाभावाभिप्रायेण एवं वचनात्। भेदाऽभेदात्मके हि ज्ञेये भेदाः कदाचिद् धर्मशब्देन कदाचिद् अंशशब्देन १५ कदाचिद् एकदेशशब्देन भेदशब्देन पर्यायशब्देन अनेन बोध्यन्ते (अन्येन बोध्यन्ते), तदात्मके ज्ञेय इति द्रव्यपर्यायात्माऽर्थः इति वस्तुभूतां (त)धर्माधिष्ठानं भावः इत्यादि व्यवहारदर्शनात्। [18]कीर्तिः पुनः *"कोऽन्यो न दृष्टो भागः स्यात्" [प्र०वा० ३।४४] इति *"दृष्ट एव अखिलो गुणः" [प्र०वा० ३।४२] इति *"धर्मधर्मितया" [प्र०वा०स्ववृ०पृ०२४] इति[19] च वदन्नेव धर्मैकदेशयोः भेदं स्ववचनविरुद्धं वदन्तीति (वदतीति) दर्शयितुमिदमुक्तम्–तद्धर्मः तदेकदेश इति। २० समुदायपक्षैकदेशस्य [३०२ क] उपचरितप्रदेशस्य धर्मिण एकदेश इति चेत्; अत्राह–पक्षशब्देन समुदायवचनात्। निरूपितमेतत्।

एवं तावत् परप्रतिपाद्ये सति मुख्ये किं गौणकल्पनया इति [20]वार्तिक-हे[21]तु बिन्दु शास्त्रे उपचरितं [22]परोपचरितं परोपदर्शितं पक्षं दूषयितुम् उपदर्शयन्नाह–पक्षो धर्मी इत्यादि।

---

(१) "व्याप्तिर्हि व्यापकस्य तत्र भाव एव, व्याप्यस्य वा तत्रैव भावः।"–हेतुबि० पृ० ५३। (२) व्यापके साध्ये सत्येव, न तु व्यापकाभावे। (३) व्याप्यस्य। (४) व्याप्ये सति। (५) सद्भाव एव न तु कदाचिदप्यभाव इति। (६) व्याकरणानुसारिसमासेन। (७) 'पक्षधर्म' इत्यत्र। (८) पक्षस्य। (९) पक्षाश्रितत्वात्। (१०)"एतेन अन्वयो व्यतिरेको वा पक्षधर्मश्च यथास्वं प्रमाणेन निश्चित उक्तः।"–हेतुबि० पृ० ५३। (११) सपक्षसत्त्वम्। (१२) असपक्षेऽसत्त्वम्, विपक्षाद्व्यावृत्तिरित्यर्थः। (१३) न तदंशपदस्य 'तदवयवः' इत्यर्थः स्यात्। (१४) यदि तदंशपदेन अवयवः परिगृह्यते तर्हि। (१५) स अवयवः तद्धर्मपदेन न वक्तुं शक्यते इत्यर्थः। (१६) धर्म-अवयवयोः। (१७) तुलना–"तच्छब्देन पक्षः परामृश्यते न धर्मः। धर्मस्य धर्मासंभवात्। अंशश्च धर्मो नैकदेशः। [पक्षशब्देन धर्मिमात्रवचनात् न तदंशः तस्य एक] देशाभावादिति।"–हेतुबि० टी० पृ० १७। (१८) धर्मकीर्तिः। (१९) "धर्मधर्मितया भेदो बुद्ध्याकारकृतः।"–प्र० वा० स्ववृ०। (२०) प्रमाणवा० स्ववृ० पृ० १२। (२१) "पक्षो धर्मी अवयवे समुदायोपचारात्"–हेतुबि० पृ० ५२। (२२) 'परोपचरितं' इति द्विर्लिखितम्।

पक्षो धर्मी इत्येवम् उपचारे धर्मधर्मिसमुदायं (ये) वा अविनाभावतः पक्षधर्मस्य तदेकदेशे धर्मिणि एकदेशाभावेन परमार्थतोऽध्यारोपे अङ्गीक्रियमाणे । किम् ? इत्याह–तद् इत्यादि । स साध्यो धर्मो यस्य तस्य भावः तद्धर्मता सापि न सिद्धा इति । 'धर्मिणः' इति [ता[1]] विभक्तिपरिणामेन सम्बन्धः । अपिशब्दात् न केवलं तदेकदेशता न सिध्यति । यथैव हि निरंशस्य धर्मिणो न एक-
५ देशसंभवः स्वयं समुदायप्रसङ्गात् तथा [न] तद्धर्मस्यापि संभवः, धर्मधर्मिरूपसमुदायप्राप्तेरनिवारणात् । कथमन्यथा *"प्रयोगकाले धर्मधर्मिसमुदायः पक्षः" इत्युच्यते[2] इति मन्यते ।

ननु धर्मदेकदे (धर्मः तदेकदेशः) कथमुच्यते न केवलं तदेकदेशता अपि तु तद्धर्मता न सिध्येदिति ; सत्यम् ; नैवं वक्तव्यं परापेक्षया तूक्तम् । सत्यम् एकदेशवत् तत्र [3]वस्तुनो धर्मोऽपि न संभवति, साधयितुं तत्रेष्टि (ष्टम्) इति चेत् ; अत्राह–नहि इत्यादि । नेत्र (न) खलु
१० तत्र निरंशे धर्मिणि साधयितुम् इष्टः तद्धर्मः तस्य धर्मिणो धर्मः । नहि पुरुषेच्छावशाद् भावोऽन्यथा भवति, तदेकदेशता अन्यथा अस्तु इति मन्यते । दूषणान्तरं दर्शयन्नाह–तथा च इत्यादि । तथा तेन 'तत्र साधयितुम् इष्टः तद्धर्मः' इत्यनेन च प्रकारेण सर्वो नीलादिः अर्थः सर्वधर्मा सर्वः [३०२ ख] पीतत्वादिको धर्मो यस्य इति स तद्धर्मा स्यात् इति ।

ननु यथा शब्दे नित्यत्वं साधयितुं जनो वाञ्छति नैवं नीलादौ पीतत्वादिकम्, अतोऽयम-
१५ दोषः इति चेत् ; निरङ्कुशत्वात् निवारकाभावात् । कस्याः ? इत्याह–इच्छायाः 'काककोकिलकुलादिकं पीतं सत्त्वात् कनकवत्' इति साधयतो निवारकाभावात् ।

ननु पक्षबाधकं तर्ह्यैः, यत्र तु तन्नास्ति तत्र साधयितुम् इष्टः तद्धर्मः इति चेत् ; अत्राह–तदनिराकृतौ तस्य साधयितुम् इष्टस्य धर्मस्य प्रत्यक्षादिनाऽनिराकृतौ अनिराकरणे 'साधयितुम् इष्टः तद्धर्मः' इत्यङ्गीक्रियमाणायां सन्देहः स्यात् 'तदनिराकृतौ' इति सम्बन्धः । एवं
२० मन्यते–'अनित्यः शब्दः सत्त्वात् घटवत्' इत्यादावपि तदिच्छाकाल एव नहि तदनिराकृतिः अवसीयते, अनवसितत्वे न लक्षणमिति । तदसन्देहे दूषणमाह–अन्यथा अन्येन तदनिराकृतसन्देहप्रकारेण हेतुवचनानर्थक्यात् हेतोः सन्देहः स्यात् इति पदघटनात् । तथाहि–तत्र धर्मिणि साध्यविनिश्चयात् तदनिराकृतिनिश्चये न सन्देहनिवृत्तिः हेतूपन्यासाच्च प्रागेव तद्विनिश्चये किं [6]तेनेति ?

२५ स्यान्मतम्–न साध्यविनिश्चयात् तत्सन्देहविनिवृत्तिः, विनिश्चयोऽपि त (न) तत्र प्रतिबद्धलिङ्गदर्शनादिति; तन्न सारम्; यत एवं वै परमार्थतः तद्धर्मः, इतरथा न तत्प्रतिबद्धलिङ्गस्य तत्र दर्शनम् । न च निरंशे तदुपपन्नम्, न पुनः साधयितुम् इष्ट एव तद्धर्मः । न वै सधूमः प्रदेशः स्या (सा) ग्निमनिच्छन्तं प्रत्य [न्य]था भवतीछन्नं (ति, इच्छन्तं) प्रति साग्निर्भवति इति न्यायोऽस्ति । न च निरंशं नाम [३०३क] किंवा न (किंचन[7] इति) निरूपितं निरूपयिष्यते चात्रैव ।

---

(१) षष्ठी । (२) "तत्र हेतुलक्षणे निश्चेतव्ये धर्मी अनुमेयः, अन्यत्र तु साध्यप्रतिपत्तिकाले समुदायोऽनुमेयः । व्याप्तिनिश्चयकाले तु धर्मोऽनुमेय :"–न्यायबि०टी० पृ० ९७। (३) निरंशस्य । (४) इच्छायाः । (५) साध्यनिश्चये । (६)हेतुना । (७) वस्तु ।

स्यादेतत् [न] तत्र बाधितो निश्चितो वा अपि तु सन्दिग्धः तद्धर्मः इति चेत्; अत्राह– तत्र धर्मिणि **उपचरितपक्षः(क्ष)व्यपदेश (शः) सन्दिग्धं धर्ममिच्छन् कथम् असिद्धम् आशङ्केत्** । कस्य ? इत्याह–**हेतोः** इति, नैव आशङ्केत । कस्मिन् ? इत्याह–**पक्षस्य धर्मत्वे** हेतोः अङ्गीक्रियमाणे । किं भूतस्य ? इत्याह–**सन्दिग्धधर्मणः**, सन्दिग्धः साध्योऽनित्यत्वादिधर्मो यस्य तस्य इति । एतदुक्तं भवति–यथा सन्दिग्धेन तद्धर्मेण हेतोः व्याप्तिरिष्यते तथा सन्दिग्धसिद्ध- ५ धर्मधर्मिसमुदायः पक्ष इष्यताम् इति न युक्तमेतत्–*"**यदि हेतुप्रयोगात् पूर्वं समुदायसिद्धिः. किं हेतुना ? तदसिद्धौ हेतोः तद्धर्मता[ऽ]सिद्धिः**" इति[2]।

किंभूतामसिद्धिं 'कथम् असिद्धिं[3]' कथमाशङ्केत ? इत्यत्राह–**यतो** यस्मात् तदसिद्धिशङ्कनाद् **अयं** [4]**कीर्तिः उपचारम् आश्रयेत** *"**पक्षो धर्मा (र्मी अ)वयवे समुदायोपवाद् (चारात्)**" [हेतुबि० पृ० ५२] इत्यनेन इति । **यत** इति वा आक्षेपे नैव तमाश्रयेत । को हि १० अनुन्मत्तः सन्दिग्धेन धर्मेण हेतोर्व्याप्तिमिच्छति न पुनः समुदायमिति ।

ननु मया यथा सन्दिग्धेन समुदायो नेष्यते धर्मेण तथा व्याप्तिरपि हेतोर्नेष्यते, किन्तु असन्दिग्धेन इति चेत्; अत्राह–**यदि** इत्यादि । ननु एतद् आशङ्क्य '**अन्यथा हेतुवचनानर्थक्यात्**' इत्यनेन परिहृतं किमर्थं पुनः आशङ्क्यते इति चेत् ? अधिकदूषणप्रतिपादनार्थम् इति। आदौ यो **यदि** इति पराभिप्रायस्य, '**पुनः**' इति पक्षान्तरस्य द्योतकः । **उपचरितस्य** पक्षस्य । १५ कस्य ? **धर्मिणः** न समुदायस्य **असन्दिग्धेन** निश्चितेन, 'धर्मेण' इत्यनुवर्त्तते **व्याप्तो** **हेतुः** 'इष्यते' इत्यध्याहारः । अत्र दूषणम्–[३०३ख] **शब्दस्य नित्यत्वे** [अ]कृतकत्वे साध्ये **कृतकत्वादिः** आदिशब्देन उत्पत्त्यादिपरिग्रहः **हेतुः स्यात्**, विरुद्धो न स्यादिति मन्यते । न केवलम् *"**दर्शनस्य परार्थत्वात्**" [जैमिनिसू० १।१।१८] इत्यादिरेव इति **अपि** शब्दार्थः । किंभूतः ? **व्याप्तः** । केन ? इत्याह–**सत्त्वप्रमेयत्वादिना न तद्धर्मिण (तद्धर्मेण)** पक्षधर्मिधर्मिण (धर्मेण)। २० न हि सत्त्वादिकमन्तरेण कृतकत्वादिरस्ति, इति तेन व्याप्त उच्यते । अथ य एव साधयितुमिष्यते तेनैव व्याप्तो हेतुः नान्येन, [6]सोऽसन्दिग्धो न भवति; हेतुवचनानर्थक्यप्रसङ्गात् इत्युक्तम् ।

स्यान्मतम्–दृष्टान्ते [7]सोऽसन्दिग्धः न पक्षे, तत्र तु साधयितुमिष्टत्वात्, सेत्स्यति इति वा तस्य इत्युच्यते इति; तन्न सारम्; यतो हेतोः पुनः समुदाय(ये) सिद्धे स तस्य भविष्यति २५ इति प्रागपि तस्यैवोच्यताम् न धर्मिमात्रस्य । यथा कश्चित् कञ्चित् पचन्तमुपलभ्य अन्यं पृच्छति 'कस्य अयं पक्षा (पक्ता)' इति ? स पृष्ट आह–ओदनस्य इति । न तदा ओदनस्य[8]; प्रयत्नवैफल्यप्रसङ्गात् । अस्ति च तथाव्यपदेशः । ततो मन्यामहे–यस्मिन् ओदने जाते 'अस्य' इति

(१) साध्यधर्मेण । (२) तुलना–"पक्षधर्म इत्यत्र हेतुलक्षणेऽपि क्रियमाणे यदि समुदायः पक्षो गृह्यते योऽनुमानविषयः तदा सर्वो हेतुरसिद्धः, सिद्धौ वा अनुमानवैयर्थ्यमित्याह पक्षो धर्मीति ।"–हेतुबि० टी० पृ० १७ । (३) 'कथमसिद्धिम्' इति द्विर्लिखितम् । (४) धर्मकीर्तिः । (५) दर्शनस्य उच्चारणस्य परार्थत्वात् नित्यः शब्दः । न ह्यनित्यस्य पुनरुच्चारणं घटते इति । (६) साधयितुमिष्टः (७) साध्यः । (८) किन्तु अपक्वतन्दुलस्य पक्ता ।

व्यपदेशभाक् स भविष्यति तेन पूर्वं व्यपदिश्यत इति धर्मिणि पक्षोपचाराऽनर्थक्यम् ।

तदुपचारमभ्युपगम्य दूषणं दर्शयन्नाह–न च इत्यादि । न च नैव समुदायवृत्तिः अयुक्ता समुदाये वर्त्तनं नाऽयुक्तम् । कस्य ? समुदायशब्दस्य धर्मधर्मिसमूहवाचिपक्षशब्दस्य । किंभूतस्य ? स्वयम् आत्मना एकस्मिन् देशे समुदायैकभागे धर्मिणि उपचारेण वृत्तिः वर्त्तनं
५ यस्य तस्य तद्वृत्तेः । पुनरपि किंभूतस्य ? इत्याह–पुनः पश्चात् सर्वनाम्ना 'तदंशेन' [३०४क] इत्यत्र तच्छब्देन परामृश्य । यतो यस्मात् तद्वृत्तेः अयुक्तत्वात् तदंशः तद्धर्मो न तदेकदेशः, कुतः पक्षशब्देन समुदायस्यावचनात् धर्मिण एव वचनात् इत्येवं सूक्तं नैव स्यात् इति । एवं मन्यते–समुदायशब्दस्य उपचारात् तदेकदेशवृत्तस्यापि यदा समुदायवृत्तिर्न विरुध्यते तदा तस्यैव तच्छब्देन परामर्शः–'तदंशः तदेकदेशः' इति न विरुध्यते इति । अत्र दृष्टान्तमाह–
१० ग्राम [स्थे] त्यादि । ग्रामस्य तदेकदेशस्य न सर्वस्य, अन्यथा 'तदेकदेशस्थितोऽहम् अद्राक्षम्' इत्यस्यानुपपत्तिः । अनेन ग्रामशब्दस्य उपचारेण तदेकदेशे वृत्तिम् आह । अदाहम् (अहम्) अद्राक्षम् । क्व स्थितः ? इत्यत्राह–तदेकदेशस्थितः । तच्छब्देन अत्र मुख्यस्य समुदायरूपस्य ग्रामस्य परामर्शः न तदनेकदेशस्य, पाटकान्तरव्यवस्थितस्य एवं प्रयोगात् तस्य एकदेशे तिष्ठति इति तत्स्थः । यथा इति दृष्टान्तार्थः ।

१५ उक्तमर्थं निगमयन्नाह–तदेतद् इत्यादि । यत एवं तत् तस्मात् एतत् परेण क्रियमाणम् । किम् ? इत्याह–मुख्यशब्दार्थलङ्घनम् मुख्यश्चासौ शब्दार्थश्च । तथाहि–अंशशब्दस्य मुख्यो लोको (केऽ)र्थः[3] भागः, पक्षशब्दस्य धर्मधर्मिसमुदायः तस्य अतिलङ्घनं अतिक्रमणम् । तत् किं करोति ? इत्याह–गङ्गास्नानभयात् यः कर्कटीभ(त)क्षणन्यायः तम् अनुसरति ।

ननु तद्भयात् कर्कटीतक्षणे वधबन्धादिको दोषोऽस्ति न तल्लङ्घने तत्कथमुच्यते–तन्न्याय-
२० मनुसरति इति चेत् ? अत्राह–तत्रैव इत्यादि । तत्र उल्लङ्घने दोषात् न तल्लङ्घन इति एवकारार्थः । निरूपितम् । ततः स्थितम्–जिज्ञासित इत्यादि, न पुनः पक्षो धर्मी इत्यादि ।

एवं 'पक्षधर्मः तदंशेन' [३०४ख] इत्येतद् द्वयं व्याख्याय 'व्याप्तः' इत्येतद् व्याचष्टे–व्याप्तिः इत्यादिना । इदमत्र तात्पर्यम्–व्याप्तियोगाद् व्याप्त उच्यते । सा च व्याप्यव्यापकोभयाश्रितेति व्याप्तिः व्यापकस्य सम्बन्धिनी यत्र असौ व्याप्यो धर्मो धर्मिणि वर्त्तते तत्र, न पुनः
२५ धर्मे एवं तत्र अन्यधर्माऽभावात् , भावं एव व्याप्यस्य 'व्याप्तिः' इत्यनुवर्त्तते, वा शब्दः समुच्चये यत्रैव धर्मिणि व्यापको धर्मो विद्यते तत्रैव नान्यत्र भावः । किमेवं सति जातम् ? इत्यत्राह–तत्र तस्यां व्याप्तौ अङ्गीक्रियमाणायाम् अन्यथा साध्याभावप्रकारेण हेतोः अनुपपत्तिरेव नान्यद् रूपम् 'उक्तम्' इत्यध्याहारः । अनेन 'पक्षधर्मः तदंशेन व्याप्तः हेतुतामेति, अन्यथानुपपन्नोऽयं चेत् तर्केण लक्ष्यते' इति समर्थितम् ।

३० तदनभ्युपगमे दोषं दर्शयन्नाह–न चेद् इत्यादि । अन्यथानुपपत्तिर्यदि न किं साध्यम्

(१) 'यथा ग्रामस्य तदेकदेशस्थितोऽहमद्राक्षम्' इत्यत्र । (२) धर्मकीर्तिना । (३) अभिधेयः । (४) गङ्गास्नानभयात् । (५) व्याप्तिः । (६) धर्मो वर्तते । (७) धर्मे । (८) सद्भाव एव न तु कदाचिदप्यभावः ।

कस्य [व्याप्यं] साधनं व्यापकं चित् (चेति)। कस्यचित् [illegible] (तस्या)भावेऽपि अन्यस्य भावादिति मन्यते [इति] पुष्टमिव आत्मानं मन्यमानः [1]परः प्राह–कारणं पावकादिकं कार्यस्य धूमादेः स्वभावो वृक्षत्वादिः भावस्य शिंशपात्वादेः 'व्यापकम्' इत्यनुवर्त्तते। चेत् शब्दः पराभिप्रायसूचकः। तत्र उत्तरं दर्शयन्नाह–क्षणिकस्य इत्यादि। यदि कारणं कार्यस्य स्वभावो भावस्य नियमेन व्यापक इष्यते तर्हि [2]तदभावे अवश्यं [3]तन्न भवति इति अन्यथानुपपत्तिरेव समर्थिता। सा च अनेकान्त एव संभवतीति 'क्षणिकस्य' इत्यनेन दर्शयति। क्षणिकस्य उत्पत्तिसमयानन्तरं निरन्वयनाशिनः कारणस्य पराभिप्रायेण इदमुक्तम्, तत्त्वतः तन्न[4] [३०५ क] कारणम्। किंभूतस्य ? कार्यकालम् अप्राप्नुवतः कार्योत्पत्तेः प्रागेव नस्तस्य (नष्टस्य) कथं न कं (कथ)ञ्चिद् व्याप्तिर्नाम। कारणस्य हि व्यापकस्य व्याप्तिः[5] यत्र कार्यं तत्र भाव वच(वचनम्)। न च प्रागेव नष्टस्य सं लभ्यते। एवं हि कार्यमहेतुकं [6]तदभावे भवत् केन वार्यते ? शेषमत्रोक्तमिति भावः।

स्वभावहेतुं दूषयन्नाह–भावस्वभावयोश्च सत्त्वक्षणिकत्व[यो]श्च अभेदैकान्ते अङ्गीक्रियमाणे किं केन व्याप्यते व्याप्यव्यापकद्वयविरहात्। [7]तत्र च सामान्यविशेषाभाववत् (भावात्)। तदभावे व्याहतमेतत्–

*"व्यापकं [8]तदतन्निष्ठं व्याप्यं [9]तन्निष्ठमेव वा।" इति।

यत्पुनरेतत्–नित्या (नित्यत्वव्यावृत्त्या) कल्पितेन अनित्यत्वेन असत्त्वव्यावृत्त्या कल्पितं सत्त्वं व्याप्येत इति ; तदपि तदेकान्ते दुर्लभम् ; विकल्पाभावे तत्कल्पनस्य अत्यन्त[म]संभवात्। तद्भावे वा अभिलाप्येतराकारयोः कथञ्चिद् विरुद्धयोः एकत्र संभवाद् [10]अ पो ह वा र्तिका य निरवशेषाय दत्तो जलाञ्जलिः। एवमर्थं चाऽभेदैकान्ते इत्युक्तम्।

अत्राह प्र ज्ञा क र गु प्तः–*"कारणं न कार्यस्य स्वभावो वा भावस्य नाव्यापकः[11] प्रमाणाभावेन [12]तयोरभावात्। यत्तु कार्यादेः कारणादिकं प्रति हेतुत्वमुच्यते, तद् व्यवहर्तुः अभिप्रायवशात् *"प्रामाण्यं व्यवहारेण" [प्र० वा० १।६] इति वचनात्" इति ; तं प्रत्याह–व्यवहर्तुरभिप्रायवशात् व्यवहर्त्तारः शास्त्रसंकाररहिता लोका न तत्संस्कारवन्तो नैयायिकादयः तेषामन्यथाभिप्रायात्, तेषां व्यवहर्तृणाम् परमार्थयोः हेतुफलयोः भावस्वभावयोरभावेऽपि सर्वत्र अग्नेरेव धूमः वृक्ष एव शिंशपा इत्यभिप्रायः तद्वत् सा (तद्वशात्) तादात्म्यतदुत्पत्तिव्यवस्थायां क्रियमाणायाम्। किं कृत्वा ? असमीक्ष्य। किम् ? तत्त्वम् [३०५ख] हेतुफलादीनां परमार्थरूपम्। अथवा तत्त्वं प्रतिभासाद्वैतं समीक्ष्यते, तत्समीक्षणे तदव्य (तद्व्य)-वस्थायोगात्। तस्यां किम् ? इत्याह–स तदभिप्रायः प्रमाणान्तरं प्रत्यक्षानुमानाभ्याम् अन्यत् प्रमाणं प्रसज्येत। न तावत् प्रत्यक्षस्य (क्षे तस्य[13]) अन्तर्भावः; सविकल्पकत्वात्। व्यवहारेणापि

(१) बौद्धः। (२) व्यापकाभावे। (३) व्याप्यम्। (४) क्षणिकम्। (५) सद्भावः। (६) कारणाभावे। (७) अभेदैकान्ते। (८) व्याप्यसद्भावे व्याप्याभावे च भवति। (९) परं व्याप्यं व्यापकनिष्ठमेव, न कदाचिदपि व्यापकाभावे भवति। (१०) प्रमाणवार्तिके यदपोहप्रकरणं तस्मै। (११) न अव्यापकः किन्तु व्यापकः। (१२) कार्यस्वभावयोः। (१३) विकल्पाभिप्रायस्य।

अविकल्पं परेण प्रत्यक्षमुच्यते । तत्र[1] तदन्तर्भावे वा प्रत्यक्षवशात् तद्व्यवस्था इति सांवृतत्वमनुपपन्नमस्य[2] । तत्त्वसंवरेण[3] संवृतेः विकल्पात्मकत्वात् । नाप्यनुमाने ; अन्योऽन्यसंश्रयदोषात् । तथाहि–तादात्म्य-तदुत्पत्तिव्यवस्थायाम् अनुमानम् , अतः तद्व्यवस्थितिः ।

किंच *"न अननुकृतान्वयव्यतिरेकं कारणम् नाऽकारणं विषयः" [4]इति वचनात् ५ अनुमानं [5]तद्व्यवस्थायाः कार्यं सद् व्यवस्थापकम् ; तच्च तत्कार्यं तदभिप्रायात् , स च अनुमानम् , तत्रापि तदेव चोद्यं तदेव उत्तरम् , अनवस्था च । ततः सः[6] प्रमाणान्तरमिति स्थितम् ।

ननु [सः][7] प्रमाणमेव न भवति तल्लक्षणाभावात्[8] कथं [9]तदन्तरमिति चेत् ? अत्राह–**अविसंवादकत्वात्** तद्व्यवस्थाऽव्यभिचारित्वात् । अपि(वि)संवादकं च ज्ञानं *"**प्रमाणमविसंवादिज्ञानम्**" [प्र० वा० १।३] इति वचनात् परेण[10] प्रमाणमिष्यते । असिद्धोऽयं हेतुरिति १० चेत् ; अत्राह–**विसंवादकत्वे** अविसंवादकत्वाभावे [11]तदभिप्रायस्य अभ्युपगम्यमाने **तदाश्रयणं** तस्य तदभिप्रायस्य अङ्गीकरणम् **अप्रेक्षाकारित्वं** बौद्धस्य । कुतः ? इत्याह–**प्रकृतानुपयोगात्** । प्रकृतायां तद्व्यवस्थायाम् अनुपयोगात् । तथाहि–यद् विसंवादं(वादि) तद् व्यवहारेऽपि नाभिमतव्यवस्थोपयोगि [३०६ क] यथा मरीचिकाजलज्ञानम् , विसंवादी च तदभिप्रायः । यद् यद्व्यवस्थोपयोगि न भवति न तत् तदर्थिना उपगम्यते यथा जलार्थिना तदेव ज्ञानम् , १५ तद्व्यवस्थानुपयोगी च तदभिप्रायः । तदेवं तदभिप्रास्य अविसंवादकत्वे परस्य[12] प्रमाणान्तरमापतति, अन्यथा तदनाश्रयणात् तन्निबन्धनव्यवहारविलोप इति स्थितम् ।

[13]अयमपि न दोषः अभ्युपगमादिति चेत् ; आस्तां तावदेतत् । अन्यदुच्यते–सत्यामपि तद्व्यवस्थायाम् अव्यापकत्वम् । एतदेव दर्शयन्नाह–**तद् एतस्मिन्** इत्यादि । **तस्मिन्** परमतगते **एतस्मिन्** उच्यमाने **प्रतिबन्धनियमे** तादात्म्यादिरूपे अङ्गीक्रियमाणे **कथम् अर्वाग्भागदर्शनात्** २० **परभागोऽनुमीयेत** । कस्य ? **चन्द्रादेः** इति । कथम् ? इत्याह–**नानयोः** अर्थात् सागावरभाग (अर्वाग्भागपरभाग)योः **कार्यकारणभावः** । कुतः ? **सहैव भावात्**[14] । न च नैव **तादात्म्यं** **लक्षणभेदात्** । कुतस्तर्हि तदनुमानम् ? इत्याह–**अलम् अन्यथाऽनुपपत्तेः अनुमानम्** । विसंवादि स्यादिति चेत् ; अत्राह–**अनवद्यम्** अव्यभिचारि ।

'**किं पुनः**' इत्यादि परमतमाशङ्कते–**किं पुनः** कारणम् **अन्यथा** परभागाभावप्रकारेण २५ **उपपद्यते** अर्वाग्भाग इति चेत् ? अस्योत्तरम्–**नवै** नैवाः (नैव **भावाः**) **पर्यनुयोगम् अर्हन्ति** किमेवं भवन्तो भवति (भवन्तु) इति ? केवलं यथा ते बाधबोध (तेऽबाधबोधे) प्रतिभान्ति तथैव अङ्गीकर्त्तव्याः प्रज्ञालोचनैः । पादप्रसारिका एवं स्यादिति चेत् ; अत्राह–**तादात्म्य** इत्यादि । **[तादात्म्ये] किं पुनः कारणं वृक्षस्वभावो शिंशपा धूमः अग्निकार्यम्** इत्येवं

---

(१) प्रत्यक्षे । (२) विकल्पस्य (३) तत्त्वाच्छादनेन । (४) द्रष्टव्यम्–पृ० १८८ टि० ७ । (५) तादात्म्यतदुत्पत्तिव्यवस्थायाः । (६) विकल्पः । (७) विकल्पः । (८) प्रमाणलक्षणाभावात् । (९) प्रमाणान्तरम् । (१०) बौद्धेन । (११) व्यवहर्त्रभिप्रायस्य । (१२) बौद्धस्य । (१३) विज्ञानवादी प्राह । (१४) सहभाविनोरपारतन्त्र्यात् कार्यकारणभावाभावात् ।

प्रसङ्गात् ; अत्रापि तदेवोत्तरम्–'नवै भावाः [३०६ ख] (भावस्वभावाः) पर्यनुयोगमर्हन्ति' इति ।

भवतु तर्हि अर्वाग्भागोऽन्यथाऽनुपपत्तेरेव परभागस्य हेतुरिति चेत् ; अत्राह–**परभाग** इत्यादि ।

**[ परभागोऽविनाभावमर्वाग्भागस्य कल्पयन् ।** ५
**स्वभावं कार्यहेतुञ्च तत्रान्तर्भावयेन्न किम् ॥३॥**

**तदर्वाग्भागस्य परभागाविनाभावस्वभावं कल्पयता धूमस्यापि पावकाविनाभावस्वभावादेव तत्र गमकत्वं प्रतिपत्तुं युक्तं किं तदुत्पत्त्या ? तस्यां च सर्वथा गम्यगमकभावः सर्वथा जन्यजनकभावात् । भावानामंशेन जन्यजनकभावः प्रसज्येत ।]**

**परभागोऽविनाभावम्** अन्यथानुपपत्तिलक्षणं **कल्पयन्** वादी । कस्य ? **अर्वाग्भागस्य** । किं कुर्यान ? इत्यत्राह–**स्वभावं कार्यहेतुं च तत्र** अन्यथानुपपत्तौ **अन्तर्भावयेत् न किम्** ? अन्तर्भावयेदेव । १०

कारिकां व्याख्यातुमाह–**तदर्वाग्भागस्य** इत्यादि । **तस्य** चन्द्रादयो (देर्यः) **अर्वाग्भागः** तस्य **परभागाविनाभावस्वभाव (वं)** तदव्यभिचारिस्वरूपं **कल्पयता** न केवलमस्यैव अपि तु **धूमस्यापि पावकाविनाभावस्वभावादे [व] तत्र** पावके **गमकत्वं प्रतिपत्तुं युक्तम्** इति । १५ ततः किम् ? इत्याह–**किं** न किञ्चित् **तस्मात्** पावकात् **उत्पत्त्या** धूमस्य इति सम्बन्धः । अथ तदुत्पत्त्यैव धूमस्य तत्र[1] गमकत्वम् ; इत्यत्राह–**सा च (तस्यां च)** तदुत्पत्तावेव गमकत्वे (त्वम्) अभ्युपगम्यमानायां **सर्वथा** सर्वेण प्रकारेण **गम्यगमकभावः** पावकधूमयोः 'स्यात्' इत्यध्याहारः । यथा पावको दाहपाकादिकारिणा सामान्यप्रकारेण गम्यः तथा सजातीयविजातीयव्यावृत्तासाधारणेन देशकालाकारनियतेनापि स्यात् इति प्रत्यक्षवत् स्वलक्षणविषयता अनुमितेः इति नातो[2] २० विशेषः । अवैशद्याद् विशेषः ; इत्यपि वार्त्तम् ; विशेषविषयत्वे तदयोगात्, [3]परस्य तथाभ्युपगमाभावात् । कथमेवं सति विषयसंप्लवात्[4] प्रमेयद्वैविध्यात् प्रमाणद्वैविध्यमिति चेत् ; अयमपरोऽस्य दोषोऽस्तु ।

यत्पुनरेतदुक्तम्–*"**तदविनाभाव(वात्) धूमविशेषावसाय इष्यते एव सर्वथा गम्योऽग्निः कुङ्कुमचन्दनागुरु [३०७क] जनितधूमावधारणे ततः तत्प्रतिपत्तिदर्शनात्**" २५ इति; तदनेन निरस्तम् ; तत्रापि कुङ्कुमादिसामान्यधर्मानुमितेः, इतरथा अन्त्यविशेषविषयत्वाद् अनुमितेः ततस्तत्र[5] सन्देहः कुतः ? विशेषानुमाने अन्वयाभावश्च चिन्त्यः । निरूपयिष्यते चेदमनन्तरम् । तथा धूमः सर्वथा गमक इति विशेषधर्मेण च (णेव) कण्ठाक्षविकारकारिणा सामान्यधर्मेणापि सत्त्वादिना स्यादिति धूमे संशयादिभावेऽपि सत्त्वादिविनिश्चयं (ये) ततोऽग्निप्रतिपत्तिरस्तु, ततः सन्दिग्धाद्यसिद्धताकीर्त्तनमसारमिति मन्यते । ३०

---

(१) पावके । (२) प्रत्यक्षात् । (३) बौद्धस्य । (४) एकस्मिन् स्वलक्षणविशेषे द्वयोः प्रमाणयोः प्रवर्तनात् । (५) चन्दनागुरुवह्निप्रतीतिदर्शनात् । (६) विशेषे ।

स्यान्मतम्–पावकस्य सामान्यधर्मा एव जनकाः, ततः तैरेव गम्यः, धूमस्य विशेषधर्मा एव जन्या इति तैरेवं गमक इति चेत्; अत्राह–**सर्वथा** सर्वप्रकारेण [जन्य]**जनकभावात्**। अस्यानभ्युपगमे दोषमाह– **भावानाम्** इत्यादि। बहुवचनं सर्वथा अर्थपरिग्रहार्थम्[१], **अंशेन** अवयवेन **जन्यजनकभावः प्रसज्येत** यथा पावकः सामान्यधर्मैः न विशेषधर्मैर्जनको धूमो
५ विशेषधर्मैर्न सामान्यधर्मैः जन्यः तथा सर्वे भावा इति। तत्र (तन्न) ग्राह्यग्राहकभावोऽपि तन्निबन्धनो ज्ञानैव (?) इति न युक्तमेतत्–*"एकस्यार्थस्वभावस्य" [प्र० वा० ३।४२] इत्यादि[२]।

यदि मतं सर्वथा जन्यजनकभावः सर्वथा [गम्य]गमकभावश्च इष्यते, एवं तज्जन्यविशेषावसाय इति; तत्राह–**तज्जन्यविशेष** इत्यादि।

**[तज्जन्यविशेषः कः स्वयमभिमतोऽपरः।**
१० **सैवाऽन्यथानुपपत्तेः अन्यत्राभिमतेऽपि [च] ॥४॥**

तादात्म्याविशेषेऽपि व्याप्यस्यैव गमकत्वं कथयन् एकलक्षणमेव समर्थयते पक्षधर्मत्वाद्यनपेक्षणात्।]

**स** धूमगतोऽवान्तरो भेदोऽयं **जन्यो** यस्य स तथोक्तः, स चासौ **विशेषश्च** पावकगतो भेदः। कः? न कश्चिद**भिमतः स्वयं** सौगतेन 'गम्यः' इति सम्बन्धः। किंभूतः?
१५ इत्याह–**परो** विद्यमानः [३०७ख] परो विशेषो यस्माद् इत्य**परो**ऽसाधारण इत्यर्थः। किं सर्वथा नाभिमतः? इत्यत्राह–**अन्यत्र अन्यथाऽनुपपत्तेः** अन्यथानुपपत्तिमन्तरेण तस्यास्तु[३] अभिमत एव, निदर्शनमन्तरेण तद्गम्यत्वोपगमात्।

इदमपरं व्याख्यानम्–**तेन** अग्निना जन्यते इति **तज्जन्यः** स चासौ धूमत्वविशेषणः सत्त्वादिः धूमगतो विशेषश्च **तद्विशेषः कोऽपरो**ऽन्यः **अभिमतः स्वयं** सौगतेन। **अन्यत्र**
२० **अन्यथानुपपत्तेः सैव अभिमतेऽपि**। तथाहि–धूमे धर्मिणि धूमत्ववत् सत्त्वादेरपि पावककार्यत्वाऽविशेषेऽपि धूमत्वमेव तदन्यथानुपपत्त्या गमकं नेतरदिति निरस्ता तदुत्पत्तिः।

तादात्म्यं दूषयन्नाह–**तादात्म्याविशेषेऽपि**। व्याप्यव्यापकयोः इत्यपेक्ष(क्ष्य)म्। **व्याप्यस्यैव** सत्त्वादेर्न[४] व्यापकस्य अनित्यत्वादेः **गमक[त्वं] कथयन्** परं[५] **एकलक्षणमेव समर्थयते पक्षधर्मत्वाद्यपेक्षणाया (द्यनपेक्षणात्)** आदिशब्देन तदंशव्याप्तिग्रहणम्।

२५ ननु साधर्म्यवैधर्म्यदृष्टान्तयोरन्यतराभावे न हेतुः इति चेत्; अत्राह–**तद्** इत्यादि।

**[तत्सिद्ध्यसिद्ध्योः सत्योः बहिर्व्याप्तेरसाधनात्।**
**साधनं सकलव्याप्तेरुभयदोषानतिक्रमात् ॥५॥]**

**तस्याः** अन्तर्व्याप्तेः **सिद्धिश्च** ज्ञप्तिः आत्मलाभो वा **असिद्धिश्च** विपर्ययः तयोः सत्योः **बहिर्व्याप्तेः** पक्षादन्यत्र व्याप्तिः बहिर्व्याप्तिः, तयोः सकाशाद् **असाधनात्** साधना-

---

(१) विशेषधर्मैरेव। (२) 'प्रत्यक्षस्य सतः स्वयम्। कोऽन्यो न दृष्टो भागः स्यात् यः प्रमाणैः परीक्ष्यते ॥' इति शेषः। (३) अन्यथानुपपत्तेस्तु। (४) सत्त्वादि। (५) बौद्धः।

भावात्, ताम्[1] आश्रित्य [न] किञ्चित् साधनं भवतीति । यदि वा, तस्याः साध्यभावात्[2] । अथवा, तस्याः असाधनत्वात् इति सा न **साधनम्** इति यावत् । तर्हि सकलव्याप्तेः हेतुः, इत्यत्राह-**सकल** इत्यादि । पक्षे अन्यत्र च व्याप्तिः **सकलव्याप्तिः** तस्या **उभयदोषानतिक्रमात्** तदेव समर्थयत इति [३०८] । तथाहि-नान्तरेण अन्तर्व्याप्ति [म्] सकलव्याप्तिः[3], स[4] (सा) चेत् सिद्धा कुतश्चित्; किमपरेण ? न चेत्; का सकलव्याप्तिः ? तथा विना बहिर्व्या- ५ प्त्यापि न सा युक्ता, तात्तरया (?) ।

सत्यम्, अर्वाग्भागदर्शनात् चन्द्रादेः परभागोऽनुमीयते, स तु नान्यथानुपपत्तेरपि तु एकसामग्र्यधीनतया इति; एतत्कदर्थयन्नाह-**चित्तभ्रान्ति** इत्यादि ।

**[ चित्तभ्रान्तिस्वसंवित्त्योस्तादात्म्यं चेद्विलक्षणैः ।**
**दृष्टैर्भाव्यं स्वभावैः स्वैर्नश्वराणामनश्वरैः ॥६॥** १०

भ्रान्तिः⋯तथा च ।]

**भ्रान्तिश्च** अतस्मिन् तद्ग्रहः । उपलक्षणमेतत् तेन विकल्पसंशयविपर्यासादीनां ग्रहणम्, **स्वसंवित्तिश्च** स्वसंवेदनाध्यक्षम् । एतदपि उपलक्षणमिति निर्विकल्पकत्वप्रत्यक्षादीनाम् । **चित्तस्य** ज्ञानस्य **भ्रान्तिस्वसंवित्ती** तयोः **तादात्म्यं चेद् विलक्षणैः** विसदृशैः **दृष्टैः** इन्द्रियगोचरैः **भाव्यम्** भवितव्यम् । केषां कैः इत्याह-**नश्वराणाम्** प्रतिक्षणभङ्गुराणाम् १५ **अनश्वरैः** स्थितैः । किंभूतैः ? **स्वभावैः** स्वरूपैः । किं सर्वैः ? न इत्याह-**स्वैः** आत्मीयैः न बुद्ध्यन्तरगतैः ।

कारिकां व्याचष्टे-**भ्रान्ति** इत्यादिना । व्याख्यातमेतत् प्रथमप्रस्तावे । यद्यपि च भ्रान्तिग्रहेणन विपर्यास उक्तः तथापि द्वयोः उपादानं बाह्येतरविभ्रमप्रतिपादनार्थम् ।

एवं सति किं लब्धम् ? इत्याह-**तथा च** इत्यादि । ते च (**तथा च** तेन च) नश्वराणाम् २० अनश्वरस्वभावप्रकारेण च ।

**[यथानुदर्शनं तत्त्वप्रतिपत्तिर्न लङ्घ्यते ।**
**तादात्म्यमती सूक्ष्माणां भिन्नानां सुपरीक्षितैः ॥७॥**

**स्थूलैरभिन्नैः स्वभावैः स्वैः चाक्षुषाणामचाक्षुषैः ।**
**अप्यन्यथानुपपन्नैः यथा लोके प्रतीयते ॥८॥** २५

**स्कन्धोऽर्वागूर्ध्वपरमध्यभागात्मैकः कथञ्चित् ।**
**अनुमेयः केनचित्कश्चिद् बुधैः रूपरसादिवत् ॥९॥**

**प्रत्यनीकस्वभावतादात्म्यमन्यथानुपपत्त्या कश्चित् सिद्धमुपयन् एकान्त[भिन्नविषयं] प्रतीतिविरुद्धमविकल्पं निर्विषयं चानुमानं परिकल्प्य ततस्तत्त्वसिद्धिं व्यवस्थापयतीति किमतः परमयुक्तम् अन्यथानुपपत्तेरतिक्रमात् । ततोऽपरः सहभाविनां रूपादिपर-** ३०

(१) बहिर्व्याप्तिम् (२) असिद्धत्वादित्यर्थः । (३) सिध्येत् । (४) सकलव्याप्तिः ।

भागादीनाम् रसार्वाग्भागादिभिः प्रक्लृप्तः प्रतिबन्धनियमश्च स्वमतघाती, उपयुक्तरसानुमेयोपादानशक्तितः रूपसिद्धौ प्रतीतिं स्वलिङ्गसंख्याश्च लङ्घयेत् । उपयुक्ताद्रसात् रूपाद्युत्पत्तौ सहकारित्वं तदुपादानस्वभावं प्रतिपन्नवान् , पुनः तत्कार्यं रूपादिकं प्रत्येति । स्वोपादानस्य शक्तिप्रवृत्त्या विना न रसोत्पत्तिः सैव रूपादिकारणमिति अतीतैककालानां

५ गतिर्नानागतानां व्यभिचारात् इति कोऽयं प्रतिपत्तिक्रमः तथैव व्यवहाराभावात् । तथा च कारणात् कार्यानुमानम् । सहभाविनश्च रसात् पारम्पर्येण रूपाद्यनुमानं न केवलं प्रतीतिप्रसिद्धिमुपरुणद्धि किन्तु अनुमीयमानं प्रतिबन्धनियमं च ।]

**यथानुदर्शनं** दर्शनानतिक्रमेण । **नु** वितर्के । **तत्त्वप्रतिपत्तिर्न लङ्घ्यते** न निराक्रियते । किंभूता सा ? इत्यत्राह–**तादात्म्यमर्भा** वि (अपि) शब्दोऽत्र द्रष्टव्यः । केषाम् ?

१० इत्यत्राह–**सूक्ष्माणाम्** । किंभूतानाम ? **भिन्नानाम्** अन्योऽन्यव्यावृत्तानाम् । कैः ? इत्यत्राह–**स्थूलैः** । किंभूतैः ? **अभिन्नैः**, अनेकावयवसाधारणैः । पुनरपि किंभूतैः ? **सुपरीक्षितैः** कथं सुपरीक्षकैः ? [३२८ख] (क्षितैः ?) इत्याह–**अन्यथानुपपन्नैः** इति । **स्वैः** आत्मीयैः । न केवलं तैः तेषामेव तत् किन्तु **चाक्षुषाणाम्**, उपलक्षणमेतत् सत्त्वं (सर्वे)न्द्रियाणाम्[1] । **अचाक्षुषैः** एतदप्युपलक्षणम्[2] । किंभूतैः ? **स्वप्रावैः (स्वभावैः) अपि** शब्दः **'चाक्षुषा-**

१५ **णाम्'** इत्यत्र पति (पठि) तव्यः । **यथा लोके प्रतीयते** इत्यनेन च प्रतीतिसिद्धश्चानेकान्तं दर्शयति । प्रकृते कोऽस्य उपयोग इति चेत् ? अत्राह–**स्कन्धोऽर्वाग्भाग**इत्यादि । **स्कन्धः** चन्द्रादिः अवयवी । किंभूतः ? **अर्वागादीनां** द्वन्द्वः, पुनः **भाग**शब्देन कर्मधारयः, ते **आत्मानो** यस्य स चासौ **एकश्च** तदात्मको **यथा लोके प्रतीयते** । तत्र स्कन्धे **केनचिद्** अर्वाग्भागेन **कश्चिद्** भागो मध्यादिः **अनुमेयः** स्यात् । कैः ? **बुधैः** परीक्षकैः । निदर्शन-

२० माह–**रसाद् रूपादिवद्** इति । यथा कथञ्चित्तादात्म्यात् रसाद् रूपादिरनुमेयः, नैकसामग्र्यधीनत्वेन तत्रां (तथा) तत्र केनचिद् भागेन कश्चिद् भागोऽनुमीयते इति निदर्शनार्थः ।

कारिकात्रयं सुगमत्वाद् अव्याख्याय निदर्शनं समर्थयितुकामः [आह] **प्रत्यनीक** इत्यादि प्रैत्यादि[3] । **प्रत्यनीकौ** अन्योऽन्यविरुद्धौ यौ **स्वभावौ** विकल्पाऽविकल्पौ भ्रान्ति-प्रत्यक्षौ विपर्ययप्रत्यक्षे (क्षौ) संशयप्रत्यक्षौ तयोः **तादात्म्यम्** एकत्वम् क्वचिद् विज्ञानादौ **सिद्धं** प्रमाण-

२५ निश्चितम् उपपन्नम् (उपयन्) अभ्युपगच्छन् । कया ? इत्यत्राह–**अन्यथा** इत्यादि । **अन्यथा** अन्येन तादात्म्याभावप्रकारेण तयोः स्वभावयोः या **अनुपपत्तिः** तया इति । तथाहि–निर्विकल्पस्वभावाद् विकल्पस्वभावाद्धि (वस्य) भेदैकान्ते कुतः तद्वेदनं[4] यतः तत्कल्पनम् ? [३०९क] अज्ञातकल्पने अतिप्रसङ्गात् । तथा च *"अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पना" [न्यायबि० १।५] यवि (इति) कल्पनयापि न लभ्यत इति दूरं संवृतिवार्ता । स्वत इति चेत् ;

३० तर्हि विकल्पस्वभावोऽविकल्प इति तदवस्था (स्थः) प्रसङ्गः *"सर्वचित्तचैतसिकानाम्[5]" [न्याय-

---

(१) सर्वेन्द्रियगोचराणाम् । (२) अस्ति मातुलिङ्गे रूपं रसात् इत्यादि । (३) 'प्रत्यादि' इति निरर्थकमत्र । (४) विकल्पस्वरूपसंवेदनम् । (५) "सर्वचित्तचैत्तानामात्मसंवेदनं स्वसंवेदनम्"–न्यायबि० ।

वि० १।१०] इत्यादि कथम्[1] ? अन्यथा तत्रापि अपरतत्स्वभावकल्पनम् उक्तदोषम् अनवस्थामन्वाकर्षति । यदि पुनः अविकल्पस्वभावाद् अन्येन अन्यवेदनम् इति निराकारदर्शनम्, असतश्च ततस्तस्य वेदनमिति स्वपरयोः प्रत्यनीकयोः तादात्म्यम्; अत्रापि भेदैकान्ते मे (?) प्रकृतमनुवर्त्तेत इति चक्रकम् । एतेन शेषमपि चिन्त्यम् । ततस्तयोः[3] तादात्म्यमन्वेष्यम् । **तदुपयन् व्यवस्थापयति इति किमतः परमयुक्तम् ?** इदमेव अयुक्तमिति । किंभूतं किंभूत्वा कुतः ५ किं व्यवस्थापयति ? इत्यत्राह–**अविकल्पं परिकल्प्य** । किम् ? इत्याह–**एकान्त** इत्यादि । किंभूतम् ? **प्रतीतिविरुद्धम्** । नहि एकैकपरमाणुपर्यवसितवपुः अध्यक्षं प्रतीत्यारूढं लक्ष्यते दृश्यानुपलब्धिः (ब्धेः) अभावप्रसङ्गात् एकज्ञानसंसर्गिपदार्थद्वयाभावात् । कथमेवं विभ्रमतोऽपि स्थूलदीर्घादिप्रतीतिः, यतः पर्वतादिव्यवस्था इति चेत् ? अयमपरो दोषोऽस्तु ।

यदि पुनः अनेकपरमाणुविषयं साकारमेकं दर्शनम्; किं स्यात् ? उक्तमत्र **प्रत्यनीक** १० इत्यादि । **निर्विषयं च अनुमानं परिकल्प्य** । अत्रापि '**प्रतीतिविरुद्धम्**' इत्यनुवर्त्तते । क्वचित् प्रत्यनीकस्वभावयोः प्रमाणसिद्धतादात्म्योपगमे नित्यत्वानित्यत्व-कृतकत्व-सत्त्वादीनां प्रत्यनीकस्वभावनाम् शब्दे तादात्म्यसिद्धेः प्रतीतिविरुद्धं निर्विषयं तदिति मन्यते । **ततोऽविकल्पात्** [३०९ख] प्रत्यक्षात् तद्विरुद्धा [त्] निर्विषया [च्च] अनुमानात् **तत्त्वसिद्धिम्** इति । कुत इदमेव अयुक्तम् ? इत्यत्राह–**अन्यथा** इत्यादि । यतः **अन्यथानुपपत्तेः** क्वचित् प्रत्यनीकस्वभावयोः १५ तादात्म्यमभ्युपैति सौगतः, तस्या एव ततः तत्त्वसिद्धिं व्यवस्थापयतोऽतिक्रमात्, ततो न क्वचित् तयोः तादात्म्यमिति, इदमेव अयुक्तमिति भावः ।

इदमत्र तात्पर्यम्–रसादिक्षणिकपरमाणूनां विवेकैकान्ते विकल्पाभावात् कुतो निर्विषयमप्यनुमानम्, यतः तत्त्वव्यवस्था ? तदस्ति चेत्; विकल्पाविकल्पप्रत्यनीकस्वभावयोः क्वचित् तादात्म्यं सिद्धम्, रसादीनामपि तदस्ति इति न दृष्टान्तासिद्धिः । २०

यैस्तु मन्यते–अर्वाग्भागा[त्] संयोगिनः परभाग[गः] रसाद् एकार्थसमवायिनो रूपादिः अनुमीयते, न तादात्म्याद् अन्यतो वेति; सोऽप्यनेन निरस्तः; शक्यं हि वक्तुं **प्रत्यनीकस्वभावयोः** सामर्थ्येतरयोः अन्ययोर्वा **तादात्म्यम् अन्यथानुपपत्त्या क्वचित्** तादात्म्यादौ (तादात्म्यम् आत्मादौ) **सिद्धम् उपयन्** वैशेषिकादिः **प्रतीतिविरुद्धम्** एकान्तभिन्नस्वभावद्रव्यगुणकर्माक्षणक्षयप्रध्वंस [म]**विकल्पं** निरंशैकार्थम् नियतं **परिकल्प्य** तत्पूर्वकत्वेन **निर्विषयम्** २५ **अनुमानं** चेति । शेषं पूर्ववदिति ।

ननु यद्यपि अर्वाग्भाग-परभागयोः रूपादिरसाद्योः तादात्म्यं तथापि न तदन्यथानुपपत्त्या गम्यगमकभावः, अपि तु पूर्वविशिष्टकारणस्य अनुमानेन, तत एव तादात्म्यस्यापि भावादिति चेत्; अत्राह–**ततोऽपरः** इत्यादि । **ततः** तादात्म्याऽन्यथानुपपत्तेः **अपरः** अन्यः **स्वयम्** आत्मना सौगतेन न लोकेन प्रमाणेन वा [३१०ख] **प्रक्लृप्तो** रचितः । अनेन परस्य तत्र ३०

(१) 'सूक्तं स्यात्' इति सम्बन्धः । (२) 'मे' इति निरर्थकमत्र । (३) प्रत्यनीकस्वभावयोः विकल्पाविकल्पयोः । (४) अन्यथानुपपत्तेरेव । (५) एकस्मिन् द्रव्ये तादात्म्यमिति । (६) वैशेषिकः ।

स्वातन्त्र्यं दर्शयति । कः ? इत्याह–प्रतिबन्धनियमः । च शब्दो न केवलं प्रत्यक्षादिकं प्रस्तावाद् अर्वाग्भागपरभागयोः रूपादिरसाद्योः इति गम्यते । यदि वा, ततः साक्षात् तादात्म्यतदुत्पत्ति-प्रतिबन्धाद् अपरोऽन्य एकसामग्र्यधीनतालक्षण इति व्याख्येयम् । कुतः स प्रक्लृप्तः ? इत्याह–सहभाविनाम् अनुमानप्रसङ्गात् । केषाम् ? इत्याह–रूपादिपरभागादीनाम् । कैः ? इत्य-

५ त्राह–रस-अर्वाग्भागादिभिः । स किंभूतः ? इत्यत्राह–स्वमतघाती । स्व इत्यनेन सौगत-परामर्शः तस्य मतघाती । कुतः ? इत्यत्राह–उपयुक्तरसेन इत्यादि । उपयुक्तेन आस्वादितेन रसेन अनुमेया या उपादानस्य [1]उपयुक्ततत्सहभाविरसरूपपरिणामिकारणस्य शक्तिः सामर्थ्यं रसस्य रसोत्पत्तौ[2] उपादानशक्तिः रूपोत्पत्तौ सहकारिशक्तिः रूपस्यापि रूपोत्पत्तौ उपादानशक्तिः अन्यत्र[3] सहकारिशक्तिः ततः रूपसिद्धौ रूपानुमितौ क्रियमाणायां प्रतीतिं लोकप्रसिद्धिं लङ्घयेत्

१० सौगतः । नहि पूर्वम् उपयुक्ताद् रसात सामग्रीविशेषानुमानम् [ततो रूपानुमानम्] इति लोके परम्पराप्रतीतिरस्ति; तत्र[4] उपयुक्तरसादेव रूपानुमितिप्रतीतेः । तथापि तत्कल्पने 'शक्यं हि बोद्धुम् स्वभावहेतुर्भावम्' इत्यादिना दूषणं निरूपयिष्यते । अथ प्रतीतिलङ्घने कथं स स्वमतघाती इति चेत् ? उक्तमत्र दूषणं निरूपयिष्यते इति ।

किञ्च लोकानुमानस्य मननं यच्च कीर्तितं कीर्तिना[5] तन्च (तत्र) किं तस्य प्रतीति-

१५ विलंघमेनतः (विलङ्घनेन ? ततः) तत्सिद्धौ दूषणान्तरमाह–[३१०ख] स्वलिङ्गसंख्यां कार्य-स्वभावानुपलब्धिगोचरां च लङ्घयेत् ।

एवं कारणलिङ्गोपगमात 'रसाद् उपयुक्ताद्' इत्यादिना कारिकां विवृणोति–रसात् । किं भूतात ? उपयुक्तात् प्रतिपन्नवान् सौगतो लोको वा । किम् ? इत्याह–सहकारित्वम् । क ? इत्याह–रूपाद्युत्पत्तौ । किंस्वभावम् ? इत्याह–तदुपादानस्वभावम् । तस्य उपयुक्तरसस्य यद्

२० उपादानं तत्स्वभावम् , पुनः पश्चात् तत्कार्यम् तस्य[6] तत्र तत्स्वभावस्य सहकारित्वस्य कार्यम् । तदेवाह–रूपादिकम् । तत् किं करोति ? इत्याह–प्रत्येति । कुतः ? इत्याह–तौ (?)[7] 'शक्ती-त्यादि[8] । शक्तेः प्रवृत्तिः कार्ये व्यापारः तया विना न रसोत्पत्तिः उपयुक्त-रसात्मलाभः । कस्य तया विना ? इत्याह–स्वोपादानस्य उपयुक्तरसोपादानस्य किन्तु तत्प्रवृत्त्या तदुत्पत्तिः । ततः किम् ? इत्याह–सैव तस्य शक्तिप्रवृत्तिरेव रूपादिकारणम् इति हेतोः 'अतीतैककालानां गतिः

२५ प्रतीतिः नानागतानाम् । कुतः ? व्यभिचारात् , इति[9] शब्दः परपक्षसमाप्तौ । तत्र दूषणमाह–'कोऽयम्' इत्यादि । पूर्वम् उपयुक्तरसात् तदुपादानरसस्य[10] रूपसहकारिणः प्रतिपत्तिः पुनः ततो रूपस्य इति प्रतिपत्तिक्रमोऽयं परेण उच्यमानः कः कुत्सित इत्यर्थः । कुतः ? इत्याह–तथैव व्यवहाराभावात् । यद्वा, 'अतीतैककालानां गतिः नानागतानाम्' इति[11] प्रतिपत्तेः क्रमः

(१) उपयुक्तस्य रसस्य तत्सहभाविनो रूपस्य च परिणामिकारणस्य उत्तररसात्मकत्वेन उत्तररूपात्म-कत्वेन च स्वयं परिणामिनः । (२) उत्तररसोत्पत्तौ । (३) उत्तररसोत्पत्तौ । (४) लोके । (५) धर्मकीर्तिना । (६) रसस्य । (७) 'त' इति निरर्थकमत्र । (८) "शक्तिप्रवृत्त्या न विना रसः सैवान्यकारणम् । इत्यतीतैक-कालानां गतिस्तत्कार्यलिङ्गजा ॥ ...... (९) अतीतैककालानां गतिर्नानागतानां व्यभिचारात्"–प्र० वा० स्ववृ० १।१२ । (१०) पूर्वरसस्य । (११) प्र० वा० स्ववृ० १।१२ ।

परिपाटिः न्यायानतिलङ्घनम् कोऽयम् । कुतः ? इत्याह–तथैव इत्यादि । तथैव *"अतीतैक-कालानां गतिर्नानागतानाम्" [प्र०वा० स्ववृ० १।१२] इत्यनेनैव प्रकारेण व्यवहाराभा-वाद् अन्यथापि [३११ क] व्यवहारात् सौगतस्य इति द्रष्टव्यम् । स्वयमेव 'उपयुक्तरसानुमित-रसादिना[1] तदपेक्षया ना (चा)नागतस्य रूपादे[र]व्यभिचारगतेः' इत्युपगमात् । दूषणान्तर-माह–तथा च तेनैव परपरिकल्पितप्रकारेण कारणात् कार्यानुमानम् । ५

यस्तु मन्यते[2]–'भावि कारणम्' इति ; अस्मिन् दर्शने कार्या[त् कारणा]नुमानम्, न कारणात् कार्यानुमानम् इति ; स[3] कीर्तेः[4] अनन्तरवचनं कृत्यति ; तस्यापि उपयुक्तरसेन पूर्वरसप्रतिपत्तिः कारणात् कार्यानुमानं स्यात् । तदनभ्युपगमे *"एकसामग्र्यधीनस्य" [प्र० वा० ३।१८] [5]इत्यादि निरर्थकम् । अन्योऽन्यहेतुफलभावे अन्योऽन्यसंश्रयः । एवमनेन 'प्रतीतिं स्वलिङ्गसंख्यां च लङ्घयेत्' इति व्याख्यातम् । १०

अधुना सा: (कृतनाशाऽ)कृताभ्यागमदोषं दर्शयन्नाह–राह [सह]भाविनश्च इत्यादि । अनुमीयमानरूपादिना सह भवनशीलाद् रसात् समकालरूपाद्यनुमानम् । कथम् ? इत्याह–पारम्पर्येण वर्णितप्रकारेण । तत् किं करोति ? इत्याह–न केवलं प्रतीतिप्रसिद्धिम् उपरुणद्धि निराकरोति । अनेन कृतनाशो दर्शितः, किन्तु प्रतिबन्धस्य तादात्म्यतदुत्पत्तिलक्षणस्य नियमं च विरुणद्धि । कथम् ? अनुमीयमानम् रूपेण सह प्राक्तनरसादेः तादात्म्याद्यभावेऽपि प्रति-बन्धान्तराद्[6] गमकत्ववर्णनात् । एतेन अकृताभ्युपगमः कथितः । १५

स्यान्मतम्–न तया परमार्थतः पूर्वम् उत्तरस्य उत्तरं वा पूर्वस्य कारणं लिङ्गं च इष्यते येनायम् अन्योऽन्यसंश्रयादिदोषः स्यात्, अपि तु व्यवहारिणा केवलं तन्मतानुसारिणा अनु-मीयते, तदेव अनूद्यते । तत्रापरः प्राह–स तर्हि साक्षाद् रसाद् रूपप्रतिपत्तिं [३११ ख] कुर्वन् किमिति प्रतिक्षिप्तः ? तत्प्रतिबन्धाभावादिति चेत् ; पूर्वोत्तरयोः कः प्रतिबन्धः ? तदुत्पत्तिरिति चेत् ; [7]प्रमाणतः सिद्धा, किमुच्यते व्यवहारिणेति ? प्रमाणसिद्ध[स्योभ]योरपि अभ्युपगमार्ह-त्वात्, अन्यथा त्परतः प्रामाणिकत्वान्नो येन (परस्यापि न प्रामाणिकत्वम्) । व्यवहार्यभ्युपगमात् चेत् ; अत एव प्रतिबन्धान्तरमस्तु । न च अप्रमाणाभ्युपगमसिद्धे द्वैवैस स (द्धेः अर्धवैशस) न्यायो[8] न्यायानुसारिणां युक्तः । तदपि अस्तु इति चेत् ; अत्राह–सहभाविनश्च इत्यादि । सहभाविन एव रसात् समकालरूपाद्यनुमानं न केवलं पारम्पर्येण या प्रीति (प्रतीतिः) सौगताभ्युपगता तामुपरुणद्धि किन्तु प्रतिबन्धनियमं च उपरुणद्धि इत्यनुवर्त्तते । सहभाविनोः प्रतिबन्धान्तरसिद्धेः नील-तद्विज्ञानवदिति । २० २५

तदेवं दृष्टान्ते निराकुलीकृते पर आह– 'यदुक्तम्–भ्रान्तिप्रत्यक्षयोः तादात्म्येन भवितव्यम्'

---

(१) एकसामग्र्यन्तर्गतपूर्वरस-पूर्वरूपादिना । पूर्वरूपं हि स्वसजातीयं उत्तररूपमुत्पाद्यैव उत्तररसोत्पादकसामग्रीमनुप्रविशति इति आस्वाद्यमानरसात् सामग्र्यनुमानं यद्यपि कार्यात् कारणानु-मानं तथापि एकसामग्र्यन्तर्गतपूर्वरूपात् उत्तररूपानुमानं कारणात् कार्यानुमानमेव इति भावः । (२) प्रज्ञाकरः । (३) प्रज्ञाकरः । (४) धर्मकीर्तेः । (५) "एकसामग्र्यधीनस्य रूपादे रसतो गतिः । हेतुधर्मानु-मानेन धूमेन्धनविकारवत् ॥"–प्र०वा० । (६) एकार्थतादात्म्यात् । (७) तर्हि तदुत्पत्तिः । (८) द्रष्टव्यम्–पृ० २६३ टि० ११ ।

इति ; तन्न सारम् ; प्रत्यक्षाद् आत्मसंवेदनरूपाद् भ्रान्तेः चित्राकारनिर्भासरूपायाः विरुद्धधर्माध्यासेन भेदादिति चेत् ; अत्राह-**स्वं स्वं खण्डशश्चेद्** इत्यादि ।

**[ स्वं खण्डशश्चेत्संवित्तिः बहिर्वेद्यं न किं तथा ।**
**सामग्रीभेदाद् भिद्येरन् यतः पुद्गलसंविदः ॥१०॥**

५ **पुद्गलस्यैकस्यैव चक्षुरादि[सामग्रीभेदात् ]रूपादिज्ञानप्रतिभासभेदः विज्ञानस्येव । तद्भ्रान्तिकल्पनायामुभयाकारानतिक्रमात् तदवस्थं चोद्यम् ।]**

**स्वम्** आत्मानं **खण्डशः** सचेतनादिरूपेण न विभ्रमाकारविवेकरूपेण सताऽपि भ्रान्तेरभावप्रसङ्गात **संवित्तिः** विपर्याकरोति **वित्तिः** बुद्धि**श्चेद्** यदि । तत्र दूषणम् **बहिर्वेद्यं** घटादि **किन्न 'खण्डशः संवित्तिः'** इति पदघटना । संवेते (संवित्तेः) तथैव प्रतीतेः इति

१० मन्यते । कथं खण्डशः स्यात तत्संवित्तिः ? इत्यत्राह-**सामग्री** इत्यादि । **यतो** यस्मात् खण्डशः संवेदनाद् **भिद्येरन्** भिन्नाः स्युः परस्परम् । काः ? इत्यत्राह-**पुद्गलसंविदः** [३१२क] रूपरसगन्धस्पर्शात्मकघटादिबुद्धयः । कुतः ? इत्याह-**सामग्रीभेदात्** चक्षुरादिकारणकलापभेदात् । एकस्य तद्विषयत्वादिति भावः ।

पूर्वार्धस्य सुगमत्वाद् व्याख्यानमकृत्वा परमर्धं व्याचष्टे-**पुद्गलस्य** रूपादिमयघटादेः

१५ **एकस्यैव** स्वगुणपर्यायसाधारणात्मन एव न परकल्पितरूपादि-परमार्थैकान्तभिन्नअवयव-अवयविरूपस्य **रूपादिज्ञानप्रतिभासभेदः** केवलं न स्वरूपभेद इत्यर्थः । कुतः ? इत्याह-**चक्षुरादि** इत्यादि । तत्र दृष्टान्तमाह-**विज्ञानस्यैव** (स्येव) इत्यादि ।

ननु च ग्राह्याकाराद् भिन्नं ज्ञानमाश्रित्य कारिका प्रवृत्ता (प्रवृत्ता) तत्कथमिदमुच्यते इति चेत् ; न; एकस्य दृश्येतरसंभववद् बाह्याकारसंभवाविरोधाभिप्रायेण एवमभिधानात् ।

२० यदि मतम्-न ज्ञानस्य ग्राह्याद्याकाराद् भेदो नापि परमार्थतः तत्तदात्मकम् तदाकारस्य भ्रान्तस्य ततः तत्त्वान्यत्वाभ्या (भ्याम) निर्वचनीयत्वात् । तदुक्तम्-

*"वस्तुन्येष विकल्पविवेद (कल्पः स्याद्विधेः) वस्त्वनुरोधतः ।" इति[3] ।
*"मन्त्राद्युपप्लुताक्षाणाम्" [प्र० वा० २।३५५] इत्यादि[4] ।
*"अविभागोऽपि" [प्र० वा० २।३५४] इत्यादि[5] वेति (चेति) ।

२५ तत्राह-**तद्भ्रान्ती**त्यादि । **तस्य** ग्राह्यादिनिर्भासभेदवतो ज्ञानस्य **भ्रान्तिकल्पनायां** क्रियमाणायां **उभयाकारानतिक्रमात्** स्वपररूपापेक्षया[6] अविभ्रमेतराकारानतिलङ्घनात् **तदवस्थं चोद्यम्** 'कथमेकम् अनेकात्मकम्' इति ?

अथ पररूपवत् स्वरूपेऽपि तद्भ्रान्तमिष्यते; तत्राह-**यथास्वम्** इत्यादि ।

---

(१) 'स्वं' इति द्विर्लिखितम् । (२) रूपादयः एव एकान्तभिन्नाः परमार्था इति बौद्धकल्पितम् , अवयव-अवयविनौ एकान्तभिन्नाविति यौगैः परिकल्पितम् । (३) उद्धृतोऽयम्-न्यायवि० वि० द्वि० पृ० १४ । (४) 'यथा मृच्छकलादयः । अन्यथैवावभासन्ते तद्रूपरहिता अपि ।' इति शेषः । (५) "अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥" (६) स्वरूपेऽविभ्रमाकारः पररूपे च विभ्रमाकारः ।

**[यथास्वं न चेद्बुद्धेः स्वसंविदन्यथा पुनः।**
**स्वाकारविभ्रमात् सिध्येद् भ्रान्तिरप्यनुमानधीः ॥११॥**

**प्रत्यक्षानुमानयोः स्वभावविभ्रमात् अनेकान्तमन्तरेण प्रत्यक्षस्यापि स्वार्थसंवेदनानुपपत्तेः सुव्यवस्थितं तत्त्वम् ।]**

**बुद्धेः न चेद्** यदि नास्ति। किम् ? इत्याह–**स्वसंवित्** स्वरूपवेदनम्। किं [३१२ख] सर्वथा ? न इत्याह–**यथास्वं** *"सर्वचित्तचैत्तानाम् आत्मसंवेदनं प्रत्यक्षम्" [न्यायबि० १।१०] अविकल्पकं बुद्धेः स्वरूपम् *"प्रभास्वरमिदं चित्तं प्रकृत्या" [प्र० वा० १।२१०] इत्यभिधानात्, तदनतिक्रमेण। **अन्यथा पुनः** विद्यते। कुतः ? इत्याह–**स्वाकारविभ्रमात्** बुद्धेः **स्व** आत्मीय **आकारः** स्वप्रकाशता *"स्वयमेव (यं सैव) प्रकाशते" [प्र० वा० २।३२७] इति[1] तस्य तत्र वा **विभ्रमात्**। ततः किम् ? इत्याह–**सिध्येत्** स्वलक्षणबुद्धेः भ्रान्तिरूपम्। केन प्रमाणेन ? [न] केनचित्, स्वयं भ्रान्तात् प्रत्यक्षात् तदसिद्धेः बहिरर्थवत्। अनुमानेन इति चेत् ; अत्राह–**भ्रान्ती**त्यादि। **अपि**शब्दो भिन्नप्रक्रमः, **अनुमानधीरपि भ्रान्तिः**।

कारिकार्थं दर्शयन्नाह–प्रत्यक्ष इत्यादि। सुव्यवस्थितं तत्त्वम् सर्वं भ्रान्तत्वम (न्तं तत्त्वमु-) पहसनवचनमिदम्। स्वसंवेदनप्रत्यक्षमेव अभ्रान्तमिति चेत् ; अत्राह–**अनेकान्तमन्तरेण** इत्यादि। एवं मन्यते–तत् स्वसंवेदनप्रत्यक्षं 'नीलमहं वेद्मि' इति ग्राह्यग्राहकसंवेदनस्वभावम्, ततोऽन्यद्वा स्यात् ? प्रथमपक्षे **अनेकान्तमन्तरेण** न केवलमनुमानस्य अपि तु **प्रत्यक्षस्यापि स्वार्थसंवेदनानुपपत्तेः सुव्यवस्थितं तत्त्वम्** स्वयमेव स्वस्य वा अर्थः इति। द्वितीये सुखनीलादौ का वार्त्ता ? भ्रान्तत्वमिति चेत् ; अन्यस्य तद्विपरीतस्य अदर्शनेनाऽसत्त्वात्। दर्शनेऽपि तद्वदेव, ततः तदेव चोद्यम् 'प्रत्यक्षानुमानयोः स्वभावविभ्रमात् सुव्यवस्थितं तत्त्वम्' इति।

स्यान्मतम्–तद् विभ्रमविवेकनिर्मत (ल) तया यद्यथा (द्यप्या) त्मानं न दर्शयति तथापि तच्चेतनदया (सच्चेतनादितया) दर्शयति इतरस्य विभ्रमाभाव इति; तत्राह–**सु (स्व) व्यक्त** इत्यादि।

**[स्वव्यक्तसंवृतात्मानौ व्याप्नोत्येकं स्वलक्षणम्।**
**यदि हेतुफलात्मानौ व्याप्नोत्येकं स्वलक्षणम् ॥१२॥**

**न बुद्धेर्ग्राह्यग्राहकाकारौ भ्रान्तावेव स्वयमेकान्तहानेः। तौ चेद् भ्रान्तौ किमभ्रान्तं यत् प्रत्यक्षं स्यात् ? तौ हि तदात्मानौ तद्व्यतिरेकेण एकान्तस्यानुपलब्धेः। कथञ्चिदुपलब्धौ सत्याञ्च तद्विवेकानुपलब्धौ उपलब्धस्यापि संवृतौ चेतःस्वलक्षणस्य सकृद् व्यक्तेतरस्वभावौ व्याप्नुवतः क्रमेण हेतुफलभावौ कः प्रतिबन्धः ?]**

**व्यक्तः** [३१३ क] प्रत्यक्षः संविदेत बोधस्वभावः **संवृतः** तद्विपरीतो वेद्यवेदकाकारविवेक इत्येके **'स्वं स्वण्डशः चेत संवेत्ति (संवित्तिः)'** इत्यादि नानार्थमेतद् इत्यपरे।

(१) "नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः। ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते॥"–प्र० वा०।

तस्मात् सचेतनादिरूपेण इव विभ्रमविवेकरूपेणापि बुद्धिः चकास्ति केवलं तदुत्तरकालभाविनी विकल्पबुद्धिः तत्रासन्नं ग्राह्याद्यावरणपटं परिकल्प(ल्प्य) तद्विवेकं संवृणोति नेतरद् रूपम्। तदुक्तं केनचित्–

*"अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
५ ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥" [प्र० वा० २।३५४]

विकल्पेन निश्चीयते इति। तत्राह–सु (स्व)व्यक्त इत्यादि। व्यक्तोऽसंवृतः चेतनादिस्वभावः, तत्संवरणं क्षणविवेकवत् बुद्धिव्यवहारोच्छेदः। संवृतो दर्शितः तदभावे विभ्रमविरहात् शास्त्रमनर्थकम्। स्वौ च तौ (च तौ) व्यक्तसंवृतात्मानौ च व्याप्नोति तदात्मकं भवति एकं स्वलक्षणं बुद्धिवस्तु यदि इत्यनेन पराभ्युपगमं दर्शयति। तर्हि इति अत्र द्रष्ट-
१० व्यम्। हेतुफलात्मानौ व्याप्नोति एकं स्वलक्षणम्। तदेवं क्रमाऽनेकान्तसिद्धेः एकस्य कार्यकारणभावनिषेधनं सौगतमतघाति।

ग्राह्याद्याकारविवेकं निर्मलं विज्ञानं तावत्र न संभवति इति न बुद्ध्या (बुद्धेरित्या) दिना प्रतिपादयन् तदभ्युपगम्य चेयं कारिका कृता इति च 'कथञ्चिद्' इत्यादिना 'व्यक्तेतर' इत्यादिना कारिकां विवृण्वन्नाह–न बुद्धेः इत्यादि। न बुद्धेः ग्राह्यग्राहकाकारौ भ्रान्तावेव
१५ मनोविकल्पभ्रान्तिरचितावेव न तात्त्विकौ इति एवकारार्थः। कुतः? इत्यत्राह–स्वयं सौगतस्य योऽयम् 'सर्वमविभागं ज्ञानम्' इति एकान्तः [३१३ ख] तस्य हानेः विकल्पे तो (तौ) भावतः स्याताम्, कथमन्यथा *"अविभागोऽपि बुद्ध्यात्मा, ग्राह्यग्राहकसंवित्तिभेदवानिव विकल्पेन लक्ष्यते।" [प्र० वा० २।३५४] इति सुभाषितं त[स्य] स्यात्, तदेकान्ते विकल्पभावात्। सोऽपि तदन्तरेण न; इत्यपि वार्त्तम्; तत्रापि तथाकल्पने अनवस्थानात्। *"विकल्पो
२० वस्तु तस्व द्वा (ऽवस्तुनिर्भासः)" नान्यदिति किं कृतोऽयं विभाग इति मन्यते।

तत्रैव दूषणान्तरमाह–तौ वेदिनौ (वेदिनः) ग्राह्यग्राहकाकारौ चेत् यदि भ्रान्तौ निरंशबुद्धौ विकल्पारोपितौ किम् अभ्रान्तम् तदाकाररहितम् न किञ्चित् यद् अभ्रान्तं प्रत्यक्षं स्यात्। इदमत्र तात्पर्यम्–यदि अविभागो बुद्ध्यात्मा कदाचित् प्रतिपन्नः स्यात् तद् 'विकल्पेन तौ[1] तत्र[2] आरोपितौ' इति, नान्यथा। नहि शुक्तिकाऽसिद्धौ तत्र रजतारोपसिद्धिः, रजतत्ववद् रजते
२५ विकल्पे च [3]तौ यदि सिद्धौ भवतः। न चैवमिति।

ननु प्रतिभासि (भासते) सर्वदा तदात्माऽविभागः, तौ च विकल्पारूढौ इति चेत्; अत्राह–तौ ग्राह्यग्राहकाकारौ हि खलु तस्य बुद्ध्यात्मनः आत्मानौ स्वभावौ। कुतः? इत्याह–तद्व्यतिरेकेण तदाकारव्यतिरेकेण एकान्तस्य एको ग्राह्यादिरहितोऽश्चेतनैव (तोऽन्तश्चेतनैव) अन्तो धर्मो यस्य तस्य अनुपलब्धेः। तदुपलम्भमभ्युपगम्य दूषणमाह–कथञ्चिद् इत्यादि।
३० शब्दादिरूपेण न विवक्षितरूपेण उपलब्धौ संशयादिव्यवच्छेदेन निर्णीतौ सत्यां च तद्विवेकानुपलब्धौ तस्य विभ्रमस्य विवेकस्य अनुपलब्धौ उपलब्धस्यापि संवृतौ 'सत्यां च' इत्यनु-

(१) ग्राह्यग्राहकाकारौ। (२) अविभागबुद्धौ। (३) ग्राह्यग्राहकाकारौ।

वर्तेत । [३१४ क] किम् ? इत्याह–**व्यक्तेतरस्वभावौ सकृद् व्याप्नुवतः** । कस्य ? **चेतः-स्वलक्षणस्य क्रमेण स्वहेतुफलव्याप्तौ कः प्रतिबन्धः ?**

ननु फले वृत्तिमद् विज्ञानं न हेतौ वृत्तिमत् स्वकाले तदभावात्, अत एव हेतौ वृत्तिमत् न फले, तत्कथं चेतःस्वलक्षणस्य स्वहेतुफलव्याप्तिप्रतिपत्तिः यतः तत्र '**कः प्रतिबन्धः**' इति स्यादिति चेत्; अत्राह–**संवृणोत्येव** इत्यादि ।

**[ संवृणोत्येव यथा वित्तिः सामान्येन स्वार्थयोः ।**
**विशेषाहितफलैकान्तभेदानवभासेत स्वतः ॥१३॥**
**प्रत्यासत्त्या यथैक्यं स्यात् भ्रान्तिप्रत्यक्षयोस्तथा ।**
**स्वहेतुफलयोरैक्यं ततस्तत्त्वं त्रयात्मकम् ॥१४॥**

क्वचिदेकान्तसंभवे अनेकान्ता प्रतीतिरियं क्रियेत । यावता बुद्धेः खण्डशः स्वार्थ- १०
संवेदनं भवत् साकल्येन तावदान्ध्यविजृम्भणम् । परस्पर···]

**संवृणोत्येव** स्थगयत्येव । का ? इत्याह **वृत्तिः (वित्तिः)** ज्ञानम् । कान् ? इत्याह–**विशेषाहितु (हित) फलैकान्तभेदान्** । कयोः ? इत्यत्राह–**स्वार्थयोः** स्वस्य अर्थस्य च । **स्वतः** आत्मना । केन ? इत्यत्राह–**सामान्येन** पूर्वापरैकत्वेन '**स्वार्थयोः**' इत्येतद् अत्रा-प्यपेक्षं (क्ष्यम्) भेदैकान्तविरोधिसामान्यात्मकहेतुफलग्राहिणी इति यावत् । नन्वेवं भवता १५
कल्प्यते, नन्वेवं (नत्वेवं) सा प्रतिभासते इति चेत्; अत्राह–**अवभासेत** इत्यादि । **यथा** शब्दश्रवणा[त्] तथाशब्दानुमानम् यत्तदोर्नित्यसम्बन्धात् । ततोऽयमर्थः–**यथा** येन प्रकारेण लोके प्रतीयते वित्तिः तथावभासेत । संवृतविशेषा च सामान्येन स्वार्थयोः लोके प्रतीयते अतः तथैवावभासते । न च हेतो (तौ) वृत्तस्य ज्ञानस्य फलग्रहणाभिमुख्यं विरुद्धम्, अन्यथा स्वात्मनि वृत्तस्य परत्र वृत्तिर्विरुद्धा भवेदिति सर्वस्य क्षणिकतापि (ताप्र)साधनमनवसरम् । एतावाँस्तु २०
विशेषः एकत्र देशस्य अन्यत्र कालस्य भेद इति ।

ननु हेतुफलसामान्यानां प्रतिभासते (ने) अन्योऽन्यविविक्तं वस्तुत्रयमापतितं नैकं तदात्मकम्, इतरथा नानैकं स्याज्जगत् [३१४ख] इति चेत्; अत्राह–**प्रत्यासन्न (सत्त्या)** इत्यादि । **प्रत्यापोद्यतया यथा (प्रत्यासत्त्या यया)** तथाऽवभासलक्षणया, स्वहेतोः तथोत्पत्ति-लक्षणया अशक्यविवेचनरूपया वा **ऐक्यं** तादात्म्यं **स्यात्** । कयोः ? इत्यत्राह–**भ्रान्तिप्र-** २५
**त्यक्षयोः** । तथाहि–यदेव पतिशङ्खज्ञानम् अर्थक्रियास्थितिविरहात् भ्रान्तं तदेव स्वरूपे अभ्रान्तं संस्थानमात्रे वा [ऽ]विपर्ययात् । । न च तत्र ज्ञानान्तरस्य अविसंवादकल्पना, तत एव तद्दर्श-नात्, अन्यथा अन्यतोऽपि न भवेत्, ततोऽपि अन्यत एव कल्पनादित्यव्यवस्थानात् । यथैव

---

(१) ज्ञानकाले । (२) ज्ञानकारणस्य फलस्य अभावात् । (३) "एतदेव स्वयं वेदैकत्वं सिद्धिवि-निश्चये । प्रत्यासत्त्या यथैक्यं स्यात् भ्रान्तिप्रत्यक्षयोस्तथा । भागतद्वद्भेदेऽपि तत्तत्त्वं त्र्यात्मकम् ॥" –न्यायवि० वि० प्र० पृ० १६८ । (४) हेतुः पूर्वपर्यायः फलमुत्तरपर्यायः तयोश्च अन्वितं सामान्यं द्रव्यमिति वस्तुत्रयम् ।

हि शङ्खे पीतज्ञानस्य पीतसम्बन्धार्थ (म्बन्ध्यर्थ)क्रियाविरहः तथा संस्थाने साधारणास्पष्टानुमानाकारार्थक्रिया[ऽ]भावः अन्यथा सामान्यवस्तु (सामान्यं वस्तु स्यात[1]) । व्यवहारी नैवं मन्यते इति चेन् ; पीतज्ञाने संस्थानप्रतिभासे सम (च समत्वम्) । व्यवहारे तदैक्यमिति चेत् ; तत्रैव क्षणभङ्गादिखण्डनम् , परस्तु परमार्थोऽपि चिन्तितः । तदैक्ये किम् ? इत्याह-**तया**

५ प्रत्यासत्त्या **स्वहेतुफलयोः ऐक्यम् । नन** ऐक्यात् **तत्त्वं त्रयात्मकम्** उत्पादाद्यात्मकम् ।

प्रथमकारिकां व्यतिरेकमुखेन व्याख्यातुकाम आह-**क्वचिद्** इत्यादि । **क्वचिद्** बहिरन्तर्वा यद्वा विभ्रमे अन्यत्र वा व्यवहारे परमार्थे वा **एकान्तसंभवे एकान्तस्य** अशेषपरवादिमतस्य प्रमाणबलात् **संभवे** सति **प्रतीतिः अयं [इयं] क्रियेत** । किंभूता ? इत्याह-**अनेकान्ता** इत्यादि । समस्ति (नास्ति) तत्संभवः ततस्तदपलाप इति; अत्राह-**यावता** इत्यादि । **स्वार्थयोः**

१० **संवेदनं** ग्रहणं **बुद्धेः** खण्डशः स्वसंवेदनम् स यदि (सातादि) रूपेण न विभ्रम-[३१५क] विवेकस्वरूपेण इति ध र्मो त्त रा दिः । तथा ज्ञानरूपेण न उत्तरार्थक्रियासम्बन्धिना स्वभावेन *"द्विष्ठसम्बन्धसंवित्तिः" [प्र०वार्तिकाल० २।१] इत्यादि वचनात् । इतरथा साधनज्ञानप्रतीतिकाले एव प्रमाणतायाः प्रतीतेः तत्परीक्षणं[3] बालविलसितम् । यदि पुनः तत्सन्धिता (तत्सम्बन्धिना) तद्वद्ग्रहणात् , गृहीतोपि (तापि) अर्थक्रिया दर्शने[न] न निश्चीयते; न तर्हि गृहीता ।

१५ नहि व्यवहारी गृहीतमनिश्चितं मन्यते । तदनुसारी च भवान् , परमार्थतः कार्ये (कार्य) कारणभावो (वा)भावेऽपि तदिच्छया[4] तदङ्गीकरणात् ,

*"परमार्थाविकल्पेन सांवृतत्वं विहन्यते ।
तद्ग्रहे सांवृतत्वे तु तद्ग्रहोऽस्तु विकल्पतः ॥" इति

प्र ज्ञा क रः । तथा 'अर्थवेदनमपि नीलादितया न जातया (जडतया) इति सौत्रान्तिकः ।

२० द्रव्यादेः तद्रूपेण न सकल तजन्येकलंनक (तज्जन्यफलजनक)शक्तिरूपेण, तत्र अविवादप्रसङ्गात् , शक्तेः ततो भेदैकान्तेऽपि उक्तम् , इति वैशेषिकादिः । **भवत्** जायमानम् । किं करोति ? इत्याह-**साकल्येन** इत्यादि । **तावद्वान्त्यविचंभणं (तावदन्ध्यविजृम्भणं)** तत्त्वपरीक्षायाम् मध्यस्थं यदि चेतः, तद्विज्ञभणे (तद्विजृम्भणे) तु नेति ।

द्वितीयां विवृण्वन्नाह-**परस्पर** इत्यादि । सर्वं सुगमम् ।

२५ परमपि अन्यथानुपतत्ता (पपत्तेरु)दाहरणं दर्शयन्नाह-**परस्पर** इत्यादि ।

**[परस्पराविनाभूतौ नामौन्नामौ तुलान्तयोः ।**
**स्थाल्यादौ लिङ्गमीदृक् चेत् सर्वं कार्यं न किं पुनः ॥१५॥**

---

(१) अर्थक्रियाकारित्वात् । (२)"इह च रूपादौ वस्तुनि दृश्यमाने आन्तरः सुखाद्याकारस्तुल्यकालं संवेद्यते । न च गृह्यमाणाकारो नीलादिः सातरूपो वेद्यते इति शक्यं वक्तुम्; यतो नीलादिः सातरूपेणानुभूयते इति न निश्चीयते ।"-न्यायवि० टी० १।१० । (३) प्रमाणतापरीक्षणम् । (४) व्यवहारिजनेच्छया । (५) तुलना-"तुलोन्नामरसादीनां तुल्यकालतया न हि । नामरूपादिहेतुत्वं न च तद्व्यभिचारिता ॥ तादात्म्यं तु कथञ्चित् स्यात् ततो हि न तुलान्तयोः ।"-न्यायवि० २।३३८ । प्रमाणसं० पृ० १०७ ।

तुलान्तयोर्नामोन्नामयोरेकतरस्य दर्शनादन्यतरस्यानुमानम्, वृक्षादेः छायाद्यनुमानं कार्यलिङ्गं संभावयन् स्वभावहेतुमुपरुणद्धि । शक्यं हि वक्तुम्–भावः सन् कृतकं वा वस्तु जनयन् अनश्वरमेव जनयति । अतः स्वकारणस्वभावानुमानात् कारणात्मनः प्रतिपत्तिरिति दुःखं बतायं तपस्वी, तस्य स्वोरस्ताडं क्रन्दतोऽपि लोकानिवृत्तेः ।]

तुलान्तयोः नामोन्नामौ परस्पराविनाभाविनौ 'अनुमीयेते' इत्यध्याहारः । उन्नामाविनाभावी नामस्तदविनाभावी चोन्नामः 'अन्यथानुपपत्तेः' इत्यनुवर्तते । वृक्षाच्छायादौ आदिशब्देन जले चन्द्रादिग्रहणम्, सति द्रव्यमेघादौ 'अनुमीयते' इत्युपस्कारः । अत्रापि 'अन्यथानुपपत्तेः' [३१५ख] इत्यनेन घटना । अथ पूर्वम्, एतच्च पूर्वसामग्रीकार्यमिति, अतः सैवाऽनुमीयते; इत्यत्राह–ईदृग् इत्यादि । कार्यम् ईदृग् लिङ्गं चेत् यदि [इ]ति किं पुनर्न कार्यम् सत्त्वादिकमपि कार्यमेव स्यादिति ।

'ईदृग्' इत्यादि भागं विवृण्वन्नाह–तुलान्तयोः इत्यादि । तुलान्तयोः यौ नामोन्नामौ तयोः एकतरस्य नामस्य उन्नामस्य वा दर्शनाद् अन्यतरस्य उन्नामस्य नामस्य वा अनुमानम् तथा वृक्षादेः सकापा (सकाशात् छाया) द्यनुमानम् अथवा वृक्षा:(क्षादेः) सम्बन्धि छायादिना अनुमानम् कार्यलिङ्गं संभवं भवन् (संभावयन्) सौगतः स्वभावहेतुम् उपरुणद्धि निराकरोति, कार्यं हेतुं तं ब्रूयात् । एतदेव दर्शयन्नाह–शक्यं हि इत्यादि । [शक्यं हि वक्तुम्] भावं (वः) सत् तत् कृतकं वा[2] अपेक्षितपरव्यापारं वा वस्तु जनयतु [यन्] स्वस्मैवां [अनश्वरमेव] नित्यरूपमेव जनयति घटादौ तथा दर्शनात् इति मन्यते । ततः किम् ? इत्याह–[अ]तः कारणाद् अतो वा लिङ्गात् स्वकारणस्वभावानुमानाद् भावस्य कृतकस्य वा यत् कारणं तस्य यः स्वभावो नश्वरश्च कार्यजननरूपः तस्य अनुमानात् कारणात्मनः कृतकस्य वा प्रतिपत्तिः इति न साक्षात् तत्कालभाविना ता न (तन्न)श्वरत्वमनुमीयत इति भावः । अथ यदा अतः स्वकारणस्वभावानुमितिः तदा कार्यं सत्त्वादि, यदा तु स्वभावभूतं नश्वरत्वं तदा स्वभाव इति चेत्; तर्हि यदा रसादेः स्वभावानुमानं तदा कार्यत्वं यदा तु समानकालरूपाद्यनुमानं तदा [३१६ क] लिङ्गान्तरत्वम् । प्रकृते तादात्म्यसम्बन्धो नात्रेति चेत्; अत्रापि योग्यता इति समानम् । यथैव वा अर्थान्तरयोः अकार्यकारणयोः कचित् कदाचित् सहदर्शने(न)भावेऽपि पुनः एकाभावेऽपि तददर्शनात् सर्वत्रानाश्वासः तथा अनर्थान्तरयोरपि कचित्तादात्म्यदर्शनेऽपि तदन्यथादर्शनात्, यथा वृक्षत्वाभावेऽपि चूतत्वस्य[3] इति सर्वत्र अनाश्वासः । एवं परीक्षणे लोकस्य व्यवहारविलोपः । न चायं पक्षः क्षमो भवता तदङ्गीकरणात्, सौगतस्य कथं क्षमः तेनापि अयमङ्गीकृतः ? प्रागद्वैतावतारात् लोकात् तादात्म्यादिप्रतिबन्धसिद्धिवत् सहभाविनां रूपादीनाम् अन्यथानुपपत्तिप्रतिबन्धसिद्धिरपि अस्तु विशेषाभावादे (वात् । एतदे) वाह–दुःखम् इत्यादिना ।

(१) तुलना–"न हि वृक्षादिः छायादेः स्वभावः कार्यं वा । न चात्र विसंवादोऽस्ति । चन्द्रादेर्जलचन्द्रादि प्रतिपत्तिस्तथानुमा । न हि जलचन्द्रादेः चन्द्रादिः स्वभावः कार्यं वा ।"–लघी० स्ववृ० श्लो० १२–१३ । (२) "अपेक्षितपरव्यापारो हि भावः स्वभावनिष्पत्तौ कृतक इति ।"–न्यायबि० ३।१२ । (३) आम्रकतासंभवात् ।

दुःखं यथा भवति तथा 'जीवति' इत्यनुसन्धिः, बत इति विषादे। अयं सौगतः तपस्वी वराकः। किं कुर्वन्? इत्याह–लोक इत्यादि। कुतः? इत्याह–तस्य सौगतस्य सपादो दरसि र स्तानं (स्वोरस्ताडं) क्रियाविशेषणमेतत्। क्रन्दतोऽपि रुदतोऽपि लोकस्य अनिवृत्तेः अन्यथानुपपत्त्या प्रवृत्ताद् व्यवहारात् इति सम्बन्धः।

५ अत्रैव उदाहरणान्तरं दर्शयन्नाह–तथैव इत्यादि।

[तथैव ज्योतिषां मध्ये उदिताज्ज्योतिषोऽनुमा।
उदेष्यति कुतो हेतोः कृत्तिकादेः भवेदिति ॥१३॥

प्रतिबन्धपरिसंख्यायाम् [1]उदेष्यति शकटं कृत्तिकोदयादिति किं प्रमाणम्? न चात्र कश्चिद् व्यभिचारोऽस्ति। नो चेत्; प्रमाणसंख्या प्रतिबन्धपरिसंख्याघातिनीव लक्ष्यते।
१० ज्योतिषामनागतोदयास्तमयादिफलज्ञानमनुमानमनिच्छतः प्रमाणान्तरप्रसङ्गात्। तादात्म्येन कुतश्चित् *"अतीतैककालानां गतिर्नानागतानां व्यभिचारात्" [प्र० वा० स्ववृ० पृ० ४९] इति व्याप्तिमेव प्रतिक्षिपन् न केवलमनुमानमुद्रां भिनत्ति किन्तु समस्तप्रमाणप्रमेयव्यवस्थामपि।]

यथैव अन्यथानुपपत्तेः नामोन्नामयोः एकतरदर्शनाद् अन्यतरानुमानं वृक्षादेः छाया-
१५ द्यनुमानं तथैव तेनैव प्रकारेण अनुमा 'भवेत्' इति सम्बन्धः। कुतः क? इत्याह–ज्योतिषां मध्ये उदिताज्यो (ज्ज्यो)तिषः कृत्तिकादेः हेतोः लिङ्गाद् उदेष्यति [३१६ ख] ज्योतिषि शकटादौ इति भवन् शेष्यते (न चेष्यते) सौगतैः इति चेत्; अत्राह–कुतो नैव भवेत्? *"अतीतैककालानां गतिः" [प्र०वा० स्ववृ० पृ० ४९] प्रतिपत्तिः नो चेत्; न यदि भविष्यतां व्यभिचारादिति व्यवहारानुसारिणोऽपि तद्व्यवहारविलोपः।

२० न कृत्तिकोदयात् भविष्यच्छकटाद्यनुमानम् अपि तु द्वयोः कारणभूतयोः सामग्र्या इत्येके। तेषां तयोः यौगपद्यम्, इतरथा रसादीनामपि तु न स्यादिति निरर्थकम्– *"अतीतैककालानां गतिः" [प्र० वा० स्ववृ०] इति।

किञ्च, एकसामग्र्यधीनत्वेऽपि [2]तयोर्यौगपद्ये मानसाध्यक्षविषय[3] इन्द्रियज्ञानसहकारी न स्यात्।

२५ ननु कथञ्चित् सामग्रीस्वभावानुमानेऽपि न भाविशकटोदयात्(नु)मानम् *"अतीतैककालानां गतिः" [प्र० वा० स्ववृ०] इत्यस्य विरोधा वे विदं (धादिति चेत्; इदं) स एव जानाति य एवं वदन्ति (ति)।

साध्यपि (भाव्यपि) कारणम्, कृत्तिकोदयात् शकटोदयस्य करणस्य (कारणस्य) अनु-

---

(१) तुलना–"भविष्यत्प्रतिपद्येत शकटं कृत्तिकोदयात्। श्व आदित्य उदेतेति ग्रहणं वा भविष्यति॥ तदेतद् भविष्यद्विषयमविसंवादकं ज्ञानं प्रतिबन्धसंख्यां प्रमाणसंख्यां च प्रतिरुणद्धि।"–लघी० स्व० श्लो० १४। (२) कृत्तिकोदय-शकटोदययोः। (३) इन्द्रियज्ञानविषयस्य अनन्तरो विषयः इन्द्रियज्ञानस्य सहकारी भवन् मनोविज्ञानमुत्पादयति, तन्न स्यादिति भावः।

मानम् इत्यपरे[1]। तेषां [2]स्वग्रन्थे 'श्व आदित्य उदेता अद्य तद्व इन्द्रियात् (तदुदयात्)' [3]इत्यनुमाननिषेधं(ध)कथा प्रमाणानाम् अयुक्तम् (क्ता)। उभयोः अनभ्युपगमे कथमनाभावि (नागामि)-निवृत्तिः ऐकान्तिकी स्यात् ? पूर्वभावित्वे च कार्यस्य सुगतस्य सुगतत्वा प्रोक्तनीया दशासर्वा (सुगतत्वात् प्राक्तनी या दशा सा सर्वा) कार्यभूता उत्तरा कारणरूपा ततः तदर्थं प्रवृत्तेः। तथा च [4]"अत्र भगवतो हेतुफलसंपत्त्या प्रमाणभूतत्वं(त्वे)न स्तोत्राभिधानम्[5], तत्र हेतुः ५ आशयप्रयो॰सम्पत् सांव्यवहारिकप्रमाणापेक्षया, आशयो जगद्धितैषिता, प्रयोगो जगच्छास्तृत्वं (जगच्छासनात् शास्तृत्वं) फलं स्वपयत् स्वार्थसंपत् (स्वार्थसम्पत्) सुगतत्वेन" [प्र० समु० वृ० १।१] इत्यादि[5] सर्वमयुक्तम्; संव्यवहारापेक्षयैव [३१७ क] व्याख्याने 'अग्निः कारणं दाहाद्यर्थक्रिया तत्फलम्' इत्यनभ्यासे अग्निकारणलिङ्गदर्शनात् तत्फले प्रवृत्तिः इति प्रसक्तम्, तथापि तत्क्रिया[या] एव कारणत्वे वल्लीदाहः(हे) फलपर्णकौघः १० कारणम्, अतः तद्दाहानुमानं कारणात् कार्यानुमानम्। कथमेवं सुगतत्वं तायित्वं व (च) हेतुः आशयप्रयोग [:] तत्फलं न स्यादिति तदवस्थः पूर्वो व्याघातः[6] स्यादिति चेत्; कुत एतत् ? सुगतत्वाभावे आश्रय (आशय)प्रयोगसंपदोऽस्य [भावात्, [7]तद]भावे न सुगतत्वम्। अन्यत्रा (थाऽ)हेतुत्वम्। अन्योऽन्यहेतुकत्वे वा अन्ये [अन्योऽन्य]समाश्रयान्नैकतरस्यापि सिद्धिः। संव्यवहाराश्रयात् सर्वत्र हेतुफलभावम् अन्योश्रयदोषदृष्टमप्यभी (अन्योऽन्याश्रयदोषदुष्टमप्यभी)- १५ ष्टमिच्छति न पुनः अकारणभूतात् कृत्तिकोदयाद् अन्यथानुपपन्नात् तद्दोषपरिवर्जितात् शकटोदयानुमानमिति सत्यं परो[8]गुप्तप्रज्ञः (ज्ञ एव)। एतेन अरिष्टादेः मरणाद्यनुमानं चर्वितं(त)चर्वितम्।

कारिकार्थं व्याचष्टे–प्रतिबन्ध इत्यादिना। प्रतिबन्धस्य अविनाभावस्य **परिसंख्यायां** तादात्म्यतदुत्पत्तिरूप एव नान्यः प्रतिबन्ध इति परिगणने क्रियमाणे **उदेष्यति शकटं कृत्तिकोदयात् इति किं प्रमाणम् ?** इति पृच्छति। न प्रत्यक्षम्; लिङ्गाश्रयणात्। ना[नुमा]नम्; २० परप्रतिबन्धमन्तरेण भावात्। प्रमाणान्तरं स्यादिति भावः। यद्वा परस्य **किं नैव प्रमाणम्** इति व्याख्येयम्। व्यभिचा[रा]न्न प्रमाणमिति चेत् [अत्राह–] **न चात्र** इत्यादि। देशकालाकारविपर्ययग्रहणलक्षणानां **व्यभिचाराणां** मध्ये **नैकोऽप्यस्ति** इति कश्चिद् ग्रहणम्। कुत एतत् ?

---

(१) भाविकारणवादिनः प्रज्ञाकरगुप्ताः। (२) तुलना–"तेन यदुच्यते भट्टेन–यः सवितुरुदयो भावी न तेनाद्योदयोऽन्वितः। अथ चाद्योदयात् सोऽपि भविता श्वोऽनुमीयते॥···तदपास्तम्,यतश्च यथोपवर्णितः साध्यान्वयो हेतुर्विद्यते।"–प्र० वा० स्ववृ० टी० पृ० १८। "यथाद्योदयात् श्वः सूर्योदयाद्यनुमानं न तदनुमानं नियामकलिङ्गाभावात्, अद्य गर्दभदर्शनात् श्वः सूर्योदयानुमानवत्।"–प्र० वा० स्ववृ० टी० पृ० ४९। (३) "श्व आदित्य उदेतेति ग्रहणं वा भविष्यति"–लघी० श्लो० १४। (४) "साक्षाद्वी साक्षार्थत्वात्। भगवानेव हि प्रमाणभूतोऽस्मिन् प्रसाध्यते।"–प्र० वार्तिकाल० पृ० १। (५) "अत्र च भगवतो हेतुफलसम्पत्त्या प्रमाणभूतत्वेन स्तोत्राभिधानं प्रकरणादौ प्रसादजननार्थम्। तत्र हेतुराशयप्रयोगसम्पत्, आशयो जगद्धितैषिता, प्रयोगो जगच्छासनात् शास्तृत्वम्, फलं स्वार्थसम्पत्। स्वार्थसम्पत् सुगतत्वेन त्रिविधमर्थमुपादाय। प्रशस्तार्थं सुरूपवत्। अपुनरावृत्त्यर्थं सुनष्टज्वरवत्, निःशेषार्थं सुपूर्णघटवत्···"–प्र० समु० वृ० अ० १।१। (६) सुगतत्वाभावेऽपि तत्सद्भावात्। (७) आशयप्रयोगसम्पदभावे। (८) प्रज्ञाकरगुप्तः नष्टप्रज्ञः इत्यर्थः।

इत्यत्राह–कृत्तिका इत्यादि ।

यदि वा, तत्प्रमाणम् । कुतः ? इत्यत्राह–[३१७ख] कृतात्यादि (कृत्तिकेत्यादि) । ननु तदन्यथानुपपत्तिः कुतोऽवगम्यते ? विवक्षितशकटोदयाभावे अदर्शनादिति चेत् ; न; सर्वदर्शिनोऽदर्शनं सर्वत्र अर्थाभावं गमयति, नान्यस्य[1] व्यभिचारात् । एकदा तदा (तथा) दृष्टानां सच्चाथवान्नी-
५ फलानां पुनरन्यथापि[2] दर्शनात् । नाऽयं सौगतपक्षे दोषः तदवगमनिमित्तस्य[3] तादात्म्यादिप्रति-
बन्धस्य भावादिति चेत् ; नैतत्सारम् ; यतो यथैव बहुलं शिंशपायाः वृक्षस्वभावदर्शनात् ['तद्-विना]भूतं सर्वत्र सर्वदा वृक्षस्वभावस्य' इति गम्यते अन्यथा सकृदपि तत्स्वभावा न भवेत् ; तथा कृत्तिकोदयः बहुलं [शकटोदया]विनाभाविस्वभावः प्रतीयमानः सर्वत्र सर्वदा तत्स्वभावः, अन्यथा सकृतदपिस्य (सकृदपि तस्य) तत्स्वभावताऽयोगादिति गम्यते । अत्र अदृष्टव्यभिचाराशङ्का
१० न शिंशपा...मिति किंकृतो विवेकः ? यथा च वृक्षाभावेऽपि तद्भावो(वे) निःस्वभावता तस्याः तथा कृत्तिकोदयस्य तदविनाभाविस्वभावविरहे तदवस्थैव निःस्वभावता । न चेदमत्र चोद्यम्– 'तत्स्वभावता तस्य कुतः' इति; शिंशपायामपि तुल्यत्वात् । न तुल्यम् ; तस्याः स्वकरणात् (स्वकारणात्) । अत्रापि इदमेव उत्तरमस्तु । तदनुमानप्रसङ्गश्चेत् ; शिंशपायामपि इति ।

स्वभावहेतवे दत्तः सांप्रतं किं जलाञ्जलिः ।
१५ येनैवं (वं) सौगते (तो) भूते नो चेत् लिङ्गान्तरं न वित् (किं) ॥

अत्रैव दूषणान्तरं दर्शयन्नाह–प्रमाण इत्यादि । एवं मन्यते–अस्य अनुमाने अन्तर्भावात्तु 'द्वे प्रमाणे' इति प्रमाणसंख्या प्रतिबन्धपरिसंख्याघातिनी[व] द्विविध एव प्रतिबन्ध इति तत्परिसंख्या प्रमाण [३१८क] परिसंख्याघातिनी लक्ष्यते । 'इव' शब्देन अनादरं दर्शयति । कुतः ? इत्यत्राह–ज्योतिषां ग्रहादीनां यौ अनागतोदयास्तमयौ तौ आदी यस्य तत्फलस्य
२० तस्य ज्ञानम् उक्तप्रतिबन्धाद् अनुमानमनिच्छतः प्रमाणान्तरप्रसङ्गात् । उपलक्षणमेतत्–तेन इच्छतः[10] प्रतिबन्धान्तरप्रसङ्गादिति गम्यते ।

पुनरपि तद्दर्शयन्नाह–तादात्म्येन इत्यदि । कुतश्चित् लिङ्गा[त् अतीतैककालानां गतिः] नानागतानाम् । कुतः ? व्यभिचारात्, इत्येवं न केवलम् अनुमानमुद्रां भिनत्ति । किं कुर्वन् ? प्रतिक्षिपन् । काम् ? व्याप्तिमेव[11] तद्ग्राहकप्रमाणाभावादिति भावः । तथाहि–
२५ तत्प्रतिबन्धनियमसमये बुद्धेः नाऽकारणम् अर्थो विषयः[12], न च साकल्यव्याप्तिविष[या]याः तस्याः[13] सर्वम् अतीतं वर्त्तमानमनागतं च कारणम् ; अनन्तरातीतस्यैव सर्वत्र कारणत्वोपगमात्, इतरथा [14]तत् स्वान्यकार्यदेशादिसङ्गतां(तं[15]) कुर्यादिति ।

(१) न चानुमाता सर्वदर्शी विद्यते, अनुमानवैफल्यात् । (२) देशान्तरे कालान्तरे कृत्तिकास-द्भावे च मेघुराणामपि दर्शनात् । (३) अविनाभावावगम । (४) आदिपदेन तदुत्पत्तिग्रहः । (५) वृक्ष-स्वभावा । (६) शिंशपायाः । (७) तत्स्वभावाया एव उत्पन्नत्वात् इति सम्बन्धः । (८) कारणानुमानप्र-सङ्गः । (९) शकटोदयानुमानं स्वीकुर्वतः । (१०) तादात्म्य-तदुत्पत्तिव्यतिरि[illegible]कार्यकारणरूप-अविना-भावस्वीकारापत्तेः । (११) व्याप्तिग्राहक । (१२) इति नियमानुसारेण । (१३) बुद्धेः । (१४) कारणम् । (१५) अन्यदेशे अन्यकाले च कार्यं कुर्यादिति ।

नास्माकं प्रतिभासाद्वैतवादिनां तन्मुद्राभेदो दोषाय सूक्तार् (सूक्तत्वात्) इत्यत्र आह—किंचिद् (किन्तु) इति । किन्तु अपि तु समस्तप्रमाणप्रमेयव्यवस्थापि 'विनापि' इत्यनुवर्त्तते । अनुमानाभावे [1]तदयोगात् , इतरथा *"प्रमाणेतरसा[illegible]" [2]इत्यादि-[illegible]वचनम् अन्यत् सर्वम् ।

तद्व्यवस्थाभेदेऽपि प्रत्यक्ष [ः] प्रमाणप्रमेयव्यवस्थाभेद इति चेत् ; अत्राह—प्रत्यक्ष । ५ इत्यादि ।

[ प्रत्यक्षमेकान्तेन स्वल[illegible]लक्षणम् ।
मिथ्यानुमाऽसदर्था स्वलक्षणं लुब्धलक्षणम् ॥१७॥

विशद···कालान्तर···तथा संविर्त्ति ग्राह्यग्राहकविकल्पविभ्रमात्मिकां संपश्यामो न पुनरेकान्तम् ।] १०

[3]तस्य हि लक्षणं देशान्तरादिव्याप्त्या विधातव्यम् । न च स्वसंवेदनव्यक्तिभिः स्वलक्षिताभिः तच्छक्यमिति तात्पर्यम् । युक्तमेतत्—यदि साकल्येन चतुर्विधप्रत्यक्षलक्षणमुच्येत, न चैवम् तदभावात् , विपर्ययात् स्वसंवेदनस्यैवोच्यते [३१८ख] [4]तत् प्रत्यक्षसिद्धमिति चेत् ; अत्राह—प्रत्यक्षम् इत्यादि । प्रत्यक्षं स्वसंवेदनाख्यम् अन्यद्वा । किंभूतम् ? इत्याह—[illegible] सम्बन्धि यद् एकान्तेन असाधारणत्वेन एकेन असहायेन अन्तेन धर्मिना (धर्मेण) उपलक्षितं १५ स्वलक्षणं तेन विलक्षणं विसदृशं न तदाकारं ततो विमुखं वा । अनुमितेः तत्सिद्धिरिति चेत् ; अत्राह—मिथ्या विसंवादिनी अनुमा । कुतः ? इत्यत्राह—असदर्था निर्विषया निष्प्रयोजना वा, प्रतिभासाद्वैतस्य स्वतःसिद्धेरभ्युपगमात् । यद्वा असदर्था हेतुलक्षणाभावेन यस्या इति । ततः किम् ? इत्याह—स्वलक्षणं परकीयं लुब्धलक्षणम् , अनेन स्वलक्षणशब्दमिरुक्तं (रिक्तं) करोति । २०

कुतः पुनः प्रत्यक्षं तद्विलक्षणम् ? इत्यत्राह—विशद इत्यादि । यथैव च युगपद् [illegible] स्थवीयसो ग्रहणसंभवः तथा [illegible]स्थायिनोऽपीति ; अत्राह—कालान्तर इत्यादि । अनेन तत्प्रत्यक्षत्वा (त्व)साधने विरुद्धोपलब्धिं दर्शयति ।

यद्येकस्मिन् तदद्वैतवाञ्छा तेऽत्र स्थवीयसि ।
पूर्वोत्तरानुगभागे मुक्त एवासि सर्वथा ॥ इति मन्यते । २५

यदि पुनः ततो भिन्नं तदद्वैतम् ; तत्राह—यथासंविर्त्तिम् इत्यादि । तथा संविर्त्ति संपश्यामः ग्राह्यग्राहकावेव विकल्पौ भेदौ ताभ्यां विभ्रमात्मिकाम् । एवं मन्यते—यदि स्तम्भादिव्यतिरिक्त-

(१) प्रमाणप्रमेयव्यवस्थाऽयोगात् । (२) यदा हि प्रमाणप्रमाणाभासयोः सामान्या स्थितिर्भवति तदा इदं प्रमाणम् इदञ्चाप्रमाणमिति विभागः अविसंवादिहेतुमूलकेन अनुमानेनैव भवति । (३) "अन्य-धियो गतेः । प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित्' इति शेषः । 'श्लोकोऽयं [illegible]' इति कृत्वा उद्धृतः प्रमाणमीमांसायाम् (पृ० ४) तद्भूतत्व प्रमाणप० (पृ० ६७) प्रमेयक० (पृ० १८०) स्या० रत्ना० (पृ० २६१) इत्यादिषु । (४) प्रत्यक्षस्य । (५) स्वसंवेदनम् । (६) स्वलक्षणविलक्षणम् ।

मानशरीरं तदर्शनम् स्तम्भादि किं भविष्यति ? [भविष्यति] चेत् ; स्वतोऽस्या'वभासनोत व (ने 'तद्)योगात् , स्वसंवेदनविभ्रमप्राप्तेः । अन्यतः चेत्[3] ; सिद्धं नः समीहितम् । एकान्तमपि संपश्यन्ति भवन्त इति चेत् ; अत्राह–न पुनः इत्यादि ।

तदयं बहिरन्तश्च अनेकान्ते [३९९ क] सिद्धे यत् प्राप्तं तद्दर्शयन्नाह– **स्वभावो**
५ **व्यवहारोऽपि** (रेऽपि) इत्यादि ।

**[स्वभावो व्यवहारेऽपि हेतुस्तत्त्वप्रवर्त्तनात् ।**
**संपश्यतामनेकान्तं तन्मिथ्याभिनिवेशिनाम् ॥१८॥**
**तत्तद्विरुद्धादिशब्दज्ञानतर्कप्रयोगतः । २ ।**

**स्वभावोपलम्भः भावस्वभाव एव । ततः व्यवहारोऽनेकान्तविषयः साध्यः । तत्र**
१० **विषयप्रतिपत्तौ अप्रतिपन्नविषयिणो दर्शनात् न युक्ता । तन्नैतत्सारं कार्येत्यादि । अनुपलम्भः पुनः व्यतिरेकव्यवहारसाधनः । तदयं बहिरन्तश्चानेकान्तं पश्यन्नेव तत्त्वदृष्टिपराङ्मुखः समयावष्टम्भादन्यतो वा तर्कप्रयोगैस्तद्व्यवहारमवतार्यते । सत्त्वाद्यनुपलब्धेः तथैव भावः अनेकान्तात्मक एव । बहिरपि एकान्तानुपलब्धेः, अन्यथाऽनुपपत्तेः ।]**

१५ भिन्नप्रक्रमोऽपिशब्दः **स्वभाव** इत्यस्यानन्तरं द्रष्टव्यः । ततो न केवलम् अलंभः (उपलम्भः) अपि तु स्वभावोऽपि अनेकान्तोपलम्भोऽपि **हेतुः** लिङ्गम् । क ? इत्यत्राह–**व्यवहारे,** प्रक्रमाद् 'अनेकान्तस्य' इति गम्यते । ननु तदुपलम्भादेव साक्षाद् अनेकान्तसिद्धेः कुतोऽसौ हेतुः ? इत्यत्राह–**तत्त्वे** अनेकान्तस्वरूपे **प्रवर्त्तनाद्** अन्तर्भूतणिजर्थो या (ऽयं) द्रष्टव्यः । केषाम् ? इत्याह–**संपश्यताम्** । अपिशब्दोऽत्रापि द्रष्टव्यः । किम् ? इत्याह–**अनेकान्तं**
२० **तन्मिथ्याभिनिवेशिनाम्** । तस्मिन् अनेकान्ते **मिथ्या योऽभिनिवेशः** एकान्ताभिनिवेशः तद्वतां तन्निरासार्थम् इत्यर्थः । एतदुक्तं भवति–यथा स्वभावहेतुरपि अनुपलम्भः साध्या(ध्य)भेदाद् भिन्ने (न्न) उच्यते तथाऽयं (तथाऽयं) स्वभावोपलम्भोऽपि कार्यव्याप्यस्वभावाभ्यां भिन्न इति *"त्रीण्येव लिङ्गानि" [न्यायबि० २।११] इति[4] व्याहन्यते, इति प्र ज्ञाक र प्रयुक्तस्य हेतोः पक्षस्य च स्वयं तेन दर्शितो बाधः ।

२५ बोध्ये निरंशैकान्तसाधने कथं तत्र स हेतुः इत्य था (इत्यत्राह–) **तत् तद्विरुद्ध** इत्यादि । **तच्छब्देन** अनेकान्तं(न्तः) परामृश्यते, **तद्विरुद्ध** इत्यनेन वा (च) अनेकान्तः(न्त) विरुद्धो नित्याद्येकान्तः तौ **आदी** येषां ते तथोक्ताः । **आदिशब्दः** प्रत्येकमभिसम्बध्यते–तदादयः तद्विरुद्धादय इति । तत्र आद्येन आदिशब्देन अनेकान्तकारणकार्यसहचा (च)रादीनां ग्रहणात् , द्वितीयेन एकान्तकारणादीनाम् , तेषां यथासंख्येन **[शब्दश्च] ज्ञानं** च तयोः **तर्केण** विपक्षे सद्भाव-
३० बाधको(क)**हेतुप्रयोगतः** प्रयोगेण तत्प्रतिपादकवाक्योच्चारणेन । उदारप्रपञ्चस्तु नेहोक्तो ग्रन्थ-

(१) स्तम्भादेः । (२) स्तम्भादिरवायोगात्, स्वसंवेदनरूपताप्राप्तेरित्यर्थः। (३) प्रतिभासते स्तम्भादिकम्, तदा । (४) "त्रिरूपाणि च त्रीण्येव लिङ्गानि"–न्यायबि० ।

गौरवात्, प्र मा ण सं ग्र हा त्[1] ज्ञेयः [३१९ ख] पण्डितैर्मानसाभिः (र्मानशालिभिः)।

कारिकामाविष्कुर्वन्नाह–**स्वभावोपलम्भ** इत्यादि। स्वभावोपलम्भः, **स्वभाव एव** अनेकान्तभावस्वरूपमेया (रूपतया) उपलभ्यते इति **उपलम्भः** स्वभावश्चासौ उपलम्भश्च इति व्युत्पत्तेः। यदि वा, तदुपलम्भे न स्वभावः सतिविति (सन्निति) व्यवस्थाप्यत इति विषयी(यि)-शब्दस्य विषय उपचारो पवृत्तेः (चारोपपत्तेः) तदुपलम्भस्वभाव इत्युच्यते। ततः किं क्रियते? ५ इत्याह–**ततः** स्वभावाद् **व्यवहारोऽनेकान्तविषयः** सदिति ज्ञानादिः **साध्यः**।

ननु स्वभावोपलम्भे सोऽपि सिद्ध एवेति कथं साध्य इति चेत्? अत्राह–**तत्र** इत्यादि। **तत्र** अनेकान्ते **विषयस्य** तदुपलम्भस्य **प्रतिपत्तौ** सत्यां **अप्रतिपन्नो विषयी** येन **तस्य** सौगतादेः **दर्शनात्** [तदुप]लम्भरूपोऽनुपलम्भोऽविकल्पः ततः तत्प्रतिपत्तावपि विषयिणोऽ-प्रतिपत्तिः युक्ता, न भवतोऽनेकान्तोपलम्भस्य व्यवसायरूपत्वात्। न च अतः परो व्यवहारः १० यस्ततः साध्यः इति चेत; उक्तमत्र **तत्र** इत्यादि। दृश्यते हि अनेकान्तोपलम्भवतोऽपि विप-रीतारोपः। न च दृष्टेऽनुपपन्नं नाम। अत एव उक्तं '**दर्शनात्**' इति। न च भूतलदर्शनम-विकल्पकम् इत्युक्तं प्रथमपरिच्छेदे इति यत्किञ्चिदेतत्।

ततः किं जातम्? इत्याह–**तत्रैतत्सारम्** इत्यादि। यत एवं **तत्** तस्मात् **एतत्** [किम्] इत्यत्राह–**कार्ये**त्यादि। **अनुपलम्भः, पुनः** इति पक्षान्तरद्योतने **व्यतिरेकतद्व्यवहारसाधनो** १५ भावाभावव्यवहारयोः साधन इति स्वभावोपलम्भः इत्यादिरपि व्यवहारणो वा (रेणैव) साधन-त्वादिति मन्यते।

प्रकृतं निगमयन्नाह–**तद्वयम्** (तदयम्) इत्यादि। यत एवं **तत्** तस्मात् **अयम्** एकान्तवादी सौगतादिः **अनेकान्तं** [३२०क] **पश्यन्नेव**। क्व? इत्याह–**बहिरन्तश्च**। स किम्? इत्याह–**तत्त्वस्य** अनेकान्त-जीवादेर्या **दृष्टिः** तस्याः **पराङ्मुखो** विमुखः तत्त्वं पश्यन्नपि न पश्यामि २० इति मन्यते इति भावः। कुतः? इत्याह–**समयावष्टम्भात्** स्वागमाग्रहग्रहावेशात् **अन्यतो वा** पूर्वक नर्म्म (पूर्वकर्मतः)। स किं क्रियते? इत्यादि यमोऽर्थव्यवहारमवतापि त (इत्याह **तद्व्यवहारमर्थव्यवहारमवतार्यते**) कैः? इत्याह–**तर्कप्रयोगैः** तर्कमूलैः साधनवाक्यैः ता (तमेव) दर्शयन्नाह–**सत्त्व** [इ]त्यादि। [**आदि**]शब्देन स्वपरसमयप्रसिद्धनिखिलहेतुपरिग्रहः। अनेन '**ज्ञानतर्कप्रयोगतः**' इति व्याख्यातम्। अधुना तद्विरुद्धाद्यज्ञानतर्कप्रयोग इति (तद्विरु- २५ द्धादि) व्याख्यातु माह–**स्वभाव** इत्यादि। **स्वभावो**ऽनेकान्तस्वरूपं **तद्विरुद्धो** नित्याद्येकान्तः उपलक्ष्य[ते, उपलक्षण]मेतत् तेन तत्कुर्यादि (तत्कार्यादि) परिग्रहः। तस्या **अनुपलब्धेः तथैव** तेनैव प्रकारेण **भावः अनेकान्तात्मक इव** (एव) इति सम्बन्धः। असिद्धो हेतुः इति चेत्; अत्राह–**बहिरपि एकान्तानुपलब्धेः** इति। चिन्तितमेतत्।

ननु तदनुपलब्धिश्च स्यात् नापि भावोऽनेकान्तात्मको विरोधाभावात् [इति] सन्दिग्ध- ३०

(१) एतन्नामकात् ग्रन्थात्। द्रष्टव्यम्–प्रमाणसं० पृ० १०४। (२) एकान्तानुपलब्धिश्च।

विपक्षव्यावृत्तिको हेतुरिति चेत्, अत्राह–अन्यथा अन्येन भावस्य अनेकान्तात्मकस्वाभावप्रकारेण अनुपपत्तेः तत्र नन्वनुपलब्धिर्हेतुरिति । तथाहि–तदनुपलब्धिः उपलब्धिनिवृत्तिम् (त्तिः,) अन्योपलब्धिः वा ? प्रथमपक्षोऽनभ्युपगमाद् दत्तोत्तरः, प्रमाणाऽसत्त्वेन असत्त्वात् । द्वितीयः पुनर्नानेकान्तमन्तरेणापिति (र्णेति) विभिन्नम् ।

५ तत्राह (अत्राह)–बहिरर्थविभ्रमैकान्तवादी बहिर्विभ्रमैकान्तोपलब्धिः (ब्धेः) तत्र असिद्धो हेतुरिति; तन्मतमाशङ्क्य दूषयन्नाह–प्रत्यक्षैक [३२०ख] इत्यादि ।

[ प्रत्यक्षैकस्थिरस्थूलस्वभावैर्न्नैविलक्षणैः ।
एकान्तभ्रान्तस्वभावाच्च भाव्यमप्रमादिभिः ॥१९॥

स्वलक्षणानां दृश्यैकस्थिरस्थूलस्वभावविरोधात् व्यतिरेके वृत्ति विकल्पानवस्थादि-
१० दोषप्रसङ्गात् बहिरर्थनिराकृतौ विज्ञप्तेरपि सर्वं समानम् । वेद्यवेदकभ्रान्तिसंवेदनविकल्पाविकल्पादीनां परस्परं सर्वथा तादात्म्यासंभवात् न किञ्चित् भ्रान्तं ज्ञानं स्यात् । व्यतिरेके सन्तानान्तरवत् अन्योऽन्यं सम्बन्धासिद्धेः । न च भावानां साकल्येन नैरात्म्यं प्रतिपत्तुं युक्तम् प्रमाणाभावात् । प्रतिपक्षैकान्तवत् तत्प्रमाणोपगमविरोधात् ।]

एकश्च स्थिरश्च स्थूलश्च एकस्थिरस्थूलाः ते च ते स्वभावाश्च पुनरेतेषां
१५ कर्मधारयः कार्यः तैः, ना (न) भाव्यम् । किंभूतैः ? विलक्षणैः अन्योऽन्यविसदृशैर्भेद् यदि । कुतः ? इत्याह–एकान्तभ्रान्तस्वभावाद् एकान्तेन अवश्यंभावेन भ्रान्तो यः स्वभावः तेषामेव, ततः तस्मात् तेन हेतुना । भावप्रधानो वा निर्देशः, एकान्तेन भ्रान्तः स्वभावो येषां तेषां भावात् तत्त्वात् इति द्रष्टं (ष्टव्यम्) । तथाहि–नैते स्वभावाः सन्तः सद्भिः अभ्युपगन्तव्या एकान्तभ्रान्तस्वभावत्वात् स्वप्नदृष्टराजादिस्वभाववत् । एकान्तभ्रान्त-
२० स्वभावत्वं च प्रायसमानाधिकरणतया अवभासनात्, एकत्र विरोधाद्वा दूरस्थितविरलकेशी (शानां) तत्स्वभाववत् ।

एवं परमतमुपदर्श्य अत्र दूषणमाह–अप्रमादिभिः इति । इदमत्र तात्पर्यम्–एकस्थिरस्थूलस्वभावानां विलक्षणानाम् एकान्तभ्रान्तस्वभावोपगमे तद्वेदकं प्रमाणमन्वेष्यम्, इतरथा अर्थवत्तदसिद्धेः । तत्र तत्प्रतिभासनं च अन्यथा तेन तद्विभ्रमाऽग्रहणात्, परचित्तार्थग्रहणे तदेकार्था-
२५ ग्रहणवत् । तदन्वेषणे च यत एव असन्त [:] तत्र तत्स्वभावाः प्रतिभान्ति तत एव तत्प्रमाणम्, यत एव च तेषाम् एकान्तेन विभ्रमस्वभाववेदकम् अत एव [अ]प्रमाणम्, ईषत् प्रमाणम् अप्रमा आदिर्येषां विकल्पादिस्वभावानां तैरपि न भाव्यम् । एतदुक्तं भवति–प्रमाणेतरस्वभावयोः ऐक्यम् एकान्तेन भ्रान्तस्वभावं तत्त्वाद् अवयवरूपाद्यैक्यवत् पूर्वापरभागैक्यस्थिरत्ववत् बह्ववयवसंसर्गैकत्वपरिणामस्थौल्यवद्वा । तथा च न केवलं बहिः स्वप्नाऽस्वप्नविभागो दुर्लभः
३० किन्तु ज्ञानवादो (वादे) [३२१क] ज्ञानार्थविभागोऽपि ।

(१) अन्योपलब्धिरूपा अनुपलब्धिः अनेकान्तमन्तरेण न सिद्धिमुपयाति । (२) प्रतिवादिनामेव ।

तत्र यदुक्तं द्वितीयः पुनः अनेकान्तमन्तरेण नेति निश्चितमिति यदुक्तम्–यथानेकक्षणिक-सूक्ष्मस्वभाववद् एकस्थिरस्थूलस्वभावा अपि प्रत्यक्षसिद्धा एकत्र स्युः, न चैवं विचारायोगात्, केवलम् अने (यत एव) कल्पिता तत्त (तत) एव भ्रान्ताः इति चेत्; एतदेवोपदर्श्य दूषयन्नाह–**प्रत्यक्षैक** इत्यादि । **न** भाव्यम् बहिरन्तरपि इति सम्बन्धः । कैः ? इत्याह–**प्रत्यक्षैकस्थिरस्थूलस्वभावैः ।** प्रत्यक्षविशेषणात् सांवृतैकस्थिरस्थूलस्वभावैः भाव्यम् इति गम्यते । इतरथा सामान्येन ५ एकादिग्रहणं क्रियेत । दूषणमाह–**विलक्षणैः** इत्यादि । **विलक्षणैः** सर्वतो व्यावृत्तैरपि इति । **अपि** शब्दः अत्र द्रष्टव्यः, **न भाव्यम्** इति । किंभूतैः ? इत्यत्राह **अप्रमाऽऽदिभिः । न** विद्यते **प्रमा आदि**शब्देन हेतुफलभावादिः येषां तैः इति । कुतः ? इत्यत्राह **एकान्तभ्रान्तस्वभावात् ।** एतदुक्तं भवति–यथा एकादिस्वभावा विशदतया अवभासमाना अपि कल्पिता इष्यन्ते तथा विलक्षणाश्च विशेषाभावादित्यतम् । १०

कारिकां विवरीतुमाह–**स्वलक्षणानाम्** इत्यादि । स्वलक्षणानां भावविशेषाणां **दृश्यैकस्थिरस्थूलस्वभावविरोधात्** कारणात् **बहिरर्थनिराकृतौ** । तत्र हेत्वन्तरमाह–**व्यतिरेके** स्वलक्षणेभ्यः तत्स्वभावस्य भेदे अङ्गीक्रियमाणे वृत्तिविकल्प-अनवस्थादिदोषप्रसङ्गात् । च शब्दः अत्र द्रष्टव्यो हेतुसमुच्चयार्थः ।

ननु तत्स्वभावविरोधात् तद्दोषप्रसङ्गाच्च तत्स्वभावस्यैव बहिर्निराकृतिरस्तु न स्वलक्षणानावत (णानां, तत) कथम् अविशेषेणोच्यते '**बहिरर्थनिराकृतौ**' इति ? एवं मन्यते–यथोक्तहेतुद्वयेन तत्स्वभावस्य [३२१ख] दृश्यस्यापि निराकृतौ अन्यत्र कः समाश्वासः ? एतमर्थं च पूर्वपक्षिकायां दृश्यग्रहणम्, अतत्स्वभावलक्षणानाम् अनुपलम्भाच्च । तस्यां किम् ? इत्याह–**विज्ञप्तेरपि** । न केवलं बहिरर्थेश्च (स्य) **सर्वम्** उक्तमनुक्तं च दूषणं **समानं** साधारणम् । तथा च निरूपित(तं) निरूप्यते च वेद्य इत्यादिना । **वेद्यश्च** स्तम्भादिग्राह्याकारः **वेदकश्च** तद्ग्रहणयोग्यो ज्ञानाकारः **तावेव भ्रान्तिः** सा च **संवेदनं** च आदौ येषां **विकल्प्या(पा) विकल्प्या(पा)दीनां** तेषाम् । यद्वा **वेद्य**शब्देन नीलादय आकारा उच्यन्ते, **वेदक**शब्देन तदाकारं तद्ग्राहकं ज्ञानम् । यच्चेदमुक्तम्– २०

> *"विषयाकारभेदाच्च अधिगमभेदानां (धियोऽधिगमभेदतः) ।
> भावादेवास्य तद्भावे स्वरूपस्य स्वतो गतिः ॥"
>
> [प्र० वा० ११६] इति

२५

**भ्रान्ति**शब्देन ग्राह्यग्राहकसंवेदनभेदो बुद्धेः गृह्यते *"मन्त्राद्युपप्लुताक्षाणाम्" [प्र० वा० २।३५५] इत्यादेः, *"अविभागोऽपि बुद्ध्यात्मा" [प्र० वा० २।३५४] इत्यादेश्च वचनात् **संवेदन**ध्वनिना अद्वयं वेदनम्, एतेषां कृतद्वन्द्वानाम् **आदि**शब्देन विकल्पादिग्राहिणां बहुव्रीहि [:] कार्यः तेषाम् । किंभूतानाम् ? इत्याह–**परस्पर** इत्यादि । **सर्वथा** ३० सर्वप्रकारेण **तादात्म्यस्य** ऐक्यस्य वा अनेन **असंभवात्** कारणात् **न किञ्चिद् भ्रान्तं ज्ञानं**

(१) कल्पिता एव स्वीकर्त्तव्या इति भावः । (२) एकदेशेन वृत्तिः सर्वात्मना वा इत्यादयो वृत्तिविकल्पाः । (२) द्रष्टव्यम् पृ० ३८८ टि० ४ । (३) द्रष्टव्यम्–पृ० ३८८ टि० ५ ।

**स्यात्** । अयमभिप्रायः वेद्यवेदकभ्रान्तिसंवेदनयोः एकान्तेन ऐक्ये संवेदनमेव भ्रान्तिमात्रमेव वा प्रमाणकं स्यात् । यदि वा, वेद्यवेदकयोः सर्वथा तादात्म्ये अन्यतरदेव स्यात् इति **न चित्र-मेकं ज्ञानम्** , तथा सांख्यमतेऽपि, परीक्षायां माध्यमिकम् इति **न किञ्चित्** चित्रमचित्रं वा **ज्ञानं स्यात्** इति व्याख्येयम् । तथा भ्रान्तिसंवेदनयो तथा तत्त्वे अन्यतरदेवेति [३२२ क] न ५ किञ्चिद् ग्राह्यमन्यद् भ्रान्तम् ।

तर्हि तेषां व्यतिरेक इति चेत् ; अत्राह–**व्यतिरेके** तद्भेदे 'संबन्ध' इत्यनुवर्त्तते, **सन्ताना-न्तराणामिव** तद्वत् तेषाम् **अन्योऽन्यसंबन्धासिद्धेः** कारणात् **न किञ्चिज्ज्ञानं स्यात्** , इति किंवा वार्त्तायुक्तिः–※"**स्वरूपस्य स्वतो गतिः**" [प्र० वा० १।६] इति न किञ्चिद् भ्रान्तं स्यात् इति ।※"**प्रामाण्यं व्यवहारेण**" [प्र० वा० १।७] इति च, भ्रान्तिविकल्पाभावे तदयोगात् । १० तर्हि बहिरिव अन्यत्रापि तत्त्वस्य विचार्यमाणस्याऽयोगात् साकल्येन शून्यता । तदुक्तम्–※"**तद-तद्रूप[तत्त्वत]मायातम्**" [प्र० वा० २।२०९] इत्यादि इति चेत् ; अत्राह–**न च नैव प्रतिपत्तुं युक्तम्** । । किम् ? **नैरात्म्यं** निःस्वभावत्वम् । केषाम् ? **भावानाम्** । कथम् ? इत्याह–**साकल्येन** सामस्त्येन परस्परेण इवं स्वरूपेणापि । कुतः ? इत्याह–**प्रमाणाभावात्** तन्नैरात्म्य इति विभक्तिपरिणामेन सम्बन्धः । अत्र दृष्टान्तमाह–**प्रतिपक्षैकान्ते** इव तद्वदिति १५ भावैकान्तवदिति । तत्र प्रमाणोपगमे दूषणमाह–**तत्प्रमाणे**त्यादि । **तस्य** नैरात्म्यस्य तस्मिन् वा यत् **प्रमाणं** तस्य **उपगमविरोधात्** । तथाहि–यदि साकल्येन भावानां नैरात्म्यं न तत् प्रमाणं [4]विचारस्याप्ययोगात् । [5]तच्चेदस्ति ; न तु नैरात्म्यम् ।

स्यान्मतम्–न कश्चित् सकलप्रतिभासवैकल्यं नैरात्म्यमाह–※"**मायामरीचिप्रभृति-प्रतिभासवदसत्त्वेऽपि अदोषः**" [प्र० वार्तिकाल० ३।२११] इति वचनात् , स्तम्भादिप्रतिभास-२० मात्रस्य भ्रान्तस्य भावा[द्] विभ्रमेतररहितस्या (स्य) वेति ; तत्राह–**मिथ्यैकान्त** इत्यादि ।

[ **मिथ्यैकान्तधियाऽनर्थास्थिरधीचित्रसन्ततेः ।**
**नो वेद बहिस्तत्त्वं कृतान्तविषमग्रहम् ॥२०॥**

**चित्रपतङ्गनिर्भासादेरैकयोगक्षेमत्वं प्रतिभासस्य स्वभावभेदं न निराकरोति सन्तानैकत्वप्रसङ्गात् , बहिरपि स्वभावभेदादेव स्वलक्षणानामेकस्वभावानभ्युपगमात् ।**]

२५ **मिथ्या** इति भावप्रधानोऽयं निर्देशः तेन **मिथ्यात्वम् एकान्तो** यस्या **धियः** तया **तत्त्वं** स्वरूपं तस्या एव धियो मिथ्यैकान्तत्वं **वेद** वेत्ति सौगत इति **कृतान्तविषमग्रहम्** 'विभ्रमाद् विभ्रमासिद्धेः' इत्युक्तत्वात् । तथा परमपि परस्य [३२२ ख] तद(द्)ग्रहं दर्श-यन्नाह–**अनर्थे** इत्यादि । न विद्यते **अर्थो** बहिः ग्राह्यो यस्याः सामर्थ्ये (साऽनर्था) स्वरूपा-लम्बना इत्यर्थः, न **स्थिरा** अस्थिरा क्षणिका इत्यर्थः, अनर्था च **साऽस्थिरा** च, सा च सा

(१) तादात्म्ये । (२) अन्तरापि । (३) "इदं वस्तुबलायातं यद्वदन्ति विपश्चितः । यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥"–प्र० वा० । (४) प्रमाणात्मकविचारस्याप्यभावात् । (५) प्रमाणं चेदस्ति ।

**धीश्च** तस्याः **चित्रं** चित्रत्वं भावप्रधानत्वात् निर्देशस्य, तेन वा **सन्ततिः** तस्याः **तत्त्वम्** एकत्वं **वेद** । एतदुक्तं भवति–हेतुफलादीनामभावं वदता सरूपोऽसौ वक्तव्यः, अन्यत्र प्रमाणनिषेधात्, सोऽपि चित्रैकप्रतिभासात्मकः, अन्यथा 'सकलशून्यम्' इत्युक्तम् । तत्प्रतिभासोऽपि पूर्वापरक्षणैकत्वनान्तरीयक इति **बहिः** घटादौ **न तत्त्वं वेद** अयमपि सिद्धान्तविषमग्रहः उभयत्राविशेषादिति । शेषस्य पूर्वमेव गतत्वात् ।  ५

'**अनर्थास्थिरधीचित्रसन्ततेः तत्त्वं वेद बहिर्न**' इत्येतद् व्यतिरेकमुखेन व्याख्यातुकाम आह–**चित्र** इत्यादि । **चित्रपतङ्गस्य निर्भासः** तदाकारं ज्ञानम् **आदिर्यस्य** चित्रास्तरणादिनिर्भासस्य प्रत्यक्षेतरादिनिर्भासस्य वा स तथोक्तः, तत्र **नैका[क]योगक्षेमत्वं योगः** उत्पादः **क्षेमः** उत्पन्नस्य संरक्ष[ण]म् अनुभवन(वनं) यस्य, अस्थिरज्ञानपक्षे संरक्षणस्याभावात् । अथवा **क्षेमो** विनाशः, तत्र तच्छब्दस्य सङ्केतात् द्विष्टे[2] भद्रिकाशब्दवत्, **एकम्** अभिन्नं **योगक्षेमं** यस्य तस्य भावः तत्त्वं **प्रतिभासस्य** चित्रपतङ्गबुद्धेः **स्वभावभेदं न निराकरोति** । कुतः ? इत्यत्राह–**सन्तानैकत्वप्रसङ्गात्** इति । **सन्तानानाम् एकत्वम्** अभेदः तस्य **प्रसङ्गात्** । यदा हि एकं ज्ञानमुत्पद्यते वेद्यते वा तदा सन्तानान्तरज्ञानान्यपि; अन्यथैकज्ञानसन्तानमात्रं जगत्, तथा च सति सुगतज्ञानसन्तानान्न पर-(न्तान्नापर)मिति यदुक्तं केनचित् [३२३क]–※"**स्वसंवेदनमेव एकं प्रत्यक्षं प्रमाणम् नापरम्, प्रपञ्चस्तु विनेयजनानुरोधात्**" इत्यादि; तत्सर्वं प्लवते; विनेयजनाभावात् । तस्माद् एकज्ञानोदयकाले अन्यज्ञानोदयोऽभ्युपगन्तव्य इति सन्तानानाम् एकयोगक्षेमत्वं स्वभावभेदं निराकुर्यादिति पुनरपि नानन्तरदोषः(ष)परिहारः । न चैवम्, अतः[3] तेन स्वभावभेदनिराकरणे अकिञ्चित्करपि(मि)ति मन्यते ।  १०  १५

ननु त्रिपतंग (चित्रपतङ्ग)निर्भासादौ प्रतिभासस्य यद्यपि एकयोगक्षेमत्वं स्वभावभेदं न निराकरोति तथापि एकत्वं स्यादिति चेत्; अत्राह–**बहिरपि** इत्यादि । न केवलम् अन्तः किन्तु **बहिरपि स्वभावभेदादेव** नान्यतः **स्वलक्षणानां** रूपादिपरमाणूनाम् **एकस्वभावाऽनभ्युपगमात्** परेण, इति कारणात् तस्यास्तं तस्य निराकरोति इति । एतदुक्तं भवति–यथा स्वभावभेदात् नैकत्वं बहिःपरमाणूनां तथा अन्तरपि इति ।  २०

※"**किं स्यात् सा चित्रैकस्यां न स्यात्**" [प्र० वा० २।२१०] इत्यादि वचनाद्दोषोऽयमिति चेत्; अत्राह–**[अ] सिद्ध** इत्यादि ।  २५

**[ असिद्धः सिद्धसेनस्य विरुद्धो देवनन्दिनः ।**
**द्वेधा समन्तभद्रस्य हेतुरेकान्तसाधने ॥२१॥**

(१) "अलब्धधर्मानुवृत्तिर्योगः, लब्धधर्मानुवृत्तिः क्षेमः ।"–प्र० वा० स्ववृ० टी० ११२४ । (२) दुष्टे । (३) अभिन्नयोगक्षेमत्वम् । (४) 'तस्यां मतावपि । यदीदं स्वयमर्थेभ्यो रोचते तत्र के वयम्' इति शेषः । (५) "असिद्धः ···सत्त्वादिरचलात्मनि ।"–प्रमाणसं० पृ० ११४ । प्रकृतपाठः न्यायवि० वि० द्वि० पृ० १८१ । "असिद्धः··· विरुद्धो मल्लवादिनः ।···"–जैनतर्कवा० पृ० १०७ । स्या० रत्ना० पृ० १०३२ ।

सत्त्वादेर्वस्तुधर्मस्य असिद्धत्वं साकल्येन क्षणिकेतरैकान्तयोरसिद्धेः । अन्यथानुपपत्तेरनेकान्तसाधनात् विरुद्धत्वम् । अनैकान्तिकत्वं पुनः सत्त्वादेः क्षणक्षयादिसाधने असमीक्षिततत्त्वार्थैः लोकप्रतीतिं प्रमाणमाश्रित्य तथा हेतुरुभयत्र वर्तते स्वपक्षविपक्षयोः, प्रागेव तत्करणसमर्थात् कारणात् पुनः स्वकालनियतकार्योत्पत्त्यविरोधेन संभवात् । न च स्वकारणसत्तया कार्योत्पत्तिर्विरुध्यते यतोऽक्षणिक एव दोषः स्यात् निर्णीत...तत्सूक्तमेतत् । ]

स्वलक्षणैकान्तस्य साधने सिद्धौ अङ्गीक्रियमाणायां सर्वो हेतुः सिद्धसेनस्य[1] भगवतः **असिद्धः** । कथमिति चेत् ? उच्यते– बहिरिव (वापि) सूक्ष्मपरीक्षया अन्तरपि स्वलक्षणं प्रतिसमयविभिन्नमिति किं साधनज्ञानं यतो वादिनः प्राप्यस्य अनुमानादभ्यासे तत्र प्रवृत्तिः स्यात् ? किं वा पूर्वापरविविक्तस्वसंवेदनं यस्मात् *"यद् यथाऽवभासते" इत्यादि क्षणभङ्गज्ञानमानीयेत ? किं वा नीलाद्यवभासनं येन *"यदवभासते तज्ज्ञानम्" इत्यादि सिध्येत ? एतेन सत्त्वादयोऽपि निरस्ताः । अभावैकान्तवत् भावैकान्तेऽपि तस्य सर्वो हेतुः असिद्धः, अनुपलम्भेन तदभावात् [७ ३ ३४] सर्वसङ्करात्त्व । परस्पराऽनात्मकभावाऽभावैकान्तसाधने तु पररूपेण न अनवस्थाप्रसङ्गात् विरोधः, सर्वस्य सर्वात्मकत्वं प्रागभावा[द्यभावा]दिति । सम्बन्धाभावे अन्यस्य न अन्येन समवायादिसम्बन्धनिषेधात् । न चैवं वादिनः प्रागभावादीनामन्योन्यम् अन्यतो वा भेदः सिध्यति, अनवस्थाप्रसङ्गात् अपरप्रागभावाद्यभावात् । ततः सूक्तम्–**एकान्तसाधने हेतुरसिद्धः** सिद्धसेनस्य इति ।

कश्चित् स्वयूथ्यः अत्राह– सिद्धसेनेन कपिलस्य असिद्धस्याऽवचनादयुक्तमेतदिति; तेन कथमिदमुक्तम् ?

*"जे सच्चपायवाय(संतवाय)दोसे सक्कोलूया भणंति संखाणं ।
संखा वि असव्वाए (असद्भावे) तेसिं सव्वेवि ते सच्चा (सच्चा) ॥"

[सन्मति० ३।५०] इति[4] ।

अथातो रूपात् चित्रमेकं ज्ञानमिष्यते; तत्राह–**विरुद्धो** देवनन्दिनः[5] **हेतुः एकान्तसाधने**, क्रमेणेव [अ]क्रमेणापि चित्रैकविरोधात् । तथा च कथञ्चिदेव क्षणिकत्वेन अवभासनात् सतस्तथैव भावानां क्षणिकत्वसिद्धिः । एवं सत्त्वादयोऽपि भाव्याः ।

ननु यस्य वैशेषिकादेः[6] निराकारज्ञानवादिनो नैकं ज्ञानं नीलादिनिर्भासैः चित्रं [तं] प्रति केन दृष्टान्तेन सर्वस्य अनेकान्तात्मकत्वं सिध्यति येन तदीयैकान्तसाधने विरुद्धो हेतुः स्यादिति चेत्; न; तस्यापि प्रतिप्राणि त्रिकालविषयानेकव्याप्यव्यापकपदार्थग्रहणानेकशक्त्यात्मकैकमानसज्ञानसद्भावात् । इतरथा कुतो लिङ्गलिङ्गिनोः साकल्येन व्याप्तिग्रहो यतोऽनुमानम् ? न च यैव

(१) सिद्धसेनस्य । (२) नैयायिकस्य । (३) क्षणिकपक्षात् । (४) यान् सद्वाददोषान् शाक्यौलूक्या भणन्ति सांख्यानाम् । सांख्या अपि असद्वादे तेषां सर्वेऽपि ते सत्याः । (५) पूज्यपादस्य । (६) वैशेषिकस्यापि । (७) तथाभूतमानसज्ञानाभावे

तस्य अतीतग्रहणे अश्वता (णोन्मुखता) सैव वर्त्तमानादिग्रहणोन्मुखता; ग्राह्यैकत्वप्राप्तेः । [३२४क] नहि चक्षुरादिज्ञानेषु यैव रसग्रहणोन्मुखता सैव रूपादिग्रहोन्मुखता; ज्ञानभेदवैयर्थ्यापत्तेः । तत्रापि शैक्त्यः तत एकान्तेन व्यतिरिच्यन्ते । सम्बन्धाभावेन समवायनिषेधात् तस्य ता इति व्यपदेशविलोपात् । तदुपकारशक्तिकल्पनायाम् अनवस्था । ततोऽनेकशक्त्यात्मकमेकं ज्ञानं तेनाप्यभ्युपगन्तव्यमिति । कथञ्च अनेकं कस्य (तस्य) चित्रं ज्ञानम ? ततः स्थितम्–**विरुद्धो** इत्यादि । ५ तदुक्तम्–*"**सिद्धिः अनेकान्तात्**" [जैनेन्द्रव्या० १।१।१] शब्दार्थसम्बन्धानां सिद्धिः निष्पत्तिः आत्मसत्ताज्ञप्तिर्वा अनेकान्तात् नान्यतः इति ।

अपरस्त्वाह–न मया प्रतिभासाद्वैतवादिना परमार्थतः कश्चिद् हेतुः इष्यते, यस्तु इष्यते स व्यवहारेण *"**प्रामाण्यं व्यवहारेण**" [प्र० वा० १।७] इत्यभिधानादिति ; तं प्रत्याह–**द्वेधा समन्तभद्रस्य हेतुः एकान्तसाधने** इति । पक्षवद् विपक्षेऽपि वर्त्तते इति **द्वेधा** १० अनैकान्तिक इति यावत् । तथाहि–सत्त्वम् अर्थक्रियाकारित्वम् , अक्षणिकवत् क्षणिकेऽपि स्वसद्मतसमये भावतोऽसंभवि ; कल्पनया पुनः उभयत्रापि न वार्यत इत्युक्तम् । एतेन *"**उपलम्भः सत्त्वम्**" [प्र० वार्तिकाल० पृ० २३१] इति निरूपितम् । यथैव हि एकस्य कालत्रयानुयायित्वं नित्यत्वं न कुतश्चित् प्रत्येतुं शक्यं तथा एकपरमाणुपर्यवसितं क्षणिकत्वमिति च । तथापि तत्प्रतिपत्त्यभ्युपगमे सर्वस्य त्रिकालगोचराऽशेषावस्थानुयायिद्रव्यदर्शनं किन्न अभ्युपगम्यते ? यत इदं १५ स्यात्–*"**यद् यथावभासते तत् तथैव परमार्थसत् यथा सुखं तत्त्वेनावभासमानं तथैव परमार्थसत् , अवभासन्ते च भावा [अ]नित्यत्वेन**" इति । तथा व्यवहारा वा (राभावश्चा)-ऽन्यत्रापि [३२४ख] 'सर्वस्य सर्वदर्शित्वम्' इत्यपि नोत्तरम् ; एकैकपरमाणुनियतक्षणिकत्वदर्शनेऽपि सर्वस्य सुगतत्वात् । नहि तथादर्शिनो भावतः सौगतैः अन्यः सुगत इष्यते । तथेष्टत्वाददोषश्चेत् ; प्रकृतेऽप्यस्तु तदुत्तरम् । संसारीतरव्यवस्थाऽभाव इति चेत् ; सुगतेतराभावोऽपि २० तथा न किम् ? परमार्थतो यथाऽस्याभावः तथा अन्यस्यापि । व्यवहारेण उभयोरपि सिद्धिः न वा कस्यचित् ।

यत्पुनरेतत्–[1]प्रथमक्षणदर्शनसमये अतीताऽनागतदशादर्शने तदैव उत्पन्नमृतप्रतीतिः स्यादिति ; तदपि न सुन्दरम्; [उभयत्रापि स] मत्वात् । यो हि [2]पूर्वापरविविक्तमेकं परमाणुं पश्यति स नितरां तदैव उत्पन्नमृतम् आत्मानं पश्यति इति न कस्यचित् कचित् प्रवृत्तिः निवृत्तिर्वा २५ कुतश्चिदिति प्राप्तम् । [3]तदभ्युपगमे सकलकालकालीनदशास्थितानस (तात्म)दर्शिनोऽपि सदभ्युपगमः केन वार्यते ? अथ मध्यक्षण एव उत्पन्नो मृतश्च स्यादिति मतिः ; सापि न युक्ता ; यथासमयमेव तद्ग्रहणात् । [4]अस्याऽनभ्युपगमे अन्यत्र कः समाश्वासः ? ततोऽक्षणिकवत् क्षणिकस्यापि न तत्त्वतो दर्शनम् । कल्पनया तु द्वयोरपि, इति साधूक्तम्–**द्वेधा समन्तभद्रस्य** इति । क पुनरनेन भगवता एकान्तवादिहेतूनामनैकान्तिकत्वमुच्यत इति चेत् ; न ; ३०

(१) शक्त्यः । (२) परमार्थतः । (३) नित्यपक्षे । (४) प्रवृत्तिनिवृत्तिस्वीकारे ।

*"ये परस्खलितोन्निद्राः स्वदोषेभनिमीलिनः ।
तपस्विनस्ते किं कुर्युरपात्रं त्वन्मतश्रियः ॥" [बृहत्स्व० श्लो० ९९]

इत्येतेन तदुद्भावनात् । अस्यायमर्थः–ये वादिनः अपात्रम् अभाजनम् । कस्य ? इत्याह–तन्मत(त्वन्मत)श्रियः [३२५क] इति । तत्र अरजिनस्य भगवतो मतमासन्नं (मतं शासनं) तस्य श्रीः सर्वपदार्थव्यापि-अनेकान्ताभिधेयम्, तस्याः, एकान्तवादिनः इति यावत् । ते किं कुर्युः ? नैव किञ्चित्, स्वपरपक्षसिद्धिनिषेधौ नैव कुर्युः इत्यर्थः । किंभूताः ? तपस्विनो वराकाः । कुतः ? इत्याह–परस्खलितोन्निद्रा इत्यादि । परस्य सौगतापेक्षया नित्यवादिनः [1]तदपेक्षया सौगतस्य, स्खलितं क्रमयौगपद्याभ्याम् अर्थक्रियाऽसामर्थ्यं तत्रोन्निद्रा (तत्रोन्निद्राः) तदुद्घाटाः । स्वदोषेभनिमीलिनः स्वदोषान् पश्यन्तोऽपि अपश्यन्त इव वर्तन्ते । ततः सत्त्वादेः क्षणिकत्ववद् अक्षणिकत्वसाधनमपि समानमिति ।

कारिकां व्याचष्टे–**सत्त्वादेः** इत्यादिना । **सत्त्वम्** अर्थक्रियाकारित्वम् उपलम्भम् अन्यद्वा **आदि**र्यस्य एकान्तवादिसम्बन्धिनिखिलहेतोः स तथोक्तः तस्य । किंभूतस्य ? **वस्तुधर्मस्य असिद्ध[त्व]म्** एकान्तवस्तुन एव कस्यचिदभावात् तद्धर्मोऽपि तादृश एवेति मन्यते ।

ननु नित्यैकान्ते तदभावेऽपि क्षणिकत्वे तद्भावात् नाऽसिद्धत्वमिति चेत्; अत्राह–**साकल्येन** सामस्त्येन **क्षणिकेतरैकान्तयोः असिद्धेः** सत्त्वादेः इति ।

स्यान्मतम्–एकान्तवादिपरिकल्पिततत्त्वसमीक्षायां तदसिद्धिरस्तु, यथादर्शनं तदङ्गीकरणे अयमदोष इति; तत्राह–**अन्यथाऽनुपपत्तेः** इत्यादि । **विरुद्धत्वम्** 'सत्त्वादेः' इत्यनुवर्तते । कुतः ? इत्याह–**अनेकान्तसाधनात्** । एतदपि कुतः ? इत्याह–**अन्यथा** अनेकान्ताभावप्रकारेण **अनुपपत्तेः** यथादर्शनं सत्त्वादेः इति ।

अपरः पुनराह–सर्वविकल्पातीतं तत्त्वतः [३२५ख] व्यवहारेण क्षणभङ्गादिसाधनम् । तत्राह–**अनैकान्तिकत्वम्** इत्यादि । व्यभिचारित्वं सत्त्वादेः । **पुनः** इति वितर्के । **क्षणक्षयादिसाधने** क्रियमाणे अशेषैकान्तवादिसाध्यपरिग्रहार्थम् **आदि**ग्रहणम् । कुतः तत्साधने ? **सत्त्वादेः** इति । कैः ? इत्याह–**असमीक्षिततत्त्वार्थैः** असमीक्षितो विपरीतारोपनिरासेन न सम्यग् ईक्षितः तत्त्वार्थः प्रतिभासाद्वैतलक्षणो यैः तैः, पृथग्जनैः इत्यर्थः । किं कृत्वा ? **आश्रित्य** । किम् ? **लोकप्रतीतिम्** भेदविषयां विकल्पबुद्धिम् । तदुक्तं कैश्चित्–*"**प्रमाणमविसंवादिज्ञानम् इत्यादि प्रमाणलक्षणं संव्यवहारापेक्षया**" [प्र० वार्तिकाल० १।५] किंभूताम् ? इत्याह–**प्रमाणमिति** परमार्थतः इति मन्यते । कथमनैकान्तिकत्वम् ? इत्याह–**स्वपक्ष** इत्यादि । तदा **तेन** परिकल्पितप्रकारेण अर्थक्रियालक्षणो हेतुः **उभयत्र** पक्षवद् विपक्षेऽपि **वर्तते** यतः । कुतः ? इत्याह–**प्रागेव** कार्योत्पत्तेः पूर्वमेव **तत्करणसमर्थात्** कार्योत्पादनशक्तात् कारणात् **पुनः** उत्तरकालं **स्वकालनियतकार्योत्पत्तेः अविशेषेण** विशेषाभावेन **संभवात्** । क्व ? **स्वपक्षविपक्षयोः** क्षणिकाऽक्षणिकस्वभावयोः । ततो यदुक्तं केनचित्–*"**यदि नित्यो महेश्वरो भावीनि सर्व-**

(१) नित्यवाद्यपेक्षया ।

**कार्याणि कर्तुं प्रागेव शक्तः तानि युगपत् कुर्यात् प्रागेव, पुनः ततोऽपि प्रागेव पुनः ततोऽपि प्रागेव इति न कार्योत्पत्तिकालव्यवस्था ।''** इति ; तन्निरस्तम् ; कथम् ? चेतनालक्षणं क्षणिकं कर्म चेत् स्वकार्योत्पत्तौ वैचित्र्यं स्वसत्तासमये कर्तुं शक्तम् ; [३२६क] तदेव कुर्यात्, तस्यापि चेतनालक्षणस्य कर्मणो यत् सर्वम् अन्यद्वा कार्यं स्वसत्तासमये करोतु तस्यापि कारणं स्वं फलं तदा जनयति इति क्षणिकपक्षेऽपि कार्योत्पत्तिकालव्यवस्था दुर्घटा, इति न युक्तम्-- ५

*''स्थित्वाप्रवृत्ति-संस्थानविशेषाऽर्थक्रियादिषु ।
इष्टसिद्धिः सिद्धसाधनम् ।'' [प्र० वा० १।२० ] इति[1] ।

यदि पुनः प्रागेव समर्थादपि क्षणिकात् कारणात् कालान्तरे कार्योत्पत्तिः प्रार्थ्यते, कथमन्यथा सुप्तस्य चिरोत्थितस्य पूर्वाऽभ्यासाद् विकल्पा इति; तथा नित्यादपि प्रार्थ्यताम्, इति न युक्तम्-*''नित्यादुत्पत्तिविश्लेषात्'' [प्र० वा० १।९] इति[2] । १०

ननु पूर्वं समर्थमपि नित्यं पश्चात् स्वकार्यं करोतु, तथापि (तदापि) तेनैव कार्योत्पत्तेः, ऊर्ध्वं तस्य स्थाने पुनरपि तदेव कर्त्तव्यमिति कार्यस्योपरमः कथमिति चेत् ? उक्तमत्र-पुनः स्वकालनियतकार्योत्पत्तेः संभवादिति पुनः पुनः तस्यैव करणे न स्वकालनियतकार्योत्पत्तिसंभवः। क्षणिकपक्षेऽपि सर्वं समानम् ; तथाहि-येन स्वभावेन प्रदीपः प्रमातरि ज्ञानमुपजनयति तेनैव चेद् अन्यत्र[3] कज्जलम् ; तत्र तज्ज्ञानमपि जनयेत् प्रमातरि वा कज्जलम् इति । १५

ननु कार्यकालं प्राप्नुवतः कारणस्य तत्त्वं[4] विरुद्ध्यत इति चेत् ; अत्राह-नचेत्यादि । **नच नैव कार्योत्पत्तिः स्वकारणसत्तया विरुध्येत ।** विरोधे कारणसत्तया विरुध्यते यथा अग्निसत्तया शीतोत्पत्तिः इति । स्वाकारणग्रहणं कुतो न विरुध्यते इति चेत् ? विरोधद्वयस्याप्यभावात् । नहि तदुत्पत्तेः तत्सत्तया सहानवस्थानलक्षणो विरोधः; अविकलकारणायाः कस्याश्चिद् भवत्याः [३२६ख] तदन्यतरस्याः[5] सन्निधाने नियमेन निवृत्त्यदर्शनात्, पटोत्पत्तिसमयेऽपि तत्कारण- २० तन्तुदर्शनात् । नापि परस्परपरिहारस्थिततालक्षणः; सुवर्णात्मककटकप्रतीतेः ।

न चेदमत्र चोद्यम्-[6]पूर्वापरैकता केन प्रतीयते इति ? कृतोत्तरत्वात् । किंभूतः स नास्ति ? इत्याह-**यतो** विरोधाद् **अक्षणिक** एव न क्षणिके **दोषः स्याद्** अर्थक्रियाभावलक्षणः । कृतप्रतिक्रियत्वमस्य दर्शयन्नाह-**निर्णीतेत्यादि** । निगमयन्नाह-**तत्सूक्तमेतद्** इत्यादि ।

यत्पुनरुक्तम् अर्चटेन-*''**सत्त्वम् अर्थक्रियया व्याप्तम्, साऽपि क्रमयौगपद्याभ्यां** २५ **प्रकारान्तराभावात् तत्करणस्य, ते[8] च अक्षणिकान्निवर्तमाने तामर्थक्रियामादाय निवर्त्तेते, [9]सापि सत्त्वमिति तीरादर्शिशकुनिन्यायेन क्षणिकत्वम् अवलम्बते सर्वं पक्षान्तराभावात्,**

(१) ''स्थित्वा प्रवृत्तिसंस्थानविशेषाऽर्थक्रियादिषु । इष्टसिद्धिरसिद्धिर्वा दृष्टान्ते संशयोऽथवा ॥ १० ॥ ते एते कार्यहेतुत्वेनाभिमताः स्थित्वाप्रवृत्त्यादयो नैते सम्यग्घेतवः । यत एषु सत्स्वपीष्टस्यैव सिद्धिः सिद्धसाधनम् । न च सिद्धः पक्षो भवतीति····''-प्र० वार्तिकाल० । (२) ''अपेक्षाया अयोगतः ।'' इति हेत्वंशः । (३) भित्तौ गवाक्षे वा । (४) कारणत्वम् । (५) ''द्विविधो हि पदार्थानां विरोधः । अविकलकारणस्य भवतोऽन्यभावे अभावाद् विरोधगतिः । शीतोष्णस्पर्शवत् । परस्परपरिहारस्थितलक्षणतया वा भावाभाववत् ।'' -न्यायबि० ३।७२-७५ । (६) तद्भिन्नायाः । (७) पूर्वापरपर्याययोः । (८) क्रमयौगपद्ये । (९) अर्थक्रिया ।

तत्कथं क्षणिकत्वे तदै(दनै)कान्तिकम् ।'' इति; तदेतत् पक्षान्तरेऽपि समानमिति दर्शयन्नाह–**स्यात् सत्ता** इत्यादि ।

**[स्यात् सत्ता हेतुरक्षणिके विपक्षेऽर्थक्रियाऽग्रहात् ।**
**व्यापकानुपलब्धेश्चेद् व्यतिरेकः प्रसिध्यति ॥२२॥**

५ यत् सत् तत्सर्वं क्षणिकं विपक्षे क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । तल्लक्षणा सत्ता ततो निवर्तमाना पक्षं सत्त्वं तथाभूतं प्रसाधयति । यदि स्वपक्षे प्रत्यक्षवृत्त्या तत्र व्यापकानुपलब्धिर्निर्णीयेत । विपक्षव्यावृत्त्या पक्षे प्रत्यक्षवृत्तिः, पक्षे प्रत्यक्षवृत्त्या च विपक्षाद्व्यावृत्तिरिति परस्पराश्रयं चक्रकम्, यतः तद्व्यवस्थैव न स्यात् । नन्वक्षणिके अर्थक्रियायाः सत्त्वं प्रत्यक्षसिद्धम् ? अन्यथा किं तत्रानुमानेन ? विप्रतिपत्तिस्तत्र अन्यथा-

१० र्थक्रियानुपपत्तिप्रयोगात् निराक्रियते । तद्द्वयमयुक्तम् ।]

**स्याद्** भवेत् । **सत्ता** हेतुः सिद्धम् । क्व ? इत्याह–**अक्षणिके** 'अर्थे' इत्यध्याहारः । कुतः ? इत्याह–**विपक्षे** क्षणिके **अर्थक्रियायाः** क्रमयौगपद्याभ्यां व्याप्तायाः सत्त्वस्य व्यापिकायाः **अग्रहात्** कुतश्चिदप्रतिपत्तेः । एतदुक्तं भवत्येवं वक्तुम्–क्षणिकात् सत्त्वं स्वव्यापक-निवृत्त्या व्यावर्तमानं गत्यन्तराभावाद् अक्षणिके व्यवतिष्ठते इति ।

१५ स्यान्मतम्–विपक्षे क्षणिके त्वंक्रियाः (त्वर्थक्रियायाः) व्यापारानुपलब्धेरभाव [:] सिध्येद् यदि सा[1] अक्षणिकात् निवर्तेत, अन्यथा अनैकान्तिकी[2] कथं तत्र[3] तदभावं[4] साधयेत ? [5]ततः [6]तन्निवृत्तिश्च क्रमयौगपद्याभ्याम् अक्षणिके [7]अर्थक्रियादर्शने । न च [8]तत्र [३२७क] [9]तद् इति ; तत्राह–**व्यापक** इत्यादि । **व्यापकयोः** क्रमयौगपद्ययोः याऽ**नुपलब्धिः** [त] क्षणिका-सत्त्वसाधनायोपन्यस्ता तस्याः **व्यतिरेकः** क्षणिकाद् विपक्षाद् व्यावृत्तिः प्रसिद्धा, नित्ये

२० प्रतिभानस्य क्रमेतराभ्याम् अर्थक्रियाकारित्वस्य व्यवस्थापितत्वादिति मन्यते । **चेत् शब्दः** अवधारणार्थः, निपातानाम् अनेकार्थत्वात् '**अर्थक्रियाग्रहाद्**' इत्यस्यानन्तरं द्रष्टव्यः । भवतु तर्हि सत्ताऽक्षणिके हेतुः तथापि जैनस्य [प्र]कृतं हीयते (हीयते) इति चेत् ; अत्राह–**स्याद्** इत्यादि गतार्थमेतत् । **व्यापकानुपलब्धेश्चेद्** यदि **व्यतिरेकः प्रसिध्यति,** स तु न

(१) "तथाहि क्रमयौगपद्याभ्यां कार्यक्रिया व्याप्ता प्रकारान्तराभावात् । ततः कार्यक्रियाशक्तिव्यापकयोः तयोरक्षणिकत्वे विरोधाच्चिवृत्तेस्तद्व्याप्तायाः कार्यक्रियाशक्तेरपि निवृत्तिरिति सर्वशक्तिविरहलक्षणमसत्त्वमक्षणिकत्वे व्यापकानुपलब्धिराकर्षति विरुद्धधर्मिकत्वायोगात् । ततो निवृत्तं सत्त्वं क्षणिकेष्वेवावतिष्ठमानं तदात्मतामनुभवतीति यत् सत् तत् क्षणिकमेवेति अन्वयव्यतिरेकरूपायाः व्याप्तेर्निश्चयो भवति (पृ० १४६, ४७) तस्मात् तीरादर्शिनेव इत्यादि । यथा किल वहनारूढैर्वणिग्भिः शकुनिर्मुच्यते अपि नाम तीरं द्रक्ष्यतीति । स यदा सर्वतः पर्यटंस्तीरं नासादयति तदा वहनमेव आगच्छति तद्वदेतदपि द्रष्टव्यम् । (पृ० १९३)" –हेतुबि० टी० । (२) व्यापके क्रमयौगपद्ये । (३) अर्थक्रिया । (४) अनेकान्ता वर्तमाना, अथवा पक्षविपक्षयोर्वर्तमाना । (५) क्षणिके । (६) सत्त्वाभावम् । (७) क्षणिकात् । (८) सत्त्वनिवृत्तिश्च । (९) सति भवति । (१०) अक्षणिके । (११) अर्थक्रियादर्शनम् ।

प्रसिध्यति इति मन्यते । एवं तर्हि क्षणिके हेतुः स्याद् वस्तुधर्मस्य गत्यन्तराभावात्, कथम-नैकान्तिकत्वमिति चेत् ; अत्राह-**स्याद्** इत्यादि ।

कारिकाम् **'यत् सत् तत् सर्वम्'** इत्यादिना व्याचष्टे । **यत् सद्** अर्थक्रियाकारि **तत् सर्वं सत् क्षणिकम्**, वाशब्द इवार्थः **'क्षणिकम्'** इत्यस्यानन्तरं द्रष्टव्यः । क्षणिकमिव इत्यर्थ[ः] । निदर्शनमत्र नो(क्त)म् अ र्च टे न [1]तदन्तरेण अस्य गमकत्वोपवर्णनात् । कुतः ? इत्याह-**विपक्षे** इत्यादि । **विपक्षः** अक्षणिकापेक्षया क्षणिकः, तत्र **क्रमयौगपद्याभ्यां** क्रमेण यौगपद्येन च **अर्थक्रियाविरोधात्** । तथाहि-न तावत्तत्र[2] क्रमेण अर्थस्य करणम् ; एकं कृत्वा पुनः [3]तेनैव परस्य करणं क्रमेण तत्करणम्, न च नित्यवदि चं तस्यापि (वदितरस्यापि)[4] निरंशैकस्वभावस्य [5]तत् संभवति । .

एतेन जाग्रच्चेतसः[6] समनन्तरचिरभाविप्राणादिप्रबोधकार्यद्वयं तिरस्तं (निरस्तम्) यदुक्तं प्र ज्ञा क रे ण- *"**तस्मात्**

**कारणं यदि तज्ज्ञानं स्वभावो वार्थजन्मनः ।**

**कार्यं वा सर्वथा तेन** [३२७ख] **ज्ञाप्यतेऽर्थक्रियोदयः॥"** [प्र० वार्तिकाल० १।५] इति;

तत्रेदं चिन्त्यते-यदि कारणम् ; कथमतोऽभ्यासे प्रवृत्तिः पुनः अर्थक्रियोदयः इति क्रम-भाविकार्यद्वयम् ? यदि पुनः प्रवृत्तिः ततो नेष्यते कथमुक्तम्-*"**अभ्यासे भाविनि प्रवर्त्तकत्वात् प्रत्यक्षं प्रमाणम्**" इति ? *"**अनभ्यासेऽपि पूर्वम् अतोऽनुमानं पुनः तदुदयः**" इति च । तन्न नित्यादिवत् क्षणिकात् क्रमेण अर्थक्रियोदयः । नाप्यक्रमेण ; एकेन युगपदनेकस्य करणं [7]तथोक्तं भवेत्, तच्च नित्यस्य कालभिन्नमिव [8]इतरस्य एकस्वभावत्वे देशभिन्नमपि न संभवति इत्युक्तम् । माभूत् क्षणिकेऽर्थे काचिदर्थक्रिया को दोष इति चेत् ; अत्राह-**तल्लक्षणा** अर्थक्रिया-लक्षणा **सत्ता ततः** क्षणिका**न्निवर्त्तमाना पक्षं** साध्यं **सन्तं तथाभूतम्** अक्षणिकं **प्रसाधयति** इति युक्तम् ।

अत्र अ र्च ट मतमाशङ्कते दूषयितुं **यदि** इत्यादि । **व्यापकयोः** [क्रमाऽ]क्रमयोः **अनुपलब्धिः** व्यतिरेकः अक्षणिकाद् व्यावृत्तिः **यदि निर्णीयेत तदा 'पक्षं सन्तं साधयति'** इति युक्तम्, नचैवमिति मन्यते । कया नीत्या ? ह (इत्याह-) **स्वपक्षे** अक्षणिके **प्रत्यक्षवृत्त्य (वृत्त्या) तत्र** क्रमाऽक्रमयोः, प्रत्यक्षवृत्त्या तदनुपलब्धिर्बाध्यते नान्यथा । अथ [य]त एव अक्षणिकापेक्षया यो विपक्षः क्षणिकः तस्माद् व्यावृत्तिर्बोध[क]स्य अत एव स्वापक्ष (स्वपक्षे) प्रत्यक्षवृत्तिः इति चेत् ; अत्राह-विपक्ष इत्यादि । **विपक्षाद् व्यावृत्तिः** या व्यापकस्य तया **पक्षे** क्षणिके **प्रत्यक्षवृत्तिः** तत्र व्यापकदर्शनं **पक्षे प्रत्यक्षवृत्त्या च विपक्षावृत्तिः** (विपक्षाद्-व्यावृत्तिः) इत्येवं **परस्पराश्रयं** चक्रमिव आवर्तते **चक्रकम् यत** एवं [9]**तयोर्व्यवस्थैव** व्यवस्थिति-र्न कस्यचित् **स्यात्** [३२८क] ।

(१) दृष्टान्तमन्तरेण । (२) क्षणिके । (३) स्वभावेन । (४) क्षणिकस्यापि । (५) क्रमकरणम् । (६) जाग्रच्चित्तं हि अनन्तरं प्राणादि जनयति सुषुप्त्यनन्तरं प्रबोधं च उत्पादयति । (७) युगपत्करणम् । (८) क्षणिकस्य । (९) प्रत्यक्षवृत्ति-विपक्षव्यावृत्त्योः ।

अत्रान्तरमाह नित्यवादी–न स्व (नन्व)क्षणिक इत्यादि । ननु इति सौगते [अ]क्षणिके या **अर्थक्रिया** क्रमाक्रमाभ्यां तदर्थकरणं तस्याः **प्रत्यक्षमस्ति** 'ग्राहकम्' इत्युपस्कारः । किंभू-तम् ? इत्याह–**सत्यम्** अवितथम् अकल्पितं वा । तथाहि–पश्यन्नयम् इन्द्रियैः कालत्रयानुया-यिनमर्थं पश्यति **अन्यथा** क्षणस्थायिनमपि न (पि तत्) पश्येत **किं** तर्हि **तत्र अनुमानेन ?** नहि प्रत्यक्षानुमानमर्थं तत (प्रत्यक्षमर्थमनुमानं तत) इति चेत ; अत्राह–**विप्रतिपत्तिस्तत्र** गृणिके (क्षणिके) सौगतानां [अ]क्षणिकारोपलक्षणा **निराक्रियते** । कुतः ? इत्याह–**अन्यथा** क्षणिक-त्वाभावप्रकारेण या **अर्थक्रियाया अनुपपत्तिः तत्प्रयोगात्** तत्प्रतिपादकवाक्योच्चारणादिति ।

इदमपरं व्याख्यानम्–'यत् सत् तत्सर्वं क्षणिकम्' इति सौगतः, अक्षणिकम् इति नित्य-वादी, सत्त्वात् इति गम्यते । उभयत्र अनेन एतत् कथयति–यथा 'अनित्यः शब्दः पक्षसपक्षा-न्यतरत्वात्' इति कल्पितः तथा सत् इति रूपकात (इष्यते) इति । विपक्षे बाधकं सहा (बाधकमाह) **विपक्ष** इत्यादि । क्षणिकापेक्षया अक्षणिकः तदपेक्षया इतरो विपक्षः । शेषं पूर्ववत् । **तद्द्वयम्** आचार्यः स्वयं दूषयन्नाह–**अयुक्तम्** इत्यादि । व्याख्यातमेतत् ।

ननु क्षणिके प्रत्यक्षवृत्तिरस्ति न ततो न परस्पराश्रयमिति चेत ; अत्राह–**चक्रकं** पुनः पुनरुक्तस्य प्रवृत्तेः इति । किमनेन वृत्तिरस्ति । येन तत्साधनेदं सदो सत्या (येन तत्साधनेनेदं स्या) दित्यभिप्रायमान परः पृच्छति–**ननु अक्षणिके** परिणामभिन्न्येव वस्तुत्य (अपरिणामिन्येव वस्तुन्य)-**र्थक्रियायाः** सवन्धि **प्रत्ययक्ष** सत्ति (**प्रत्यक्षमस्ति** ?) नैवास्ति । **ननु** इत्यस्य (स्या) क्षेपार्थ-त्वात् । आचार्य उत्तरमाह–सत्यमि (मि) ति । यदुक्तम्–'**अक्षणिके** [३२८ख] **अर्थक्रियायाः प्रत्यक्षमस्ति**' इति तत् सत्यमवितथम् । हेतूपन्यासः तर्हि तत्र अनर्थक इति चेत ; अत्राह–**विप्रतिपत्तिः** इत्यादि ।

स्यान्मतम्–एकस्य अनेकस्वभावविरोधात् तत्रापि न तदिति चेत; अत्राह–**स्वभावे** इत्यादि ।

**[ स्वभावेऽविभ्रमे भ्रान्तः सविकल्पेऽविकल्पकः ।**
**संशयेऽसंशयो भावो नित्येऽनित्योऽनुबुध्यते ॥२३॥**

नित्यं द्रव्यम् अनित्यस्वभावानुपपत्तेः । स्वसंवेदनं प्रत्यक्षमेकस्वभावमन्तरेण भ्रान्तीतरादिस्वभावाः निःस्वभावाः स्युः स्कन्धान्तर... स्वभावभेदस्य भेदकत्वे किं प्रतीतिविपर्यासकल्पनया ? ]

**भावो** ज्ञानलक्षणोऽन्यो वा चन्द्रादिः, **स्वभावे** स्वरूपे सति । किंभूते ? **[अ]विभ्रमे** विभ्रमविवेकनिर्मले सञ्चेतनाधावल्यादिलक्षणो (णे) **भ्रान्तः** सविभ्रमो ग्राह्यग्राहकाकारद्वित्वादिना, तथा **सविकल्पे** अभिलापसंसर्गयोग्यप्रतिभासे '**स्वभावे**' इत्यनुवर्तते **विकल्पः (अवि-कल्पकः)** कल्पनारहितो '**भावः**' इति पदघटना । यद्वा **सविकल्पे** सभेदे नीलादिनिर्भास-वत्य कुल्पो भिन्नः (वति **अविकल्पकः** अभिन्नः) । तथा **संशये** स्थाणुः पुरुषः (षो वा)

(१) प्रतिपत्ता । (२) 'न' इति निरर्थकम् ।

इति स्वभावे **असंशयो** 'विद्यमानसंशयोऽयम्' इत्युल्लेखरूपेण भावो भवतीति काका व्याख्येयम्। अत्र सिद्धान्तः **नित्ये** स्वभावे **अनित्यो** नित्य (त्योऽयमिति **अ)नुबुध्यते** ज्ञायते भावः। यदि वा, अनित्ये नित्य इति वैशेषिकादिरपि एकान्तेन नित्येतरस्वभावयोः भेदं कल्पयन् एतेन निरस्तः; तस्यापि अर्थावधारणानवधारणात्मकस्य संशया प्रत्यस्यनावो (संशयस्य प्रत्याख्यान) विरोधात्। ५

सोपपत्तिकं कारिकार्थं दर्शयति–**नित्यदिन** (नित्यमित्यादिना)। **द्रव्यम्** उक्तलक्षणं धर्मि **नित्यं** कालान्तरस्थायि इति तत्साध्यं परिणा[मि]नित्यत्वम अत्र साध्यम् अन्यस्याऽनिष्टेः। कुतः? इत्याह–**अनित्यस्वभावानुपपत्तेः** एकान्ताऽनित्यरूपस्य अघटनात्। उपलक्षणमेतत् तेन 'अनित्यं द्रव्यं नित्यस्वभावानुपपत्तेः' [३२९क] इति च द्रष्टव्यम्।

ननु रूपादिव्यतिरेकेण अन्यस्य द्रव्यस्याप्रतिभासेन असत्त्वाद् आश्रयासिद्धो हेतुरिति १० चेत; अत्राह–**भ्रान्तीत्यादि**। **भ्रान्त्यादीनां** कृतद्वन्द्वानाम् आदिशब्देन बहुव्रीहिः, पुनः **'स्वभावाः'** इत्यनेन षष्ठीसमासः ते **निःस्वभावाः स्युः**। किमन्तरेण? इत्याह–**स्वसंवेदनम्** इत्यादि। एकं साधारणं स्वभावमन्तरेण। किंभूतम्? **प्रत्यक्षं** प्रत्यक्षग्राह्यमेतद् (मेतद् इति) बहिर्द्रव्यम। पुनरपि किंभूतम्? **स्वसंवेदनम्,** एतच्च अन्तःप्रत्यक्षमपि विशेषणम् अव्यभिचारादत्र युक्तम्। कुतः? इत्यत्राह–**स्कन्धान्तर** इत्यादि। एवं मन्यते–यथा रूपादीनाम अनेका- १५ न्तेन परस्परभेदः तथा विभ्रमेतरादीनां स यदि स्या[न] तत्प्रसङ्गो दुर्निवार्यः। न च तथा तत्त्वव्यवस्थेति निःस्वभावाः स्युः इति भावः। भवतु तर्हि विभ्रमेतरादिनिर्भासैः एको भावः इति चेत; अत्राह–**स्वभावभेदस्य** इत्यादि। भावस्य यः **स्वभावभेदः** तस्य **भेदकत्वे** अङ्गीक्रियमाणे **किं** न किञ्चित् **प्रतीतेः** बहिरन्तश्च एकानेकरूपायाः **विपर्यासकल्पनया** इति सिद्धं द्रव्यम्। ततो यदुक्तं केनचित् *"**स्वरूपस्य स्वतो गतिः**" [प्र० वा० १।६] इति, तत्र २० यदि एकानेकरूपस्य; सिद्धं नः समीहितम्। अथ अन्यथाभूतस्य *"**निःस्वभावा [:] सर्वे-भावाः**" इति[3], बालिशगीतमेतत्[4] *"**अज्ञातार्थप्रकाशो वा इति पारमार्थिकं प्रमाणलक्षणम्**" इति [प्र० वार्तिकाल० पृ० ३०]।

'स्वभावनैरात्म्यं न दोषाय इष्टत्वात्' इत्यपरः[5]; तं प्रत्याह–**येन (येना) भाव** इत्यादि।

**[ येनाभावः प्रमेयः स्यात्तज्ज्ञानं चेन्न तत्त्वतः।** २५
**स्वार्थसिद्धिर्न बाध्येत विरुद्धानुपलम्भनः ॥२४॥**

**बहिरन्तश्च धर्मनैरात्म्यं प्रमाणतः प्रतिपत्तुं नार्हत्येव विप्रतिषेधात्। प्रमाणाभावे परमार्थतो नैरात्म्यप्रतिपत्तेरभावात्। ततो भावोपलब्धिर्भवत्येव अनेकान्तसिद्धिः स्वभावविरुद्धानुपलब्धेः।]**

**येन** ज्ञानेन **प्रमेयः** परिच्छेद्य [:]। कः? इत्याह–**अभावः** सकलव्यावृत्तिः **तज्ज्ञानं** ३०

(१) परिणामे सत्यपि नित्यत्वम्, उत्पादव्ययध्रौव्यात्मकत्वमित्यर्थः। (२) कूटस्थनित्यत्वस्यानिष्टेः। (३) कथनात्। "सर्वे भावा निःस्वभावत्वात् शून्याः इति।"–विग्रहव्या० श्लो० १। "अतो लक्षणशून्यत्वान्निःस्वभावाः प्रकाशिताः।"–प्र० वा० २।२१५। (४) अनन्तरोक्तम्। (५) शून्यवादी।

**चेत् न तत्त्वतो** 'विद्यते' [३२५ख] इत्यध्याहारः। तत्र दूषणं **स्वार्थसिद्धिर्न बाध्येत** इति। स्वं वा (**स्वं** च **अ**)र्थश्च तयोः **सिद्धिः** आत्मलाभो ज्ञानज्ञेयसिद्धिः इति यावत्। **न बाध्येत** न निराक्रियेत। ग्राह्यग्राहकभावेऽन्यभावतद्भावस्यापि सिद्धेरनिवारणादिति मन्यते।

यदि वा, यदा सौगतः अभ्युपगताऽभावज्ञानेनापि वर्जितो भवति तदा वन्ध्यासुतवत्

५ तेनाभ्युपगतस्वार्थयोः सिद्धिं ज्ञप्तिं प्रति न किञ्चिद् बाधकं ब्रूयात्। वदित्वा कथन्न स्ववचन-विरोधी, इति स्वार्थयोः ज्ञप्तिर्न बाध्येत लोकसिद्धा। तत्र प्रमाणं तत्त्वतो न भवति *"**प्रामाण्यं व्यवहारेण**" [प्र० वा० १।६] इति वचनादिति चेत्; अत्राह-**येन अभावः प्रमेयः तद्विज्ञानं** प्रमाणं **चेत् न तत्त्वतः** परमार्थतः किन्तु संवृतिरूपव्यवहारतः। अत्र दूषणं **स्वार्थ** इत्यादि। इदमत्र तात्पर्यम्-अथ प्रमाणाद् अभावप्रतिपत्तेः भावप्रतिपत्तिरपि स्यात् इति।

१० यद्वा अप्रमाणसिद्धो नाभावः पारमार्थिकः इति तदवस्थो भाव इति। तत्र हेतुमाह-**विरुद्धानुपलम्भतो विरुद्धस्य** अत्यन्ताभावस्य **[अनुपलम्भतः]** अप्रतिपत्तेः।

कारिकार्थं दर्शयति **बहिः** इत्यादिना। **बहिरन्तश्च धर्मनैरात्म्यं** सकलशून्यत्वं **प्रमाणतः प्रतिपत्तुं** बौद्धो **नार्हत्येव**। कुतः? इत्याह-**विप्रतिषेधात्** सकलाभावप्रमाणसत्त्वयोः अन्योऽन्यं विरोधात्। अप्रमाणात्तर्हि तत्प्रतिपत्तुमर्हति इति चेत्; अत्राह-**परमार्थतो नैरात्म्यप्रतिपत्तेर-**

१५ **भावात्**। कस्मिन् सति? इत्याह-**प्रमाणस्याभावे**। **ततः** किं जातम्? [३३०क] इत्याह-**भावोपलब्धिः(ब्धेः) भवत्येव अनेकान्तसिद्धिः**। अथ एकान्तभावोपलब्धेनैव (ब्धेः) नैवम्; अत्रार्थ (अत्राह) **स्वभाव** इत्यादि। अनेकान्तस्वभावविरुद्ध[स्य] एकान्तस्याऽनुपलब्धेः।

यदुक्तं भावोपलब्धि(ब्धे)रिति; तत्रास्ति तावन्नीलादेः उपलब्धिः, सा तु भावस्य इति कुतः? तस्य तत्त्वसाधनाभावात्। उपलब्धिरेव तत्साधु (तत्साधि)केति चेत्; न; स्वप्नेऽपि

२० तस्यास्तं (तस्याः) तत्त्वम् इति न सत्येतरप्रविभागः पारमार्थिकः। न च तस्याः क्वचित् बाधकसद्भावेतरकृतो विशेषः; साकल्येन बाधकाभावव्यवस्था[नात्]। नाप्यर्थक्रियातः; नित्याऽनित्ययोः तदभावात्, स्वप्नेऽपि भावाच्च। सा अर्थक्रिया न भवतीति चेत्; कथमन्या? प्रतिभासात्; अन्यत्र समानम्। बाधकाभावोऽपि तादृगेव।

किंच, अर्थक्रियापि तदन्तरात्[10] चेद् भावरूपा; अनवस्था तत्रापि तदन्तरापेक्षणात्।

२५ भावजन्यत्वाच्चेत्; अन्योऽन्यसंश्रयः। स्वतश्चेत्[12]; घटादिरपि तथास्तु। परितोषहेतुत्वात्; स्वप्नेऽपि अत एव सा तथास्तु अविशेषात्। तन्न भावोपलब्धिर्नाम इति; तत्राह-**मिथ्येत्यादि**।

**[ मिथ्यार्थाभास्थिरज्ञानचित्रसन्तानसाधकः।**
**तत्त्वज्ञान[13] गिरामङ्ग[14] दूषकस्त्वं विदूषकः ॥२८॥**

(१) नीलाद्युपलब्धिः। (२) भावस्य। (३) भावरूपत्वसाधकाभावात्। (४) उपलब्धेः सद्भावात्। (५) भावरूपत्वम्। (६) उपलब्धेः। (७) विशेषः। (८) उभयैकान्तयोः। (९) स्वप्नभाविनी। (१०) अर्थक्रियान्तरात्। (११) भावजन्यत्वात् अर्थक्रियाया भावरूपता, अर्थक्रियायाश्च भावस्य भावरूपतेति। (१२) अर्थक्रियायाः भावरूपत्वञ्चेत्। (१३) वचनानाम्। (१४) 'अङ्ग' इति सम्बोधने।

स्वसंवित्तेः भ्रान्तया अर्थसंवित्त्या तादात्म्यं प्रतियतः कथमेकत्र कृतकाकृतकयोः स्थूलसूक्ष्मयोर्वा विरोधः ? तत्र मिथ्याबुद्ध्या अन्तर्ज्ञेयं साकल्येन परमार्थतो भ्रान्तमन्यथा वा प्रतियतः बहिरर्थेन कोऽपराधः कृतः यतः प्रतिक्षिपेत् ? तद्विधिप्रतिषेधतत्त्वप्रतिपत्तेः मिथ्यैकान्ते विरोधाविशेषात् । तदयं ततोऽन्तर्बहिश्च तत्त्वमेकान्तभ्रान्तया मिथ्यात्वं च व्यवस्थापयितुकामः क्षणिकेतरपक्षविधिप्रतिषेधवादिनं न विजयते साधनप्रयोगप्रतिषेधात् ।]

अस्यायमर्थः-**ज्ञानानि** च **गिरश्च** ज्ञानगिरः, गिरां ग्रहणं बहिरर्थोपलक्षणार्थम्, **तत्त्वानि** च ताः **ज्ञानगिरश्च** तासां **तत्त्वज्ञानगिरां** तत्त्वज्ञानानां तत्त्वार्थानां च **दूषकस्त्वम् अङ्ग** यतः सौगतः, ततो **विदूषक** उपसहनकारी बहिरर्थवस्त्वभिमतज्ञानतत्त्वदूषणात् । उभयत्र उक्तन्यायसाम्यात् । तथाहि-यथा 'प्रतिभासात् जाग्रद्दशायां स्तम्भादीनां परमार्थसत्त्वे [1]स्वप्नावस्थायां तत्स्यात्' इत्युच्यते तथा तत[2] एव ज्ञानानां परमार्थसत्त्वे बहिः स्तम्भादीनामपि तद्[3] इति [न] ज्ञानैकान्तवादावतार इति [३३०] व्याहतम्-*"अद्वयं नाग (यान) मुत्तमम्" इति[4] । यथा वा 'प्राति (प्रति) भासाध्यासिततनवोऽपि[5] स्वप्नघटादयो न परमार्थसन्तः तथाऽ[6]न्येऽपि' इति कथ्यते तथा प्रतिभासवन्तोऽपि जाग्रद्घटादयोऽसन्तः[7][इति]ज्ञानेषु कः समाश्वासः इति बहिरर्थवत् तत्परित्यागो[8] न्याय्यः । तथा च कुतो ज्ञानवादी परः[9] । शेषमत्रापि पूर्ववत् सर्वं वक्तव्यम् । 'बहिरर्थवद् विज्ञानस्यापि न परमार्थसत्त्वम्' इति चेत् ; अत्राह-**मिथ्या** इत्यादि । **अर्थस्य आभा** प्रतिभासो येषां तानि **अर्थाभानि**, न स्थिराणि **अस्थिराणि** क्षणिकानि इत्यर्थः, **अर्थाभानि** च तानि **अस्थिराणि** च पुनः तानि च तानि **ज्ञानानि** च, मिथ्या च तानि ज्ञानानि च तेषां **चित्रा** नानाकाराः **सन्तानाः** तेषां **साधकस्त्वम् अङ्ग**[10] यतः ततो **दूषकः [त्वं विदूषकः]** विभ्रमैकान्ते तत्साधकत्वायोगात् ।

कारिकां विवृण्वन्नाह-'**स्वसंवित्तेः**' इत्यादि । सर्वचित्तचैत्तानां या **स्वसंवित्तिस्तस्याः** **अर्थसंवित्त्या** बहिरर्थग्रहणेन । किंभूतया ? **भ्रान्तया** स्वप्नवदसदर्थविषया (यया) **भ्रान्तया, तादात्म्यं** तौ भ्रान्तौ आत्मानौ यस्याः तस्या भावः **तादात्म्यं प्रतियतः** सौगतस्य । एतदुक्तं भवति- यथा अर्थसंवित्तिः याथात्म्यसंवित्तिः भ्रान्ताऽभ्रान्ता वा तथा [स्व] संवित्तिरपि यदि भ्रान्ता [11]अन्यथा वा स्यात्, एकान्तेन तत्र अर्थसंवित्त्या भ्रान्तया तस्याः[12] तादात्म्यं प्रतियतः **कथमेकत्र** बाह्ये वस्तुनि **कृतकाकृतकयोः स्थूलसूक्ष्मयोर्वा** धर्मयोः **विरोधः** ? स्वसंवित्तिवत् [13]तत्संवित्तेरपि अभ्रान्तत्वाद् इति मन्यते ।

[14]इदं व्याख्यानं कस्मान्न भवति-'**स्वसंवित्तेः अर्थसंवित्त्या** बाह्यनिर्भासेन भ्रान्तेन अभ्रा-

---

(१) परमार्थसत्त्वम् । (२) प्रतिभासादेव । (३) परमार्थसत्त्वमिति । (४) द्रष्टव्यम्-पृ० १ टि० ८ । (५) प्रतिभाससमानशरीराः । (६) स्तम्भादयः । (७) यदि असन्तः तर्हि । (८) ज्ञानस्यापि परित्यागः । (९) विज्ञानवादी बौद्धः । (१०) सम्बोधने । (११) अभ्रान्ता । (१२) स्वसंवित्तेः । (१३) बहिरर्थे विरुद्धधर्मप्रतिभासस्यापि । (१४) अनन्तरोक्तम् ।

न्तेन वा तादात्म्यम् एकत्वं [३३१क] प्रतियतः कथमेकत्र तयोर्विरोधो विरुद्धधर्माध्यासस्य ज्ञानेऽप्यनिवारणात्' इति[1] ? *"स्वभावेऽविभ्रमं भ्रान्तः" [सिद्धिवि० ६।२३] इत्यादिना पुनरुक्ततापसङ्गात् । अर्थसंवित्त्या भ्रान्तया सह तस्याः तादात्म्यं भ्रान्तत्वं प्रतियतः तत्र तस्यां स्वसंवित्तौ मिथ्याबुद्ध्या भ्रान्तया धिया अन्तर्ज्ञेयं ज्ञानस्वरूपं भ्रान्तम् अन्यथा वा प्रतियतः साकल्येन अनवयवेन परमार्थतो न व्यवहारेण कोऽपराधो न कश्चिद्दोषो बहिरर्थेन कृतः यतोऽपराधात् प्रतिक्षिपेत् सौगतः 'बहिरर्थम्' इति विभक्तिपरिणामेन सम्बन्धः ।

एवं मन्यते–मिथ्याबुद्ध्या अन्तर्ज्ञेयं साकल्येन परमार्थतो भ्रान्तम् अन्यथा वा यथा परः प्रतिपद्यते तथा सत्त्वं बहिरर्थं प्रतिपद्यताम् अविशेषात् ।

स्यान्मतम्–यदि तया बहिरर्थं प्रतिपद्यते; कथं सा मिथ्या ? तथा चेत्; न तया किञ्चित् प्रत्येति । 'तथा (तया) प्रत्येति मिथ्या न सा' इति विरुद्धमिति; तत्राह–तद् इत्यादि । तयोः अन्तर्ज्ञेय-बहिरर्थयोः यौ विधिप्रतिषेधौ अन्तर्ज्ञेयस्य बहिरर्थस्य च यो (यौ) विधिप्रतिषेधौ इत्यर्थः, तयोर्या तत्त्वप्रतिपत्तिः याथात्म्यसंवित्तिः तस्या मिथ्यैकान्ते विरोधाविशेषात् । अयमभिप्रायः–यथा तदेकान्ते कस्यचिद् विधेः तत्त्वतः प्रतिपत्तिर्नास्ति तथा प्रतिषेधस्यापि इति तन्निषेधाभावे न तदेकान्तसिद्धिरिति ।

प्रकृतं निगमयन्नाह–'तदयम्' इत्यादि । यत एवं तत् तस्माद् अयं सौगतः व्यवस्थापयितुकामः । कुतः ? इत्याह–ततो बुद्धि सत्त्वं (बुद्धिसत्त्व)व्यवस्थापकात् न्यायात् । किं व्यवस्थापयितुकामः ? इत्याह– अन्तर्बहिश्च । च इति भिन्नप्रक्रम इवार्थो 'अन्तः' इत्यस्या[३३१ख]नन्तरं द्रष्टव्यः । अन्तरिव बहिस्तत्त्वं परमार्थसत्त्वमिति । तथाहि–स्वप्नाऽस्वप्नयोरविशेषं प्रतिपाद्य बहिरर्थं निराकुर्वतापि बुद्धिः परमार्थरूपा अभ्युपगन्तव्या, परमार्थसांव्यवहारिकप्रमाणलक्षणप्रणयनात् । तदभ्युपगमे[10] न्यायो बहिरपि न राजदण्डवारित इति भावः । तत्कामः किं करोति ? इत्याह–क्षणिकेतर इत्यादि । क्षणिकश्च इतरश्च [अ]क्षणिकः, तयोः तावेव वा पक्षौ (पक्षौ) तयोर्यथासंख्येन विधिप्रतिषेधौ वदति इत्येवं शीलस्तद्वादी तं न विजयते । यथा क्षणिकपक्षविधिवादी स्वन्यायेन क्षणिकपक्षं विदधाति, [11]तन्निषेधवादी तद्दोषेण क्षणिकपक्षं निषेधति, तथा अयमपि इति । तर्हि बहिरिव स्वरूपविभ्रान्ता बुद्धिरिति चेत्; अत्राह–मिथ्यात्वं च । 'तदयम् अन्तर्बहिः' इत्यनुवर्त्तते, स्वयम् आत्मना व्यवस्थापयितुकामः, कया ? एकान्तभ्रान्त्या (न्तया) । शेषं पूर्ववत् । अयं तु विशेषः–यथा क्षणिकवादी कल्पनया स्वपक्षं साधयन् विपक्षं न जहाति विपक्षं वा निषेधन् नित्यग्राहकप्रमाणप्रतिविधानेन स्वपक्षं तिरस्करोति तथाऽयमपि इति ।

न उक्तं (नन्वुक्त)विधिना क्षणिकेतरपक्षविधिप्रतिषेधवादिनो न तत्त्वसाधनमस्ति,

(१) शङ्कायाः । (२) पूर्वश्लोकेन । (३) स्वसंवित्तेः । (४) अभ्रान्तम् । (५)संवित्त्या । (६)मिथ्या चेत् । (७) बहिरर्थप्रतिषेधाभावे । (८) विज्ञानैकान्तवादसिद्धिरिति । (९) 'अज्ञातार्थप्रकाशो वा' इति पारमार्थिकं प्रमाणलक्षणम् । 'अविसंवादिज्ञानम्' इति तु व्यावहारिकमिति । (१०) बहिरर्थस्वीकारेऽपि । (११) क्षणिकपक्षनिषेधकः ।

अस्य तु विद्यते इति कथमुच्यते '**न तद्वादिनं विजयते**' इति चेत् ? अत्राह–**साधन** इत्यादि । इदमत्र तात्पर्यम्–विज्ञप्तिमात्रं परमार्थसद् बहिरर्थः पुनः तद्विपरीत [इति] दर्शने विज्ञप्तिवद् अन्यस्यापि प्रत्यक्षतः सिद्धे तन्मात्रसाधने पक्षस्य प्रत्यक्षबाधनमिति [३३२क] न तत्र हेतूपन्याम [:] तदुक्तम–*"**न तस्य हेतुभिस्त्राणम् उत्पन्ने च (उत्पतन्नेव) यो हतः**" इति । **साधनस्य** तन्मात्रलिङ्गस्य **प्रयोगो** वचनं तस्य **प्रतिषेधात्** निराकरणात् , निराकृते तदनुपयोगात् । 'बहि- ५ रर्थवत् तन्मात्रस्यापि न परमार्थसत्त्वम्' इति मते साधनमपि तथाविधमेव । नचाऽसत् असतो लिङ्गम् ; अतिप्रसङ्गात् । ततः '**साधनप्रयोगप्रतिषेधात्**' असतः प्रयोगवैफल्यात् इति मन्यते । यदि वा, तत्प्रयोगस्य प्रतिषेधात् , भ्रान्तिमात्रे तद्वचनस्य स्वयमेव निराकरणा [त्] तदयं तद्वादिनं न विजयते इति ।

अत्र अपरः प्राह–'न चित्रप्रतिभासमानस्य चित्रप्रतिषेध उच्यते येनाऽयं दोषः स्यात् १० अपि तु परमार्थसत्त्वारोप एव विवादगोचरे घटादौ निराक्रियते तैमिरिककेशादिनिदर्शनेन' इति; सोऽपि अनेन निरस्तः । तथाहि–तैमिरिककेशादौ परमार्थसद्भावः कुतश्चिन् परमार्थतो यदि सिद्धः; तर्हि तेनैव तत्रावच्छेदहेतोः व्यभिचारः इति **साधनप्रयोगप्रतिषेधात्** सव्यभिचारात् साधनस्य अप्रयोगात् । नो चेत्[10]; न तर्हि तत्र[11] कस्यचित् साधनस्य तेन[12] व्याप्तिरिति साध्यविकलो दृष्टान्तः । अत आह– **साधन** इत्यादि । साध्याव्याप्तसाधनस्याप्रयोगार्हत्वात् । १५

अम (अथ न) व्यवहारिणा तत्र तदभाव इष्यते तेन तद्व्याप्तिः[13]; तर्हि सौगतेन ज्ञानेषु स्वसंवेदने(नेन) परमार्थसत्तयोपगतेन उपलम्भस्य व्याप्तेः 'यदुपलभ्यते तत् परमार्थसद् यथा स्वसंवेदनम् उपलभ्यते च जाग्रत्स्वप्नदशायां बहिरर्थः' इति बहिरर्थसत्यैकान्तवादी अथ स्यात् (स्यात् । अथ) न तेन स्वसंवेदनं परमार्थसद् इष्यते; व्यवहारिणापि तत्र तदभावो नेष्यते इति-समानम् । कथं तस्य[14] सत्येतर [३३२ख] प्रविभाग इति चेत् ; इतरस्य कथं परमार्थसंव्यवहार २० प्रमाणलक्षणा(ण) भेदः ? कथं वा तदपरमार्थसत्त्वे बहिरर्थाद् विशेष्या(षो) येन बहिरर्थः त्यज्यते न तदिति ? सोऽयं स्वसंवेदनकृतां सर्वविकल्पाभावसिद्धिमुपजीवति न तत्परमार्थसत्त्वम् [इच्छति] इतरथा[16] परसंवेदनस्य अपरमार्थसत्त्वेऽपि ततो बहिरर्थसिद्धिः स्यात् । एतेन 'परोपगतेन साध्येन दृष्टान्तेन हेतोर्व्याप्तिः' इति निरस्तम् ।

किंच, व्यवहारिणा तत्र प्रमाणमन्तरेण यदि नाम तदभावोऽभ्युपगतो नैतावता सर्वत्र २५ तदभाव इति कचिद् बहिरर्थेऽपि परमार्थसत्त्वाशङ्काऽनिवृत्तेः कथं मतिमतं(मतां) सौगतमत एव मतिः ? अन्यथा कचित् पुरुषे स[17] सर्वज्ञत्वाभावस्तेन उपगतः इति सर्वत्र तदा(द)भावः

---

(१) विज्ञानवादिनः । (२) अपरमार्थसत् । (३) अर्थस्यापि । (४) विज्ञप्तिमात्र । (५) विज्ञप्तिमात्रस्यापि । (६) अपरमार्थसदेव । (७) चित्रत्वेन प्रतिभासमानस्य । (८) प्रमाणात् । (९) प्रमाणेन । (१०) यदि तैमिरिककेशादीनां न परमार्थसद्भावः तर्हि । (११) तैमिरिककेशादौ । (१२) स्वसाध्येन । (१३) स्वीक्रियते । (१४) व्यवहारिणः । (१५) स्वसंवेदनस्य परमार्थसत्त्वम् । (१६) अपरमार्थसत्त्वेऽपि तस्मादिष्टसिद्धेः । (१७) 'स' इति निरर्थकम् ।

तथा च मीमांसकपक्षे परस्य प्रद्वेषो निर्निबन्धनं (नः) । आह (?) साधन इत्यादि । सन्दिग्धविपक्षव्यावृत्तिकत्वेन साधनप्रयोगप्रतिषेधात् ।

ननु ज्ञानवद् यदि अर्थोऽप्युपलभ्येत युक्तमेतत् 'उभयोरविशेषेण सत्त्वमसत्त्वं वा' यावता ज्ञानमेव उपलभ्यते, नीलादेः सहोपलम्भनियमेन तद्रूपत्वादिति चेत् ; अत्राह–सहोपलम्भ ५ इत्यादि ।

**[सहोपलम्भनियमात् स्याद्भेदो नीलतद्धियोः ।**
**असहानुपलम्भश्चेदसिद्धः पृथगीक्षणात् ॥२३॥**

**सहोपलम्भनियमादभेदैकान्तसाधने भ्रान्तिप्रत्यक्षयोरन्यतरस्याभावात् न कचिद् १० भ्रान्तिज्ञानं स्यात् तदेकान्तेन भ्रान्तिविविक्तप्रत्यक्षस्वभावोपपत्तेः सुषुप्तवत् । बहिरन्तश्च नीलतद्धियोर्दर्शनात् कुतः सहोपलम्भनियमः सिद्धः । सकृदेकार्थोपनिबद्धदृष्टीनां परज्ञानानुपलम्भेऽपि तदर्थदर्शनात् कुतो नियमः ? तदेकक्षणवर्तिनां सहोपलम्भनियमात् स्वयं वेदनेनोत्पत्तेः सकलं जगदेकसन्तानं प्रसज्येत । यदि पुनरेकज्ञानोपलम्भनियमो हेतुः; असिद्धः अनैकान्तिकश्च, नीलस्य सकृदनेकेन ज्ञानेन उपलम्भसंभवात्, बहूनामपि १५ द्रव्याणामेकज्ञानोपलम्भाप्रतिषेधात् । यदि पुनरसहानुपलम्भ इति; को विशेषः ? प्रसज्यप्रतिषेधमात्रमसाध्यसाधनम् शशविषाण-खरविषाणयोरिव, अर्थादर्थगतिलक्षणात् । विज्ञानस्य···भ्रान्तैकान्तवत्···।**

नीलतद्धि[य]योः नीलनीलज्ञानयोः यः **सहोपलम्भनियमो** यौगपद्योपलम्भनियमः परेण तदभेदभावनाय उपन्यस्तः तस्माल्लिङ्गात् **स्यात्** भेदे **भेदो** नानात्वं '**नीलतद्धियोः**' इति आवृत्त्या सम्बन्धः । तन्नियमस्य तर्कतो भेदनिष्ठत्वात्, ततः तत्सिद्धेर्विरुद्धोऽ- २० यमभेदसाधन इति मन्यते । नहि एकत्वे [३३३ख] तत्सम्भवो (तत्सहभावः) । न खलु नीलस्यैव उपलम्भे नीलपीतयोः सहोपलम्भ इति युक्तम् ।

ननु चन्द्रद्वयस्य अभेदेऽपि तन्नियमः तत्कथमस्य भेदेन व्याप्तिरिति चेत् ? उक्तमत्र सहोपलम्भो न स्यात् तदन्यस्वत् इति । सहशब्दस्य यौगपद्यार्थम् उक्त्वा तदर्थान्तरं परिकल्पितमा- २५ शङ्क्य दूषयन्नाह– **असहानुपलम्भश्चेद्** इति । अस्यायमर्थः–सहानुपलम्भः पर्युदासवृत्त्या

(१) बौद्धस्य । (२) ज्ञानरूपत्वात् । (३) बौद्धेन विज्ञानवादिना । (४) "सकृत्संवेद्यमानस्य नियमेन धिया सह । विषयस्य ततोऽन्यत्वं केनाकारेण सिध्यति ॥ विषयस्य हि नीलादेः धिया सह सकृदेव संवेदनं धिया सह न पृथक्···"–प्र० वार्तिकाल० ३।३८८। "धर्म्यत्र नीलाकारतद्धियौ तयोरभिन्नत्वं साध्यधर्मः यथोक्तः सहोपलम्भनियमो हेतुः । ईदृश एवाचार्यीये प्रयोगे हेत्वर्थोऽभिप्रेतः ।"–तत्त्वसं पं० पृ० ५६७ । (५) 'भेदे' इति निरर्थकम् । (६) सहोपलम्भस्य । (७) सहोपलम्भनियमात् । (८) भेदसिद्धेः । (९) वक्तुं युक्तम् । (१०) भ्रान्तविज्ञानस्थले । (११) एकत्वेऽपि । (१२) सहोपलम्भनियमः । (१३) तुलना–"तत्र भदन्तशुभगुप्तस्त्वाह–विरुद्धोऽयं हेतुः, यस्मात् सहशब्दश्च लोकेऽन्यो (स्या) न्यैवान्येन विना क्वचित् । विरुद्धोऽयं ततो हेतुर्यद्यस्ति सहवेदनम् ॥ पुनः स एवाह–यदि सहशब्द एकार्थः तदा हेतुरसिद्धः । तथाहि– नटचन्द्रमल्लप्रेक्षासु न ह्येकेनैवोपलम्भः । तथाहि–नीलोपलम्भेऽपि

पृथगुपलम्भः, तस्य नञा प्रसज्यप्रतिषेधवाचिना, न पर्युदासवाचिना उक्तार्थप्रसङ्गात्, अभिसम्बन्धे पृथगुपलम्भाभावः **असहानुपलम्भः** सहोपलम्भः। सहशब्दस्य अनेकार्थत्वात्। **चेत्** शब्दः पराभिप्रायद्योतकः। अत्र दूषणम् **असिद्धो हेतुः** अस्मिन्नर्थे सहोपलम्भलक्षणः। कुतः? इत्याह–**ईक्षणात्** नीलतद्धियोः **पृथग्** दर्शनात्। तथाहि–प्रमातरि अहमहमिकया ज्ञानं प्रतीयते अन्यत्र घटादिकं समानकालेऽपि। तथा अन्यदा स्मर्यमाणोऽर्थः अन्यदा स्मरणम्। ५ अस्य च निर्विषयत्वे अननुमानम्, तत्काले सम्बन्धाऽग्रहणात्। पूर्वं तद्ग्रहत्तद्भावे तद्गहद्ग्रहाद् (पूर्वं तद्ग्रहात्तदा तद्भावे बाल्ये तद्ग्रहाद्) वृद्धदशायां तद्भावप्रसङ्गः। अरिष्टादिलिङ्गाद् भाविनो मरणादेरनुमाने कालपृथक्त्वेन अनुमानानुमेययोः प्रतिभासनं सिद्धमेव।

एतेन यौगपद्योपलम्भनियमोऽपि चिन्तितः; सर्वत्राभावात्। अथ स्वरूपा[न्ना]न्यत्र ज्ञानवृत्तिः तेनायमदोषः; उक्तमत्र अन्यत्रापि तद्वृत्तिदर्शनात्। १०

किंच, नीलतद्धियोरभेद स्यात् (दस्यात्) मानेनाऽविषयीकरणे किं सहोपलम्भनियमोपन्यासेन? समारोपव्यवच्छेदोऽपि चिन्तितोऽस्माभिरन्यत्र। धर्मिसाध्यधर्मानुमा [३३३ख] नानाम् अभेदो अभिन्न- (अभेदे नानुमानम्। भिन्न) वेदने सिद्धं पृथगुपलम्भनम्।

सहशब्दस्य एकार्थवाचित्वात् 'एकस्य ज्ञानस्यैव उपलम्भनियमः सहोपलम्भनियमः' इति एतेन निरस्तम्; उभयोरुपलम्भात्। यदि वा, 'स्याद्' इति निपातोऽयम्, अतः शेषहेत्वादिदोषपरिग्रहः। १५

कारिकां विवृण्वन्नाह–**सहोपलम्भ** इत्यादि। **[सहोपलम्भनियमात्]** यौगपद्योपलम्भनियमाद् **अभेदैकान्तसाधने** अङ्गीक्रियमाणे **'नीलतद्धियोः'** इति वक्ष्यमाणेन सम्बन्धः। किम्? इत्यत्राह–**भ्रान्तीत्यादि**। भ्रान्तिशब्देन *"भ्रान्तिरपि सम्बन्धतः प्रमा" इति[१०] वचनात् नीलतद्विज्ञानयोः अभेदैकान्तानुमानस्य अनुमेये विभ्रमो गृह्यते। प्रत्यक्षशब्दे (ब्देन च) २० *"**सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमविकल्पकम्**" [न्यायबि० १।१०] इत्यभिधानात्,

तदुपलम्भानामन्यसन्तानगतानामनुपलम्भात्। यदा च सत्त्वं प्राणभृतां सर्वे चित्तक्षणाः सर्वज्ञेनावसीयन्ते तदा कथमेकेनैवोपलम्भः सिद्धः स्यात्। किंच, अन्योपलम्भनिषेधे सत्येकोपलम्भनियमः सिध्यति। न चान्योपलम्भप्रतिषेधसंभवः स्वभावविप्रकृष्टस्य विधिप्रतिषेधायोगात्। अथ सहशब्द एककालविवक्षया; तदा बुद्धज्ञेयचित्तेन चित्तचैत्तैश्च सर्वथा अनैकान्तिकता हेतोः। यथा किल बुद्धस्य भगवतो यद्विज्ञेयं सन्तानान्तरचित्तं तस्य बुद्धज्ञानस्य च सहोपलम्भनियमेऽप्यस्त्येव च नानात्वम्, तथा चित्तचैत्तानां सत्यपि सहोपलम्भे नैकत्वमित्यतोऽनैकान्तिको हेतुरिति।...स्यादेतत् यद्यपि विपक्षे सत्त्वं न निश्चितं सन्दिग्धं तु, ततश्चानैकान्तिको हेतुः सन्दिग्धविपक्षव्यावृत्तिकत्वात्।"–तत्त्वसं० प० पृ० ५६७–६९। "सहोपलम्भनियमान्नाभेदो नीलतद्धियोः। विरुद्धासिद्धसन्दिग्धव्यतिरेकानन्वयत्वतः॥"–न्यायवि० १।८३। शाबरभा० बृह० पं० १।१।५। शा० भा० भामती २।२।२८। योगसू० तत्त्ववै० ४।१४। न्यायकणि० पृ० २६४। अष्टश० अष्टस० पृ० २४२। प्रमेयक० पृ० ७९। न्यायकुमु० पृ० १२२। सन्मति० टी० पृ० ३५२। स्या० रत्ना० पृ० १५२।

(१) भूतलादिप्रदेशे। (२) अतीते। (३) वर्तमाने। (४) स्मरणस्य। (५) अनुमानोत्पत्तिर्न स्यात्। (६) अविनाभावसम्बन्ध। (७) घटादौ बहिरर्थे। (८) मतम्। (९) ज्ञानस्य अर्थस्य च। (१०) द्रष्टव्यम् –पृ० ८२ टि० ४।

तस्यै आत्मवेदनम्[1] तयोरन्यतरस्य भ्रान्तेः प्रत्यक्षस्य वा [अ]भावात् न क्वचित् तदभेदेऽन्यत्र वा भ्रान्तिज्ञानं मिथ्यानुमानं स्याद् भवेत्, ततो लाभमिच्छतो मूलोच्छेदः । अनुमानेन तद्भेदसिद्धिमिच्छतोऽनुमानमेव नष्टम् । तदभावः कुतः ? इत्यत्राह-तदेकान्तेन इत्यादि । तन्नियमाद्[2] योऽसौ भ्रान्तिप्रत्यक्षयोः तदेकान्तो भेदैकान्तः तेन हेतुना भ्रान्त्या साधारणाऽ-
५ स्पष्टनिर्भासेन विविक्तो विकलः प्रत्यक्षस्य स्वला (स्वसं)वेदनाध्यक्षस्य यः स्वभावः तस्य उपपत्तेः कारणात् । एतदुक्तं भवति-यदा भ्रान्तिः प्रत्यक्षादभिन्ना भवति तदा तदेवं[3] सा । यद् यस्मादभिन्नं तत् तदेव भवति यथा प्रत्यक्षस्वरूपम्, अभिन्ना च भ्रान्तिस्ततः इति । प्रत्यक्षविविक्तभ्रान्तेः प्रसङ्गात् कारणात्, तदभावात् न क्वचिद् भ्रान्तिज्ञानं स्यात् । अत्रायम (अत्रान्वय) दृष्टान्तमाह-सुषुप्तवद् इति । गाढनिद्राक्रान्तः सुषुप्तः तस्य इव तद्वत् । एवं
१० मन्यते-भ्रान्तेः प्रत्यक्षस्याभेदे सैव तद् इति साधारणविशदाकारमात्रं स्वसंवेदनरहितं प्रमाणत्राणश्च स्यं (प्रत्यक्षप्रमाणश्च) प्रसक्तम् । न चैवं. पराभ्युपगमः । ततोऽनुमानाभ्युपगमाद् भ्रान्तिप्रत्यक्षयोः भेद एव तन्नियमसद्भावाद् विरुद्धो हेतुः इति भावः । अनेन व्यतिरेकमुखेन 'सहोपलम्भनियमात् स्याद्भेदो नीलतद्धियोः' इति व्याख्यानम् (तम्) ।

१५ निपातस्याच्छब्दलब्धमर्थं[4] दर्शयन्नाह-नील इत्यादि । नीलतद्धियोर्दर्शनात् । क्व ? इत्यत्राह-बहिरन्तश्च नीलस्य बहिः तद्धियोऽन्तः, चशब्दाद् अन्य[दा] स्मर्यमाणानुमेयार्थयोः अन्यदा स्मरणानुमानयोः इति दर्शयति । ततः किम् ? इत्याह-कुत इत्यादि । कुतो न कुतश्चित् मानात् सहोपलम्भनियमः सिद्धो हेतुः इत्यर्थः । प्रकारान्तरेण तदसिद्धतां दर्शयन्नाह-सकृद् एकहेलया एकस्मिन्नर्थे नर्तक्यादौ उपनिबद्धा व्यापृता दृष्टिर्येषां ते तथोक्ताः
२० पुरुषाः तेषां परज्ञानानुपलम्भेऽपि न केवलं पुरुषविशेषाणामुपलम्भे तदर्थदर्शनात् तेषां पुरुषाणां ज्ञानानां च अर्थस्य दर्शनात् कुतो नियमः सहोपलम्भस्य ?

ननु तज्ज्ञानानुपलम्भे कथमयं तदर्थ इति ज्ञायते ? *"द्विष्ठसम्बन्धसंवित्तिः" [प्र० वार्तिकाल० २।१][5] इत्यादि वचनात् । अथ पुरुषाणां तत्र प्रवृत्तिदर्शनात् 'तज्ज्ञानविपर्याकृतोऽसौ अर्थः' इति परिच्छिद्यते ; एवं तर्हि य ए[व] केनचिदुपलभ्यते स एव परेणापि इति
२५ अनुमानादवगम्य[ते] तथा च द्वयोः समानप्रवृत्तिदर्शनात् समानार्थदर्शनं सिध्येत् । सामान्यविषय[३३४ ख]त्वादनुमानस्य नैकार्थदर्शनम्, अन्यथा सदृशरोमाञ्चकञ्चुकितत्वदर्शनात् एकसुखप्रतिपत्तिः स्याद् इति चेत् ; तदसत् ; यतः पशवोऽपि स्वदर्शनाभिलषितां पशुयोषितम् अन्यैरभिलषितां प्रतिपद्यमानाः तैः सार्द्धं धु (यु)द्ध्यमाना दृश्यन्ते । 'यादृश्यस्माभिरभिलषिता तादृशी अन्यैः' इति प्रतिपत्तौ तदयोगात् । कुतस्ते तथा प्रतिपद्यन्ते इति चेत् ; कार्यविशेषा-

(१) भ्रान्तिज्ञानस्य । (२) गृह्यते । (३) यौगपद्योपलम्भात् । (४) प्रत्यक्षमेव । (५) भ्रान्तिः । (६) प्रत्यक्षतः । (७) भ्रान्तिरेव । (८) प्रत्यक्षम् । (९) स्यादिति निपातलब्धम् । (१०) 'नैकरूपप्रवेदनात् । द्वयस्वरूपग्रहणे सति सम्बन्धवेदनम् ॥' इति शेषः ।

वधारणाद् इति सिद्धः (?) कथमन्यथा *"**तद्विशेषावधारणे इष्यत एव सर्वथा गम्य-गमकभावः**" इति वचनं शोभेत ? न चायमेकान्तः 'दृष्टान्तसाधर्म्यात् सामान्यमेव अनुमेयम्' इति, *"**विदुषा (पां) वाच्यो हेतुरेव हि केवलः**" [प्र० वा० ३।२६] [1]इति वचनात्। मा वा भूत्–'यमर्थं पश्यत्ययं तमेव अन्योऽपि' इति निश्चिता प्रतीतिः, तथापि परेण तद्दर्शन-निषेधाभावात् तन्नियमस्य सन्दिग्धाऽसिद्धता। अथ नर्थक्य (नर्तकी अ)न्यदर्शनविकला ५ प्रतीतिनियत(ता) इति तद्बाधनम्; तर्हि खलविलान्तर्गतबीजाद् अङ्कुरं तद्विविक्तं प्रतीयते इति न तत्र[2] तद्व्यापारः। ततो यथा कार्ये [अ]दृष्टस्यापि कारणस्य व्यापारः तथा प्रमेये अन्यज्ञानस्य संभाव्येत। हेतुफलभावानभ्युपगमे च तन्नियमात्[3] नीलतद्धियोरभेदस्य अनुमानम-युक्तम्। व्यवहारेण तदङ्गीकरणं(णे), तेनैव[4] तन्नियमस्य सन्दिग्धासिद्धतामन्वाकर्षेति इति यत्किञ्चिदेतत्। १०

स्यान्मतम्–यज्ज्ञानस्याकारोऽसौ [5]तेन वेद्यते नान्येन; तन्न; यतः तदाकारता तस्याः (तस्य[6]) कुतः सिद्धा ? [7]तन्नियमादिति चेत्; अन्योऽन्याश्रयात् [३३५ क]–सिद्धे तदाकारत्वे तन्नियमः सिध्यति, ततः तदाकारत्वम्। अन्यतश्चेत्; अस्य वैफल्यम्।

सिध्यतु वा कुतश्चित् तदाकारत्वम्, तथापि सुगतेन तद्वेद[ने तद]वस्थोऽपि दोषः। [त]तस्तद्विज्ञानावेदनेऽपि पृथग्जनेन (ग्जनेन) तदर्थवेदनात् कथं सुगतः § [8]सर्वज्ञ स्त तदतात् १५ कथं सुगतः § सर्वज्ञस्ते तदवेदने ?

अपरस्तु मन्यते–

*"**ग्राह्यं न तस्य ग्रहणं न तेन ज्ञानान्तरग्राह्यः(ह्य)तयापि शून्यः।**
**तथापि च ज्ञानमयः प्रकाशः प्रत्यक्षपक्षस्य तथाविवा(रा)सीद्॥**"

इति वचनान्नाऽशेषज्ञाता(ज्ञता) तस्य[9] सर्वज्ञता अपि तु स्व[रूपज्ञता], तस्याप्येतन्न २० सुन्दरम्; इतरस्मात्तदविशेषात् *"**प्रमाणभूताय**" [प्रमाणसमु० श्लो० १] [10]इत्यादेः आनर्थ-क्यप्रसङ्गात्। व्यवहारेण तदभिधानेऽप्युक्तम्–'तेनैव हेतोरसिद्धत्वम्' इति।

यदि च स[11] तथाविधो न कुतश्चित्[12] प्रतिपन्नः; कथमस्ति येन [13]तथा स्तूयते ? तदिद-मायातम्–यथा ईश्वरे नित्येऽप्यप्रमाणता तथा सुगतेऽपि प्रमाणशून्यता। अथ प्रतिपन्नः; तर्हि भवता सुगतोऽपि ज्ञायते न तेन[14] परं किञ्चिदिति मूढता। ततस्तस्य अस्तितत्त्व(स्तित्वमव)- २५ गम्यते विशेष (षं) वाभ्युपगच्छता·········मिति कथं न प्रकृतो दोषः ? तत्[:] स्थितं '**कुतो नियमः**' इति।

---

(१) 'तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः। ख्याप्येते···' इति शेषः। (२) अङ्कुरे। (३) सहो-पलम्भनियमात्। (४) व्यवहारेणैव। (५) तज्ज्ञानेनैव। (६) ज्ञानस्य। (७) सहोपलम्भनियमात्। (८) § एतदन्तर्गतः पाठो द्विर्लिखितः। (९) सुगतस्य। (१०) 'जगद्धितैषिणे प्रणम्य शास्त्रे सुगताय तायिने। प्रमाणसिद्ध्यै स्वकृतिप्रकीर्णनात् निबध्यते विप्रसृतं समुच्चितम्' इति शेषः।–प्रमाणसमु०। 'जगद्धि-तैषिणे प्रणम्य शास्त्रे सुगताय तायिने। कुतर्कसम्भ्रान्तजनानुकम्पया प्रमाणसिद्धिर्विधिवद्विधीयते।' इति शेषः–प्र० वार्तिकाल० पृ० १। (११) सुगतः। (१२) प्रमाणात्। (१३) 'प्रमाणभूताय' इत्यादिरूपेण। (१४) सुगतेन।

स्याच्छब्दः(ब्द)प्राप्तिनं परमप्यर्थ (र्थं) दर्शयन्नाह–**तदेक** इत्यादि । **तेन विवक्षित-**
नीलज्ञाने[न ए]**कस्मिन क्षणे वर्त्तितुं** शीलानाम एकक्षणभाविसन्तानान्तरज्ञानानाम इत्यर्थः ।
**सहोपलम्भनियमात्** । तदपि कुतः ? इत्याह–**स्वयम्** आत्मना वा **वेदनेनोत्पत्ते**[:] । ततः
किम ? इत्याह–दि [**सकलं जगदिति**] । न चैवम , अतो व्यभिचारी हेतुः इति भावः ।

५ स म न्त भ द्र स्य तु मतम्–*"**यथा**: ········**सहोपलम्भ**" इत्यादिना [२३५ख]
तदभेदे न त ग्राह्यग्राहकतया तन्नियम इति च ग्राहकाभिमता [न] ग्राह्यस्य भेदे न तेनास्य ग्रहणम्
अ[न]न्यवेदनानियमाद् अपि तु स्वयमेव तदपि प्रतिभाति, तथापि सहोपलम्भनियमात् तयोरभेदे
तदेकेत्याद्युक्तम । तदेतदित्थम अन्ये परिहरन्ति–नीलतद्धियोरभेदे नैकत्वम् अपि तु ज्ञानत्वेन
सदृशत्वम , यथा ज्ञानं ज्ञानं तथा नीलमपि सहोपलम्भनियमात्तथा········:दस्ति इति न तैः
१० व्यभिचारो हेतोः विपक्षे[ऽ]गगनादिनि ; ते न युक्तकारिणः ; यतो यदि यज् ज्ञानेन सह
उपलभ्यते तदपि ज्ञानं तर्हि नीलज्ञानैकक्षणवर्त्तिनां ज्ञानान्तराणां सहोपलम्भनियमात् नीलत्व-
मापद्येत । पुनः तत्कार्यस्यापि ज्ञानस्य नीलत्वे तदवस्थो दोषः[1] पुनरपि तदवस्थ इति नीलमात्रं
जगत् । तदाह **तदेके**त्यादि । **तेन** नीलज्ञानेन **एकक्षणवर्त्तिनां स्वयम्** आत्मना **वेन**
(**वेदने**)**नोत्पत्तेः** कारणात अनेन सहवृत्तिवद् वेदनमपि सहैव दर्शयति–**सहोपलम्भनियमात्**
१५ **सकल**(**लं**) **जगद् एकसन्तानं** सदृशसन्तानं **प्रसज्येत** । न चैवं परेस्ति (परेष्टि)स्ततो
व्यभिचारी हेतुः । तत्र न तन्नियममात्रात[2] नीलं ज्ञानमिति गम्यते अपि तु ज्ञानवत् स्वयं प्रति-
भासनात । न च नियतनीलज्ञानवत सर्वज्ञज्ञानं नीलतया चकास्ति येनातिप्रसङ्गः स्यादिति चेत ;
तर्हि 'नीलं ज्ञानं स्वयं प्रकाशनात तज्ज्ञानवत्' इत्येवास्तु किं व्यभिचारिणा तन्नियमेन[3] ?
तदेवास्तु इति चेत ; न ; [२३६ क] परत एव[4] तत्प्रतिभासप्रतिपादनात ।

२० परस्य तु दर्शनं विवेक ज्ञान (चित्रैकज्ञाना)द्वैताभ्युपगमात् सकलं जगद् एकज्ञानमिष्यते
न पुनः एकसन्तानं[5] तदभावात इति न तेन तद्व्यभिचार इति; तन्न सूक्तम ; नीलमात्रदर्शिनोऽ-
पि सकलजगदपेक्षचित्रत्वप्रतीतिप्रसङ्गात अन्यथा 'नानेकम[6]' इत्युक्तं भवेत युगपदिव क्रमेणापि
च तत्प्रसङ्गात । अत आह–**सकलम्** इत्यादि ।

एवं यौगपद्यार्थे सहशब्दं निरूप्य निपातानामनेकार्थत्वात एकार्थं[7] निरूपयन्नाह–**यदि**
२५ इत्यादि । **यदी**ति पराभ्युपगमसूचकः, **पुनरि**ति पक्षान्तरस्य[8], **एकज्ञानोपलम्भनियमः** एकस्य
ज्ञानो (ज्ञानस्य उ)पलम्भो नार्थस्य इति तन्नियमः, एकेन ज्ञा[ने]नोपलम्भो नीलस्य न तदन्तरेण
इति वा तन्नियमो हेतुः सहोपलम्भनियमो **यदी**त्यर्थः । आद्ये पक्षे दूषणमाह–**असिद्धो 'हेतुः'**
इत्यनेन सम्बन्धः, अर्थस्याप्युपलम्भात । द्वितीये आह–**अनैकान्तिकश्च** इति । **अनैकान्तिको**
व्यभिचारी । **च** शब्दाद् असिद्धो हेतुः इति । असिद्धतां दर्शयन्नाह–**नीलस्य** इत्यादि । **कस्य-**
३० चिन्नर्त्तक्यादिगतस्य **सकृच्छब्देन** सहिति (सह इति[9]) व्याख्यातम् , **अनेकेन ज्ञानेन उपलम्भ-**

(१) नीलत्वापत्तिलक्षणः । (२) स्यादिति । (३) सहोपलम्भनियममात्रात् । (४) सहोपलम्भनियमेन । (५) नीलप्रतिभास । (६) सन्तानाभावात् । (७) अनेकमेकरूपम् । (८) सहशब्दम् । (९) सूचक इति ।

[संभ]वादिति । अनेन सन्दिग्धासिद्धतां दर्शयति । विचारितं चैतदनन्तरम् । अनैकान्तिकतामाह–**बहूनामपि** न केवलमेकस्य **द्रव्याणाम्** । अनेन तत्पक्षीकरणं निषेधति, नहि जीवादीनाम् एकज्ञानो (ज्ञाने) पक्षीकरणमात्रेण एकत्वं प्रमाणबाधनात् । 'पर्यायाणाम्' इत्युच्यमाने तेषां द्रव्यापेक्षया एकत्वात् स्यादपि पक्षीकरणम । **एकज्ञानोपलम्भः एकेन ज्ञानेन [उपलम्भस्य] दर्शनस्य अप्रतिषेधात्** निषेधाभावात् । अन्यथा [३३६ ख] व (च) सकलशून्यतेत्युक्तम् । ५

अर्थान्तरमाशङ्कते दूषयितुं **यदि** इत्यादिना । सहोपलम्भनियमाद् इति हेतुः स **यदि पुनः असहानुपलम्भ** इति स्यात ; तत्र दूषणं **को विशेष इति** पूर्वोक्तादर्थान् न कश्चिदस्य भेदः । तथाहि–पर्युदासवृत्त्या सहानुपलम्भः पृथगुपलम्भः अस्य नजाति सम्बन्धे (नञा[1] अभिसम्बन्धे) तद्वृत्त्या सहोपलम्भ इति प्राप्तिः । अथात्र प्रसज्यप्रतिषेधोऽपेक्षा (क्ष्यते ;) तर्हि साध्यमपि [2]तथाविधमस्तु अन्यथा सम्बन्धाऽसिद्धेः । तथेति चेत ; अत्राह–**प्रसज्येत्यादि** । १०

**प्रसज्यप्रतिषेधमात्रमसाध्यसाधनम्** साध्यं न भवति साधनं च न भवति इत्यर्थः । कयोरिव ? इत्यत्राह–सम्येव (**शशविषाण-खरविषाणयोरिव**) इत्यादि । कुतः ? इत्याह–**अर्थाद्** धूमादेः [स]काशाद् **अर्थस्य** अग्न्यादेर्या **गतिः** प्रतिपत्तिः तस्या **लक्षणाद्** दर्शनात । अथवा [अर्थ]-सम्बन्धि यत्लक्षणम्–*"**अर्थो ह्यर्थं मयता (गमयति)**" इति शास्त्रं[3] तदाश्रित्येति ।

आह उक्त (क्तं) भवता–'नीलाकारस्य ज्ञानस्यैकस्य उपलम्भो नार्थस्य तन्नियम न्यत्र १५ (मः, तत्र) असिद्धो हेतुः अर्थस्याप्युपलम्भात' इति ; तन्न युक्तम ; अर्थस्य [4]स्वसदसत्समयभाविन [:] केनचिद्ग्रहणात । न चैकस्य उभयत्र व्यापारो विरोधात् इति चेत ; अत्राह–**विज्ञानस्य** इत्यादि । चर्चितमेतद् बहुशः पुनर्न चर्चनमर्हति ।

'**भ्रान्तैकान्तवद्**' इति निदर्शनं सावपि तु (साधयितुं) भ्रान्तैकान्ते [त्यु] पन्यस्य दूषयति–'**विप्लुताक्षा**' इत्यादिन (ना) । २०

**[विप्लुताक्षा यथा बुद्धिर्वितथप्रतिभासिनी ।**
**तथा सर्वत्र किन्नेति जडाः सम्प्रतिपेदिरे ॥२७॥**

**विप्रतिपत्तिविषयापन्नज्ञानानां [निर्विषयतासाधने] सर्वज्ञानानां स्वयमविषयीकृतानां निर्विषयतासिद्धेः स्याद्वादलङ्घने इष्टविघातकृत् विरुद्धः बहिरर्थाविशेषात् स्वसंवेदनं च न सिध्येत् । तदभ्रान्तैकान्ते सहोपलम्भविरोधात् सह पृथग्वा द्विचन्द्रनिर्भासवत्** २५ **नीलतद्धियोरनुपलब्धेरेव भेदाभेदयोरभावसाधने व्यतिरेकसिद्धिर्विरुध्येत ।]**

**विप्लुतानि अक्षाणि** यस्याः सा तथोक्ता **बुद्धिः** कामलाद्युपहतेन्द्रियकेशोणु (ण्डु)-कादिर्बुद्धिरिति **यथा** येन ग्राह्यग्राहकादिप्रवृत्तप्रकारेण अन्येन वा चि **तथा (वितथ)प्रति-**

(१) असहानुपलम्भ इत्यत्र नञ्समासे । (२) अभावरूपमेव । (३) "अर्थादर्थगतेः"–प्र० वा० ४।१५ । (४) ज्ञानकालीनस्य अर्थस्य ज्ञानं प्रति कारणत्वाभावात् सहभाविनोः कार्यकारणभावाभावात् । ज्ञानकालेऽविद्यमानस्य ग्राह्यत्वे सकलातीतानागतस्य ग्रहणप्रसङ्ग इति भावः । (५) पूर्वपक्षः–"यथास्वं प्रत्ययापेक्षादविद्योपप्लुतात्मनाम् । विज्ञप्तिर्वितथाकारा जायते तिमिरादिवत् ॥"–प्र० वा० २।२१७ । (६) निरालम्बे नभसि केशाकारा उण्डुकाकारा–मशकाद्याकारा या बुद्धिः ।

**भासिनी** असदर्थप्रतिभासवर्ती **तथा** तेन प्रकारेण [३३७क] **सर्वत्र** स्वपररूपयोः अथवा जाग्रत्स्वप्नयोः या बुद्धि [:] वितथप्रतिभासिनी **किन्न** वितथप्रतिभासिन्येव प्रतिषेधद्वयेन प्रकृतार्थगतेः । एतेनेन दूषयति **इति** एवं **जडाः** प्रज्ञाहीनाः सौगताः **संप्रपेदिरे** ज्ञातवन्तः ।

कारिकां विवृण्वन्नाह–**विप्रतिपत्ति**त्यादि । तत्र दूषणमाह–**सर्वे**त्यादि । तात्पर्यमत्र–
५ अनेनानुमानेन **विप्रतिपत्तिविषयापन्नज्ञानानां** निर्विषयता साध्येत, सविषयतासमारोपव्यवच्छेदो वा क्रियेत गत्यन्तराभावात् इति ? तत्र आद्ये पक्षे अनेन धर्मिणां ज्ञानानामपरिच्छेदे न तद्धर्मस्य निर्विषयत्वस्य परिच्छेदो देवदत्ताग्रहणे तच्छ्यामत्ववत् । तथा च अकिञ्चित्करो हेतुः । तदाह–**सर्वज्ञानानां** विवादास्पदीभूतवेदनानां **स्वयम्** आत्मानुमानेन **अविषयीकृतानाम् निर्विषयतासिद्धिः** (द्धेः) कारणात् **इष्टविघातकृत्** वादिन इत्थेष्टं (वादिना यदिष्टं) तस्य खण्डन-
१० कृत् ,अतश्च **हेत्वाभासः** । किन्नामेत् (किन्नामा ? इत्याह–) **विरुद्धः** किञ्चित्करत्वविपरीतेन अकिञ्चित्करत्वेना (त्वेन) **रुद्धः** आक्रान्तो **विरुद्धः** । तेषाम् अनेन परिच्छेदे; सिध्यति विषयता (सविषयता) किन्तु तद्वदन्येषामपि प्रतिभासिनाऽर्थेन विषयत्वसिद्धिः, इतरथा अस्यापि न स्यात् इति तदवस्थमकिञ्चित्करत्वम । एतदेवाह–**सर्वज्ञानानां स्वयम् अविषयीकृतानां निर्विषयतासिद्धेः** इत्यभिप्रायः । **इष्ट [वि] घातकृत् इष्टं** सौगतस्य जाग्रत्स्वप्नप्रत्ययानां निर्विषयत्वम्
१५ तस्य **विघातकृत् विरुद्धो हेत्वाभासः** । तथाहि–अतद्व्याप्तेः तद्व्याप्तिविभ्रमोपितो (सोपितो) विरुद्ध इति सर्वापिणो मन्यन्ते । [प्र]कृतानुमाने च ग्राह्यग्राहकसंवेदनाकारत्वम् [३३७ख] अन्यद्वा विषयत्वेन व्याप्तं सिद्धम् । तत एवं वक्तव्यम्–जाग्रत्स्वप्नप्रत्ययाः सविषय (याः) ग्राह्यग्राहकसंवेदनाकारत्वाद् अन्यतो वा परकीयहेतोः प्रकृतानुमानवद् इति । स्वप्नज्ञानस्य सविषयत्वसाधने प्रसिद्धिबाधादिदोष इति चेत ; जाग्रद्विज्ञानस्य निर्विषयत्वसाधनेऽपि समानः ।
२० कस्मिन् सति विरुद्धः ? इत्यत्राह–**स्याद्वादलङ्घने** । किञ्चिद्विज्ञानं सविषयं किञ्चिद् विपरीतम् तदपि कथञ्चित् इति **स्याद्वादः** तस्य **लङ्घने** परित्यागे सति । एवं मन्यते–यदा यथा बौद्धेन परप्रसिद्धमिथ्यास्वप्नज्ञाननिदर्शनेन सर्वज्ञानस्य मिथ्यात्वं साध्यते तथा परेणापि बौद्धप्रसिद्धसत्यानुमाननिदर्शनेन सर्वज्ञानस्य सत्यता, तदा विरुद्धः । तदा (यदा) तु स्याद्वादमवलम्ब्य 'स्वप्नज्ञानस्य मिथ्यात्वेऽपि प्रकृतानुमानवत् तदाकारत्वेऽपि किञ्चिद्विज्ञानं सालम्बनं स्यात् , इति
२५ साधयति परः, तदाऽनैकान्तिको हेत्वाभास इति ।

यदि पुनः समारोपव्यवच्छेदः क्रियते; तत्राप्युच्यते–निर्विषयेषु सविषयताविकल्पः समारोपः । तदनुमानात् प्राक् तत्र प्रमाणान्तराप्रवृत्तौ कथं निर्विषयतासिद्धिर्यतः तद्विकल्पः[10] समारोपः, तद्व्यवच्छेदकरणाच्च अनुमानमर्थवद्भवेत् । एतदेवाह–**सर्वज्ञानानां** स्वप्नेतरप्रत्ययानां

(१) विपरीतेन रुद्धः विरुद्ध इति । (२) विवादास्पदीभूतवेदनानाम् । (३) न केवलमस्यैव । (४) तद्व्याप्तिशून्यः । (५) तद्व्याप्तिविभ्रमकारीत्यर्थः । (६) साध्येत इति । (७) ग्राह्यग्राहकाकारत्वे सत्यपि । (८) विज्ञानवादी । (९) 'प्रकृतानुमानेन सविषयतासमारोपव्यवच्छेदः क्रियते' अस्मिन् विकल्पे दूषणमाह । (१०) सविषयताविकल्परूपः समारोपः स्यात् ।

**स्वयं** सौगतेन, अन्येन तद्विषयीकरणेऽपि तस्य तन्निर्विषयताऽसिद्धेरिति भावः, **अविषयीकृतानाम्**, कस्मिन् सति ? इत्याह–**स्याद्वादलङ्घने स्वरूपवत्** पररूपेऽपि एकस्य ज्ञानस्य ग्रहणशक्तिसद्भावः स्याद्वादः तस्य लङ्घने [३३८क] स्वरूपमात्रपर्यवसितज्ञानपक्ष इत्यर्थः **निर्विषयतासिद्धेः** कारणात् **इष्टविघातकृतं (त्) 'स्वयम्'** इत्यनुवर्त्तते स्वयमिष्टो वादिना समारोपः तस्य व्या(वि)घातोऽभावः तस्य तत्करणम् । ततः किम् ? इत्याह–**विरुद्धः** पूर्ववद् **अकिञ्चित्करो हेत्वाभासः** । अथ स्वयं तेषां विषयीकृतानामेव सर्वमेतदिच्छेत ; तत्राह–**सर्व** इत्यादि । पूर्वद्वितीयव्याख्यानवदत्र व्याख्यानम् । अयं तु विशेषः येन प्रत्यक्षेण सर्वज्ञानं(न)निर्विषयतां प्रतिपद्यते[1] तेन विरुद्धोऽनैकान्तिकश्च हेत्वाभासः पूर्ववद् योज्यः ।　५

ननु तदपि प्रत्यक्षमानं च निर्विषयमेव तेनायमदोष इति चेत् ; अत्राह– **बहिरर्थाविशेषात्** इत्यादि । **'स्वयम्'** इत्येतदत्रापि अनुवर्त्तते । **स्वयं** बौद्धस्य न केवलं बहिरर्थाविशेषात् सन्तानान्तरे स्वहेतुफलसिद्धिः न भवति अपि तु किन्तु **स्वसंवेदनं च न सि[ध्ये]त्** । तथा च कुतो विभ्रमोऽन्यो वा सिध्येदिति भावः । ततो यथा बहिरर्थ(र्था)विशेषेऽपि स्वसंवेदनस्यैव सत्त्वम् न बहिरर्थस्य तथा स्वप्नेतरप्रतिभासाविशेषेऽपि जाग्रद्घटादेरेव तत्[2] इति कथं नाऽसिद्धो हेतुः ।　१०

अत्राह प्र ज्ञा क रः–जाग्रद्घटादिवत् स्वप्नघटादेरपि सत्त्वम् । तदुक्तम्–　१५

*"व्यवहारमात्रकमिदं सत्यताऽसत्यतेति च ।
**स्वरूपसाक्षात्करणे सत्यतेत्यादि दुर्घटम्** ॥" [प्र०वार्तिकाल० २।२७] इति;

तत्राह–**तदभ्रान्तैकान्ते तयोः** स्वसंवेदन-बहिरर्थ[योः अ]**भ्रान्तैकान्ते** अङ्गीक्रियमाणे । अत्रायमभिप्रायः–**'सत्यवादीतिं (सत्यतेत्यादि) दुर्घटम्'** इति कोऽर्थः ? यदि सर्वमसत्यम्, सत्यासत्यविभागशून्यं वा; तत्रोक्तं **बहिरर्थाविशेषादित्यादि** [३३८ख] । अथ सत्यम्; तत्रेदमुच्यते–**सहोपलम्भविरोधाद्विरुद्धो हेत्वाभासः**, द्विचन्द्रादावपि सहोपलम्भस्य भेद एव भावादिति भावः ।　२०

अथवा यदुक्तम्–**'बहिरर्थाविशेषात् स्वसंवेदनं च न सिध्येत्'** इति तत्र 'स्वसंवेदन[नं] प्रतिभासात् सिध्यति, बहिरर्थः विपर्ययात्' इति परः[3]; तत्राह–**तदभ्रान्तैकान्त** इत्यादि । अत्र द्वैतं निरंशं क्षणिकं तत्स्वसंवेदनम्, चित्रमेकं वा ? तत्र द्वितीये पक्षे–**'तत्र'** इत्यादि वक्ष्यमाणं दूषणमिति । प्रथमे दूषणम्–**तद्** इत्यनेन स्वसंवेदनं परामृश्यते तस्य [**अ**]**भ्रान्तो** य **एकः** असहायः सर्व्वतोधर्मधर्मित्तसु (स चान्तो धर्मः तस्मिन् अभ्यु)पगम्यमाने **सहोपलम्भविरोधात्** नीलरूपस्य एकस्य ज्ञानस्यैव, एकेनैव एकस्यैव [वा] उपलम्भस्य **विरोधाद**भावात्, बहिरन्तर्वा असहायस्य उपलम्भनिषेधेन, कारणात् **सह** यौगपद्येन **पृथग् वा** कालादिभेदेन, वेति समुच्चये, **नीलतद्धियोः** येनमु (येयम् अ)नुपलब्धिरदर्शनम् तस्या **एव न**　२५ ३०

(१) तत् प्रत्यक्षं निर्विषयताविषयकत्वात् सविषयमिति भावः । (२) सत्त्वम् । (३) प्रज्ञाकरः । (४) निरंशस्य ।

'सहोपलम्भात्' इत्येवकारार्थः, **भेदाऽभेदयोः** भेदस्य अभेदस्य **वाऽभावसाधने नीलतद्धियोः** अङ्गीक्रियमाणे तु । दृष्टान्तमाह–**द्विचन्द्रनिर्भासवत्** इति । यथा द्विचन्द्रनिर्भासयोरन्योऽन्यं न भेदो नाप्यभेदः, तयोः[1] वस्तुनिष्ठत्वात्, तन्निर्भासयोरवस्तुत्वात् तथा प्रकृतयोरपि इति । तत्र दूषणमाह–**अनुपलब्धेः** [भेदा]भेदयोरभावसाधने हेतुत्वेन उपन्यस्तायाः **व्यतिरेकसिद्धिः** **विपक्षाद्** भावरूपाद् **व्यतिरेकस्य** व्यावृत्तेः **सिद्धिः** निर्णीतिर्**विरुध्येत** [३३९क] **निरंश**-स्वसंवेदनभावेऽपि तस्या भावात् । न चाऽनिश्चितव्यतिरेको हेतुः गमक इति मन्यते ।

ननु न तद् एकान्त[अभ्रान्त]रूपम् इष्यते किन्तु [स्व]रूपे अभ्रान्त(न्तं) ग्राह्याकारे अन्यथा इति चेत्; अत्राह–**तत्त्वमि**त्यादि (**तत्त्वमिथ्ये**त्यादि ।)

**[तत्त्वमिथ्याग्रहैकान्ते बुद्धेः स्वार्थोपलम्भयोः ।**
**सहोपलम्भनियमः क्वान्तर्ज्ञेयतत्त्वधीः ॥२८॥**

**न चानेकान्तमन्तरेण नीलतद्धियोः सहोपलम्भनियमः । तमन्तरेण स्वयमन्त-र्ज्ञेयतत्त्वस्य बहिरन्तस्याप्यसत्त्वात् कथञ्चिदनेकान्ते नैकान्तैनैकत्वम् ।]**

**बुद्धेः स्वोप**लम्भे **अर्थो**पलम्भे च याथासंख्येन **तत्त्वाग्रहैकान्ते मिथ्या**ग्रहैकान्ते वा अभ्युपगम्यमाने **सहोपलम्भनियमः क्व** ?न क्वचित् । निरंशसंवेदनानुभवाभावेन अर्थोप-लम्भस्यापि दुर्घटत्वात् *"**अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति**" इति मन्यते । तदनु-भवभावे व्यर्थव्युक्तस्यापि (ऽप्यर्थवत तस्यापि) अलीकत्वात्। क्षान्तर्ज्ञे (**क्वान्तर्ज्ञेय**) **तत्त्वधीः ।**

कारिकां व्याचष्टे–**न च** इत्यादिना । **न च** नैव **अनेकान्तमन्तरेण** एकान्ते इत्यर्थः । **नीलतद्धियोः सहोपलम्भनियमः**, तयोः उपलम्भस्यैव अभा[वा]दिति भावः । तदुपलम्भेऽपि **तमन्तरेण स्वयम् अन्तर्ज्ञेयतत्त्वस्य 'न च'** इति पदघटना **बहिरन्तस्याप्यसत्त्वात्** । अन्त-र्बहिश्च भवत्वनेकान्त इति चेत्; अत्राह–**अनेकान्ता(न्ते)** ज्ञानयोः (ज्ञानार्थयोः) एकानेकात्म-कत्वे अङ्गीक्रियमाणे **कथञ्चित्** न सर्वथा। किम् ? इत्याह–**न** इत्यादि । एवं मन्यते–तत्र बहिर-न्तर्वा भेदाऽभेदयोः तन्नियमेऽपि **नैकान्तैनैकत्वं** तथा नीलतद्धियोरपि । यदि च उपलम्भाऽ-विशेषेऽपि स्वोपलम्भे तत्त्वग्रहैकान्तः अर्थोपलम्भे मिथ्याग्रहैकान्त इत्य**नेकान्ते कथञ्चित्** जाग्र-द्दशायां स्वप्नदशायां (?) शेषं पूर्ववत् । अथवा, [स्व]रूपे विश्रान्तं ज्ञानम् अर्थे[पी]त्य**नेकान्ते** बहिरर्थतत्त्वं **कथञ्चित्** प्रत्यक्षपरोक्षात्मकं यथा प्रमाणं [३३९ख] व्यवस्थितमेव । अनेन तन्निय-मस्य भागासिद्धतां दर्शयति–चेतनानीलतारूपेण तद्भावेऽपि क्षणक्षयाद्यात्मना अभावात् । ।

ननु बुद्धेर्मिथ्याकारो न स्वाकारः किन्तु पराकारः, ततोऽयमदोष इति चेत्; अत्राह–**स्वप्रत्यक्ष** इत्यादि ।

**[स्वप्रत्यक्षपरोक्षात्मज्ञानसिद्धौ न सिध्यति ।**
**अर्थः प्रत्यक्षपरोक्षात्मा एकः कालादिभेदतः ॥ २९॥**

---

(१) भेदाभेदयोः । (२) द्विचन्द्रनिर्भासयोः । (३) भ्रान्तम् । (४) निरंशसंवेदनानुभवसद्भावे-ऽपि । (५) अनुभवस्यापि । (६) सहोपलम्भनियमेऽपि ।

**स्वभावनानात्वं यदि भावस्य भेदकं न भवेत् किं परव्यावृत्तेः कार्यकारणसन्तान-कर्मफलसम्बन्धप्रभृतितदर्थस्मरणाद्यनेकछिद्राशक्यपिधानानर्थनिबन्धनया निरन्वयकल्पनया ?]**

अयमभिप्रायः–परस्य सुखादिनीलादिशरीरव्यतिरिच्यमानप्रतिभासं स्वसंवेदनम् । न च [1]तस्य नानैकत्वविरुद्धधर्माध्यासिना तादात्म्यम् । अतो भेदेऽपि तादात्म्यावभासो भ्रान्त्या, अन्यथा ५ अनेकान्त इत्युक्तम इति **[स्व]प्रत्यक्षं** च चेतनादिरूपेण **परोक्षश्च** सुखादिविरोधवदाकार-विवेकः तौ च तावात्मानौ च **स्वौ प्रत्यक्षपरोक्षात्मानौ** यस्य तत्त[थो]क्तं तच्च **तज्ज्ञानं** च तस्य **सिद्धौ** अङ्गीक्रियमाणायां **न सिध्यति** किं सिध्यत्येव । किमित्य व (किमिव) किमित्याह–**एकोऽर्थः** । किंभूतः ? **प्रत्यक्षपरोक्षात्मा** । केन ? इत्याह–**कालादि-भेदेन:** कालक्षेत्रादिभेदेन । एवं मन्यते–यस्माद् विज्ञानमेकं प्रत्यक्षपरोक्षात्मकं तस्मात् प्रत्यक्ष- १० परोक्षात्मैकः सिध्यति । यस्माच्च ज्ञानतद्विवेकयोरभेदेन पक्षीकृतयोरपि [2]तन्नियमोऽविद्यमानत्वेन भागासिद्धः तस्मादर्थः सिध्यति इति ।

**स्वभावे**त्यादिना कारिकार्थमाह–प्रत्यक्षपरोक्षरूपेण यत् **स्वभावनानात्वं** ज्ञानस्य **तद्भा-वस्य** तस्यैव **भेदकं** नानात्वापादकं **यदि न भवेत् परस्मात्** सजातीयाद् विजातीयाच्च या **व्यावृत्तिर्भावस्य** तस्याः सकाशात् **किं निरन्वयकल्पनया** ? किंभूतया ? इत्याह–**कार्ये-** १५ त्यादि । **कार्यं च कारणं च सन्तानश्च** [३४० क] **कर्म च** वासनारूपं *[3]"**चेतना कर्म**" [अभिध० को० ४।१] इति वचनात्, **फलं** च देहान्तरसंचारादि, तयोः **सम्बन्धश्च** तदुत्पत्तिः, पुनः एतेषां **प्रभृति**शब्देन बहुव्रीहिः, **तदर्थः स्मरणादिः** तस्य **अनेकम्** अनन्तरोक्तं **छिद्रं** दूषणम् तस्याशक्यं **पिधानम्** उत्तरं तदेवानर्थनिर्वचो (निबन्धो) यस्यां **तया** इति ।

ननु नार्थवद् बुद्धेः स्वरूपं भ्रान्तम्, नापि स्वपररूपयोः अभ्रान्तेतरस्वभावं स्वग्राह्याकार- २० स्वभावं स्वग्राह्याकारविवेकापेक्षया दृशो (दृश्ये)तरस्वभावं वा येनाय (यं) दोषः स्यात्, अपि तु सुखादिनीलादिशरीराकारमेव [4]तन्नियमात् इति चेत्; एतद् बुद्धज्ञान-तद्वेद्याभ्यां व्यभिचारयन्नाह–

[5]**तन्नियमेऽपि तयोर्भेदे अन्यथा अनेकान्तं साधयन् (साधनम्) प्रत्यक्षे-**त्यादि ।

> **[तन्नियमेऽपि तयोर्भेदेऽन्यथाऽनेकान्तसाधनम् ।** २५
> **प्रत्यक्षो मध्यरूपार्वाग्भागार्थस्तदात्मनः ॥३०॥**
> **परोक्षता पूर्वरूपापरभागादिभिर्बुद्धबुद्धिवत् ।[6]।**

**न केवलं सन्तानक्षणानां तन्नियमादेकसन्तानत्वमपि तु सन्तानान्तराणाम् । बुद्ध-श्चेत् सन्तानिनां सन्तानान्तराणां च बोद्धा, तदेकोपलम्भात् सन्ततिर्न भवेत्तदेकतापत्तेः । संवित्तेः पुनरनन्यवेद्यनियमे कथं मिथ्याविकल्पमन्तरेण स्वपरसन्तानविकल्पमात्रोपदेशः ?** ३०

(१) स्वसंवेदनस्य । (२) सहोपलम्भनियमः । (३) "चेतना मानसं कर्म"–अभिध० । (४) सहोपलम्भनियमात् । (५) सहोपलम्भनियमेऽपि । (६) बुद्धचित्त-तद्ग्राह्यसकलपदार्थयोः ।

**तन्मिथ्याविकल्पानामनेकान्तात्मकत्वम्। पूर्वापरकोट्योरदृश्यात्मना कथमुपलभ्यमध्यस्वरूपं न वर्तेत। दृश्य'' इत्यलं प्रसङ्गेन। तत्र बहिरन्तर्वा मिथ्यैकान्तैः तत्त्वं प्रतिपत्तुमर्हति। प्रत्यक्षेणापि-]**

नन्वेतत् पूर्वमुक्तम् अस्माभिः न शास्त्रकृता इति। **प्रत्यक्षः मध्यरूपो** मध्यस्वभावोऽर्वाग्**भागो** यस्य स तथोक्तः सचा [सा]**वर्थश्च** तस्मात्मनः (**तस्य आत्मनः**) स्वरूपस्य **परीक्षता**। तत्परीक्षता कः? इत्यत्राह-**पूर्व** इत्यादि। अत्र **आदिशब्देन** रसादिपरिग्रहः। दृष्टान्तमाह-**बुद्धबुद्धिवत्** इति सुगतबुद्धेरिव तद्वत् इति। एतच्च निदर्शनम् [1]अनेकान्तापेक्षया न दृश्येतररूपापेक्षया।

कारिकां विवृण्वन्नाह-**न केवलम्** इत्यादि। अस्यायमर्थः-यदा सुगत आत्मसन्तान-
१० सन्तानान्तरातीतानागतक्षणान् अन्यसन्तानक्षणांश्च पश्यति वा, न वा? प्रथमपक्षे **न केवलं सन्तानक्षणानां** सहोपलम्भनियमात् येन ज्ञानेन ते उपलभ्यन्ते तेन सह **तन्नियमाद् एकसन्तानत्वं एकोऽभिन्नः कथञ्चिदन्योऽन्यसन्तानः** [2]सन्तानं येषां [तेषां] भावः तत्त्वम्, **अपितु सन्तानान्तराणाम्** एकसन्तानत्वं सुगतज्ञानेन सह 'स्यात्' इत्यध्याहारः [३४०ख] **बुद्धश्चेद् यदि बोद्धा सन्तानिनां सन्तानान्तराणां च**। तथा च तद्व[द]न्यत्रापि दृश्येतररूप-
१५ तया। अथ यथादेशकालं (लं) तेषामसौ बोद्धा; अनैकान्तिको हेतुः इति भावः। अथ एतद्दोषद्वयभयाद् एकान्तेन न सहैकत्वमिष्यते तेषाम्; तत्राह-**तदेक** इत्यादि। **तस्य** बुद्धस्य विवक्षितं **यदेकम्** अतनमज्ञानं (मानसज्ञानं) तेन **उपलम्भात्** कारणात् सन्तानिनां सन्तानान्तराणां च **सन्ततिर्न भवेत्**। कुतः? इत्यत्राह-**तदेकतापत्तेः** तेन उपलम्भकेन ते (लम्भेन ए) कतापत्तेः तेषामिति। अथ [स्व]रूपमात्रपर्यवसानात् न बुद्धस्तेषां[3] बोद्धा; तत्राह-
२० **पुनरि**त्यादि। **पुनः** अतो दोषात् पश्चात् **संवित्तेर्ज्ञानस्य** 'बुद्धस्य' इति विभक्तिपरिणामेन सम्बन्धः। **अनन्यवेद्यनियमे** अङ्गीक्रियमाणे। किम्? इत्याह-**स्वपर** इत्यादि। **स्वश्च परश्च** तावेव **सन्तानौ** तयो**र्विकल्पः** क्षणक्षयादिभेदः स एव **तन्मात्र**शब्देन बहिरर्थाभावमाह, **तस्योपदेशः कथं** न कथञ्चित् बुद्धस्य। यो यन्न पश्यति न स तदविपरीतम् उपदिशति परेभ्यः यथा रथ्यापुरुषः शास्त्रार्थम्, न पश्यति च बुद्धः तद्विकल्पमात्रमिति कारणानुपलब्धिः। तन्न
२५ युक्तम्-*"**अत्र भगवानेव धर्मादौ प्रमाणभूतत्वेन साध्यते**" [प्र० वार्तिकाल० पृ० १] [4]इति भावः।

स्यान्मतम्- *"**स्वरूपस्य स्वतो गतिः**" [प्र०वा० १।६] इति वचनात् स्वरूपमात्र-पर्य (पमात्रपर्य)वसितेषु ज्ञानेषु न बुद्धेतरप्रति(वि)भागो [5]भावतोऽस्ति। [6]तन्मात्रोपदेशः पुनः

(१) बुद्धज्ञानं हि सकलार्थैः समम् उपलभ्यते न च तैः सह तस्य एकत्वमिति सहोपलम्भोऽनेकान्तः व्यभिचारीत्यर्थः। (२) 'सन्तानं' इति पुनरुक्तं भाति। (३) सन्तानानां सन्तानान्तराणां च। (४) "अत्र भगवतो हेतुफलसम्पत्त्या प्रमाणभूतत्वेन स्तोत्राभिधानं शास्त्रादौ शास्त्रार्थत्वात्, भगवानेव हि प्रमाणभूतोऽस्मिन् प्रसाध्यते।"-प्र० वार्तिकाल०। (५) परमार्थतः। (६) स्वपरसन्तानविकल्पमात्रोपदेशः।

ततोऽन्यस्यं विचार्यमाणस्याऽयोगात् इति; तत्राह-**मिथ्येत्यादि**। काकाक्षगोलकन्यायेन **कथं** शब्द उभयत(त्र) संबध्यते [३४१क] ततो बुद्धस्येतरस्य वा मिथ्याविकल्पमन्तरेण तदुपदेशः कथं संभवति निर्विकल्पेन तद्विचारायोगात् इति भावः। अस्त्येव तद्विकल्प इति चेत्; अत्राह-**तन्मिथ्येत्यादि**। तयोः बुद्धेतरयोः **मिथ्याविकल्पानाम्**।

ननु च 'विकल्पानाम्' इत्युक्तेऽपि मिथ्यात्वं लभ्यते तद्रूपत्वात्तेषाम्[2] तन्मिथ्येतिवचन- ५ मनर्थकमिति चेत्; उच्यते-सुगतस्य केचिदलिङ्गजं विकल्पज्ञानमिच्छन्ति। तद्यदि यथार्थम्; प्रमाणान्तरं स्यात् प्रत्यक्षेऽनन्तर्भावात्। अन्तर्भावे वा तद् (तद्वत्) तस्यापि सविकल्पं प्रत्यक्षं स्यात् गृहीतग्रहणात्। तत्[3] प्रमाणं न भवति कथं तदन्तरमिति चेत्; तस्य निर्विकल्पवत् सविकल्पस्यापि सन्तानवृत्तिसंभवे तद्गृहीतग्रहणात् अविकल्पमप्रमाणमस्तु तन्नग (तन्न ग)तार्थम् इत्यस्य प्रतिपादकमिति। यदि वा, परापेक्षयैव तथाभिधानाददोष इति। **अनेकान्तात्मकत्वं** १० भ्रान्तेतरात्मकत्वम्, भवत्वेवं को दोष इति चेत्? अत्राह-**कथम्** इत्यादि। **उपलभ्यं मध्यस्वरूपं** यस्य वस्तुनः तत् **कथं न वर्त्तेत?** वर्त्ततेव। क्व? **पूर्वापरकोट्योः**। केन? **अदृश्यात्मना**।

एवं क्रमाऽनेकान्तं प्रतिपाद्य स्कन्धेऽक्रमानेकान्तं कथयन्नाह-**'दृश्य'** इत्यादि। **'कथं न'** इति सम्बन्धः। **इति एवमलं प्रसङ्गेन**। प्रकृतं निगमयन्नाह-[**तन्ने**]त्यादि। यत एवं **तत्तस्मात्** १५ **न बहिरन्तर्वा तत्त्वं प्रतिपत्तुमर्हति**। कैः? इत्याह-**मिथ्यैकान्तैः** दर्शनैः विकल्पैश्च सौगतः। यथायं तथा भवानपि[7] तत्त्वमनेकान्तं न प्रतिपत्तुमर्हति इति चेत्; अत्राह-**प्रत्यक्षेणापि** [३४१ख] इत्यादि।

ननु प्रत्यक्षं वर्त्तमानक्षणमात्रग्रहणमनर्थं (मग्नं) न पूर्वापरकोटिवीक्षणपद्ध (पटु, अ)तिप्रसङ्गात्। तथा तदर्त्रं अर्वाग्भागदर्शनं(ने) मग्नं न परभागादि वीक्षते अतो न तत्तदेकत्वं[9] २० प्रत्येति। अत एव नानुमानं तत्तकार्यवद् (तत्कार्यवत्) दृश्येतरात्मकत्वं कस्यचित् प्रतिपद्यते इति चेत्; अत्राह-**'पश्यन्'** इत्यादि।

**[पश्यन् जीवः स एवैकः सत्तामात्रं विकल्पयन्।**
**अन्यथानुपपत्त्या च तमेवाभिनिबुध्यते ॥३१॥**

***"मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम्"** [त०सू० १।१३] **इति** २५ **मत्यादीनां तादात्म्यलक्षणं सम्बन्धमाह सूत्रकारः[10]। तदन्यतमस्याप्यतादात्म्यैकान्ते अर्थप्रतिपत्तेरनुपपत्तेः सन्तानान्तरवत्।]**

**जीव** आत्मा **अभिनिबुध्यते** पूर्वापरयोः अभि समन्ताद् एकत्वं जानाति। किं वैशेषिकाद्यभ्युपगतः, न इत्याह-**स** इत्यादि। अत्रैव पूर्वं प्रसाधित इत्यर्थः। ननु ज्ञानात्मकोऽ-

(१) कपिलादेः। (२) विकल्पानां मिथ्यारूपत्वात्। (३) विकल्पज्ञानम्। (४) प्रमाणान्तरमिति। (५) सविकल्पेन गृहीतस्य ग्रहणात्। (६) बौद्धमतापेक्षयैव 'मिथ्या' इति विशेषणं प्रदत्तमिति। (७) जैनोऽपि। (८) प्रत्यक्षम्। (९) पूर्वापरैकत्वम्। (१०) उमास्वाम्याचार्यः।

सो[1] ज्ञानानां च एकान्तेन भेदात् सोऽपि भिन्न इति चेत्; अत्राह–**एक** इति। पूर्वापरस्वपर्यायसाधारणः। कया युक्त्या? इत्याह– **अन्यथानुपपत्त्या। अन्यथा** एकत्वाभावप्रकारेण या जीव इतरस्य वा (जीवस्य इतरस्य वा) उक्तविधिना **अनुपपत्तिः** तया। स[2] यदि सत्तामात्रेण अभिनिबुध्यते सर्वस्य सर्वदर्शित्वमिति चेत्; अत्राह–**पश्यन् सत्तामात्रं** चेतनेतरसाधारणं दर्शनेन विपर्यासीकुर्वन्। तथाहि–चेतनेतरत्वादिसामान्यविशेषव्यवसायः ततोऽपरसामान्य[3]दर्शनपूर्वकः, विशेषव्यवसायत्वात् दूरे स्थाणुत्वादिव्यवसायवत्। न च सत्तायाः परं सामान्यम्; यतोऽनवस्था स्यात्। अथ निकटे सामान्यग्रहणमन्तरेणापि विशेषव्यवसायः ततो व्यभिचारः; न; तत्रावग्रहादिभेदस्य सतोऽप्यनुपलक्षणात्।

नन्वेवमपि सत्तामात्रमस्तु ग्रहणात्, न विशेषाणां विपर्ययात् इति चेत्; अत्राह–**विकल्पयन्** तदेव सत्तासामान्यं [३४२क] चे[तने]तरत्वादिविशेषभिन्नम् अवग्रहादि[4]धारणापर्यन्तज्ञानेन **विकल्पयन्** व्यवस्यन् पूर्वं पश्चाच्च तथा स्मृत्वा प्रत्यभिज्ञाय चिन्तयन् **अभिनिबुध्यते** इति।

इदमपरं व्या[ख्या]नम्–उपलम्भमध्यरूपस्य पूर्वापरकोट्योः अदृश्यात्मानं दृश्यार्वाग्भागस्य परोक्षं परभागस्य [रसस्प]र्शादिकम् अभिनिबुध्यते अनुमिनोति। कया? इत्याह–'**अन्यथा**' इत्यादि। दृश्यपूर्वापरकोट्योः अदृश्यात्माभावप्रकारेण अनुपपत्त्या। चर्चितमेतत्। किं कुर्वन्? इत्याह–**पश्यन्** इत्यादि। व्याख्यातमेतत्।

कारिकां विवृण्वन्नात्मनः तत्र (सूत्र)कारेणैकवाक्यतां दर्शयति–[**मति**]रित्यादिना। '**अनर्थान्तरं**' पदं व्याचष्टे–**मत्यादीनां तादात्म्यलक्षणं** कथञ्चिदेकत्वस्वरूपं **सम्बन्धमाह** '**अनर्थान्तरम्**' इत्यनेन सूत्रकारो[5] न पर्यायपदत्वम्, प्रतीतिविरोधादिति। कुतः? इत्यत्राह–**तदन्यतम** इत्यादि। **तेषु** मत्यादिषु **अन्यतमस्यापि** न केवलं सर्वेषाम् **अतादात्म्यैकान्ते** भेदैकान्ते सति **अर्थस्य** घटादेः अनुमेयस्य वा वह्न्यादेः **प्रतिपत्तेः** अध्यक्षबुद्धेः, सर्वतो व्यापृतस्य (व्यावृत्तस्य) परमाणुमात्रस्य दर्शनाभावात्, **अनुपपत्तेः सन्तानान्तरवत्**। यथा सन्तानान्तरं परस्य अदृश्यं तथा परमाणवः सर्वस्य। तथापि दृश्यत्वकल्पने सन्तानान्तरे कः प्रद्वेषः यतः तदनुमेयत्वं तदभावं वाऽदर्शनात् कश्चिद् आचक्षीत? **प्रतिपत्तेः** अनुमानबुद्धेर्वा **अनुपपत्तेः सन्तानान्तरे** इव **तद्वद्** इति। यथैव अन्यस्य[7] धूमदर्शनाद् अपरस्य तद्दर्शिनोऽस्मरणात्, अपरतत्स्मरणात् पुरुषान्तर[स्याऽ]प्रत्यभिज्ञानात्[9], इतरस्य तर्काभावात् न सन्तानान्तरे [३४२ख] अनुमानम्, तथा प्रकृतेऽपि।

यदि पुनः कुतश्चित् प्रत्यासत्तेः एकसन्ताने, नान्यत्र, पूर्वपूर्वदर्शनादेः उत्तरस्मरणादिवृत्तेः अयमदोषः कल्प्यते; तन्न; यतः तत्रा (तत्र) हेतुफलभावनियमेऽपि उपादानेतरकारणवि[भागा]भावप्रसङ्गात्। यद्धि यद्रूपतया परिणमते तत् तस्य उपादानम्। न चैतद् भेदेऽस्ति।

(१) जीवः। (२) जीवः। (३) अपरं भिन्नं सामान्यं सत्ताख्यम्। (४) अवग्रहेहावायधारणारूपेण। (५) तत्त्वार्थसूत्रकारेण। (६) परमाणूनाम्। (७) चार्वाकः। (८) पुरुषस्य। (९) प्रत्यभिज्ञानं न भवतीत्यर्थः।

नापि तद् रूपान्तरं सन्तानकारणकारणम् उपादानकारणमिति चेत् ; कोऽयं सन्तानो नाम ? हेतुफलप्रवाह इति चेत् ; न; सुगतेतरयोः [1]एकसन्तानत्वप्रसङ्गात् । सुगतश्चेद् इतरस्य दृष्टा (द्रष्टा);[2] तत्कार्यतया [एव भवितुमर्हति] । सदृशः तत्प्रवाहः सः; इत्यपि नोत्तरम् ; हेतुफलावस्थयोः[3] सुगतैकसन्तानापत्तेः । ज्ञानत्वेन सादृश्ये, न प्रकृतदोषपरिहारः[4] ।

अथ उपादानोपादेयक्षणप्रबन्ध इष्यते तच्चैतदेव बुभुत्सितम्[5]–भेदैकान्ते किमुपादानम् ५ इतरद्वा इति ? यदि पुनः एकस्मिन् सन्ताने पूर्वम् उपादानं परम् इतरत्[6] ; तर्हि सिद्धे सन्ताने सति उपादानेतरसिद्धिः, तस्याः स्वसन्तानसिद्धिः इत्यन्योऽन्यसंश्रयः । अथ यद्विकारेण यद् विक्रियते तदुपादानम् इतरद् उपादेयम् ; केयं यद्विकारेण यद्विक्रिया नाम ? शास्त्रादिना संस्कृतचित्तात् [7]तादृशचित्तोत्पत्तिः ; ततो[8] योगिज्ञाना तद्रूपं (ज्ञानं तेषु[9]) [10]तादृशं किन्न भवति येनैवम् ।

किं च, शास्त्रादिना प्रथमसंस्क्रियमाणं चित्तं पूर्वस्मात् तदसंस्कृतादेव ततो[11] जायते इति १० न युक्तम्–'यद्विकारेण' इत्यादि । तस्यापि तेन संस्कार इत्यपि नोत्तरम् ; अनवस्थाप्रसङ्गात् । ततो यद् उपादेयत्वेन परिणमते तदुपादानम् [३४३ क] ।

ननु सुप्तस्य स्वप्नदर्शिनो जाग्रद्विज्ञानं प्रबोधरूपेणापरिणममाण(न)मपि तदुपादानम्, अतो व्यभिचारः ; उक्तमत्र परिच्छेदे । कुतश्च [12]तत्तस्योपादानम् ? तद्रूपप्रबोधदर्शनात् ; सुगतज्ञानमपि तद्रूपं त्वया इष्यत एव तथा च तज्ज्ञानमुपादानम् बुद्धज्ञानमुपादेयम् इति प्रसक्तम् । देश- १५ भेदान्नेति चेत् ; [13]अन्यत्र सुप्तस्य अन्यत्र प्रबोधे न स्यात् ।

एतेन [14]स्वप्रान्तिकशरीरचित्तं तदुपादेयं निरस्तम् । अथ सुप्तस्य शरीरवत् चित्तस्याप्यनुच्यत्सन्तानतया देशान्तरगमनमिष्यते; कालान्तरगमनपरी(नमपी)ष्यताम् अविशेषात् । तस्मादुक्तमेव उपादानं युक्तमिति सूक्तम्–तदन्येत्यादि ।

एवं तावत् '**असिद्धः सि द्ध से न स्य**' इत्यादिना मिथ्यैकान्ते हेत्वभावं प्रदर्श्य २० अधुना एकलक्षणविरहे सर्वत्र तदभावं दर्शयन्नाह–**एकलक्षणे**त्यादि ।

**[एकलक्षणसामर्थ्याद्धेत्वाभासा निवर्तिताः ।**
**विरुद्धानैकान्तिकासिद्धाज्ञाताकिञ्चित्करादयः[15] ॥३२॥**

---

(१) यदा सुगतः इतरजनचित्तं जानाति तदा इतरजनचित्तं सुगतचित्तस्य कारणं भवति, अतस्तयोः एकसन्तानतापत्तिः । (२) सन्तानः । (३) घटपूर्वोत्तरक्षणयोः ज्ञायकेन सुगतज्ञानेन सह एकसन्तानत्वापत्तिः । (४) इतरजनज्ञान-तज्ज्ञायकसुगतज्ञानयोरेकसन्तानत्वापत्तिः ज्ञानत्वेन सादृश्यात् । (५) ज्ञातुमभिलषितम् । (६) उपादेयम् । (७) संस्कृतचित्तोत्पत्तिः। (८) संस्कृतचित्तात् । (९) योगिषु । (१०) संस्कृतमेव । (११)चित्तात् ।(१२)जाग्रद्विज्ञानं प्रबोधस्योपादानमिति ।(१३) गच्छच्छकटे देशान्तरे सुप्तस्य अन्यत्र च प्रबोधे ।(१४) "यथा स्वप्रान्तिकः कायः श्रासलङ्घनधावनैः ।"–प्र०वार्तिकाल० २।३७ । (१५) तुलना– "असिद्धस्त्वप्रतीतो यो योऽन्यथैवोपपद्यते । विरुद्धो योऽन्यथाप्यत्र युक्तोऽनैकान्तिकः स तु ॥"–न्यायाव० श्लो० २३। "अन्यथासंभवाभावभेदात् स बहुधा स्मृतः। विरुद्धासिद्धसन्दिग्धैरकिञ्चित्करविस्तरैः ॥" –न्यायवि०श्लो० ३६५–३६६ । "स विरुद्धोऽन्यथाभावाद् असिद्धः सर्वथाऽत्ययात् । व्यभिचारी विपक्षेऽपि सिद्धेऽकिञ्चित्करीऽखिलः । अज्ञातः संशयासिद्धव्यतिरेकानन्वयादितः ॥"–प्रमाणसं० श्लो० ४८-४९।

अन्यथानुपपत्तिनिर्णीतो हेतुः गमक इति हेत्वाभासा निराकृताः । कथम् ? अन्यथैवोपपत्त्या विरुद्धः । तथा च अन्यथा चोपपत्त्या अनैकान्तिकः । अन्यथा च संभूष्णुरसिद्धः । तदज्ञाने पुनरज्ञानोऽकिञ्चित्करः । तथैवोदाहरणम् । न ह्येकलक्षणाभावे त्रिलक्षणं गमकम् ? अनुपलब्धिः... । कुत एतत् ? उपलब्धिस्तावच्चित्रा निश्चेतुमशक्यैव । कथम् ?]

५ [एकलक्षणसामर्थ्यात्] अन्यथानुपपन्नत्वमाहात्म्यात् **हेत्वाभासाः** हेतुप्रतिरूपकाः **निर्वर्त्तिताः** हेतुसामर्थ्येन पृथक्कृताः । के ते ? इत्याह–**विरुद्धे**त्यादि । **विरुद्धादीनां** द्वन्द्वं कृत्वा **आदिशब्देन** बहुव्रीहिः कर्त्तव्यः । तत्र **आदिशब्देन** सन्दि[ग्ध]परिग्रहः ।

कारिकां विवृण्वन्नाह–**अन्यथा** इत्यादि । [**अन्यथा**] साध्याभावे नियमेन या **अनुपपत्तिः** तया **निर्णीतः** पदार्थो **हेतुः गमकः** इत्येवं सामर्थ्याद् **हेत्वाभासा** विरुद्धादयो **निराकृता** [हे]-

१० तुत्वेन । पर[:] पृच्छति '**कथम्**' इति ? सूरिराह–**अन्यथैव** साध्याभावप्रकारेणैव साध्यान्तर एव **उपपत्त्या विरुद्धः** । **तथा च** साध्यभावप्रकारेण च **अन्यथा च** साध्याभावप्रकारेण च **उपपत्त्या अनैकान्तिको** व्यभिचारी । तथा, **अन्यथा च संभूष्णुः असिद्धः** । **तदज्ञाने** तस्य हेतोः सतोऽपि संशयादिनाऽज्ञाने अनिर्णये [३४३ख] **पुनरज्ञातः** '**असिद्धः**' इत्यनुवर्त्तते । यदि वा, **तस्य** हेतुलक्षणस्य पक्षे अन्यत्र वाऽज्ञाने **पुनरज्ञातोऽकिञ्चित्करः** । अनेन '**संदिग्ध**'

१५ इत्यादि विवृतम् । अत्रोदाहरणं किम् ? इत्यत्राह–**तथैव** यथैव '**असिद्धः सिद्धसेनस्य**' इत्यादौ उक्त**मुदाहरणं** प्रतिपत्तव्यम् ।

ननु नैकलक्षणविरहाद् विरुद्धादिनिराकृतः किन्तु पक्षधर्मत्वादिविरहादिति चेत् ; अत्राह–**न ह्येकलक्षणाभावे त्रिलक्षणं** त्रीणि पक्षधर्मत्वादीनि लक्षणानि[1] यस्य तत्तथोक्तं वस्तु **गमकं** लिङ्गम् अपि तु तत् तद्भाव एव । एवं मन्यते–यदि त्रिलक्षणं व्याप्तं गमकत्वं (कं) तर्हि

२० स्यादेतत् 'तदभावे न स्यात्' इति, यावतैव (नैक)लक्षणव्याप्तं तदभावे एव न भवेत् इति [किं त्रिलक्षणेन ?] किं तत् त्रिलक्षणं लिङ्गमिति चेत् ; अत्राह–**अनुपलब्धिः** इत्यादि । **कुत एतत्** ? 'तदभावे तद्गमकम्' इत्येतत् कुत इति परः । सिद्धान्तवादी आह–'**उपलब्धि**' इत्यादि । **तावच्छब्दः** क्रमवाची, **चित्रा** नानारूपा **निश्चेतुमशक्यैव** । न चानिश्चिता गमिका इति मन्यते । परः पृच्छति **कथमिति** केन प्रकारेण निश्चेतुमशक्या इति ?

२५ ततोत्तरमाह–**न दृश्यलक्षणप्राप्त** इत्यादि ।

**[न दृश्यलक्षणप्राप्ते दृश्यादृश्यार्थलक्षणे ।**
**यतः परस्पराभावस्वस्वभावव्यवस्थितिः ॥३३॥**

**तत्र उपलब्धिलक्षणप्राप्तिः उपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च । नहि उपलम्भप्रत्ययान्तरसाकल्यं तद्विरहो वा स्वयमुपलब्धिलक्षणप्राप्तं यतः तदन्योऽन्याभाव-**
३० **रूपेण निर्णयः स्यात् ।]**

(१) त्रैरूप्यं पुनः लिङ्गस्यानुमेये सत्त्वमेव ॥ ५ ॥ सपक्षे एव सत्त्वम् ॥ ६ ॥ असपक्षे चासत्त्वमेव निश्चितम् ॥ ७ ॥"–न्यायबि० परि० २।

**दृश्यस्य लक्षणं** वक्ष्यमाणं **प्राप्तं** यकाभ्यां ते तथोक्ते **न** भवतः । क॰ ? इत्यत्राह–**दृश्येत्यादि** । **दृश्यादृश्यार्थयोर्लक्षणे यतो** दृश्यलक्षणप्राप्तत्वात् । किम् ? इत्याह–**परस्पर** इत्यादि । दृश्यार्थलक्षणे [अ]दृश्यार्थलक्षणस्य, तत्र वा दृश्यान्यथार्थे (दृश्यार्थ) लक्षणस्याभावः **परस्पर(रा)भावः** तेन **स्वस्वभावव्यवस्थितिः** तल्लक्षणयोर्व्यवस्थिति-[३४४क] हेतुत्वात् । निर्णयो व्यवस्थितिशब्देन उच्यते । **'परस्पराभावस्वभावव्यवस्थितः'** इति पाठान्तरम् । स्वेन रूपेण व्यवस्थितौ निर्णीतः दृश्योऽत्र लक्षणस्य इतरत्र तस्य च प्रकृत एव अभावो न सङ्करव्यतिकरो इत्यर्थः । अत्रायमभिप्रायः–यदा दृश्यार्थलक्षण-मवसितं भवति तदा लक्षणप्राप्तिः क्वचिदवगम्यते, अनुपलम्भाच्च तया स्या (तस्या)भावः, न चैवम् इति ।

अत्राह परः–दृश्यार्थलक्षणं प्रत्ययान्तरसाकल्ये सति स्वविषयविज्ञानोत्पादनयोग्यत्वम् । तच्च टादे (घटादे)स्वस्तुत्वभयान्नार्थान्तरम् इति तस्यावभासे अवभासते *"**एकस्यार्थस्वभावस्य**" [प्र॰ वा॰ ३।४२] इत्यादि वचनात् । कथञ्च दृश्यलक्षणं प्रत्ययान्तराणां घटादिसह-चारिणां साकल्यं नमस्कारा (मनस्कारा)दीनां न तेभ्यो व्यतिरिच्यत इति दृश्यलक्षणपरिहारेण प्राप्तत्वे तादृशमेव । अदृश्यार्थलक्षणं पुनः तद्विपर्ययः । सोऽपि पर्युदासवृत्त्या उक्तभावस्वभाव इति न युक्तम् **'न दृश्यलक्षणप्राप्ते'** इत्यादि । भवतु वा दृश्यार्थलक्षणं ऽ न दृश्यार्थलक्षण-प्राप्तमंत्येभः ऽ तथापि तस्य इतरत्र तादात्म्यनिषेधो न विरुध्यते इति ।

अत्र प्रतिविधीयते–स्वभावविशेषः प्रत्ययान्तरसाकल्यं च विषयस्य प्रत्ययान्तराणां च रूपादिज्ञानकार्यजननयोग्यता । सा च न दृश्यलक्षणप्राप्ता, कारणशक्तेः अस्मादृशां नित्यं कार्यानुमेयत्वात् । अन्यथा कारणदर्शिनो न कार्ये सन्देहः इति न परलोकानुमानम् अर्थवत् । यद्वक्ष्यति *"**मन्त्रौषधादिशक्तेश्च दृश्यलक्षणानुपपत्तेः**" [सिद्धिवि॰ ६।३५] इति । न च तावन्मात्रापेक्षं तद्वचनम्,[३४४ख] अन्यत्रापि तदविशेषात् । दृश्यसादृश्यरूपाविरोधश्चोक्तः । अदृश्यार्थलक्षणमपि तद्योग्यताविरहः; सोऽपि न दृश्यलक्षणप्राप्तः । न दृश्यस्य धर्मादेरभावः तत्प्राप्तो युक्तः । तदेवम् उभयो[र]दृश्यत्वेन परस्पराभावस्वस्वभावपरस्थिति (व्यवस्थितिः) । न खलु परमाणुपिशाचयोः तद्व्यवस्थितिः । अत एव न तादात्म्यनिषेधोऽपि; दृश्येऽन्यस्याभ्यु-पगमात् । अथ विरोधात् दृश्यार्थलक्षणे अदृश्यार्थलक्षणाभावः; तदपि न; दृश्यात्मनामे[व] परेण विरोधोपगमात् । *"**दृश्यात्मनामेव तेषां तद्विरुद्धानाम्**" इत्यादि वचनात् । यदि पुनः कार्यानुमेयायां योग्यतायाम् इतराभावसिद्धिः प्रार्थ्यते, तदपि प्रार्थनमात्रमिति प्रतिपादयिष्यते **'अदृश्यस्य'** इत्यादिना ।

(१) अदृश्यार्थलक्षणे । (२) प्रतियोगिव्यतिरिक्त-उपलम्भकारणान्तराणां समुदाये सति । (३) घटस्य । (४) 'प्रत्यक्षस्य सतः स्वयम् । कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥' इति शेषः । (५) मनस्कारः चेतसः आभोगः–उपयोग इति यावत् । (६) ऽ एतदन्तर्गतः पाठो द्विर्लिखितः । (७) "तत्र उपलब्धिलक्षणप्राप्तिः उपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च ।"–न्यायबि॰ २।१४ । (८) योग्यता शक्तिरूपा । (९) परलोकगामिनो जीवस्य प्रत्यक्षत्वे तद्योग्यताया अपि साक्षात्करणं यतो जातम् । (१०) दृश्यलक्षणप्राप्तः ।

कारिकां विवृण्वन्नाह–'**तत्रोपलब्धि**' इत्यादि। तत्र पक्षद्वयम्–उपलब्धिलक्षणप्राप्तिः उपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च दर्शनविषयता वा। प्रथमपक्षे **तत्र** *"**उपलब्धिलक्षणप्राप्तानुपलब्धिः अभावहेतुः**" [हेतुबि० पृ० ६४] इति ग्रन्थे **उपलब्धिलक्षणप्राप्तिः** उपलब्धेः बुद्धेः लक्षणं कारस्मिन् (कस्मिन्) सति सा लक्ष्यते तत्प्राप्तिः **उपलम्भस्य प्रत्ययान्तराणि** घटप्रत्ययापेक्षया इन्द्रियादीनि तेषां **साकल्यं** तज्जननयोग्यदशाप्राप्तिः **स्वभावविशेषश्च** घटस्य स्वभावविशेषः तत्र योग्यता। च इति समुच्चये। ततः किम्? इत्याह–**नहि उपलम्भ** इत्यादि। [न हि] नैव **उपलम्भप्रत्ययान्तराणां साकल्यम्**, उपलक्षणमेतत् [तेन] स्वभावविशेषोऽपि गृह्यते। कस्य वा (?) **तद्विरहो वा स्वयमुपलब्धेः** [३४५क] **लक्षणप्राप्तं यतः** तत्प्राप्तत्वात् **तयोः** साकल्यवैकल्ययोः **अन्योन्याभावरूपेण निर्णयः स्यात्**। **यत** इति वा आक्षेपे। नैव स्यात्।

ततः किम्? इत्यत्राह–**कार्य**त्यादि।

**[कार्यस्वभावयोऽनैवं व्यतिरेको न सिध्यति।**
**त्रिकालविषयं [यस्मादविनाभावः परस्परम्] ॥३४॥**

**उपलब्धि···तदैकान्तिकं न कस्यचित् स्यात्। अतीतस्य वर्तमानस्य प्रतिपत्तृप्रत्यक्षस्य निवृत्तिर्यदि पर्युदासात्मिका; नावृक्षः शिंशपा भविष्यति धूमोऽनग्निजन्मा वेत्यजानन् कथं व्याप्तिज्ञः? पुनस्तत्रानुमानं कुर्यात्? तन्नायमेकान्तः–उपलब्धिलक्षणप्राप्तस्यानुपलब्धिरभावसाधनीति।]**

**च** शब्दात् अनुपलब्धेश्च **व्यतिरेको न सिध्यति** साध्याभावे साधनाभावो न सिध्यति। दृश्यस्या (दृश्यादृश्या)र्थलक्षणयोः दृश्यलक्षणप्राप्तत्वाभावे दृश्यार्थलक्षणस्य इतरलक्षणविधुरस्य अनिर्णयात् न दृश्यार्थलक्षणं कारणे कार्ये भावे स्वभावे वा सिध्यति। तथा च कारण-भावयोः कश्चिन्निवृत्त्यसिद्धेः कुतः तन्निवृत्तिपूर्विका कार्यस्वभावनिवृत्तिः इति मन्यते। मा भूद् व्यतिरेकसिद्धिः, अन्वयमात्रेण कार्यादेर्गमकत्वमिति चेत्; अत्राह–**त्रिकालविषयम्** इत्यादि। [ता] त्पर्यमिदमत्र–व्यतिरेकासिद्धावन्वयोऽपि न सिध्यति, परेण परस्परम् अविनाभावोपगमादनयोः[3]। तथा च तन्निबन्धनतादात्म्यादि प्रतिबन्धोऽपि न सिध्यति। केवलम् अस्य साध्यसाधनयोरनवयवेद (वेन) दर्शनं प्रतिबन्धसाधकम्[5], तच्च नास्तीति।

कारिकां विवृणोति **उपलब्धि** इत्यादिना। सुगमम्। ततः किम्? इत्याह–**ततः** तस्माद् उक्तन्यायाद् **एकान्तिकम्** अव्यभिचारित्वं कार्यादीनां मध्ये **न कस्यचिद्** हेतोः **स्यात्**। एवं परस्य उपलब्धिलक्षणप्राप्त्यभावं तस्मिंश्च सति दूषणं यत् तदपि प्रतिपाद्य, इदानीम् अनुपलब्धिव्यतिरेकप्रसाधिकां दूषयितुं पृच्छति–**निवृत्तिः पर्युदासात्मि [का] [३४५ख] यदि**। कस्य निवृत्तिः? इत्याह–**प्रतितत्व (प्रतिपत्तृ)प्रत्यक्षस्य** यो वृक्षस्याभावे शिंशपात्वस्य वह्नेरभावे धूम-

(१) अदृश्यार्थलक्षणरहितस्य। (२) अत्र ग्रन्थस्त्रुटितो भाति। (३) अन्वयव्यतिरेकयोः। (४) साकल्येन। (५) अविनाभावसाधकम्।

त्वस्य अभावं प्रतिपद्यते तत्प्रत्यक्षस्य न पुरुषविशेषप्रत्यक्षस्य । किंभूतस्य ? इत्याह–**अतीतस्य वर्त्तमानस्य** । चशब्दोऽत्र द्रष्टव्यः समुच्चयार्थः । अन्यस्य निवृत्तावपि भावनिवृत्त्यसिद्धेः इति भावः । अत्र दूषणमाह–**नावृक्ष** इत्यादि । **शिंशपा न भविष्यति** इतेवमजानं (इति एवम् अजानन्) **अवृक्षो** वृक्षो यो न तथा **धूमो न भविष्यती**त्येवमजानन् । किंभूतः ? **अनग्निजन्मा** [न] विद्यते अग्नेर्जन्म [य]स्येति । **कथं व्याप्तिज्ञे (व्याप्तिज्ञो)** न कथञ्चिन् सौगतः, व्याप्तिज्ञत्वस्य साकल्येन अन्वयव्यतिरेकज्ञाता(ज्ञता)रूपत्वात् । **पुनः** पश्चात् **तत्र** वृक्षे अग्नौ वा **अनुमानं कुर्यात्** कथमति (**'कथम्'** इति) सम्बन्धः । तदज्ञस्य तत्करण(णा)योगात् । उपसंहारमाह–**तन्नायमेकान्त** इत्यादि । **तत्** तस्मात् **नायमेकान्तो** निर्णयः । कस्य ? **उपलब्धिलक्षणप्राप्तस्य** । उपलक्षणमेतत् , तेन तद्विपरीतस्य वा **अनुपलब्धेः (ब्धिः) अभावसाधनीति** नायमेकान्तः । कः ? इत्याह–**उपलब्धिलक्षणप्राप्तस्य** । एवकारोऽत्र द्रष्टव्यः । **अनुपलब्धिः** निषेध्याकारविविक्तभावान्तर-तज्ञान(तज्ज्ञान)रूपा **[अ]भावसाधनीति** । भाविनोऽदृश्यस्य कालादेः, अदृश्येन शिंशपात्वादिना वृक्षत्वाद्यभावेन प्रसाधनात् इति भावः

नन्वेतत् हे तु बि न्दौ[4] चोदितं प्रहृत (परिहृतम्) न देशान्तरादौ कारणादेरभावेन कार्याद्यभावः साध्यते किन्तु तत्र[5] तदभाव[३४६]स्याऽनिर्णयात् , केवलं 'वृक्षाभवश्चेत् (वृक्षाभावश्चेत्) न शिंशपया भवितव्यम् , [6]निःस्वभावतापत्तेः, अग्नेरभावे न धूमेन निर्हेतुकत्वं स्यादिति प्रसङ्गसाधनमुच्यते' इति चेत् ; उक्तमत्र अन्वयव्यतिरेकाऽनिर्णये प्रतिबन्धाऽनिर्णयान्नेत्रमिति । कथं च शिंशपा वृक्षस्वभावा येन [9]तदभावे न स्यात् ? तथा दर्शनात् ; यदि सर्वत्र[10][11]; प्रतिपत्तुः सर्वज्ञत्वम् । क्वचिच्चेत्[12]; अनित्यस्य प्रयत्नानन्तरीयकस्वभावता[13] घटादौ तथा दर्शनात् । अथ वनकुसुमादौ [14]अन्यथापि दर्शनात् [15]तस्य न तत्स्वभावता; 'शिंशपा वृक्षाभावे न भविष्यति' इति तथैव न प्रमाणम्[16] । एतेन धूमो व्याख्यातः । तदभावे [अ]भावात् [17]तस्याः तत्स्वभावता[18]; अन्योऽन्यसंश्रयः–सिद्धे तत्स्वभावे [[19]तदभा] वात्तस्या[20] अभावः सिध्यति, ततः तत्स्वभावता इति न किञ्चिदेतत् ।

---

(१) अज्ञातव्याप्तिकस्य । (२) अनुमानकरणाभावात् । (३) अनुपलब्धिलक्षणप्राप्तस्य । (४) "यदि कारणव्यापकौ तदन्यभावसिद्ध्या अनुपलब्ध्या सिद्धसद्व्यवहारौ अन्यस्याभावमभावव्यवहारं च साधयतः, सा च तयोरुपलब्धिलक्षणप्राप्तावेवासद्व्यवहारस्य साधिकेति कथं तयोः कारणव्यापकानुपलब्ध्योः परोक्षेऽर्थे प्रयोगः ? नैव प्रयोगः प्रमाणतया लिङ्गस्यानिश्चयात् । केवलं कारणव्यापकयोर्हि सिद्धसम्बन्धयोर्येष्वभावः परस्याप्यवश्यं नियमेनाभाव इत्येतस्य दर्शनार्थमेते क्वचित् प्रयुज्येते इति ।" (हेतुबि० पृ० ६८) "कारणव्यापकयोर्हि कार्यकारणभावप्रसाधकेन पूर्वोक्तेन प्रमाणेन व्याप्यव्यापकभावसाधकेन च तदुत्पत्तिलक्षणे तादात्म्यलक्षणे च सम्बन्धे साधिते सिद्धसम्बन्धयोर्येष्वभावः यत्र यत्र अभावः स्यात् परस्यापि कार्यस्य व्याप्यस्य वा अवश्यं नियमेनाभावः, अन्यथा अहेतुकत्वप्रसङ्गाच्च……"–हेतुबि० टी० पृ० २०३–४ । (५) देशान्तरादौ । (६) अन्यथा । (७) भवितव्यम्, अन्यथा । (८) अविनाभाव । (९) सिद्धा । (१०) वृक्षाभावे । (११) तथादर्शनम् । (१२) तथादर्शनं तर्हि । (१३) स्यात् । (१४) प्रयत्नाभावेऽपि अनित्या दृश्यन्ते इति चेत् । (१५) अनित्यस्य । (१६) वृक्षाभावेऽपि शिंशपालतायाः संभाव्यमानत्वादिति । (१७) शिंशपायाः । (१८) वृक्षस्वभावता चेत् । (१९) वृक्षाभावात् । (२०) शिंशपायाः ।

ननु भवतु दृश्यादृश्यार्थलक्षणे न दृश्यलक्षणप्राप्ते इति, तथापि चक्षुरुन्मीलनादिसन्निधौ रूपादिज्ञानकार्यदर्शनात् क्वचिद् दृश्यार्थलक्षणे (णं) विविक्तं प्रतीयते, तददर्शनाददृश्यार्थलक्षणम् इतरविविक्तमिति चेत्; अत्राह–[अ] दृश्यस्येत्यादि ।

[[1]अदृश्यस्याननुमेयस्य दृश्यस्यानुपलम्भवत् ।
कथन्नाभावोऽनुमाभावकारणासंभवे सति ॥३७॥

यथैव दर्शनाभावकारणासंभवे दृश्याभावोऽनुपलब्धेः सिध्यति तथैव अनुमानाभावकारणासंभवे अनुमेयस्य परचित्तादेः भवत्यभावसिद्धिः अन्यथा निश्चेतनपरशरीरप्रतिपत्तेरनुपपत्तेः । तदयं भूतचैतन्यवादिनमपि धाष्ट्याद्विजयते सर्वथा अनुमानोच्छेदप्रसङ्गात्[2], दृष्टार्थापलापात् क्वचिद् व्यवस्थित्यभावात् परपक्षाक्षेपमात्राग्रहात् स्वपक्षप्रतिक्षेपाच्च । कथम् ?]

**अदृश्यस्य** अनुपलभ्यरूपस्य । किंभूतस्य ? **अननुमेयस्य** अनुमानाऽपरिच्छेद्यस्य अप्रदर्शितकार्यादेः इत्यर्थः । किम् ? इत्याह–**कथं नाऽभावः** [प्रतीयते ?] प्रतीयत एव । कस्मिन् सति ? इत्याह–**अनुमाभावकारणासंभवे** इति । **अनुमाया अभावो**ऽसत्त्वं तस्य **कारणम्** अनुमात्राद्यभावः तस्यासंभवे तद[स]द्भावे **सति** ।

स्यान्मतम्–यदि सर्वदा साध्यमदृश्यं कथं तत्र किञ्चिन प्रतिबद्धं सिध्यति ? किंच, न कार्याद्यभावेन नियमेया (नियमेन कारणाद्य)भावः, अन्यथा धूमशिंशपयोरभावो(वे) अग्निवृक्षयोः [२४३ख] तथाभावः स्यात् । न चैवमिति चेत्; अत्राह–**दृश्यस्य अनुपलम्भवद्** इति । **दृश्य[स्य]** दृश्यार्थलक्षणोपेतस्य, उपलभ्यते इति उपलम्भः दृश्य इत्यर्थः, उपलभ्यतेऽनेन इति वा, न उपलम्भोऽ**नुपलम्भः** तेन इव तद्वत् इति । एतदुक्तं भवति–यथा दर्शनाभावकारणासंभवे द्रष्टा (ष्टा)दिसंभवे दर्शनाभावेन दृश्यलक्षणप्राप्तस्यापि, दृश्यलक्षणे[ऽ]भाव उपलम्भस्य, अदृश्ये[ऽ]भावो ग्राह्य तथा प्रकृतस्यापीति ।

यत्पुनरुक्तम्–'अदृश्ये कथं कस्यचित् प्रतिबन्धः' इति; त[द]युक्तम्; दृश्यलक्षणशक्तेरदृश्यत्वे कथं तत्र दर्शनप्रतिबन्ध इति चिन्त्यम् ।

यच्चान्यत्–न धूमाभावात् धूमध्वजाभाव इति; तदपि सुपरिहारम्; यतः दर्शनस्य घटादिकार्यस्याभावे कथं क्वचिद् घटाभावसिद्धिः ? शक्यं हि वक्तुम्–नावश्यं कारणानि कार्यवन्ति

(१) तुलना–"अदृश्यानुपलम्भादभावासिद्धिरित्ययुक्तं परचैतन्यनिवृत्तावारेकापत्तेः संस्कर्तॄणां पातकित्वप्रसङ्गात्, बहुलमप्रत्यक्षस्यापि रोगादेर्विनिवृत्तिनिर्णयात् ।"–अष्टश० अष्टस० पृ० ५२ । "अदृश्यपरचित्तादेरभावं लौकिका विदुः । तदाकारविकारादेरन्यथानुपपत्तितः ॥"–लघी० श्लो० १५ । (२) "यदि पुनरयं निर्बन्धः विप्रकर्षिणामभावासिद्धेस्तदा कृतकत्वधूमादेर्विनाशानलाभ्यां व्याप्तेरसिद्धेर्न कश्चिद् हेतुः । ततः शौद्धोदनिशिष्यकाणामनात्मनीनमेतत् अनुमानोच्छेदप्रसङ्गात् ।"–अष्टश० अष्टस० पृ० ५२ । लघी० स्ववृ० श्लो० १५ । प्रमाणसं० पृ० १०८ । (३) अनुमानकर्तुरभावः हेत्वाद्यभावश्च । (४) अभावः स्यादित्यर्थः । (५) उपलम्भः । (६) द्रष्टुः प्रकाशादेर्वा सद्भावे । (७) दृश्ये वस्तुनि आधारभूते । (८) प्रत्यक्षस्य ।

भवन्ति इति[1]। अप्रतिबद्धसामर्थ्यस्य[2] भवत्येव तत्सिद्धिः[3] इत्यपि नोत्तरम् ; सामर्थ्यस्य अदृश्यत्वा-[त्] प्रतिबद्धसामर्थ्येतरविभागानवधारणात् ।

किं च, प्रतिबद्धसामर्थ्यस्य समर्थ्यस्य (अर्थस्य) सतोऽपि सर्वस्य सर्वत्राऽभावाऽविनि-श्चयाद् भावशङ्कया न केनचित् प्रवर्तितव्यं निवर्तितव्यं वा कुतश्चिद् इत्येतदापतितम् ।

कारिकां व्याचष्टे **यथैव** इत्यादिना । **दृश्यवस्तुनोऽभावोऽनुपलब्धेः** दर्शनाभावात् ५ **सिध्यति यथैव** । कस्मिन् सति ? इत्याह–**दर्शन** इत्यादि । **दर्शनस्याऽभावोऽ**नुत्पत्तिः तस्य **कारणं** प्रत्ययान्तरवैकल्यं तस्या**संभवे** प्रत्ययान्तरसाकल्य इत्यर्थः । एतदुक्तं भवति–प्रत्ययान्तर-साकल्येऽपि यदा भूतलघटे (भूतले घट)दर्शनं नोत्पद्यते तदा तदभावः[5] प्रतीयते [३४७क] दृश्या भा (दृष्टान्ता)सिद्धिमुपदर्श्य दर्शनकारणसंभवमुपदर्शयता तदेवाङ्गीकृतम् इति । **तथैवा-नुमेयस्य** अनुमातुं योग्यस्य **परचित्तादेः भवत्यभावसिद्धिः** । कस्मिन् सति ? इत्याह–**अनु-** १० **मानाभावकारणासंभवे** इति । **अनुमानाभावस्य कारणम्** अनुमातृपक्षदृष्टान्तादीनामभावः, तस्या**संभवे** तेषां संभवः इत्यर्थः । कुतस्तत्संभवे तस्य भवत्यभावसिद्धिः इति चेत् ? अत्र हेतुः '**अनुपलब्धेः**' इत्यनुवर्त्तनीयः अनुमानोपलब्धेरभावात् । नन्वनुमानम् अनुमेयकार्यम् ; अतोऽ-स्याभावे कथं तदभावः इति चेत् ? अत्राह–**अन्यथा** इत्यादि । **अन्यथा** अन्येन अनुपलब्धिः (?) तत्संभवे तदभावासिद्धिप्रकारेण **निश्चेतनपरशरीरप्रतिपत्ते[रनुपपत्तेः]** '**भवत्यभावसिद्धिः** १५ **अनुमेयस्य**' इति[11] ।

स्यान्मतम्–चेतनाकार्यस्य व्यापाराख्या (व्यापाख्या)हारादेः[12] अदर्शनात् परवपुषि चेतनाविरहसिद्धिः, न च कार्याभावात् कारणाभाव(वः), प्रतिबद्धसामर्थ्यस्य [कारणान्तर-वैकल्यस्य] वा शङ्काऽनिवृत्तेः, ततो **निश्चेतनपरशरीरप्रतिपत्तेरनुपपत्तेः** इति सिद्धं साध्यत इति चेत् ; अत्राह–**तदयम्** इत्यादि । '**तद्**' इत्येतत् 'सः' इत्यस्यार्थे । सोऽयं सौगतो **भूत-** २० **चैतन्यवादिनं** यत् कालत्रयेऽपि नाभूतं तद्भूतम्, तदा सत्वे (तदेव **चैतन्यम्**) तद्वादिनं सांख्य (सांख्यं) **धार्ष्ट्यान** (**र्ष्ट्यात्**) **विजयते** । यथा असौ[13] सर्वं सर्वत्रादृष्टमभ्युपगच्छति तथायमपि परशरीरे प्रतिबद्धसामर्थ्यचैतन्यवत् स्वज्ञाने प्रतिबद्धसामर्थ्यस्य सर्वत्र सर्वस्य भावो-पगमात् । यदि वा, **भूतान्येव चैतन्यं तद्वादिनमपि** इति ग्राह्यम् । यथा, तेन[14] भूतेषु अनुद्भूत-मपि चैतन्यमिष्यते तथाऽनेन सर्वं सर्वत्र इति । कथं विजयते ? इत्याह–[**'सर्वथा'** इत्यादि । २५ **सर्वथा**] सर्वप्रकारेण ।

ननु [३४७ख] सौगतस्य अनुमानमस्ति न तस्य[15] तत्कथं धार्ष्ट्येनैव विजयते इति चेत् ? अत्राह–**अनुमानोच्छेदप्रसङ्गात्** । कुत एतत् ? इत्यत्राह–**दृष्ट** इत्यादि । पावकादेर्धूमादि

---

(१) "न च कारणान्यवश्यं कार्यवन्ति भवन्ति"-न्यायबि० टी० २।४८ । (२) कारणस्य । (३) कार्यसिद्धिः । (४) प्रतिपत्तुः । कारणस्य वा । (५) सामर्थ्यप्रतिबन्धसद्भावाशङ्कया । (६) घटाभावः । (७) अनुमातृपक्षदृष्टान्तादिसद्भावे । (८) परचित्तादेः । (९) अनुमेयस्याभावे । (१०) अनुमानाभावः । (११) सम्बन्धः । (१२) व्याहारो वचनम् । (१३) सांख्यः । (१४) चार्वाकेण । (१५) चार्वाकस्य ।

जायते वृक्षादिस्वभावः शिंशपादिरिति दृष्टोऽर्थः, सौगतेन तस्यापि[1] न केवलम् अन्यस्य ईश्वरादेः अपलापात् । यथैव हि सुतत्र (मृताभिमत)शरीरे अदृष्टकार्यस्वभावमपि चैतन्यं सदिति शङ्क्यते ※"अप्रतिबद्धसामर्थ्यस्यैव कारणस्य कार्याभावोऽभावं गमयति ।" इति वचनात्, तथैव अग्निवृक्षादेः पूर्वं पश्चाद्वा अदृष्टज्ञानकार्यधूमशिंशपादिसत्ता शङ्क्यत इति न प्रतिबन्धसिद्धिरिति मन्यते । तदपि कुतः ? इत्याह–**क्वचिद्** इत्यादि । **क्वचित्** नियतदेशादौ **व्यवस्थितेरभावाद्** अनवस्थितेर्भावस्य । तत्रैव हेत्वन्तरमाह–**पर** इत्यादि । 'जीवच्छरीरे आत्मनः घटादौ तस्माद् आत्मनिवृत्तौ प्राण(ण)निवृत्तिः' इति **परस्य** जैनादेः **पक्षः** तस्याक्षेपो निरासः । तथाहि–परात्मनः पूर्वापरस्वभावानुगतचेतनालक्षणस्य न घटादौ दृश्यतारहितस्य प्रत्यक्षेणाऽनुपलम्भादभावः, अतिप्रसङ्गात् । नापि कार्यादर्शनात् मृतशरीरवद् अतस्तत्र तदभावसिद्धिः, न तत आत्म-

१० निवृत्तिपूर्विका प्राणादिनिवृत्तिः । स एव **तन्मात्रं** तत्राभिनिवेशाद् आग्रहात् **स्वपक्षप्रतिक्षेपाद्** 'अग्निनिवृत्तौ कुड्यादेः धूमनिवृत्तिः कार्यहेतोः विपक्षाद् व्यतिरेकः' इति **स्व** आत्मीयः सौगतस्य यस्तस्य (पक्षः तस्य) **प्रतिक्षेपः** प्रतिहतिः । तद्यथा मृताभिमतशरीरे प्रतिबद्धसामर्थ्यं स्वकार्यमकुर्वदपि चैतन्यं घटादौ वा [३४८क] यथा संभाव्यते तथा कुड्यादौ अग्निः संभाव्यते इति नाग्निनिवृत्तिपूर्विका ततो धूमनिवृत्तिः इति तस्मात् । न (च) शब्दः पूर्वसमुच्चये ।

१५ आचार्यीयमभिप्रायमजानन् परः पृच्छति '**कथम्**' इति ? तं प्रति उत्तरम् **अदृश्य** इत्यादि ।

**[[11]अदृश्यानुपलम्भादेकान्तेऽयं न लक्षयेत् ।**
**पिशाचो नाहमस्मीति दृश्यादृश्यविकल्पधीः ॥३६॥**

**स्वलक्षणं परस्परविविक्तक्षणिकपरमाणुलक्षणं स्वरूपं पररूपं वा सजातीय [विजातीयव्यावृत्तं] स्वस्व [भावव्यवस्थितेः] पश्यतः कथम् अनुपलब्धिलक्षणप्राप्तनिरंशार्थ-**

२० **स्वभावासिद्धौ तद्व्यावृत्तस्य भावस्य दर्शनम् ? तदभावे साकल्येन दृश्यादृश्यस्वभावविवेकसिद्धेरतिनिद्रायितं जगत् स्यात् ।]**

न च '**न दृश्यलक्षणप्राप्ते**' इत्यादिना उक्तमेतदिति चेत् ; '**उपलब्धिलक्षणप्राप्तिः प्रत्ययान्तरसाकल्यं स्वभावविशेषश्च**' इत्यत्र तदुक्तम्, इदं तु 'दर्शनविषयता [12]तल्लक्षणप्राप्तिः' इत्यत्र उच्यते । **अयं** सौगतादिर्न **लक्षयेत्** । किम् ? इत्याह–**पिशाचो नाहमस्मि** न

२५ भवामि **इति** । उपलक्षणमेतत्, तेन 'चेतनोऽचेतनो न भवति, अचेतनश्चेतनो न भवति' इति **न च लक्षयेत्** । एवं नीलादावपि वाच्यम् । किंभूतः ? इत्याह–**दृश्याऽदृश्ययोर्न**

(१) दृष्टस्यापि । (२) तुलना–"कारणानि च नावश्यं कार्यवन्ति भवन्तीति कार्यादर्शनादप्रतिबद्धसामर्थ्यानामेवाभावः साध्यः नत्वन्येषाम् ।"–न्यायबि० टी० २।३२ । (३) अदृष्टं ज्ञानाख्यं कार्यं येषां धूमशिंशपादीनाम् । एवंभूता धूमशिंशपादयः, ये स्वविषयकं ज्ञानमपि नोत्पादयन्ति । अनुपलब्धाः इत्यर्थः । (४) अविनाभावसिद्धिः । (५) सद्भावः । (६) कार्यादर्शनात् । (७) घटादौ । (८) घटादेः । (९) भित्त्यादेः । (१०) भित्त्यादेः । (११) "इदमेवाकलङ्कदेवैरन्यत्रोक्तम्–अदृश्यानुपलम्भादेकान्ते"–न्यायवि० वि० द्वि० पृ० २६ । (१२) उपलब्धिलक्षणप्राप्तिः ।

विद्यते **विवेके** भेदे **धीर्यस्य** स तथोक्तः, गुडगोरसकारी इति यावत्। कस्मिन् सति ? इत्याह–**अदृश्यानुपलम्भारेकैकान्ते**[1] सति इति ।

कारिकां विवृण्वन्नाह–**स्वलक्षणम्** इत्यादि । **स्वलक्षणं परस्पर विक्षिक्षणि** (विविक्त-क्षणिक) **परमाणुलक्षणम् स्वरूपम्** आत्मस्वभावं **पररूपम्** अर्थस्वभावं **वा** । किंभूतम् ? इत्याह–**सजातीय** इत्यादि । कुतः ? इत्याह–**स्वस्व** इत्यादि । तत्किम् ? इत्याह–**पश्यतः** सौगतस्य । ५ किं जातम् ? इत्याह–**कथम्** इत्यादि । **कथं** न कथञ्चित् तद्विवृत्तस्य (**तद् व्यावृत्तस्य**) **सजा-तीयविजातीया**(य)व्यावृत्तस्य **स्वभावस्य दर्शनम्** । कस्मिन् सति ? इत्याह–**अनुपलब्धि** इत्यादि । **अनुपलब्धिलक्षणं प्राप्तो** दर्शनागोचरो **निरंशो** यो **अर्थ**[स्त]स्य **स्वभावासिद्धौ** सत्याम् । नहि अदृश्यखण्डादिपरमाणुषु[2] तथाविधकर्कादिपरमाणूनामभावः[3] [३४७ख] सिध्यति । तन्न युक्त[म्–] *"सर्व (सर्वे) भावाः" [प्र० वा० ३।३९] इत्यादि का[रिका]त्रयम्[4] । १०

माभून्न तद्दर्शनं को दोष इति चेत्; अत्राह–**तदभावे** तद्दर्शनाभावे **साकल्येन** अनवयवेन **दृश्यादृश्यस्वभावविवेकासिद्धेः** सुखादिर्नीलादयो **दृश्यस्वभाव(वाः)** ईश्वरादयोऽदृश्य-**स्वभावा** इति यो **विवेको** विभागः तस्य **असिद्धेः** कारणात् **अतिनिद्रायितं जगत् स्यात्** ।

अनभ्यासो नवाऽभ्यासो नाद्वयं वेदनं तथा ।
मानत्राणविनिर्मुक्तेः शून्यत्वे लोकसुस्थितिः ॥ १५

स्यान्मतम्–न कचित् मया[5] परमाणव इष्यन्ते यथाव्याहारं (व्यवहारं) तत्त्वोपगमात् तेनायमदोष इति; तत्राह–**प्रत्यक्षम्** इत्यादि ।

**[ प्रत्यक्षं विश्वतः पश्यन्न चेद् व्यावृत्तमन्यतः ।**
**स्वलक्षणमदृश्यार्थस्वभावाभावदृक् कथम् ॥३७॥**

**यथैकं पश्यन् तदर्थान्तरस्वभावाभावं नियमेन पश्यति तथा उपलब्धि [लक्षण-** २० **प्राप्तस्य] अन्यथा असङ्कीर्णस्वभावोपलब्धेरनुपपत्तेः । तथा च–**

**दध्यादौ न प्रवर्त्तेत बौद्धः तद्भुक्तये जनः ।**
**अदृश्यां सौगतीं तत्र तनूं संशङ्कमानकः ॥**
**दध्यादिके तथा भुक्ते न भुक्तं काञ्जिकादिकम् ।**
**इत्यसौ वेत्तु नो वेत्ति न भुक्ता सौगती तनुः ॥ इति ।** २५

**व्याधिभूतग्रहेन्द्रियादीनामेकान्ते निवार्यमाणे प्रवृत्तिनिवृत्त्योः कुतः सिद्धिर्यतः प्रत्ययान्तरसाकल्यं वैकल्यमन्यद्वा प्रवर्तेत मन्त्रौषधादिशक्तेश्च दृश्य [लक्षणानुपपत्तेः] । न चायमेकान्तः दृश्यस्य आत्मशक्तिर्दृश्यैव इत्यलमतिप्रसङ्गेन । ]**

---

(१) अदृश्यानुपलम्भाद् आरेकैकान्ते संशयैकान्ते सति । (२) खण्डमुण्डादिगोविशेषेषु । (३) कर्कादि–श्वेताश्वादि । (४) "सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थितेः । स्वभावपरभावाभ्यां यस्माद् व्यावृत्तिभागिनः॥ तस्माद् यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः । जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥ तस्माद्यो येन धर्मेण विशेषः संप्रतीयते । न स शक्यस्ततोऽन्येन तेन भिन्ना व्यवस्थितिः ॥"–प्र० वा० ३।३९-४१ । (५) विज्ञानवादिना ।

**प्रत्यक्षं** कर्तृ **चित्रकर्ता** चित्रमाश्रित्य यद् व्यवस्थितम् । तत् किं कुर्यात् ? इत्यत्राह–**स्वलक्षणं पश्यन्** । किंभूतम् ? **अन्यतः** सजातीयविजातीयाद् **व्यावृत्तं चेत्** यदि; कथम् **अदृश्यार्थस्वभावाभावदृग् न** ननु अदृश्यार्थस्वभावस्य अभावदृग् कथं न ? भवत्येव । अन्यथा अन्यतो व्यावृत्तं स्वलक्षणं तेन कथं पश्येत् ।

५ कांचिकाम् आविष्कुर्वन्नाह–**यथैकम्** इत्यादि । **यथा** येन व्यापि (व्यवहारि) जनानुरोध-प्रकारेण **एकं** भुञ्जानं पश्यन् सौगतः उपलब्धिलक्षणप्राप्ता [न] **तदर्थान्तरस्वभावाभावं पश्यति नियमेन** अवश्यंभावेन **तथा** तेन प्रकारेण । किं करोति ? इत्याह–**उपलब्धि** इत्यादि । '**पश्यन्ति**' इति सम्बन्धः । न ह्यसौ दध्यादिकं (दध्यादि) स्वलक्षणप्राप्ता (प्राप्तो) रजतादेः (रजतादेः)रेवाभावं पश्यति न पुनरदृश्य वो विषमस्य (वोपिसमस्य)समूहस्य । अस्यानभ्युपगते
१० (गमे) दूषणमाह–**अन्यथा** इत्यादि । अनेन (अन्येन) उक्तादपरेण [३४९क] प्रकारेण **अनु-पपत्तेः** । कस्याः ? **असंकीर्णस्वभावोपलब्धेः** । तथा च–

दध्यादौ न प्रवर्तेत बौद्धः तद्भुक्तये जनः ।
अदृश्यां सौगतीं तत्र तनुं संशङ्कमानकः ॥
दध्यादिके तथा भुक्ते न भुक्तं काञ्जिकादिकम् ।
१५ इत्यसौ वेत्तु नो वेत्ति न भुक्ता सौगती तनुः ॥ इति ।

दूषणान्तरमाह–**व्याधी**त्यादि । व्याधिभूतग्रहेन्द्रियादीनाम् एकान्ते[ऽ]स्मिन् वि(नि)-वार्यमाणे **प्रवृत्तिनिवृत्त्योः** सद्भा[वाऽ]सद्भावयोः **कुतः सिद्धिः** ? न कुतश्चित् , **यतः** सिद्धेः प्रत्ययान्तराणां साकल्यं वैकल्यम् अन्यत्र प्रतिपद्येत । पुनरपि तदन्तरमाह–**मन्त्रौषधादि-शक्तेश्च** '**प्रवृत्तिनिवृत्त्योः कुतः सिद्धिः**' इत्यादिना सम्बन्धः । नायं दोषः तस्याः दृश्यत्वात्
२० इति चेत् ; अत्राह–**दृश्ये**त्यादि । **न चायम् एकान्तः दृश्यस्य आत्मशक्तिः दृश्यैव** इति, क्षणभङ्गेन व्यभिचारित्वात् **इत्यलमतिप्रसङ्गेन** दूषणपरम्पराया(रया) ।

ननु व्यवहारे अदृश्यानुपलब्धिः संशयहेतुः उक्ता, तत्र चायं दोषोऽस्तु न पुनः प्रति-भासाद्वैते, तत्र अदृश्यस्यापि परचित्तादे(चित्तादे)र्निषेधादिति चेत् ; अत्राह–**स्वभाव** इत्यादि ।

**[ स्वभाव [विप्रकृष्टत्वे] चित्रैकानंशसंविदाम् ।**
२५ **क्षणिकत्वं कुतः सिद्धं सत्त्वस्यानुपलम्भतः ॥३८॥**

**संविदां तत्त्वमनंशमदृश्यं कथमस्ति ? कथं च न ? स्वभाव [विप्रकर्षात्] । अत एव स्वपरभावाभ्यां व्यावृत्तिर्न सिध्येत् । अप्रत्यक्षोपलब्धेः कुतो बहिरर्थसिद्धिः संभाव्येत । न च सत्तानुमानं युक्तं यतः ।]**

इदमत्र तात्पर्यम्–निरंशैकपरमाणुरूपं तत् संवेदनं **चित्रम्** , **एकं** वा ? प्रथमपक्षे

(१) प्रत्यक्षम् । (२) प्रत्यक्षम् । (३) दधिभक्षणाय । (४) शरीरम् । (५) दध्यादिनिषेधम् । (६) भक्षको भिक्षुः । (७) दूषणान्तरमाह । (८) क्षणभङ्गो हि दृश्यघटादेरात्मभूतोऽपि अदृश्यो भवति । (९) "विप्रकृष्टविषया पुनरनुपलब्धिः प्रत्यक्षानुमाननिवृत्तिलक्षणा संशयहेतुः ।"–न्यायबि० २।४७ ।

सत्त्वान्तरवदनुपलब्धेः तदभाव इति **क्षणिकत्वं कुतः सिद्धम् ?** न कुतश्चित । केषाम् ? इत्याह–**अनंशसंविदाम् ।** कुतः ? इत्याह–**सत्त्वस्य** [स्व] भावविप्रकर्षात [**अनुपलम्भतः**] । अनुपलम्भेन तत्सत्त्वस्यैवाभावात इति भावः । कस्मिन ? इत्याह–**स्व** इत्यादि ।

कारिकाविवरणमाह–**संविदाम्** इत्यादि । **संविदां तत्त्वं** स्वरूपम [३४९ख] **अनंशम-दृश्यमनुपलभ्यम** अतो न **अस्ति** इति मन्यते । ततः किं जातम ? इत्याह–**कथम्** इत्यादि । **'कथं च न'** इति परस्य प्रश्नः । तत्र हेतुरुच्यते **स्वभाव** इत्यादि । **अत एव** स्वभावविप्रकर्षादेव **स्वपरभावाभ्यां व्यावृत्तिर्न सिध्येत् । मन्धियाम् [संविदाम्]** इति सम्बन्धः । ५

ननु मिथ्याग्राह्याकारदर्शना [न] तदस्तीत्यनुमीयते ततकथमुक्तं 'नास्ति' इति चेत ? अत्राह–**कुतो बहिरर्थोपलब्धिः अप्रत्यक्षोपलब्धेः** सकाशात '[१]अप्रत्यक्षोपलब्धेः' **संभाव्येत** संविदां तत्त्वम इति । दूषणान्तरमाह–**न च** नैव **सत्तानुपमानमितं**(नुमानम् अनुमितं) **बौद्धैः** १० *"**सत्तायां हि साध्यायां सर्वो हेतुः त्रयीं होष्यैजगतां नापि य सेम (त्रयीं दोषजातिं नातिवर्तते)**" [प्र० वा० स्ववृ० १।१९३] इति वचनात **युक्तं** वा **न च सत्तानुमानम्** इति हेतोरभावादिति भावः । अत्रापि यतः सत्तानुपमा (नुमा)नात संभाव्येत इति व्याख्येयम ।

उपसंहारकारिकां **दृश्यस्वभाव** इत्यादिकामाह–

**[दृश्यस्वभाव एकान्ते नैवान्तर्बहिः क्वचित् ।** १५
**कुतः का क्व [च] भावः [स्यात्]क्वाभावव्यवहारकृत् ॥३९॥**

**बहिरन्तर्वा संशयस्यापि सिद्धेरयोगात् किं केन व्यवस्थाप्येत ? तदयं भूतचतुष्टयवादिनः पापीयान् ।]**

**एकान्ते क्वचिद् दृश्यस्वभाव** उपलभ्यस्वभावो(वे) **नैव अन्तर्बहिः** । [कुतः] किं जातम ? इत्याह–**कुतः** प्रमाणात , **का** उपलब्धिः, **क्व भावः** सत्ता उपलब्धिनिबन्ध- २० नत्वात्तस्याः । तदभावेऽभावादिति **क्व अभावव्यवहारकृत्** सौगतः, तद्व्यवहारनिबन्धनस्य अन्योपलम्भस्याऽभावात् ।

कारिकां व्याचष्टे–**बहिरन्तर्वा** इत्यादिना । संशयस्तर्हि स्यादिति चेत ; अत्राह–**संशयस्यापि** न केवलमन्यस्य **सिद्धेः** प्रतिपत्तेर**योगात्** , तस्यापि ज्ञानत्वात् निरंशत्वेन अन्यसमानत्वात् । अथवा, **सिद्धेः** निष्पत्तेर**योगात्** तन्निबन्धनभावाभावसाधारणोपलब्धेरभावात् । २५ अस्तु सकलशून्यत्वं [३५०क] तदपि बौद्धाभिमतमेवेति चेत ; अत्राह–**किं** शून्यत्वे (त्वं) **केन** प्रमाणेन **व्यवस्थाप्येत** न किञ्चिन केनचित । यत एवं **तत्** तस्मादयं सौगतः **भूतचतुष्टय-वादिनः पापीयान्** तेन प्रत्यक्षप्रतीतस्य आत्मन एव निषेधः कृतः अनेन सर्वस्य इति मन्यते ।

(१) 'अप्रत्यक्षोपलब्धेः' इति द्विर्लिखितम् । (२) असिद्धविरुद्धानैकान्तिकसंज्ञिकाम् । सत्तासाध्ये भावधर्मो हेतुरसिद्धः, अभावधर्मो विरुद्धः, उभयधर्मश्च अनैकान्तिक इति । (३) सत्तायाः । (४) उपलब्ध्यभावे । (५)'अर्थान्तरोपलम्भस्य । (६) चार्वाकात् ।

मा भूत् सकलप्रतिभासवैकल्यमात्रमप्रमाणकं शून्यत्वम् , अपि तु *"**प्रतिभास एव एकानेकत्वादिधर्मशून्यः तथैव च सांवृतः कार्यकारणभावः**" इति प्रज्ञाकरः; तत्राह–**प्रत्यक्षत्वम्** इत्यादि ।

**[प्रत्यक्षत्वमभावानां कार्यकारणतेत्यपि ।**
**तेषामेव प्रसङ्गेन निरंशानुपलम्भनात् ॥४०॥**

**परमार्थसतोऽनुपलब्धेः । प्रत्यक्षानुमानयोः साकल्येन अवस्तुविषयत्वात् , कार्यस्वभावहेत्वोरवस्तुरूपत्वात् कुतस्ततः किञ्चित् सिध्येत । न चैतत् निरंशं तत्त्वं सांव्यवहारिकं प्रमाणं प्रतिपत्तुं युक्तं प्रतीतिविपर्यासात् , तदेकान्तेऽनुपपत्तेः ।]**

**प्रत्यक्षत्वं** तद्विषयत्वं वा **अभावानां** वन्ध्या (वन्ध्या)सुतादीनां **कार्यकारणता** हेतुफलभावः **इत्यपि** **तेषामेव प्रसङ्गेन** न वस्तूनाम् । कुतः ? इत्याह–**निरंशस्य** तत्त्वस्य सर्वविकल्पातीतसंवेदनस्य अन्यस्य वा **अनुपलम्भनात्** ।

कुत एतत् ? इत्यत्राह–**परमार्थसत** इत्यादि । निरंशपरमाणुभागचित्राद्वैतस्य **परमार्थसतोऽनुपलब्धेः** । कुतः ? इत्यत्राह–**प्रत्यक्ष** इत्यादि । **प्रत्यक्षस्य** वचनवदवस्तुस्थूलाकार**विषयत्वात्** , **अनुमानस्य** तथाविधसामान्यगोचरत्वात् , **साकल्येन** अ[न]वयवेन ।

नन्वनुमानस्य अवस्तुविषयत्वेऽपि वस्तुसाधनत्वं तत्र प्रतिबन्धादिति चेत ; अत्राह–**कार्य** इत्यादि । **कार्यस्वभावहेत्वोरवस्तुरप (रूप)त्वात्** मरीचिकाजलवत् असत्स्वभावत्वात् । यदि वा; निरंशत्वादनुपलम्भेन तयोरपि वस्तुरूपत्वाभावात् । एतदुक्तत्वं(क्तं) भवति–यदि कार्यस्वभावयोः परमार्थतः तत्त्वम् ; तर्हि तयोः साध्ये प्रतिबन्धात् तज्जाति (तज्जनि)तस्यानुमानस्यापि संभवेत । न चैवम् इति **कुतः** कारणात् **ततः** ताभ्यां कार्यस्वभावहेतुभ्यां **किञ्चित्** पराभिमतं **सिध्येत्** न कुतश्चित् । यद्वा, 'प्रत्यक्षा [३५०ख] नुमानाभ्याम्' इति ग्राह्यम् । अथ व्यवहारिणः अभ्यासानभ्यासयोः यथा ताभ्यामेव तिद्वप (तद्विप)याभ्यां भाविवस्तुसिद्धिः उपायान्तराभावात् तथा ममापि निरंशत्वसिद्धिः इति; तत्राह–'**न चैतद्**' इत्यादि । **न च** नैव इति (एतत्) **निरंशं तत्त्वं** कर्तृ **प्रतिपत्तुम्** आश्रयितुं **युक्तं** शक्तम् । किम् ? इत्याह–**सांव्यवहारिकं प्रमाणम्** । कुतः ? इत्याह–**प्रतीतिविपर्यासात्** । यथा पूर्वं पश्चाच्च सांव्यवहारिको प्रतीति-तद्विपर्यासेन तत्त्वोपगमात् , प्रतीत्यनुसारेण च तद्व्यवस्था; तर्हि निरंशस्य अनुपलब्धेः उपलभ्यमानस्य च विचारासहत्वात् चेति ।

मात्रवस्तु (नन्वस्तु) *"**मायामरीचिप्रभृतिप्रतिभासवदसत्त्वेऽप्यदोषः**" [प्र० वार्तिकाल० ३।२१५] इति चेत; अत्राह–**तदि(तदे इ)त्यादि** । **[तदेकान्ते]** मिथ्यैकान्तेऽभ्युपगम्यमाने **अनुपपत्तेः** । '**प्रत्यक्षत्वम्**' इत्यादिना सम्बन्धः ।

---

(१) काल्पनिकः । (२) अभावानामेव । (३) शब्दवत् । (४) अवस्तुभूत । (५) वस्तुनि । (६) कार्यस्वभावहेत्वोरपि । (७) तत्त्वम् । (८) कार्यस्वभावहेतुभ्यामेव ।

विभ्रमाऽसिद्धेः इति चेत् ; अत्रोत्तरम्-अन्तर्वृत्तेन 'तादात्म्य' इत्यादिना दर्शयति ।

**[ तादात्म्यादि प्रतीमः एकलक्षणविदो वयम् ।**
**सहक्रमविदामेकं तर्कात् स्वसंवेदनम् ॥४१॥**

**यतस्तत्त्वं यथा युगपत् प्रत्यक्षेतरत्वयोः ।**
**समुदाय्यपि सम्बन्धात् तथैव समुदायिनाम् ॥४२॥**

**गुणीति गुणसमुदायः एकान्तः क्व नु संभवेत् ।**
**यदिदं प्रतीयमानं नोल्लङ्घ्यमपरैः जनैः ॥४३॥ ]**

**तादात्म्यं** साध्यसाधनयोः द्रव्य-पर्याययोः कथञ्चिदेकत्व**मादि**र्यस्य हेतुफलभावै-कत्वानेकत्वादिनाः (दीनां) तत्तथोक्तं **प्रतीमः** । के ? इत्याह-**एकलक्षणविदो वयं** जैनाः [कस्मात् ?] इत्याह-**तर्कात्** विचारात् । १०

ननु पूर्वपर्यायपर्यवसितज्ञानानन्तरपर्यायवृत्तिमत् तत् कथं तादात्म्यादिकं प्रतीमः इत्यु-च्यते इति चेत् ; अत्राह-**सहे**त्यादि । [**सहविदां** रूपरसादिगुणग्रहणानाम्] **क्रमविदां** मृत्पिण्डशिवकछत्रकादिपर्यायग्रहणानाम् **एकमभिन्नं स्वसंवेदनं स्वम्** 'आत्माऽयम्' **संवेदनं** आत्मापरनामकं **तर्कात् प्रतीमो यतः** इति । कदा कयोरिव ? **युगपत् प्रत्यक्षेतरत्वयोः ।** यथैव संवेदनं ततः प्रतीमः इति **तथा सम्बन्धात्** संयोगात् । केषाम् ? **समुदायिनाम्** १५ अवयवासंहतां (अवयवसंहतानाम्[2]) हस्तपादादीनां [३५१क] यः **समुदायि(यी)** शरीर-व्यपदेशभाक् सोऽपि **तत्त्वमेकत्वं** 'प्रतीयते' इति विभक्तिवचनपरिणामेन सम्बन्धः । [यथा] परमाणुसन्निवेशमात्रं **तथैव गुणानां** रूपादीनां **समुदायः तत्त्वं** प्रतीयते । यस्या (अस्य) पर्यायमाह-**गुणीति । इति** हेतोः **एकान्तः क्व नु संभवेत् ?** न क्वचित् । **यद्** यस्माद् एकान्त(न्ता)संभवात् **इदं प्रतीयमानं** स्वलक्ष्यात्मलक्षणम् अनेकान्तरूपत्वमु (त्वं **नो**) २० **ल्लङ्घ्यमपरैः जैनैः (जनैः)** ।

इति सि द्धि वि नि श्च य टी का याम् अ न न्त वी र्य विरचितायां
हेतुलक्षणसिद्धिः षष्ठः प्रस्तावः ॥ छ ॥

---

(१) मृत्पिण्डशिवकछत्रकस्थासकोशकुशूलघटाः क्रमवर्तिनः पर्यायाः मृदो घटाकारभवनोन्मुखायाः ।
(२) अवयवरूपेण संहतानाम् एकत्रीभूतानाम् स्कन्धानाम् ।

# [ सप्तमः प्रस्तावः ]

## [ ७ शास्त्रसिद्धिः ]

प्रत्यक्षादिवत् शब्दोऽपि अर्थप्रसाधकः, तत्र च अविप्रतिपत्तेः तदुपपादनार्थमाह–**शास्त्रम्** इत्यादि ।

> **[शास्त्रं शक्यपरीक्षणेऽपि विषये सर्वं विसंवादकम् ,**
> **मिथ्यैकान्तकलङ्कितं बहु समुद्वीक्ष्य तर्कागमैः ।**
> **स्यात्कारश्रुतसत्यलाञ्छनमुपादेयं सतां शासनम् ,**
> **कारेकाऽत्र परीक्षणक्षमधियामेकान्तपक्षैरलम् ॥१॥]**

५

**शास्त्रं** महावाक्यं (महत्वा)न्तरवाक्यात्मकं वचनम् , केवलस्य वर्णस्य पदस्य न व्यवहारानुपयोगात् । तत् किम् ? **उपादेयम्** आप्तप्रणीतं प्रामाणिकं (आप्तप्रणीतं प्रामाणिकम्) कर्तव्यम् इत्यर्थः । कथम् ? इत्याह–**परीक्षणक्षमधियाम्** । कर्तरि वा *"कर्तृकर्मणोः
१० कृति" [पाणिनि० सू० २।३।६५] इति । 'तत्त्वपरीक्षणक्षमबुद्धिभिः' इत्येके (इत्यर्थः । क ? इ)त्याह–**शक्यपरीक्षणेऽपि** । **शक्यं परीक्षणं** यस्मिन् लिङ्गादौ न केवलम् अत्यन्तपरोक्ष एव **विषये** । किं किञ्चिदेव ? न ; इत्याह–**सर्वं** सर्वज्ञेतरप्रणीतम् । किंभूतम् ? इत्याह–**स्यात्कार** इत्यादि । 'स्यात्' इति करणम् उच्चारणं यस्य तत् **स्यात्कारं** तस्य तत्र (तत्) **श्रुतं च** शब्दः तदेव **सत्यम्** अवितथं **लाञ्छनं** यस्य
१५ तत्तथोक्तम् । कुतः ? इत्याह–**सतां** विद्यमानानां जीवादीनां **शासनं** प्रतिपादकम् । अथवा सताम् अर्हतां ज्ञापकम् तत्कार्यत्वेन यतः । इत्थम्भूतत्वमस्य सन्दिग्धमिति चेत् ? अत्राह–काऽत्र कोविदारेका (**का ? न** काचित् **आरेका**) संशीतिः **अत्र** सतां शासने । [ ७ ७ १ ख ] केषाम् ? इत्याह–**परीक्षणे**त्यादि ।

नन्वत्रैकान्तवादिप्रयुक्ता दोषाः सन्ति तत्कथमुपादेयमिति चेत् ? अत्राह–**एकान्त**त्यादि ।
२० विषयिण्येकान्तवादिनि विषयस्य एकान्तस्य उपचारात् **एकान्तपाक्ष्यैः (भाष्यैः)** तद्वादिव्यामोहैः **अलं** पर्याप्तमात्रेति (पर्याप्तम् **'अत्र'** इति) सम्बन्धः, तद्दोषाणां निराकरणादिति मन्यते । किं कृत्वा तदुपायम् (तदुपादेयम् ?) इत्याह–**विसंवादकम्** इत्यादि । **मिथ्यैकान्तकलङ्कित (तं) विसंवादक बुद्धीक्ष्य (कम् उद्वीक्ष्य)** ज्ञात्वा **'शास्त्रम्'** इत्यादि अत्रापि सम्बध्यते । कैः ? इत्यत्राह–**तर्कागमैः**, **तर्केण** तस्यैव दृष्टेऽपि युक्तेतरविवरणात्

(१) महावाक्यमवान्तरवाक्यञ्च शास्त्रे भवतः । (२) षष्ठी । (३) "कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्"–सि० कौ० २।३।६५ । (४) भगवदर्हतः कार्यं श्रुतम् । (५) एकान्तवादिप्रयुक्तदोषाणाम् । (६) शास्त्रमुपादेयम् ।

न्यायाराद् (यान) **आगमैश्च** तत्त्वाक्यैः (तद्वाक्यैः) इति । किंभूतैः ? इत्याह–**बहुमुखैः** बहुभेदैः ।

ननु सांव्यवहारिकप्रत्यक्षानुमानाभ्यामेव सकलार्थसिद्धेः किमर्थं शास्त्रमुपादेयमिति चेत् ? अत्राह–**श्रुतम्** इत्यादि ।

**[श्रुतं श्रेयःपथः पुंसां बोद्धृणां परिणामिनाम् ।**
**सोपायोपेयतत्त्वार्थं न वक्त्राकृतसूचनम् ॥२॥** ५

करणं पुरुषस्य ऐकान्तिकात्यन्तिकानादिदुःखनिवृत्तेरुपायतया गुणपुरुषान्तरभेदतत्त्वं यथा यथा शृणोति गृह्णाति संधारयति विजानाति वितर्कयति अभिनिविशते तथा तथा चेतनोऽपरिणामी पुरुषः एतद्दर्शितं निर्वेदं पश्यन् कैवल्यमनुभवन् मोक्षमुपैति । पुनः करणं न दर्शयति । न चायं पुरुषः औत्सुक्यनिवृत्तेः वश्यति इति केचित्[1] । तदुपायो- १० पेयतत्त्वममृष्यन्तो नैयायिकाः कथं चिद्वृत्तिः अचेतनस्य करणस्य अतिप्रसङ्गात् ? कथं वाऽचेतनस्योपलब्धिः ? कथं करणमन्यकरणं विना पश्येत् ? कथं चेतनस्याप्यकर्तुरुपलब्धिः ? दृश्यदर्शनस्वभावयोः व्यापकयोः वा तदवस्थयोः कथं वा संयोगः ? इति आत्मादितत्त्वज्ञानात् मिथ्याज्ञाननिवृत्तौ दोषानुत्पत्तेः प्रवृत्त्यसंभवात् जन्मनिवृत्तौ अशेषगुणरहितस्यात्मनः स्वात्मन्यवस्थानं मोक्षमाहुः[2] नैयायिकाः । सोऽयमात्मात्मीयग्रहः १५ संसारहेतुः अयोनिशो मनस्कारो यतः कथं मोक्षाय ? नित्यस्य वस्तुत्वमेव न संभाव्यम् इति चतुःसत्यभावनोपायं सकलसन्तानोच्छेदरूपं निर्वाणं ब्रुवाणाः[3] सौगताः प्रत्यवस्थाप्येरन् । कथं चतुःसत्यप्रतिपादकवचनजनितमिथ्याज्ञानस्य अर्थाविषयत्वात् ततः तत्त्वप्रतिपत्तिः ? कथमतत्त्वभावनाप्रकर्षपर्यन्तजं तत्त्वज्ञानं निर्वाणं च । नैरात्म्येतरपक्षयोः मिथ्यैकान्ताविशेषे अस्ति वा कश्चिद्विशेषः ? प्रत्यक्षहेतुतदाभासविकल्पसम्बन्ध- २० भावाभावयोश्च, मिथ्याविषयताविशेषात्, यथालक्षणं स्वलक्षणविलक्षणजात्यन्तर-

(१) "एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् । अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥ ज्ञानं गुणपुरुषान्तरोपलब्धिरूपमित्यर्थः । प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ । ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥ इत्थमैकान्तमत्यन्ततः तापत्रयस्याभावात् उपरमाद्-नुत्पत्तेः कैवल्यं मोक्ष इत्यर्थः, तमाप्नोति ।"–सांख्यका० माठरवृ० । (२) "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ।"–न्यायसू० १।१।२। (३) "अथवा, एतेसं अभिसम्बुद्धत्ता अरियभावसिद्धतोपि अरियसच्चानि । यथाह–इमेसं खो भिक्खवे चतुन्नं अरियसच्चानं यथाभूतं अभिसम्बुद्धत्तो तथागतो अरहं सम्मासम्बुद्धोत्ति वुच्चतीति [सं० ५।४३३]"–विसुद्धि० १६।२०-२२। "यद्विनिश्चयः–चतुरार्यसत्यदर्शनवदिति। आरात् पापकेभ्यो धर्मेभ्यो याता इत्यार्याः । अत एव तानि सत्यतया मन्यन्त इति तेषां सत्यानि । चतुष्ट्वाच्च तेषां चत्वारीत्युक्तम् । फलभूताः पञ्चसंक्लेशस्कन्धाः दुःखाख्यं सत्यमेकम् । त एव हेतुभूतास्तृष्णासहायाः समुदयाख्यं सत्यं द्वितीयम् । चित्तस्य निष्क्लेशावस्था निरोधाख्यं सत्यं तृतीयम् । तदवस्थाप्राप्तिहेतुर्नैरात्म्याद्याकारश्चित्तविशेषो मार्गाख्यं सत्यं चतुर्थमिति ।" –न्यायबि० ध० प्र० पृ० ६७ ।

लक्षणात् कुतस्तत्त्वप्रतिपत्तिः ? साधनवचनस्यापि तत्त्वानभिधानोपगमात्, ततः कीदृशी सुगतस्य तत्त्वदेशना ? ]

**श्रुत**मेव न प्रत्यक्षानुमाने, तयोरल्पविषयत्वात्। **श्रेयो** मोक्षः तस्य **पन्था** मार्गः, तन्मार्गस्य सम्यग्दर्शनादेः उपदेशात् श्रेयःपथः। केषाम् ? इत्याह–**पुंसाम्** आत्मनां न क्षणिकचित्तसन्ततीनां तदभावात्। ज्ञानाद् एकान्तेन भिन्नानां स्यादिति चेत्; अत्राह–**बोद्धृणाम्** स्वपरस्वभाववेदकानाम् अन्येषां सदपि श्रुतमनुपयोगि, घटादीनामिव तस्य श्रवणे अर्थावधारणे तदनुष्ठाने तत्फले मोक्षे च सति [न] तेषां तदुपयोगि। न च ज्ञानात् भिन्नात्मनां तदस्ति गगनादीनामेवेदितिनात्म्न (नामिव इति नात्म)कल्पनं फल्ववत्।

अथात्मनां ज्ञानं बन्धो (ज्ञानसम्बन्धः) न गगनादीनां ततोऽयमदोषः; [३५२क] कथमदोषो यतः समवायसम्बन्धनिरोधात्, गतोऽपि सर्वत्राविशेषात्। न च भिन्नस्य आत्मनो दर्शने 'इह ज्ञानम् आत्मनि' इति प्रत्ययोऽस्ति येन समवायोऽत्र स्यात्, अन्यथा 'खरशृङ्गे ज्ञानम्' इत्यपि स्यात्।

अथ ज्ञानं द्रव्याश्रितं गुणत्वाद् रूपादिवत्, गुणतद्वतोश्च भेदः अन्यथा तद्योगादिति मतिः; सापि न युक्ता; य ततः (यतः) सापि ज्ञानादिरूपादिभ्यो भिन्नस्य आधारस्य दर्शने सत्येव स्यात्, न च तदस्ति इत्युक्तं पुरस्तात्। तथापि तद्दर्शनकल्पने ततोऽप्यन्यस्य तदाधारस्य ततोऽप्यन्यस्य तदाधारस्य दर्शनकल्पनमित्यनवस्था स्यात्। तर्हि नानादि (ज्ञानादि) रूपादिमात्रमापन्नमिति नात्म (नात्मा) नापि घटादिस्कन्ध इति शाक्यशासनं समस्तमिति चेत्; न; पूर्वापरीभूतैकज्ञानस्य आत्मत्वप्रसाधना तथ (प्रसाधनात्, तथा) रूपादिविशेषाणां कथञ्चिदेकत्वमुपगतानां घटादिस्कन्धस्थापनात्। तथाविधज्ञानस्य अपरद्रव्याश्रितत्वसाधने तपक्ष (मत्पक्ष) साधन(नं) हेतुश्च असिद्धः, तस्य गुणत्वासिद्धेः: *"**द्रव्याश्रय (य्य)गुणवान् संयोगविभागेष्वकारणम् [अनपेक्षः] गुणः**" [वैशे० सू० १।१।१६] इति गुणलक्षणम्। न चास्य द्रव्याश्रयित्वम्; पूर्वापरज्ञानभेदेन वाऽस्य सम्बन्धात् द्रव्यगुणयोरविशेषः। अथ पूर्वोत्तरस्वभावयोः गुणत्वं तदाश्रितत्वं च उच्यते; अत्र परिहारः–

ज्ञानाद्भिन्नस्तथा न स्यादात्मा स्त (स्तु त)था मतिः (सति)।
समवायस्तथैकार्थसमवायिविदा च वित ॥

ततः सूक्तम्–**बोद्धृणाम्** इति। एवमपि *"**चैतन्ये (न्यं) पुरुषस्य स्वं रूपमपिति (स्वरूपम्)**" [योगभा० १।९] इति वचनात् सांख्यपुरुषाणां तत्स्यात् इति चेत् [३५२ख] अत्राह–**परिणामिनाम्** इति।

(१) मोक्षमार्गस्य। "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः"–त० सू० १।१। (२) सन्ततीनामभावात्। (३) ज्ञानाद् भिन्नानाम्। (४) श्रुतस्य शब्दस्य। (५) विद्यमानस्यापि सर्वगतस्य एकस्य। (६) आत्मनि। (७) गुणत्वायोगात्। (८) आधारदर्शनम्। (९) पूर्वापरीभूतैकज्ञानस्य। (१०) जैनपक्ष। (११) श्रेयः।

ननु साङ्ख्यस्य पुरुष द्रष्टारो बोद्ध (पुरुषा द्रष्टारः, बोद्धृ) पुनः प्रधानं बोधपरिणामात्, तत्कथमेवमाशङ्कितमिति चेत्? न; बोधदर्शनयोरव्यतिरेकात्[1]।

स्यान्मतम्– [2]नित्यं श्रुतं तेषां श्रेयःपथो[पायं स्यादिति चेत; अत्राह–**सोपायो]पेय-तत्त्वार्थम्** इति। **उपायो** हेतुः संसारस्य मिथ्यात्वादिः मोक्षस्य सम्यग्दर्शनादिः **उपेयं** फलं संसारो मोक्षश्च, सह उपायेन वर्त्तत इति **सोपायम्** तच्च तद् **उपेयं** च तदेव **तत्त्वम्** ५ **अर्थो** विषयो यस्य तत्तथोक्तम्। [न] च नित्यं वेदश्रुतम एवंविधिमिति निवेदयिष्यते। [3]पि ट-क त्र याख्यं तेषां[4] तत्पथं इति चेत; अत्राह–**न वक्त्राकृतस्टव (सूच)नम्** इति। पुरुषाभिप्रायसूचकं सौगतं वचः श्रेयःपथो न।

सांख्य (ख्यं) नैयायिकेन नैयायिकं सौगतेन [5]तं च स्वयं निराकुर्वन्, व्यतिरेकमुखेन कारिकां व्याचष्टे–'**करणम्**' इत्यादिना। तत्र सांख्यमतं तावद्दर्शयति--**करणं** श्रोत्रादि **यथा यथा** १० **शृणोति गृह्णाति** श्रुतं शास्त्रार्थमवगच्छति **संधारयति** कालान्तरस्मरणधारणाविषयतां नयति **विजानाति** तदर्थपरिणतं भवति **वितर्कयति** 'युक्तमिदम् इदं वान्यथा' इति विजयते (विचयते[6]) **अभिनिविशते** युक्तं रुचिं करोति। किम्? इत्याह–**गुणे**त्यादि। **गुणाः** सत्त्वादयः **पुरुषाः** पुमांसः तेषाम् **अन्तरं** भेदः स एव **तत्त्वं** तदिति। केन रूपेण? **उपायतया** कारणतया। कस्य (स्याः)? इत्याह–**अनादिदुःखनिवृत्तेः**। किंभूतायाः इत्ये (इत्याह–ऐ)**कान्तिके-** १५ त्यादि। कस्य सम्बन्धिन्याः? इत्याह **पुरुषस्ये**ति। **तथा तथा पश्यन्**। किम्? इत्याह–**निर्वेदं** वैराग्यं च। किंभूतम्? इत्याह [३५३क] **एतद्दर्शितं** करणदर्शितम्। कः? इत्याह–**पुरुषः**। किंभूतः? **चेतनः**। पुनरपि किंभूतः? **अपरिणामी** सन् (स तम) पश्यन् किं करोति? इत्याह–**मोक्षमुपैति**। किं कुर्वन्? **अनुभवन्**। किम्? **कैवल्यम्**।

ननु मुक्तस्यापि पुनः संसारः स्यादिति चेत; अत्राह–**पुनः** पश्चात् **तरणं (करणं) न** २० **दर्शयति** 'आत्मानम्' इत्यध्याहारः। **न च नैवार्यपुरुषः वश्यति**। कुतः? इत्याह–**औत्सुक्य-निवृत्तेः इत्येवं केचित्** कापिलाः।

तत् नैयायिकेन दूषयन्नाह–**तद्** इत्यादि। **तत्** साङ्ख्यसम्बन्धि। किम्? **उपायोपेय-तत्त्वम् मृष्यतो (अमृष्यन्तः)** असहमानाः **नैयायिका मोक्षम् 'आहुः'** इति सम्बन्धः। कथं मृष्यत (अमृष्यन्तः)? इत्याह–**कथमित्यादि**। **कथं चिद्वृत्ति[ः]** ज्ञानं श्रवणादिरूपम्। २५ कस्य? इत्याह–**अचेतनस्य** प्रधानपरिणामस्य **करणस्य**। कुतः? इत्याह–**अतिप्रसङ्गात्** घटादेरपि तत्प्रसङ्गात्। [वा] अथवा **कथं** केन प्रत्यक्षानुमानप्रकारेण **उपलब्धिः** प्रतिपत्तिः **अचेतनस्य** परकल्पितस्य न केनचित् तत्र तदभावात्[9] कथं '**करणम्**' इत्यायु(यु)क्तम्।

ननु यदि तत्र स्यात् कथं [10]तद्दर्शितं पुरुषः पश्येदिति चेत्? अत्रोच्यते–करणं कथं पश्येत्

(१) भेदाभावात्। "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्"–न्यायसू० १।१।१५। (२) मीमांसकः प्राह। (३) बौद्धः प्राह। सूत्रपिटकं विनयपिटकम् अभिधर्मपिटकं चेति त्रयम्। (४) पुरुषाणाम्। (५) श्रेयःपथः। (६)सौगतम्। (७) विचारं करोति। (८) पुरुषे। (९) उपलब्ध्यभावात्। (१०) करणदर्शितम्।

**अन्यकरणं विना** ? अन्यथा अर्थमपि तथैव पश्येदिति किं कृतं करणकल्पनया ? तत्रापि तदन्तरकल्पने अनवस्था । तथापि तत्कल्पनायां दोषमाह–**अतिप्रसङ्गात्**, अन्यस्यापि तथा कल्पना स्यात् इति । तत्र युक्तं कारणम् (**करणम्** ) इत्यादि ।

यत्पुनरुक्तम्–'**पश्यन्**' इत्यादि; तत्राह–**कथं चे[त]नस्या[प्य]कर्तुरुपलब्धिः अतिप्रसङ्गात्** इति । अकर्तुः पुरुषस्य *"अकर्ताऽगुणः शुद्धः पुरुषः कापिलदर्शने ।"[1] इति वचनात् कथम् **उपलब्धिः** अर्थसाक्षात्करणं चेतनस्य दर्शस्या (दर्शनस्व)भावस्य । नहि अर्थसन्निधानात् प्राक् [दर्शनस्य] तद्दर्शने [अ]व्यापृतं रूपं यहतः (रूपमजहतः) पुनः तद्दर्शनं युक्तम्[2] पूर्वं न युक्तं पूर्ववत् । परित्यागे कथ [न] कर्तृत्वं करणक्रिययेव दर्शनक्रिययापि क्लिष्टकर्तृत्वात्[3] । अथ सर्वदा उदासीनः पुरुषो दर्पणसंस्थानीयो यो (नीयो) यदा सन्निहितोऽर्थो भवति तं तदा पश्यति इति; तदा(द)युक्तम् ; औदासीन्यापरित्यागे तद्योगादिति । अथ सर्वदा पश्यत्यसौ;[4] तत्राह–**अतिप्रसङ्गादिति** । सर्वस्य सर्वदा सर्वत्र सर्वार्थोपलब्धिप्रसङ्गात् ।

दूषणान्तरमाह–**दृश्ये**त्यादि । **दृश्यदर्शनस्वभावयोः** प्रकृतिपुरुषयोः **व्यापकयोः कथं संयोगो वा** तदेवा (**भवेत् ? वा**)शब्दो प्रसङ्गसमुच्चयार्थः । ननु कदाचित्तयोः अवस्थान्तरावाप्तिः ततोऽयमदोष इति चेत्; अत्राह–**तदवस्थयोः** कूटस्थयोः इत्यर्थः । ननु प्रधानस्य परिणामित्वात् '**तदवस्थयोः**' इत्ययुक्तमिति चेत्; न; पुरुषस्यापि[5] तद्वत् परिणामित्वापत्तेरविशेषादिति मन्यते । यतः (अतः) संयोगो भवेत्[6] यम (भवेदित्यस्या)निवृत्तिरिति । एवं व्यतिरेकमुखेन **परिणामीति** व्याख्यातम् ।

संप्रति नैयायिकमतं दर्शयति सौगतेन दूषयितुम् **आत्मा** इत्यादि । **आत्मादि** प्रधानं यस्य पदार्थसमूहस्य स एव **तत्त्वं** **तज्ज्ञानात् मिथ्याज्ञाननिवृत्तौ** सत्यां **दोषानुत्पत्तेः** दोषा रागादयः तेषामनुत्पत्तेः **प्रवृत्तेरसंभवात्** रागादिकार्य[धर्मा]धर्मयोरसंभवात् **जन्मनिवृत्तौ अशेषगुणरहितस्य आत्मनः स्वात्मन्यवस्थानं मोक्षमाहुः नैयायिकाः** । तदुक्तम्–

*"**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः** ।" [न्यायसू० १।१।१]

*"**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावात्[अपवर्गः]**" [न्यायसू० १।१।२] इति ।

एतद्दूषणमाह सौगतः–**सोऽयम्** इत्यादि । **सः** साङ्ख्याभिमतः **अयं** नैयायिकेन उच्यमानः । कः ? इत्याह **आत्मात्मीयग्रहः कथं मोक्षाय** ? कुत इति चेत् ? आह–**संसारहेतुतः** । न च संसार[कारणमेव मोक्ष]कारणं युक्तम् अतिप्रसङ्गात् । एतदपि कुतः ? इत्याह–**अयोनिशो मनस्कारो यतः**[9] निर्विषयो विकल्पो[10] यतः इति मन्यते । तदुक्तम्–

(१) "उक्तं च–अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः । अकर्ता निर्गुणः सूक्ष्म आत्मा कापिलदर्शने ॥"–षड्द० बृह० पृ० ४२। (२) 'पूर्वं न युक्तम्' इति पुनर्लिखितम् । (३) द्रष्टापि दर्शनक्रियायाः कर्ता एव । (४) दर्शनकर्तृस्वरूपद्रष्टृत्वायोगात् । (५) पुरुषः । (६) प्रकृतिपुरुषोः । (७) प्रधानवत् । (८) तदव्यवहितपूर्वस्याभावात् । (९) "अयोनिशो मनस्कारः भ्रान्तः निर्णयः'–अभिध० को० टी० ५।३४। (१०) भ्रान्तः इत्यर्थः ।

*"आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ ।
अनयोः संप्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥" [प्र० वा० १।२२१] इत्यादि ।

दूषणान्तरमाह–**नित्यस्य** इत्यादि । **नित्यस्य** अविचलितरूपस्य **वस्तुत्वमेवं संभाव्याऽनेन** (मेव न संभाव्यम् । अनेन) तथादृणाम । (**'बौद्धाणाम्'**) इत्येतदपि व्याख्यानम् ।

अधुना सौगतमतं स्वयं दूषयितुमुपन्यस्यति–**चतुःसत्य** इत्यादि । दुःखसत्यादिदुःखसमुदा(द)यनि [रोधमार्गसंज्ञकानि चतुःसत्यानि] तेषां **भावनापायो** हेतुर्यस्य स तथोक्तः तं **ब्रुवाणाः सौगताः** । किं तद् ? इत्याह–**निर्वाणम्** मोक्षम् । किंभूतम् ? इत्याह–**सकल** इत्यादि । [**सकलसन्तानोच्छेदरूपं**] **प्रत्यवस्थायेरन** (**स्थाप्येरन्**) पर्यनुयुज्येरन इति । कथमिति चेत् ? अत्राह–**कथमि**त्यादि । चतुःसत्यप्रतिपादकवचनजनि[तं] तद्विषयं ज्ञानं **मिथ्याज्ञानम्** [तस्य] **अर्थे** (अर्था<sup>ऽ</sup>)विषयत्वात् अर्थाप्रतिबन्धात् साक्षात् तस्मादनुत्पत्तेः शब्दस्य १० च तैरर्थे [त]त्प्रतिबन्धानभ्युपगमात् **ततः कथं** न कथञ्चित् **तत्त्वस्य** चतुःसत्यलक्षणस्य [३५४ख] **प्रतिपत्तिः** । तथापि यदेव तेनः प्रतीयते तदेव भाव[य]तां मुक्तिः स्यात इति चेत्; अत्राह–**कथम्** इत्यादि । **कथम् अतत्त्वस्य** शब्दार्थस्य **भावनायाः** तस्याः **प्रष** (**प्रकर्ष**) **पर्यन्तः** प्रकर्षावसानं तस्माज्जातं **तज्जं तत्त्वज्ञानं** चतुःसत्यज्ञानं **निर्वाणं** **'च'** इति पूर्वदूषणसमुच्चये कामशोकाद्युपप्लुतज्ञानमिव अतत्त्वज्ञानमेव स्यादिति । न (तत्र) युक्तम्– १५

*"स्वर्गापवर्गमार्गस्य प्रमाणं भेदको (वेदको) नरः ।
अन्यस्याप्यपरिज्ञाने संभवेदपि तस्य तत् ॥" [प्र० वार्तिकाल० २।३१] इति ।

तत्रैव दोषान्तरमाह–**मिथ्यैकान्त** इत्यादि । नित्यात्मादिप्रतिपादकशास्त्रार्थज्ञानस्येव चतुःसत्यप्रतिपादकशास्त्रस्यापि **मिथ्यैकान्ताविशेषः तस्मिन्** सति **नैरात्म्येतरपक्षयोः नैरात्म्यम्** आत्मरहितत्वम **इतरत्** सात्मकत्वं तयोः **पक्षो** [तयोः] प्रतिज्ञतरयोः **अस्ति वा** २० **कश्चिद्विशेषः** ? न कश्चिदस्ति इत्यर्थः । ततो यथा आत्मा ( न आत्म)भावनातो मुक्तिः तथा नैरात्म्यभावनातोऽपि इति मन्यते ।

ननु किमुच्यते तयोर्न कश्चिद्विशेष इति, यावतनैरात्म्यपक्षादिकयावता तरात्म्य पक्षादिकमस्ति (यावता नैरात्म्ये प्रत्यक्षादिकमस्ति) नेतरपक्ष (पक्षे ) ततः श्रुतादर्थमवगम्य पुनः प्रत्यक्षानुमानाभ्यां विचार्य भावयतां नैरात्म्यवादिनामेव मुक्तिरिति चेत् ; अत्राह–**प्रत्यक्षे**त्यादि । २५ **प्रत्यक्षं** च **हेतुश्च** लिङ्गं **तदाभासौ** च **प्रत्यक्षहेतुतदाभासौ** त एव **विकल्पा** भेदाः तेषां **सम्बन्धो** अर्थाविनाभाव[स्त]स्य **भावाभावौ** प्रत्यक्षहेतुविकल्पयोः अर्थसम्बन्धाभावः (न्धभावः) प्रत्यक्ष [३५५क] हेतुत्वाभासविकल्पयोः सम्बन्धाभावः, तयोश्च **'नैरात्म्येतरपक्षयोः अस्ति वा कश्चिद्विशेषः'** इति सम्बन्धः । पक्षद्वयेऽपि प्रत्यक्षादिनिषेधात । कल्पनया उभयत्रापि तत्समानमिति मन्यते । एतदपि कुतः ? इत्यत्राह–**मिथ्ये**त्यादि । **मिथ्या** कल्पितो ३० **विषयो** [गोचर] स्तयो **भावः तत्ता** तस्या **अविशेषात्** । सोऽपि कुतः? [इत्यत्राह–**यथालक्षणम्** ]

(१) अर्थैरेव । (२) शब्दात् । (३) नैयायिकशास्त्र । (४) बौद्धशास्त्र । (५) आत्मवादपक्षे ।

इत्यादि । लक्षणानतिक्रमेण **यथालक्षणं** तत्र तद्वलणं च ( तत **स्वलक्षणं च**) नैरात्म्येतरवादिकल्पितं वस्तु तस्माद् **विलक्षणं** विसदृशं **जात्यन्तरं** तस्य इति **लक्षणात्** । तत्र नैरात्म्यपक्षे तत्त्वज्ञानम् (नात) निर्वाणं युक्तम् । एवमस्तु इति चेत् ; अत्राह-**कुतः** इत्यादि । कुतश्चित् प्रमाणात् **तत्त्वस्य प्रतिपत्तिः** सुगतस्येतरस्य वा । एवं तावत् स्वार्थसंपत्तिः सुगतस्य निषिद्धा ।

५ अधुना [परार्थसं]पत्ति निराकुर्वन्नाह-**साधन** इत्यादि । **साधनवचनस्यापि** त्रिरूपलिङ्गवचनस्यापि *"यत् सत् तत् सर्वमनित्यम्" [वादन्या० पृ० ६] इत्येवमादिकस्य न केवलम् *"अग्निहोत्रं जुहुयात्" [मैत्रा० ६।३६] इत्येवमादिकस्य **तत्त्वानभिधानोपगमात्** सौगतैः । [ततः] किम् इत्याह-**ततः कीदृशी** इत्यादि । चतुः **सत्या** (**तत्त्वस्य** चतुःसत्यस्य) **देशना सुगतस्य कीदृशीति** । तत्र युक्तम्-

१० *"ज्ञानवान् मृग्यते कश्चित् तदुक्तप्रतिपत्तये ।
अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥" [प्र०वा० १।३२] इति ।

ज्ञानवति सत्यपि तद्वचनात् तत्त्वाप्रतिपत्तेः, वक्तुरभिप्रायमात्राय(र्थ)प्रतिपत्तिः पुनरन्यवचनादपि । तत एवं वक्तव्यम्-

ज्ञानवान् मृग्यते कश्चित् तदुक्तप्रतिपत्तये ।
१५ न ज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥ इति ।

सुगतसन्निधानात् स्वयमेव जनस्य तत्त्वप्रतिपत्तिः, *"**कुड्यादिभ्यो वा देशनाः** ।" इति केचित् ; [३५५ ख] तदयुक्तम् ; यतः तत्सन्निधानात्तस्य तत्त्वप्रतिपत्तिः अध्यक्षरूपा, विकल्परूपा वा स्यात् ? प्रथमपक्षे तत्सन्निधानोपाया जन्मिनां सर्वज्ञतेति प्रसक्तम् । चतुः [सत्यज्ञस्य] सर्वज्ञत्वम् इति परस्य मतम् । तदुक्तम्-

२० *"**हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः ।
यः प्रमाणमसविस्तो (मसाविष्टो) न तु सर्वस्य वेदकः ॥
दूरं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु ।
प्रमाणं दूरदर्शी चेदेत गृध्रानुपास्महे ॥**"

[प्र०वा० १।३४-३५] इत्यादि ।

२५ तथा च तत्त्वाभ्यासोऽनर्थकः । द्वितीयपक्षे-विकल्पमात्ररूपा, अनुमानरूपा वा स्यात् ? अत्रापि प्रथमविकल्पे उक्तो दोषः **कथमतत्त्वभावना** इत्यादि । [यदि] पुनस्तस्याः परमार्थविषयत्वमिष्यते, व्याहतमेतत्-*"**द्वे एव प्रमाणे**" [प्र० वार्तिकाल० ३।१] इति *"**विक-**

(१) कथञ्चिन्नित्यानित्यात्मकम् । (२) नैयायिकादिवचनादपि संभवति (३) "संभाराबेधतस्तस्य पुंसश्चिन्तामणेरिव । निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥"-तत्त्वसं० श्लो० ३६८० । "सान्निध्यमात्रतस्तस्य···" मी० श्लो० सू० २ श्लो० १२८। (४) जगतः । (५) सुगतसन्निधानमात्रेण । (६) हेयं दुःखसत्यम्, उपादेयं निरोधसत्यम्, तयोः अभ्युपायः समुदय-मार्गसत्ये । (७) एत आगच्छत । (८) पक्षिणो । दूरदर्शिनः दूरश्रुतींश्च । (९) विकल्पात्मकभावनायाः । (१०) "द्विविधमेव प्रमाणम्" -प्र० वार्तिकाल० ।

ल्पोऽवस्तुनिर्भासः" इत्यादि च । द्वितीयविकल्पे लिङ्गात् लिङ्गिनि ज्ञानम् अनुमानम् । लिङ्गस्य च स्वयं प्रतिपत्तौ ततः साध्यप्रतीतिरपि स्वयमेव इति किं [1]तत्सन्निधानेन ? नहि धूमाद् अग्निं प्रतिपद्यमानं प्रति [2]तदुपयोगि । अथ साध्यवह्लिङ्गज्ञानं तत एव; तच्चेत् प्रत्यक्षम्; अतीन्द्रियत्वाऽविशेषेऽपि लिङ्गे प्रत्यक्षं [3]ततो न साध्ये इति किं कृतो विभागः ? यदि विकल्पमात्रम्; कथमतो लिङ्गप्रतिपत्तिः यतोऽनुमान [रूपत्वम्, अनुमान]त्वे प्रकृतमनुवर्त्तेत इत्यनवस्था । तन्न ५ तत्सन्निधानात् कस्यचित्तत्त्वप्रतिपत्तिः ।

यत्पुनरुक्तम्–'कुड्यादिभ्योऽपि देशनाः' इति; तत्र ज्ञानमात्रेणापि वर्जितेभ्यः [4]तेभ्यो देशनासंभवे कथमिदं सूक्तम्–

*"विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः । [३५६क]
तेषामन्योऽन्यसम्बन्धान्नार्थान् शब्दाः स्पृशन्त्यमी ॥" इति ? १०

अथ अन्य एव ते शब्दा ये विकल्पाभावेऽपि भवन्ति; तर्हि अन्यदेव तन्निमित्तं यत्ता[यत्तदं]भावेऽपि स्यादिति परलोक(का)सिद्धिः । कथं चैवं सति व्याहारादेः परशरीरे चैतन्यप्रतीतिः ? कथं च न स्यात् ? किं कुड्यादिकवत् कस्यचित्[5] सन्निधानात् भ र्म की र्त्या द यो वदन्ति उत स्वयमेव इति शङ्काऽनिवृत्तेः ।

किंच, तद्देशनाभ्यो यदि न कस्यचित्तत्त्वप्रतीतिः किं ताभिः ? अस्ति चेत्; सिद्धः शब्दः १५ अर्थवाचकः । तद्वद् अन्योऽपि तत्सन्निधानात्तया (था) इति चेत्; [6]अन्यसन्निधानाद् [7]अन्या अपि, भावनियमाभावात् शक्तीनामिति ।

यत्पुनरेतत्–*"विवक्षाप्रतिबद्धजन्मानो[8] विवक्षामेव गमयेयुः ।" इति; तत्रापि कुड्यादिप्रतिबद्धजन्मानः ताः[9][10] कुड्यादिकं गमयेयुः, तच्च तत्सन्निधानमिति दूरे तत्त्वप्रतिपत्तिः व्यवहिता वा स्यात् । ततः स्थितं **कीदृशी तत्त्वदेशना** इति । तथैवैतेन '**सोपायोपेय**' इत्यादि २० व्याख्यातम् ।

ननु सुगतस्यापि विकल्पोऽस्ति ततो धर्मादेना (धर्मदेशना) इति चेत्; अत्राह–'**सोपायोपेय**' इत्यादि ।

**[सोपायोपेयतत्त्वञ्चेद् बुद्धो निश्चित्य वाचकैः ।
परं निश्चाययेच्छब्दविकल्पास्तत्त्वगोचराः ॥३॥** २५

**सोऽयं परमार्थासंस्पर्शिभिः विकल्पैस्तत्त्वं निश्चिन्वन् तत्त्वानभिधानैः वाचकैर्विकल्पविषयं निश्चाययति इति क इमं व्याघातभारमुद्वोढुं समर्थः अन्यत्रैकान्तविनश्वरात् ।]**

(१) सुगतसन्निधानेन । (२) सुगतसन्निधानं सार्थकम् । (३) सुगतसन्निधानात् । (४) कुड्यादिभ्यः । कुड्यादिभ्यः इति पाठे मूलगन्धकुटीतः इत्यर्थः । (५) चैतन्याभावेऽपि भूतमात्रात् । (६) सुगतस्य । (७) कपिलादि । (८) कपिलादिदेशनाः अपि तत्त्वप्रतिपादिकाः स्युः। (९) शब्दाः। (१०) देशनाः।

**बुद्धः** सुगतः **निश्चिन्त्य** विकल्पविषयतां नीत्वा [अ]विकल्पेनाऽनिश्चयात्। अनेन एतद्दर्शयति बुद्धस्य शुद्धनिर्विकल्पबोधसद्भावे न ततो वचनप्रवृत्तिरिति तत्कल्पनमनर्थकम्।

एतेन इदमपि निरस्तं यदुक्तं धर्मकीर्तिना–

*"ये कल्पयन्ति कवयः सुगतस्य वाचमेतं कल्पनामपि मुनिः (नेः) परिकल्पयन्ति।

५ तस्यामवाक्तनया चकास्ति दोषं तत [:] स्तुतिपदैर्निगदन्ति तेऽर्थान्॥" इति।

कथम्? [३५३ख] तद्वचनाभावे किं तेन अनर्थकेन अर्था (अनर्थ)पोषिणेन? शेषं चिन्तितमनन्तरम्। अथा द्वैतमस्त्येव (अथ द्वैतमस्त्येव)मुक्तम्, तेन तत्र सर्वमिदमुक्तमयुक्तम्; एतद्वचनतार्थोऽभावात्। ततो वचनप्रवृत्तो (त्तौ) वा, तदर्थो वा ततः प्रतीयेत उभयथापि स्वलक्षणविषयत्वं शब्दानाम्। सौगतानां (सुगते न) स्यादिति चेत्; न; अन्यत्रापि

१० तदनिषेधात्। न वस्तुगतं स्यैव हि प्रत्यक्षम् (न च सुगतस्यैव अविकल्पप्रत्यक्षम्;) अन्यस्यापि स्वयं तदभ्युपगमात्। अभ्यासं जं (अभ्यासजं) च तदस्ति *"यस्य यावत (ती) मात्रा" [प्र० वार्तिकाल० पृ० ३३] इति। न कस्यचिदविकल्पादन्यस्य विकल्पाद्वचनमिति युक्तम्; इतरथा धर्मोऽपि अविवक्षः अन्यत्रा[न्य]तोऽपि स्यात्। अर्थविषयं सुगतवद् अन्यस्य (अन्यस्यापि)। तथा बुद्धस्यापि निश्चयाद् (निश्चयादेव) वचनमिति। किं **निश्चिन्त्य**? इत्याह–

१५ **सोपाय** इत्यादि। स कैः किं कुर्यात्? इत्यत्राह–**वाचकैः** शब्दैः **परम्** आत्मनोऽन्यं विनेयज्ञानं (विनेयजनं) **निश्चाययेत चेद्** यदि। ततः किं जातम्? इत्याह–**शब्दविकल्पाः तत्त्वगोचराः** सु(स्व)लक्षणविषयाः 'स्युः' इत्यध्याहारः। एवं मन्यते–योऽसौ सुगतस्य विकल्पः स जात्यादिविषयश्चेत्; इतरविकल्पवत् तद्वचनस्य तत्प्रतिबद्धत्वे ततः स एव प्रतीयते इति स एव दोषः 'साधनवचनस्यापि' इत्यादिकः। अथ स्वलक्षणविषयः; तर्हि [न] नीलादिविकल्पो-

२० ऽवस्तुगोचरः तत्त्वात्' मरीचिकानिचये जलविकल्पवदिति। ततः *"विकल्पोऽवस्तुनिर्भासो विसंवादादुपप्लवः" [इति कथन]मात्रम्, सुगतवचनस्यापि तदनिवारणात्, तथा च तत्प्रभवस्य शब्दस्यापि तद्विषयत्वमिति।

व्यतिरेकमुखेन [३५७क] कारिकां व्याचष्टे–**परमार्थ** इत्यादिना। सोऽयं हेयोपादेयतत्त्व (त्त्वं) **परमार्थः तदसंस्पर्शिभिः** तदगोचरैः। किं [भूतै]रित्याह–**विकल्पैः**। किं कुर्वन्?

२५ इत्याह–**निश्चिन्वन्** व्यवस्यन्। किम्? **तत्त्व [तत्त्वम्**। कः? **सोऽयम्]** बुद्धः **शिष्यान् निश्चाययति**। कैः? **वाग (च) कैः**। किम्भूतैः? **तत्त्वानभिधानैः**। किम्भूतं किम्? इत्यत्राह–**विकल्पविषयम्** स्पष्टसाधारणरूपं **तत्त्व[म्] इति क इमं व्याघातभारं** स्वनाशकदोषभारम् **उद्वोढुं समर्थः अन्यत्र एकान्तविनिश्वरार(विनश्वरात्)** वोढुं समर्थः पूर्वापरपरामर्शशून्यत्वात्।

ननु शिष्याः सुगतवचोभिः तत्त्वं साक्षात् न प्रतिपद्यन्ते अपि तु तदभिप्राय(यम्),

(१) बुद्धत्वकल्पनम्। (२) सुगतात्। (३) वचनात्। (४) इति दोषः। (५) साधारणजनस्य। (६) निर्विकल्पकम्। (७) सुगतस्य। (८) अस्मदादेः। (९) यथा सुगतस्य वचनमर्थवत् तथा अन्यस्यापीति। (१०) सुगतवचनस्य। (११) अर्थसम्बद्धत्वे। (१२) विकल्पत्वात्। (१३) 'वोढुं समर्थः' इति पुनर्लिखितम्।

पुनः स्वयमेव तत्त्वं युक्त्य (क्त्याऽ) वबुद्धयन्ते इति चेत; अत्राह-**शाब्दश्चेद् (शाब्दैश्चेत्)** इत्यादि ।

**[ शाब्दैश्चेद्वक्त्रभिप्रायं प्रतिपद्य परीक्षकाः ।**
**युक्त्या तत्त्वं प्रतिप(प्रप)द्येरन् किन्नैवं चक्षुरादिभिः ॥४॥**

**न खलु युक्तायुक्तपरीक्षया तत्त्वेतरप्रतिपत्तौ दृष्टश्रुतयोरर्थयोः कश्चन अतिशयोऽ-** ५ **स्ति यतः चक्षुरादिज्ञानमेव तत्त्वविषयम् । तत्समारोपव्यवच्छेदस्यैव प्रामाण्ये निर्विकल्प-ज्ञानस्य प्रामाण्यं न भवेत्, सर्वथा अन्यस्यापि प्रसङ्गः स्यात् । संवृतिप्रभृतेरेव स्यात् । तच्च [नास्ति] ।]**

**वक्तुः** सुगतस्य **अभिप्रायं** विवक्षां **प्रतिपद्य** । कैः ? इत्याह-**शाब्दैः** इति । के ? इत्याह-**परीक्षकाः** तत्त्वचिन्तकाः । किं कुर्वीरन् ? इत्याह-**प्रतिप(प्रप)द्येरन्** । किम् ? १० **तत्त्वमिति** । कया ? **युक्त्या** प्रत्यक्षानुमानरूपया । **चेद्** यदि । दूषणमाह-**किं नैव (वं)** कस्मादेवं **चक्षुरादिभिः तत्त्वं न प्रतिपद्येरन् परीक्षकाः** । चक्षुर्ग्रहणम् उपलक्षणम् अन्येन्द्रियाणाम् । आदिशब्देन अनुमानपरिग्रहः । एतदुक्तं भवति-यदि सुगतव[च]ने प्रवृत्तेऽपि न ततः[1] तत्त्वप्रतीतिः अपि तु युक्तिः (क्तेः) प्रत्यक्षादिरूपायाः । तथा सति प्रत्यक्षादिविषयं तत्त्वम् इति तत एव तत्प्रतीतिः इति किं सुगतवचनेन ? इति व्यर्थम्-'**शाब्दैर्वक्त्रभिप्रायं** १५ **प्रतिपद्य**' इति ।

कारिकाया व्याख्यानं सुगमत्वा तत्कृतं (त्वान्न कृतम्) '**शाब्दैर्वक्त्रभिप्रायं प्रति-पद्य**' इत्यत्रैव दूषणान्तरमाह-**नखीत्यादि** (**न खल्वित्यादि**) **नखल** (लु) तत्वेतन (**तत्त्वेतर**) **प्रतिपत्तौ** [३५७ ख] क्रियमाणायाम् । कया ? इत्याह-**युक्तायुक्तपरीक्षया** इति । इदं युक्तम् इदं वाऽयुक्तम् इति या परीक्ष (क्षा) तया । किम् ? इत्याह-**कश्चन अतिशयोऽस्ति** नैव २० कश्चेद्वेदो (कश्चिद्भेदोऽ)स्ति । कयोः ? इ[त्य]त्राह-**अर्थयोः** । किम्भूतयोः ? **दृष्टश्रुतयोः** इन्द्रिय-शब्दप्रतिपन्नयोः । एवं मन्यते-यदि (यथेन्द्रि) यात्तत्त्वं प्रत्य (प्रति) पद्य नाभिप्रायं परीक्ष्य [परीक्ष]का युक्त्या तदेव तत्त्वं प्रतिपद्येरन, तथा शब्दादपि तत्त्वं प्रतिपद्य नाभिप्रायं तदेव ते तया प्रतिपद्येरन् इति । कीदृशस्तयोरविशेषः अतिशयो नास्ति ? इत्याह-**यतो** यस्मात् अतिशयात् **चक्षुरादिज्ञानमेव तत्त्वं(त्त्व)विषयं** न पुनः श्रुतज्ञानं भवेत तत्त्वविषयं सोऽतिशयो नास्ति । २५

ननु श्रुतज्ञानं प्रवृत्तमपि स्वविषये समा[रो]पं न व्यवच्छिनत्ति 'अनित्यः शब्दः' इत्युक्ते-ऽपि नित्यज्ञानाऽनिवृत्तेः, इतरथा [2]साधनमनर्थकं भवेत् । [3]तद्व्यवच्छेदकं च प्रमाणमिति चेत ; अत्राह-**तदि[त्यादि]** । **तत्समारोपो** दृष्टश्रुतार्थसमारोप[स्तद्] **व्यवच्छेद** (दोऽ) नुमानं [**तस्यैव**] तद्व्यवच्छेदस्यैव न श्रुतज्ञानस्य **प्रामाण्ये** अङ्गीक्रियमाणे **निर्विकल्पज्ञानस्य प्रामाण्यं न भवेत्** तद्व्यवच्छेदकत्वाभावादिति मन्यते । कथं न भवेत् ? इत्याह-**सर्वथा** [4]तद्व्यवच्छेद- ३०

(१) सुगतवचनात् । (२) 'शब्दः क्षणिकः सत्त्वात्' इत्यादि । (३) समारोपव्यवच्छेदकम् । (४) समारोपव्यवच्छेद ।

प्रकारेणेव अर्थग्रहणप्रकारेणापि अन्यस्यापि प्रसङ्गभयात (ङ्गः स्यात् ) अथवा, क्षणिकद्व (कत्व)प्रकारेणेव नीलादिप्रकारेणापि, अत्रापि विकल्पापेक्षणात । यदि वा अनभ्यास [प्रकारेणेव अभ्यास] प्रकारेणापि, तदापि दृश्यप्राप्यैकत्वसमारोपभावात [३५८ क] कथमन्यथा प्रत्यक्षं [भाविनि]प्रमाणम ? तर्हि क [स्याः] स्यादिति चेत ? अत्राह–संवृतीत्यादि । भेदसंवरणात संवृतिः अवयव्यादिविज्ञान (नं) तत्प्रभृतेः तदाः प्र (तत्प्र)भृतिशब्देन स्मरणादिपरिग्रहः, विकल्पस्यैव स्यात । भवतु को दोष इति चेत , अत्राह–तच्च इत्यादि । प्रमाणनियमा[भावा]पत्तेः इ[ति] भावः ।

एवं सुगतस्य 'तत्त्वदेशना कीदृशी' इति सामान्येन प्रतिपाद्य संप्रति 'तदुक्तनैरात्म्यलक्षणमार्गानिर्व(निर्वा)णविशेषणा कीदृशी तत्त्वदेशना' इत्येतद् दर्शयन्नाह–नीतेत्ये(ते)त्यादि ।

[नीता नैरात्म्यशङ्काऽस्तं निर्विकल्पेतरात्मना ।
सहक्रमभवान्योऽन्यव्यावृत्तैकात्मसंविदाम् ॥५॥

स्वतोऽन्यतो वा स्वपरचेतसां सत्यपि सदृशेतरपरिणामातिशये जीवोऽयं पृथक् प्रत्यात्मवेदनीयः सङ्करव्यतिकरव्यतिरेकात् स्वपरचेतसामस्खलत्तादात्म्यसामान्यगोचरप्रत्ययविषयतां प्रथयन् स्वयं प्रतिक्षिपन्तं दुर्विदग्धबुद्धिं तिरस्करोत्येवेति अत्र किन्नश्चिन्तया ? न चेतसोविजृम्भणम् । स्वपरदर्शनविकल्पक्रमपरिणामस्वभावजीवमन्तरेण एकान्तविशेषाणां क्षणस्थितेरदृष्टेरनुपपत्तेश्च ।]

नीता प्रापिता अस्तम् अभावम । का ? इत्याह–नैरात्म्यशङ्का तेन (केन ?) इत्याह–निर्विकल्पेतरात्मना इति । निर्विकल्प इतरश्च स्व (स)विकल्पः आत्मा स्वभावो यस्य विकल्पज्ञानस्य तेन । तदुक्तम् अत्रैव प्रथमपरिच्छेदे *"प्रतिभासैक्यनियमे" [सिद्धिवि० १।१०] इत्यादिना । केषाम ? इत्याह–सह इत्यादि । सहक्रमाभ्यां भवती (न्ती)ति सहक्रमभवाः ताश्च ताः अन्योऽन्यं परस्परं व्यावृत्ता स्वे (श्च) पुनरपि तास्ताः एकात्मनः(त्मानः) एकसन्तानश्च (ताश्च) संविदश्च तासाम इति ।

[1]अन्ये 'क्रमभावान्यान्यतावृत्तं कात्मसंविदा' (क्रमभवान्योऽन्यव्यावृत्तैकात्मसम्बन्धिसंविदाम् ) इति पठन्ति । तत्रायमर्थः–क्रमभवाश्च अन्योऽन्यव्यावृत्ताश्च सुखाद(य)स्तेषु एकस्यात्मनो जीवस्य या सम्बन्धितया(न्धिन्यः)[संविदः तासाम्] इति । स्वरप(स्वपर)प्रसिद्ध्या युक्त (क्तं) द्वयमत्र ।

स्यान्मतम्–क्वचिज्ज्ञाने सविकल्पेतराकारयोः एकत्वदर्शनानुक्र (नात क्रम)संविदामेकत्वसाधनमयुक्तम् , अन्यथा अर्के कटुकत्वदर्शनार्थ (नात) गुडेऽपि किन्न [6]तत्साध्यते ? प्रत्यक्षबाधनं क्रमविदामेकत्वसाधनेऽपि । [३५८ ख] ।

तास (ननु न तासा) मेकत्वं चेतनारूपतां विहाय अपरं प्रत्यक्षगम्यम् । तद्रूपता च सन्ताना-

(१) सुगतोक्त । (२) निर्वाण । (३) ग्रन्थे । (४) व्याख्याकाराः । (५) कटुकत्वम् । (६) तासां क्रमसंविदाम् । (७) चेतनारूपता ।

न्तरापेक्षयापि इति सर्वात्मनामेकात्मकत्वम् । देशादिभेदो [1]विवक्षितसंविदामपि इति नात्मसिद्धिः । ए[ते]न द्वितीयं व्याख्यानं चिन्तितमिति चेत् ; अत्राह–**स्वतोऽन्यतो वा** इत्यादि । **स्वा [नि]** स्वसन्तानपतितानि **[पराणि]** पुत्राणि (दि) सन्तानान्तरभूतानि तानि च तानि **चेतांसि** तेषां **सत्यपि** विद्यमाने वि (ऽपि) **सदृशेतरपरिणामा विषये (तिशये)** विसदृशपरिणामातिशये । कुतः ? इत्याह–**स्वतः** सोपादा (स्वोपादा) नकारणा [त अ] **न्यतो वा** सहकारिकारणात् वेति समुच्चये । तदुक्तम्–*"**स्वतोऽन्यतो वा विवर्त्तेत क्रमा [द्] हेतुफलन्याति (लात्मना)** ।" [सिद्धिवि० ३।१९] इति । तस्मिन् सत्यपि कुतः किं कुर्वन् कः किं करोति ? इत्याह–**सङ्करे-** त्यादि । **जीवो य (ऽयं)** स्वसंवेदनाध्यक्षविषयः **तिरस्करोत्ये [व]** । कम् ? इत्याह–**दुर्विदग्धबुद्धिं** सौगतं चार्वाकं च । किं कुर्वन्तम् ? **प्रतिक्षिपन्तम्** । किम् ? **स्वयं** जीवमेव । केषां कुर्वन्ति इत्याह–**स (स्व) परचेतसामस्खलत्तादात्म्यसामान्यगो [चर] प्रत्ययविषयतां** स्वचेतसाम् अस्खलत्तादात्म्यप्रत्ययविषयतां परद (परचे) तसां स्वापेक्षयाऽस्खलत्सामान्यप्रत्ययविषयतां **प्रथयन्** प्रसिद्धिं तदा न (तन्वन्) । कुतः ? इत्याह–**सङ्कर** इत्यादि । **संङ्करे (रः)** स्वस्वचेतस्सु तादात्म्यप्रत्ययविषयतावत् सामान्यप्रत्ययविषयता, परचेतस्सु सामान्यप्रत्ययविषयतावत् [ता] दात्म्यप्रत्य [य] विषयता, **व्यतिकरश्च** स्वचेतस्सु तथाविधसामान्यप्रत्ययविषयता परचेतस्सु तादात्म्यप्रत्ययविषयता [३५९क] तयो **र्व्यतिरेको**ऽभावः **तस्मात्** तं वा प्राप्य ।

नन्नु सर्वत्र एक एव जीवः, इति न युक्तं '**स्वतः**' इत्यादिकमिति चेत् ; अत्राह–**पृथग्** इति । **पृथग्** भिन्नः । किंभूतः ? **प्रत्यात्मवेदनीयः**, अत्र अस्मिन् न्याये सति जीवे वा **किं नश्चिन्तया** अनुमानेन ? किमर्थं तर्हि तत्र '**[क्र] मोपलब्धि**' इत्यादि वक्ष्यते तद् इति चेत् ? अत्राह–**न च (चेत्)** इत्यादि । **तमसो**ऽज्ञानस्य **विजृम्भणं [चेत्]** यदि **न** तर्हि **किन्न-श्चिन्तया** । तद्विजृम्भणात् तदिष्यते, तद्व्यवच्छेदार्थमिति भावः । कस्य ? इत्याह–**एकान्त (न्त)** इत्यादि । स्वपरचेतसां तद्विषयतां प्रथयन् इति । एतदपि कुतः ? इत्याह–**स्वपरे**त्यादि । **स्वपरयोः दर्शनं** चावग्रहो **विकल्पश्च** स्मरणादिः तावेव **क्रमपरिणामः** स एव **स्वभावो** यस्य स तथोक्तो **जीवो**ऽन्यपदार्थः **तमन्तरेणा**ऽदृष्टेः । कथम् ? इत्यत्राह–**एकान्तविशेषाणाम्** । परस्परं विशिष्यन्ते इति **विशेषा** द्रव्यादयः अत एव [2]तद्वादी वैशेषिक इत्युच्यते, **एकान्तेन विशेषा** एकान्तविशेषा[ः]तेषामिति । न केवलं तेषामेव अपि तु **क्षणस्थितेः** '**च**' शब्दोऽत्र द्रष्टव्यः, **अदृष्टे**रिति । हेत्वन्तरमाह–**अनुपपत्तेश्च** इति । '**एकान्तविशेषाणां क्षणस्थितेश्च**' इति सम्बन्धः ।

तदनुपपत्तिं दर्शयन्नाह–**क्रमोपलब्धि** इत्यादि ।

**[ क्रमोपलब्धिनियमात् स्यादभेदः स्वसंविदाम् ।**
**सुखःदुःखादिभेदेऽपि सहवीक्षानियामवत् ॥९॥**

(१) क्रमभाविनीनां संविदाम् । (२) सर्वेषां युगपत्प्राप्तिः सङ्करः । (३) परस्परविषयगमनं व्यतिकरः । (४) अस्खलत् । (५) वेदान्तवादी प्राह । (६) जीवे । (७) अग्रिमश्लोके । (८) अनुमानम् । (९) अनुमानम् । (१०) विशेषपदार्थवादी ।

भेदैकान्तेऽपि क्षणिकस्य उत्पत्तिविनाशयोस्तादात्म्यं सिद्धं क्रमोपलम्भनियमात् । हेतुफलविनाशोत्पादयोः समानकालोपलम्भाभ्युपगमात् । न च स्थितिरेव भावस्य विनाशः यतः सहोपलम्भनियमः । विधिमुखप्रतिषेधफलो हि नियमः । क्षणस्थितेः प्रत्यक्षानुपलम्भयोः बहिरपेक्षया विना एकस्वभावविषयतानुपपत्तेः । तथा च सहोपलम्भनियमात्
५ हेतुफलविनाशोत्पादयोरैक्यं स्यात्, यतः पूर्वस्य वैकल्यमपरस्य कैवल्यम् । न चान्योन्यविरुद्धस्वभावयोरनयोः कथञ्चित्तादात्म्यं विरुद्धम् निश्चय... स्थित्या सह जन्मविनाशयोरैक्यमुपयन् कालादिभेदेऽपि सुखादिव्यापिनं प्रत्यक्षं भावं कथं प्रतिक्षिपेत् ? स्वलक्षणं परस्परव्यावृत्तिलक्षणं यतः प्रतिक्षणं त्रिलक्षणम् ।]

स्वस्य स्वा वा संविदः **स्वसंविदः** स्वसंविदां न परसंविदः तासाम् । किम् ? इत्याह—
१० **अभेद** ऐक्यम् । नहि विवक्षितैकक्ष[ण]मात्रः स्यादात्मा सर्वस्य तत्र प्रवेशात् इति **[स्यात्]** कथञ्चित् न सर्वात्मना इति ।

स्यान्मतम्—सुखदुःखादिभेदाद् भेद एव तासां भेद इति; तत्राह—**सुखदुःखादिभेदेऽपि** च केवलम् अभेदे । [२५९ख]

ननु [भेदा]भेदयोरन्योन्यपरिहारस्थितलक्षणयोः किमिव ऐक्यमिति चेत् ? अत्राह—
१५ '**सहवीक्ष्या(क्षा)नियामवत्**' इति । **वि** चित्रा नाना विभ्रमेतराद्याकारा **ईक्षा** दृष्टिः **वीक्षा** तस्या **नियमः (नियामो)**ऽवश्यम्भावः, अन्यथा सकलशून्यता इत्युक्तम्, **सहवीक्ष्यानियम (वीक्षानियाम)**स्य इव तद्वदिति ।

अथ मतम्—न दृष्टान्तमात्रात् साध्यं सिध्यति अतिप्रसङ्गात् अपि तु हेतोः, अतः स एव उच्यतामिति; तत्राह—**क्रम** इत्यादि । पूर्वम् उपादानस्य पुनः उपादेयस्य उपलब्धिः **क्रमेणो-**
२० **पलब्धिः** तस्या **नियमात्** इति ।

ननु यद्यपि कदाचित् घटपटयोरुपलब्धिः तथापि नियमाभावात् नैक्यमिति सिद्ध्यति, तथापि यथा सहभाविनां सन्तानान्तरसंविद्क्षणानां भेदेऽपि सहोपलम्भनियमस्य भावाद् व्यभिचारः तथा क्रमभाविनां तेषामेव क्रमोपलम्भनियमस्य भेदेऽपि भावाद् व्यभिचारस्तदवस्थ एव निशादिवसयोश्च इति चेत्; उच्यते—**क्रम**शब्देन प्रक्रमाद् उपादानोपादेयभूतस्वपरदर्शन-विकल्प-
२५ क्रमो गृह्यते तस्योपलब्धेः, अन्यथाऽभावो **नियमः**, तस्मादिति । एतदुक्तं भवति—स्वसंविदां पूर्वस्याः पूर्वस्या उपादानत्वेन परस्याः परस्या उपादेयत्वेन च येयं क्रमेणोपलब्धिः तस्या नियमाद् अन्यथानुपपत्तेः [२६०क] तासां **स्याद् भेद** इति । अत एव दृष्टान्तापेक्षणमत्राऽयुक्तम् ।

अन्ये पुनराचार्याः **क्रम**मविशिष्टमादाय **तदुपलब्धेः नियमाद्** अवश्यम्भावात् इति

(१) तुलना—"तस्यान्यस्य प्रदेशस्य केवलस्य यत्तत् कैवल्यम् एकाकित्वमसाहयता तदेव अपरस्य प्रतियोगिनो घटादेः वैकल्यम् अभाव इति ।"—हेतुबि०, टी० पृ० १८८ । (२) बौद्धः प्राह । (३) संविदाम् । (४) नियमः नियामः इत्येकार्थौ । (५) चशब्द इवार्थः । (६) प्रकरणात् । (७) संविदाम् । (८) व्याख्याकाराः । (९) साधारणं न तु उपादानोपादेयतया क्रमम् ।

हेतुमभिधाय **सहवीक्ष्या(क्षा)नियामवत्** सहोपलम्भनियामवत् इति दृष्टान्तं ब्रुवते ; तेषां कथमुक्तव्यभिचारपरिहारः तत्र क्रमोपलब्धिनियमा [मभावेऽपि अभेदा] भावात ? कथन्न साधनविकलता दृष्टान्तस्य उपलम्भनियममात्रस्य भावेऽपि [1]सकलहेतोरभावात । न चानेकशः स्वयं दूषितं पुनः स्वपक्षसिद्धये अङ्गीकर्तुं युक्तम् । साध्यविकलता च वादिनं प्रति, नील-ज्ञानयोस्तेन[2] अभेदानभ्युपगमात । [3]परापेक्षया इदं निदर्शनमिति चेत ; तं प्रति साध्यविकलता, ५ कथञ्चिद्भेदस्याऽनभ्युपगमात । तन्न किञ्चिदेतत् ।

परेणापि [4]अतो हेतोः क्षणिकस्य उत्पादविनाशयोः तादात्म्यम् अभ्युपगम्यमिति पायत (पातयन्[5]) कारिकां व्याचष्टे **भेदैकान्ते**ऽपीत्यादिना । न केवलं स्याद्भेदे अपि तु **भेदैकान्ते**ऽपि सौगतवैशेषिकसम्बन्धिन्यभ्युपगम्यमाने **क्षणिकस्य** भावस्य प्रध्वंसवत(वतः) उपलक्षणमेतत तेन अनित्यस्य सर्वस्य ग्रहणम , यौ **उत्पत्तिविनाशौ** तयोस्तादात्म्यं कथञ्चिदेकत्वं **सिद्धम्** । १० कुतः ? इत्याह-**क्रमोपलम्भनियमाद्** इति । पूर्वम उत्पत्तेः, पुनः तत्परिणामस्य विनाशस्य उपलम्भः तस्या (तस्य) नियमात । यदि पुनः उत्पद्यमानात उत्पत्तिः अन्या[6] स्यात ; तया तत्सम्बन्धाभावा[त] न कश्चित तद्वान्[7] इति न कश्चित उत्पद्येत इति, न विनश्येत खरविषाण-वत , अन्यथा आत्मादेरपि तत्सम्बन्ध इति [३६० ख] सोऽपि[8] उत्पद्यते इति स्यात ।

अथ 'प्रागसतः स्वकारणसमवायः सत्तासमवायो वा उत्पत्तिः[9], न सा आत्मादेः सर्वदा १५ सत्त्वात' इति मतिः ; कुतः प्राक् ? 'उत्पत्तेः' इति चेत ; कस्योत्पत्तेः ? घटादेरिति चेत् ; उक्तमत्र भिन्ना कथं तस्य[11] ? [अन्यथा[12]] आत्मादेरपि न (पि सा) स्यादिति । न च निराश्रया सा, इति कथं पूर्वं तदुपलम्भः ? खरविषाणवत् अलब्धात्मरूपस्य कः स्वकारणेन सत्तया वा समवायः ? लब्धात्मरूपत्वे[13] तदेवोत्पत्तिः इत्यलं भिन्नोत्पत्तिकल्पनया ।

तथा यदि भावाद् विनाशोऽन्यः, न तेन तस्य सम्बन्ध इति कथं भावो [विनष्टो] नाम, २० अतिप्रसङ्गात । भावो विशेष्यः अभावो [विशेषणम अतः] विशेषणीभावस्तेन[14] [15]तत्सम्बन्ध इति चेत् ; विशेषणकाले विशेष्यसद्भावे युक्तो विशेषणविशेष्यभावः, किन्तु कथं भावे सति अभावः ? नहि जीवत एव देवदत्तस्य मरणम । भावयोः सहदर्शनं च नीलोत्पलयोरिव । अथाव (अथ वि) नाशेन प्रच्छादनान्न [16]भान्न भावोपलम्भः ; तर्हि न [17]तदनुरक्तभावोपलम्भः इति । न [च] विनाशो विशेषणम । स्वानुरक्तं विशेष्ये प्रतीतिमुपजनयत् विशेषणमुच्यते ; नीलत्वं [18]तदनुरक्तं २५ तत्प्र (रक्तोत्पल प्र) तीतौ वा, न तत्प्रच्छादनम (दकम ) । यदि पुनर्न विनाशसमये भावसद्भावः; कथमन्यकालेऽन्यस्याभावो यत्रासौ स्वयं निवर्तेत, अन्यथा पटोत्पत्तिकाले घटाभावः स्यात् ।

(१) सन्तानान्तरसंवित्तिभिः क्रमवार्तिनीभिः । (२) 'क्रमोपलम्भात्' इति समग्रस्य हेतोः । (३) वादिना । (४) विज्ञानवाद्यपेक्षया । (५) क्रमोपलब्धिनियमात् । (६) दूषणं ददत् । (७) भिन्ना । (८) उत्पत्तिवान् । (९) आत्मादिरपि । (१०) "स्वकारणसत्तासम्बन्धः, तेन सता कार्यमिति व्यवहारात् ।"–प्रश० व्यो० पृ० १२९ । (११) 'घटादेः' इति व्यपदिश्येत । (१२) भिन्नापि यद्युत्पत्तिः घटादेर्व्यपदिश्यते तदा । (१३) लब्धात्मरूपत्वमेव । (१४) भावेन । (१५) विनाशसम्बन्धः । (१६) 'भान्न' इति पुनर्लिखितम् । (१७) विनाशोपरक्तः विनष्ट इत्यर्थः । (१८) नीलानुरक्त ।

असम्बन्धान्नेति चेत् , कः पुनः भावविनाशयोः सम्बन्धः ? विशेषणीभावश्चेत् ; उक्तमत्र–'तस्यापि ताभ्यां भेदात् , सोऽपि तयोः क[थम् ] इति ? सम्बन्धान्तरकल्पने अनवस्था । तदभावेऽपि सा (स) तयोरिति चेत् , [३६१ क] समवायाद्यभावेऽपि गुणादयः सद्वतः स्युः अविशेषात् । न स कस्यचित् इत्यपि नोत्तरम् ; अध्यक्षेण तद्ग्रहणप्रसङ्गात् , इन्द्रियेण तद्-
५ सन्निकर्षात् । सन्निकर्षे वा, स न संयोगः ; तत्सम्बन्धस्याद्रव्यत्वात् । नापि संयुक्तसमवायादिः , तस्यातन्त्र्यापगमात् । साक्षात् सन्निकर्षे सुखादावपि तथैव इत्यलं तत्र सम्बन्धसम्बन्धकल्पनया । ननु भावविनाशोरय (नाशयो)र्विशेषणीभावेन (भावः सम्बन्धः) । विरोध इत्येके , सोऽपि न युक्तः ; अग्निनेव शीतस्य तेन भावर्तनात् (भावानिवर्तनात् ।) न वा (चा०)निवर्तको धर्मो विरोधी नाम, अतिप्रसङ्गात् । निवर्तने वाऽस्य ततो व्यतिरेकप्रसङ्गः
१० पूर्ववद्भवेद् अनवस्था च । अव्यतिरेके विनाशेन क्रियमाणो विनाशः तदव्यतिरिक्तो नान्य इति न युक्तो विभागः । ततः सूक्तम्–**क्रमोपलम्भ** इत्यादि ।

ननु भवतु 'क्षणिकस्य उत्पत्तिविनाशयोः तादात्म्यं सिद्धम्' इति, तत्तु न **क्रमोपलम्भनियमात्** , अपि तु सहोपलम्भनियमादिति चेत् , अत्राह–'**हेतु**' इत्यादि । **हेतुः** कारणम् **फलं** कार्यम् तयोर्यथासंख्येन यो **विनाशोत्पादौ** तयोः **समानकालोपलम्भाभ्युपगमात्** ।
१५ तथाहि–यदैव मृत्पिण्डस्य विनाशोपलम्भः तदैव शिवकोपलम्भः न पुनर्हेतुविनाशोत्पादयोः, इतरथा उत्पादविनाशयोः परस्परं विरोधिनोः एकत्र एकदा भावेन बाध्यबाधकभावे न किञ्चित् स्यादिति मन्यते । विनाशः फलात्मया विविक्तता, सा च तस्य उदयकाल एव प्रतीयते इति ; तदसत्यम् ; यतः तथाभ्युपगमात् । यथैव हि फलकाले हेतोरभावः प्रतीयते तथा हेतुकाले [३६१ख] फलस्यापि केवलं नस्त (नष्ट)रूपस्य तदभावः । एतदेवाह–**न च** इत्यादिना । **न**
२० **च** नैव **स्थितिरिव** उत्पत्तिसमय(मव)स्थानमेव **भावस्य विनाश [:]** स्वरूपस्य निवृत्तिः **सहोपलम्भनियमो यतः** स्थितिरिव विनाशात् [शः] स्यात् । **यतः** इति वा आक्षेपे, **यतः सहोपलम्भनियमः** स्यात् । नैव स्यात् , स्थित्या विनाशस्य तेन स्थितेर्बाधनात् । एतदपि कुतः ? इत्यत्राह–**विधि** इत्याह (दि) । यदा हेतोः उत्पादस्य तदा विनाशस्य उपलम्भो **विधिः मुखं** प्रधानं यस्य **प्रतिपधस्य**, न पूर्वं तदुदयस्य पश्चाद् विनाशस्य इत्येवं रूपस्य, स तथोक्तः स
२५ एव **फलं** यस्य सोऽपि तथोक्तः । कोऽसौ ? इत्याह–**नियमः** । **हि** शब्दो यस्मादर्थे । न च विधिरत्रास्ति इति दर्शयन्नाह–**क्षणस्थितेः** इत्यादि । **क्षणस्य** परकल्पितस्य या **स्थितिः** आत्मलाभः तस्याः यो **प्रत्यक्षानुपलम्भो** [दर्शना] दर्शने तयोः **एकस्वभावविषयतानुपपत्तेः** एकस्वभावो विषयो ययोः तयोर्भावः तत्ता, तस्या अनुपपत्तेः । केन विना ? इत्याह–**बहिरपेक्षया**

(१) विशेषणीभावस्यापि । (२) भावविनाशाभ्याम् । (३) सम्बन्धाभावेऽपि उत्पत्तिः (४) विशेषणीभावः । (५) द्रव्यस्य । (६) द्रव्य-द्रव्ययोरेव संयोगात् । (७) संयुक्तसमवायादिर्हि परतन्त्राणां गुणकर्मजात्यादीनां भवति । (८) संयुक्तसमवायरूपः सम्बन्धसम्बन्धः मनःसंयुक्ते आत्मनि सुखादीनां समवायात् । (९) उत्पादेन विनाशस्य तेन वोत्पादस्य बाधनात् न उत्पादो विनाशो वा स्यादित्यर्थः । (१०) क्रमवर्तिनः ।

इति । प्रथमक्षणे **प्रत्यक्षं** द्वितीयादौ **अनुपलम्भो बहिरपेक्षया विना,** युगपत् प्रत्यक्षानुपलम्भापेक्षया तदनुपपत्तेः इत्यर्थः ।

स्यान्मतम्–भवतु क्षणस्थितेः प्रत्यक्षानुपलम्भयोः बहिरपेक्षया एकस्वभावविषयतोपपत्तिः, तथा च किं स्यात् ? इत्यत्राह–**तथा च** इत्यादि । **तथा च** तेन च प्रकारेण **हेतुफलविनाशोत्पादयोः ऐक्यं** कथञ्चित्तादात्म्यं **स्याद्** भवेत् **सहोपलम्भनियमात्** । कुतः ? इत्यत्राह– ५ **पूर्वस्य** कारणस्य **वैकल्यम्** अभावः **अपरस्य** [३६२क] फलस्य **कैवल्यम् यतः** अनेन भिन्नमभावं निषेधति ।

ननु हेतोर्निवृत्तिरूपः प्रध्वंसः फलस्य च उत्पादः प्रागसतः कारणादात्मलाभः सत्तास्वभावः, तदनयोः अन्योऽन्यविरुद्धस्वभावयोः कथमैक्यमिति चेत् ? अत्राह–**न च** इत्यादि । **अनयोः** विनाशोत्पादयोः । किंभूतयोः ? इत्याह–**अन्योऽन्य** इत्यादि । [**अन्योऽन्यविरुद्धस्वभावयोः न च**] १० नैव **कथञ्चित्तादात्म्यं विरुद्धम्** तथाप्रतीतेरिति मन्यते । दृष्टान्तमाह–**श्रेय(माह–निश्चय)**त्यादि । तर्हि हेतुफलयोः विनाशोत्पादयोः ऐक्यं यदि परोऽभ्युपगच्छेत् को दोषः स्यात् ? इत्यत्राह–**जन्म** इत्यादि । फलस्य यज्जन्म हेतोर्यश्च **विनाशः** तयोः **ऐक्यमुपयन्** अभ्युपगच्छन् सौगतः । केन ? **साहस्थित्याह** स्थित्या [केन ? इत्याह–**सहस्थित्या**] किं कुर्यात् ? इत्याह–**भावं कथं प्रतिक्षिपेत् ?** किंभूतम् ? **प्रत्यक्षम्** अध्यक्षपरिच्छेद्यम् । पुनरपि किम्भूतम् ? इत्याह– १५ **सुख** इत्यादि ।

ननु सुखदुःखादीनाम् एकसन्ततिपतितानाम् सत्त्वचेतनाऽभेदात् यदि **तद्व्यापिन (त्व)**मुच्यते तर्हि सन्तानान्तरगतानामपि तदविशेषात् तदुच्यताम् । अथात्र कालादिभेदान्नैवमुच्यते; अन्यत्रापि नोच्यतां तदविशेषादिति चेत् ; अत्राह–**कालादि** इत्यादि । अत्र **आदिशब्देन** देशादिपरिग्रहः । चिन्तितमेतत्–'**स्वतोऽन्यतो वा स्वपरचेतसाम्**' इत्यादिना । न (स) हि २० साङ्ख्यकल्पितं भावं तद्व्यापिनं कथं प्रतिक्षिपेदिति चेत् ? अत्राह–**स्वलक्षणम्** इत्यादि । **स्व** आत्मा लक्षणं यस्य स तथोक्तः तमिति । कुतः ? इत्यत्राह–**परस्पर** इत्यादि । **परस्परं व्यावृत्तिः लक्षणं** यस्य तं **यतः** । '**प्रत्यक्षम्**' इत्येतदत्रापि योज्यम् । वैशेषिकादि [३६२ख] सम्बन्धिनं तं कथं प्रतिक्षिपेत् ? इत्यत्राह– **प्रतिक्षणं त्रिलक्षणं** प्रत्यक्षमिति ।

ननु च स्वसंविदां क्रमोपलब्धिनियमः कार्यकारणभावाद् एकसन्तानत्वाच्च न पुनरभेदात्, २५ ततोऽन्यथासिद्धो हेतुः इति किमर्थमुच्यते–'**क्रमोपलब्धिनियमात् स्यादभेदः स्वसंविदाम्**' इति चेत् ? अत्राह–**कार्यकारणता** इत्यादि ।

**[कार्यकारणता नास्ति क्षणिकानां क्व सन्ततिः ।**
**निरन्वयात् कुतस्तेषां सारूप्यमितरार्थवत् ॥७॥**

**सद्रूपसंस्थनादिविवर्त-विचित्रग्राह्यग्राहकाकारैकसाधारणज्ञानानुभवाविरुद्धं पूर्वोत्तरस्वभावभेदात् हेतुफलभूतं भावनैरात्म्यवादी प्रतिक्षिपतीति क्षणिकभावं समक्षमति-** ३०

(१) कार्यस्य । (२) सत्त्वेन चेतनत्वेन च अभेदात् । (३) सन्तानान्तरगतानाम् ।

लङ्घयति । सति क्षणिके कारणे यदि कार्यं स्यात् तदिदं जगत् क्षणिकमक्रमं निःसन्तानि च स्यात् । तस्मिन्नसति भवतः कुतः पुनः तदनन्तरोत्पत्तिनियमः यतस्तदनिष्टकालोत्पत्तिर्न भवेत् । सदेव तत्समर्थं कारणं स्वसत्ताकालमेव कार्यं प्रसह्य जनयेत् । स्वरसतः कार्योत्पत्तिकालनियमे स्वतन्त्रस्य कुत एव कार्यत्वम् । नैरन्तर्यमात्रात् प्रभवनियमे सर्वत्र
५ सर्वेषामविशेषे कुत एव नियमः । द्रव्यस्य प्रभवनियमे न किञ्चिदतिप्रसज्यते स्वहेतूपादानस्य परप्रत्ययतायाम् । न च निरन्वयानां भावानां सादृश्यात् प्रभवः सन्ततिर्वा व्यवस्थाप्येत तद्विपर्ययेऽपि तथोपलब्धेः । भेदैकान्ते सादृश्यं च यथा यथा विचार्यते तथा तथा विशीर्यते नीलनिर्भासज्ञानवत् ।]

**क्षणिकानां** भावानां हेतुफलभावो **नास्ति**, तदभावात् क्व बहिरन्तर्वा **सन्ततिः**
१० सन्तानः, तस्य तदात्मकत्वात् । तदभावोऽपि कुतः ? इत्याह- **निरन्वयात्** । क्षणिकानां स्वफलकाले सर्वथा विलयात् । सत्यपि कार्यकारण(भावाभावा)भावे पूर्वापरयोः सारूप्यम् एकसन्ततिव्यपदेशनिबन्धनं सत्यन्तराभावात् [स्यात्] तच्च नास्ति इति दर्शयति- **कुतः** कारणात् प्रमाणाद्वा **तेषां** क्षणिकानां **सारूप्यं** समानरूपता । निदर्शनमाह- **इतरार्थानामिव** इति ।

स्यान्मतम्- सकलशून्यतायाः निरंशप्रतिभासाद्वैतस्य चोपगमात् न सौगतानामयं दोष इति
१५ चेत् ; अत्राह- **सद्रूप** इत्यादि । । '**भावं प्रतिक्षिपति**' इत्ययुक्तम् , तत्प्रतिक्षेपे प्रमाणप्रतिक्षेपायोगे इति मन्यते । किम्भूतम् ? इत्याह- **समक्षम्** । । अनेन तत्प्रतिक्षेपे प्रत्यक्षबाधां दर्शयति । पुनरपि किंभूतम् ? इत्याह- **सद्रूप** इत्यादि । सदिति भावप्रधानोऽयं निर्देशः । तेन सत्त्वं स्वरूपं स्वभावो यस्य **संस्थानादेः**, आदिशब्देन सकलक्रमभाविवाह्यधर्मपरिग्रहः, स तथोक्तः, सद्रूपपदेन संस्थानादे[:] कल्पितत्वं निषेधति, **स विवर्तो** यस्य घटादेः स तथोक्तः । **विचित्रौ** [३६३क]
२० नानाप्रकारौ यौ **ग्राह्यग्राहकाकारौ** तयोः **एकं** च तत् **साधारणज्ञानं** च तदपि तथोक्तम् , पुनरनयोर्द्वन्द्वः तयो**रनुभवः** तेनाऽ**विरुद्धम्** । अनेनापि प्रतिभासाद्वैतमपि प्रत्यक्षबाधितं दर्शयति । तत एव क्रमानेकान्तोऽप्यविरुद्ध इति दर्शयन्नाह- **हेतुफल** इत्यादि । कुत एतत् ? **पूर्वम् उत्तरं** चेति चेत्राह (चेति, हेतुः पूर्वं फलञ्चोत्तरमिति) **स्वभावभेदात्** स्वरूपत्वाभावात्तावस्य (वात् 'भावस्य') इति सम्बन्धः । कः प्रतिक्षिपति इत्यादि (इत्याह-) **भावे**त्यादि । सौगतः इत्यर्थः ।
२५ अथ मतम्- '**क्षणिकभावं समक्षमतिलङ्घयति**' इत्युक्तम् , (इत्ययुक्तम्) तस्य सकलहेतुफलभावव्यवहारनिबन्धनत्वात् नान्यं विपर्ययात् इति चेत् ; अत्राह- **सती**त्यादि । **सति** विद्यमाने **क्षणिके** क्षणमात्रावलम्बिनि **कारणे यदि कार्यं स्याद्** उत्पद्येत **तत्** परेणोपगतमिदं विचार्यमाणं **जगत्** स्यात् । कथम्भूतं तत् ? इत्याह- **क्षणिक**मिति । किम्भूतं स्यात् ? इत्याह- **अक्रम**मेव (मेक)क्षणप्रतिष्ठं[6] स्यात् इत्यर्थः । तथा च परलो[का]दिसाधनं परस्य स्ववचनबाधितं

(१) सन्तानस्य हेतुफलभावरूपत्वात् । (२) कार्यकारणभावाभावोऽपि । (३) येन प्रमाणेन तत्प्रतिक्षेपः क्रियते तस्य भावरूपत्वादिति भावः । (४) रूपम् । (५) क्षणिकस्य । (६) सति कारणे यदि कार्यं तदा सर्वेषामुत्तरोत्तरकार्यभूतक्षणानां पूर्वपूर्वकारणकाले संक्रमात् एकक्षणमात्रं जगत् ।

भवेदिति मन्यते। पुनरपि किम्भूतं स्यात ? इत्याह–**निःसन्तानि** सन्तानिनः उपादानोपादेय-भूतक्षणाः तेभ्यो निष्क्रान्तं निरस्ते (स्तं) वा येन **तन्निःसन्तानि** सव्येतरगोविषाणवत्। अक्रमाणां हेतुफलभावविरोधात इति भावः। यदि वा, यत एवाक्रमत (मं तत) एव निःसन्तानि क्षमात्र (क्षणसन्तान) रहितं भवेत। पूर्वोत्तरहेतुफलयोरभावे कार्यकारणत्वादव (त्वाभावः) स्यादित्यर्थः। तथापि सत्त्वे न सामान्यादिनिषेधः। एतदुक्तं भवति–स्वोत्पत्तिसमये क्षणिकं कारणं ५ सत , तदेव कार्यभावे [३६३ख] हेतुफलयोः समसमयता इति। अथवा साम्प्रतिकं कार्यं पूर्वमुत्तरं वा कारणं स्वकाले जनयति, तदपि स्वकारणस्वकाले (कारणकाले) तदपि स्वकारणं स्वकाले (कारणकाले) इति उत्पत्तिकालानवस्थितेः अक्रमम। उपलक्षणमेतत, तेन असहभावि च स्यादिति।

अथ मा भूदयं दोष इति कालभूतो (कालभेदो) हेतुफलयोरिष्यते; तत्राह–**तस्मिन्नसति** १० इत्यादि। **तस्मिन्** क्षणिके कारणे **असति** अतीते विनाशे, न भाविन्यनुत्पन्नसत्त्वेन, कार्यकाले अविद्यमाने **भवतो** जायमानस्य कार्यस्य **कुतो** निमित्तात न कुतश्चित। **पुनरि**ति वितर्के **त-[दनन्त]रोत्पत्तिनियम[ः]** **तस्य** कार्यस्य **कारणानन्तरोत्पत्तिनियमः**। **तस्य** वा कारणस्य योऽनन्तरः कालः तत्रो **त्पत्तिनियम** इति। **यतः** तन्नियमान्न **भवेत्**। किम् ? इत्यादि (इत्याह)। **तस्य** कार्यस्य **अनिष्टकालोत्पत्तिः** पूर्वभावि[त्वे]नाभिमतं पश्चात स्यात, पश्चाद्भावित्वेन १५ वा पूर्वं स्यात , इति नानुमेयादिव्यवहारो नियतः स्यादिति मन्यते। कारण सति भावतो-हेतुकत्वम (कारणेऽसति भवतोऽहेतुत्वम् ) अहेतोश्च न देशादिनियमः इति। यदुक्तं स्वयमेव परेण *"नित्यं सत्त्वमसत्त्वं वा" [प्र० वा० १।१८२] इत्यादि।

स्यादेतत् कालान्तरे स्वयमेव भवतः कार्यस्यायं दोषो न कारणात् भिन्नदेशमिव भिन्न-कालमपि कारणं कारणमेव, यथादर्शनं तद्व्यवस्थानात। दृश्यते च प्रबोधकाले असदपि २० जाग्रद्विज्ञानं तत्कारणमिति ; तत्राह–**सदेव** इत्यादि। **सदेव** नान्तं (**तत्**) **समर्थं** कार्यजननयोग्यं [३६४क] **कारणं** कर्तृ **कार्यं जनयेत्**। किं कालम ? इत्याह–**स्वसत्ताकालमेव** आत्मसत्ताकालमेव **प्रसह्य** हठादिति। अत्रायमभिप्रायो यथा 'नित्यं यदेव स्वयं समर्थं तदेव प्रसह्य कार्यं जनये-[न' इ] त्युच्यते तथा क्षणिकमपि। यदि पुनः पूर्वं समर्थमपि क्षणिकं कार्यकालमेव कार्यं जनयेत तत्स्वभावत्वात ; तथा नित्यमपि। तदुक्तम–*"**यद्यदा कार्यमुत्पित्सु**" [सिद्धिवि० ३।११] २५ इत्यादि। तन्न युक्तम्–'क्षणिकत्वेन कार्यजनकत्वं व्याप्तम' इति, अन्यत्राप्यविशेषात। अथ स्वकाले समर्थेऽपि कारणे कार्यं स्वभावतः पश्चाज्जायते; तत्राह–**स्वरसतः** इत्यादि। **स्वरसतः** स्वभावतः **कार्यस्य उत्पत्तिकालनियमं** कस्यचिदनन्तरम , अपरस्य कालान्तरे उत्पत्तिनियमः उत्पत्तिकालनियमः तस्मिन्नङ्गीक्रियमाणे **स्वतन्त्रस्य** स्वप्रधानस्य **कुत एव कार्यत्वं** नित्यपक्षवत्

(१) अर्थक्रियाकारित्वाभावेऽपि। (२) नित्य। (३) पूर्वमुत्तरं वा कारणं साम्प्रतिकं कार्यं स्वकाले पूर्वकाले उत्तरकाले वा जनयति। पूर्वं कारणं भवत्येव। उत्तरं तु भाविकारणापेक्षया उक्तम्। (४) पूर्वत्र उत्तरत्र वा। (५) अभिमतम्। (६) अकारणस्य। (७) 'हेतोरन्यानपेक्षणात्। अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः।' इति शेषः। (८) प्रज्ञाकरः प्राह। (९) कारणमन्तरेण। (१०) उत्पन्नस्य।

इति मन्यते । परतन्त्रं हि कार्यम् , परस्मिन् समर्थे अवश्यं जायते इति । परस्य तु दर्शनम्-पूर्वमनन्तरं कारणम् अपरं कार्यमिति ; तत्राह-नैरन्तर्येत्यादि । कार्यकारणयोः नैरन्तर्यं व्यवधानाभावः तन्मात्रात् प्रभवनियमे हेतुफलनियमे कुत एव नियमो न कुतश्चित् ? कुतः ? इत्याह-सर्वत्रेत्यादि । सर्वत्र कार्ये अन्यत्र च सर्वेषां कारणानाम् इतरेषां च अविशेषे निरन्तरत्वसंभवात् कुत एव नियम इति ।

ननु सर्वत्र कार्यकारणा (ण)भावेऽयं दोषः इति सं न भवेत् इति चेत् ; अत्राह-द्रव्यस्य इत्यादि । द्रव्यस्य जीवादेः प्रभवनियमे अङ्गीक्रियमाणे न [३६४ख] कश्चिद (किञ्चिद्)नन्तरमतिप्रसज्यते । किम्भूतस्य ? इत्याह-स्वहेत्वित्यादि । कदा ? इत्याह-परेत्यादि । परोऽन्यः प्रत्ययः सहकारिकारणं यस्य तस्य भावः तत्ता तस्याम् । चर्चितमेतत्-

१० *"अनादिनिधनं द्रव्यमुत्पित्सु स्थास्नु नश्वरम् ।
स्वतोऽन्यतो विवर्तेत क्रमाद्धेतुफलात्मना ॥" [सिद्धिवि० ३।१९] इत्यादिना ।

स्यादेतत् नानन्तर्यमात्रात् तन्नियमः अपि तु सादृश्यात् , पूर्वं सदृशमुपादानम् इतरद् उपादेयमिति चेत् ; अत्राह- नचेत्यादि । [न च] नैव निरन्वयानाम् अन्वयरहितानाम् । केषाम् ? भावानां सादृश्यात् समानरूपत्वात् प्रभवः कार्यकारणभावः सन्ततिः सन्तानः,
१५ वेति समुच्चये, व्यवस्थाप्यते । कुतः ? इत्यत्राह-तदित्यादि । तद्विपर्ययेऽपि सादृश्यविपर्ययेऽपि न केवलमविपर्यये तथा प्रभवसन्ततिप्रकारेण उपलब्धेः 'भावानाम्' इति सम्बन्धः । तथाहि-काष्ठभस्मनोः अनुमान-सुगतज्ञानयोः सादृश्याभावेऽपि तथोपलब्धिरिति । यदि वा, तद्विपर्ययेऽपि प्रभवादिविपर्ययेऽपि तथा सादृश्यप्रकारेण यमलकादिवद् भावानाम् उपलब्धेः इति । सादृश्यमभ्युपगम्य इदमुक्तम् , यावता भेदैकान्ते तदेव नास्ति इति दर्शयन्नाह-सादृश्यं च
२० इत्यादि । सादृश्यं च शब्दो दूषणसमुच्चये यथा यथा येन येन भेदाभेदादिप्रकारेण विचार्यते तथा तथा विशीर्येत (र्यते) । क्व ? भेदैकान्ते । प्र ज्ञा क र गु प्त स्य च नित्यत्ववत् सादृश्येऽपि कथं प्रमाणवृत्तिः इति चिन्त्यताम् ? यथैव हि मध्यक्षणग्राहिणा प्रत्यक्षेण पूर्वापर-[३६५क] क्षणयोरग्रहणे न तद्गतैकत्वस्य ग्रहणं तथा सादृश्यस्यापि । अत्र निदर्शनमाह-नीलेत्यादि । नीलो निर्भास आकारो यस्य तच्च तज्ज्ञानं चेति तस्येव तद्वदिति ।

२५ एवं नैरात्म्ये निरस्ते सति यत्सिद्धं तद्दर्शयन्नाह-प्राप्तेत्यादि ।

**[ प्राप्तव्यक्तिनिरोभावो जीवः सिद्धः प्रतिक्षणम् ।**
**स स्वापादिप्रबोधात्माऽनादिः संसारमुज्झति ॥८॥**

**द्रव्याश्रयस्य गुणान्तराधानस्य प्रतिषेद्धुमशक्यत्वात् । प्रतिक्षणं व्यक्तितिरोभावौ**

(१) बौद्धस्य । (२) अव्यवहितम् । (३) उत्तरमनन्तरम् । (४) कार्यकारणभावः । (५) कार्यकारणनियमः । (६) श्रुतमयी भावना परार्थानुमानरूपा चिन्तामयी च भावना स्वार्थानुमानरूपा, ताभ्याम् अनुमानरूपाभ्यां योगिज्ञानं निर्विकल्पकं जायते इत्यर्थः । (७) सादृश्यमेव । (८) पूर्वापरगतैकस्य । (९) पूर्वापरसादृश्यस्यापि न ग्रहणमिति ।

**समनुभवतः क्रमवृत्तेस्तथैवाऽप्रतिषेधात्। स्वापप्रबोधान्यथानुपपत्तेः अनादिरयम्। सन्तानस्यापि परिणामिनमन्तरेण नियमासंभवात्। परत्वव्यावृत्तेः संसारे निर्वाणे वैकः सिद्धः।]**

**जीव** आत्मा **सिद्धो** निश्चितः। किंभूतः ? इत्याह–**प्राप्तौ व्यक्तितिरोभावौ** येन स तथोक्तः। क्व ? **प्रतिक्षणं** क्षणं क्षणं प्रति। तथाहि–सच्चेतनादिरूपेण प्राप्तव्यक्तिभावः क्षणक्षयादिरूपेण प्राप्ततिरोभावः। न चैकत्र दृश्येतरस्वभावविरोध इति निरूपितम्। ५

ननु दृश्याद् यदि अदृश्यं रूपम् अभिन्नम्, दृश्यमेव स्यादिति चेत; स्यादेव तदेवं (स्यादेतदेवं) यदि वस्तुसत्तापेक्षाणि ग्रहणानि[1] स्युः यावता पुरुषशक्त्यपेक्षाणि। पुरुषो [य]-दि समर्थः किञ्चिन्[2] अत्यन्तमपि भिन्नेन[3] सह गृह्णाति यथा चन्द्रमसा स्वाङ्गुलिम्। विपरीत[4]: पुनरपि भिन्नेनापि सह न गृह्णाति यथा चन्द्रपर्वतयोः संलग्नतादर्शी तद्विवेकेन ताविति। अथ दृश्यस्य अदृश्येन सहैकत्वे खरविषाणेनापि स्यात्; तर्हि दृश्यस्य नीलाकारस्य ज्ञानस्य दृश्येनापि १० पीताकारेण एकत्वे सर्वस्य स्यादविशेषात्। एकत्वाभावे सर्वाभाव इत्युक्तम्। अथ यथा कस्यचिन्नीलज्ञानस्य केनचित् पीताकारेण एकत्वं प्रतीयते, नैवं सर्वस्य सर्वेण; तर्हि यथा चन्द्रपर्वतयोः तद्विवेकन नैवं (तद्विवेको नैवं) खरविषाणेन इति समानम्। अनुपलब्धि न(म्भेन) कथमिति चेत् ? पुरुषान्तरेणोपलम्भ(लभ्य)मानेन [३६५ख] स्यात्, अन्यथा अनुमानेनापि प्रतीयमानेन क्षणिकत्वेन एकत्वं शब्दादेर्न स्यात्, स्वयं वा पुनरुपलभ्यमानेन। कुतः पश्चाद् उपलभ्यमानं १५ पूर्वोपलब्धस्य रूपमिति चेत् ? 'तथाप्रतीतेः' इति ब्रूमः, अक्रमेणेव क्रमेणापि चित्रैकवस्तुग्रहणप्रसाधनात्। ततः '**प्राप्तव्यक्तितिरोभावः**' इति युक्तम्।

ननु यद्यात्मा बोधस्वभावः, सर्वदा तद्रूपत्वात् स्वापाद्यवस्थाभावश्चेत्; अत्राह–**स** जीवः **स्वापादिप्रबोधावात्मानौ यस्य** इति। एवं मन्यते–यथा प्रबोधरूपे[5]ऽपि प्रतिबन्धकारणवशात् प्राप्तव्यक्तितिरोभावौ युगपत् तथा क्रमेणापि स्वापादिप्रबोधात्मेति। यस्तु मन्यते–स्वापा- २० दावनुपलम्भात् तदभाव इति; तस्य तत एव सर्वत्र क्षणक्षयाभावः। तदुपलम्भे[6] स्वापादौ जीवोपलम्भः किन्न स्यात् ? अत्र तदभावः[7]; अन्यत्र अनुमानाद्यभावः।

ननु यथा क्षणिकत्वव्यवस्थापकं सत्त्वादि लिङ्गम्, नैवं तत्र[8] आत्मव्यवस्थापकं किञ्चित् इति [चेत् ?] 'प्रबोधः' [इति] शिष्मः[9]। नहि चिरव्यतीते उपादाने जायमाने कार्ये उभयप्रसिद्धमुदाहरणमस्ति। सर्वं सर्वस्य [10]तथाविधम् उपादानम्, चिरविनष्टं चेदुपादानम्। सादृश्यं २५ व (च) कृतोत्तरम्। ततो युक्तम्–**स्वाप**त्यादि। [यदि] पुनरेतन्मतं [11]परस्य गर्भादिमरणपर्यन्त एव जीवः सिद्धो नानाद्यनन्तः प्रमाणाभावात्। न च तेन परलोकवादिनः सिद्धेनापि [12]किञ्चिदिति। तत्राह–**अनादिः** इति। अनन्तश्च उपलक्षणत्वादस्य। तथाहि–यद् द्रव्यं तदनाद्यनन्तात्मकं यथा पुद्गलद्रव्यं [३६६क] पृथिव्यादिद्रव्यं [च] जीवः। जीवो **द्रव्यम्** गुण-

(१) ज्ञानानि। (२) वस्तु। (३) वस्तुना। (४) असमर्थः। (५) बोधरूपत्वात्। (६) क्षणक्षयोपलम्भे। (७) जीवाभावः। (८) स्वापादौ। (९) ब्रूमः। (१०)चिरविनष्टम्। (११) चार्वाकस्य। (१२) किञ्चित् प्रयोजनम्।

पर्यायात्मकत्वात् तद्वत् [1]। तत्र गुणाः ज्ञानादयः पर्यायाः सुखादयश्चोक्ताः । न च जीवः पृथिव्यादिपर्यायः, तन्निषेधात् । शेषमत्र चिन्तितम् ।

नन्वसौ जीवः संसारस्वभावोऽन्यथा वा भवेत् ? प्रथमपक्षे–निर्वाणप्रहाणम् । द्वितीये संसाराभावः । कदाचित् संसाररूपः अन्यदा अन्यथा इति चेत् ; अनित्यत्वमिति तदभावः [2] इति चेत् ; अत्राह–**संसारम् उज्झति** इति । **संसारं** गर्भादिसंचरणम् तत्कारणं भाव[कर्म [3]] द्रव्यकर्म च **उज्झति** त्यजति सामर्थ्यविशेषवशात् । कथञ्चिदनित्यत्वं च नानिष्टम् अनेकान्तवादिनाम् इति ।

कुत एतत् ? इति चेत् ; अत्राह–द्रव्येत्यादि । संसरणलक्षणात् **गुणात्** स्वरूपाद् मोक्षरूपो गुणः **तदन्तर(रं) तस्याधानं** सम्यग्दर्शनादिना स्वाधारत्वव्यवस्थापनम्, तस्य **प्रतिपद्भुमशक्यत्वात्** । किंभूतस्य ? इत्याह–**द्रव्याश्रयस्य** द्रव्यम् आश्रयो यस्य इति । अनेन सौगतनैयायिकादिकल्पितस्य निराश्रयस्य शक्यनिषेधतां दर्शयति । नहि नित्यैकस्वभावः तस्य आत्मा आश्रयो युक्तः । आश्रितस्य तेन [4] व्यतिरेके मोक्षसंसारयोरन्यतर एव ऐकान्तिकः । व्यतिरेके न तस्य तौ; असम्बन्धात् [5], समवायनिषेधात् । तदनिषे[धे]ऽव्यतिप्रसङ्गात्, तस्यापि ततो व्यतिरेकात् । प्रतिपद्भुमशक्यत्वं च कुतः ? इत्याह–**प्रतिक्षणम्** इत्यादि । क्षणं क्षणं प्रति **व्यक्ति-तिरोधाभावौ (तिरोभावौ) समनुभवतो** जीवस्य **क्रमवृत्तेः तथैवाऽप्रतिषेधात्** ।

ननु यस्यां प्रतिबोधावस्थायां व्यक्तिः न तस्या (स्यां) तिरोभावः, यस्यां स्वापाद्यवस्थायां तिरोभावो न तस्यां [३६६ख] व्यक्तिः, अतो[ऽ]दर्शनात् तत्र तं भाव (तद्भावः) इति चेत् ; अत्राह–**स्वाप** इत्यादि । निरूपितमेतत् । तदनुपपत्तेः किं जातम् ? इत्याह–**अनादिरयं** स्वसंवेदनप्रत्यक्षग्राह्यो जीवः । एवं मन्यते–यथा स्वापादिदशापरिगतः पुनः प्रबुद्धो भवति, प्रबुद्धो वा तद्दशापरिगतः, तथा जीवोऽनादिः । [न जीवोऽनादिः] अपि तु ज्ञानक्षणसन्तानः, तत्रैव बन्धमोक्षव्यवस्थेति चेत् ; अत्राह–**सन्तानस्यापि** इत्यादि । सन्तानस्यापि न केवलं बन्धमोक्षयो[ः] **परिणामिनं भावमन्तरेण नियमासंभवात्** । सर्वः सन्तानः सर्वस्य यस्मा (स्यात्) तन्नियामकस्य प्रभवादेर्व्यभिचारात्, **संसारे निर्वाणे वा एक[ः] सिद्धः** ।

तनु (ननु) योऽसौ संसारनिर्वाणयोरेकः [11] ततस्तयोरव्यतिरेके अभेदः स्यात् । यो हि अभिन्नादभिन्नः सोऽप्यभिन्न एव [यथा] स्वरूपम्, अभिन्नौ च अभिन्नात् [12] संसारमोक्षौ इति चेत् ; अत्राह–**परत्वव्यावृत्ते(त्तेः इति)** । **परत्वं** नानात्वं संसारनिर्वाणयोः ऐकान्तिकं यत् तस्य **व्यावृत्तेः** तत्र **एकः सिद्धः** । [13] तयोः नैकान्तेन अभेदो भेदो वा; अन्यथा संसारनिर्वाणयोरेकाधिकरणत्वाभावात् अनुपादानं निर्वाणं स्यादिति भावः ।

(१) पृथिव्यादिवत् । (२) जीवाभावः । (३) रागादि । (४) पुद्गलात्मकम् । (५) जीवस्य । (६) नित्यद्रव्यादभेदे । (७) सम्बन्धाभावात् । (८) समवायस्यापि । (९) स्वापप्रबोधान्यथानुपपत्तेः । (१०) स्वापादिदशापरिगतो भवति । (११) संसारनिर्वाणयोः । (१२) जीवात् । (१३) संसारनिर्वाणयोः ।

ननु हेतुफलभूताः क्षणा एव प्रत्यक्षा नात्मा कश्चित् । तेषु एकप्रतीतिस्तु सतो (सत्तो)-पलम्भेन सदृशापरोत्पत्त्या वा विप्रलम्भेन आरोपितविषया यमलकवत् मायामा(गो)लकवच्च । ततो चेतःक्षणे (चित्तक्षणाः) एव परमार्थसन्तः नैकत्वमिति चेत्; अत्राह–[अ]क्रमम् इत्यादि ।

**[ अक्रमं क्रमजन्मार्थैः सदसद्भिर्भात्यविद्यया ।**
**बहिरन्तर्मुखाकारैः सद्भिस्तत्त्वमिव स्वयम् ॥९॥**　　५
**भेदोऽपि न परमार्थः तद्वदित्यपरे विदुः ।**
**भेदैकान्तेऽपि न वै कारकज्ञापकस्थितिः ॥१०॥**

नापि बहिरन्तर्वा प्रतिक्षणं परमार्थतो भेदोपलब्धिर्यथा व्यावर्ण्यते, प्रत्यक्षस्य विप्रतिपत्तिविषयत्वात् निर्विषयत्वाच्चानुमानस्य । न वै किञ्चिज्ज्ञानं सन्मात्रतत्त्वं व्यभिचरति भेदष्वेव व्यभिचारात् । स्वपरसन्तानविकल्पस्य मिथ्यावभासाद् भेदैकान्तेऽपि १० कुतः सिद्धिः ? व्यापारादिबुद्धेश्च समीहामात्रव्यभिचारे पारम्पर्येणापि क्रियाऽव्यभिचारः किन्न स्यात् यतो बहिरर्थसिद्धिर्न भवेत् ? स्वपरक्रमविकल्पानां सर्वथाऽविद्यात्मकत्वात् सर्वविकल्पातीतं तत्त्वमिति; तदनुपपत्तिः प्रमाणाभावात् भेदैकान्तवत् ।]

**सत्** सत्ता भावप्रधा[नत्वा]न्निर्देशस्य । **नाति (भाति)** प्रतिभासते । किंभूतम् ? [३६७क] इत्याह–**अक्रम (मं)** हेतुफलादिक्रमरहितम् । कैः सह भाति ? इत्याह– १५ **असद्भिर**विद्यमानैः । केन कारणेन तथाविधैः तैः तदाभाति ? इत्याह–**अविद्यया** इति । **अविद्यया** मिथ्याज्ञानेन, न पुनर्विद्याया अभावेन तस्य हेतुत्वायोगात् । स्यादन्येन; विद्यायाः सत्तालक्षणायाः अन्यस्याभावात् । अवस्तुभूता[या]स्त्वविद्यायाः ततः तत्त्वान्य त्वाभ्यामवाच्यत्वादिति । अत्र सौगतप्रसिद्धं निदर्शनमाह–**बहिरि**त्यादि । 'यथा' अर्थे इवशब्दः । **तत्त्वं** ज्ञानलक्षणं यथा **बहिरन्तर्मुखाकारैः सद्भिः आभात्यविद्यया** तथा **सत्** । ततोऽ- २० भेदवत् **भेदोऽपि न परमार्थ इत्येवमपरे** सौगतादन्ये सत्तैकान्तवादिनो **विदुः** इति । इदं व्याख्यानं सुन्दरं यद्वक्ष्यति वृत्तौ–'**नवै किञ्चिज्ज्ञानं सन्मात्रतत्त्वं व्यभिचरति भेदष्वेव व्यभिचारात्**' इति । अथवा यदुक्तम्–"**संसारे निर्द्वाणा (निर्वाणे) वैक (कः) सिद्धः**' इति; तदसत्यम्; किन्तु स सकलपुरुषपरिणामादिकल्पित[ः] स्यात् । यदुक्तम्–*"**पुरुष एवेदम्**" [ऋक्० १०।९०।२] इत्यादि । *"**विश्वः सन्मात्रदेहो विविधकृतिरिह द्रव्यमेकं** २५ **(कः) पदार्थः ।**" इत्यादि च । यदि वा ब्रह्मैव परमार्थसत् अपर(रोऽ)विद्यावशादाभातीति वादिकल्पितः स्यात् । एतदप्युक्तम्–

(१) हेतुफलभूतक्षणेषु । (२) "तां पुनरनिश्यतां पश्यन्नपि मन्दबुद्धिर्नाध्यवस्यति सत्तोपलम्भेन सर्वदा तद्भावशङ्काविप्रलब्धः सदृशापरोत्पत्तिविप्रलब्धो वा···"–प्र० वार्तिकाल० २।२०८ । (३) "क्वचित्तदपरिज्ञानं सदृशापरसम्भवात् । भ्रान्तेरपश्यतो भेदं मायागोलकभेदवत् ॥"–प्र० वा० २।१०४ । हेतुबि० टी० पृ० १२० । (४) ज्ञानाभावस्य । (५) इवशब्दः 'यथा' इत्यस्यार्थे । (६) अस्मिन्नेव श्लोके । (७) पूर्वश्लोके ।

*"यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
संकीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥
तथेदममलं ब्रह्म निर्विकल्पमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं प्रपश्यति ॥" [३६७ख]
[बृहदा० भा० वा० ३।५।४३,४४ ।] इति

५ दर्शयन्नाह–**अक्रममित्यादि । तत्त्वमाभाति इत्यपरं** पुरुषवादिनो **विदुः ।** किंभूतम् ? **अक्रमम् स्वगम्** उत्पत्तिविनाशादिवर्जितम् । केनाभाति ? इत्याह–**क्रमजन्मार्थैः** इति । किंभूतैः ? इत्याह– **असद्भिरिति । सद्भिः** इत्यनेनात्र सम्बन्धः ।

ननु यदक्रमं तत्कथं क्रमवदाभाति इति चेत् ? अत्राह–**बहिरि**त्यादि । अस्यायमर्थः–
१० यथाऽक्रमं विज्ञानतत्त्वं भेदवादिनः **बहिरन्तर्मुखाकारैः सद्भिराभाति** तथा प्रकृतमपि इति । अनेन *"**पुरुष**" [कक०] इत्यादि दर्शितम् । तथा अक्रमं तत्त्वमाभाति । कैः ? **क्रमजन्मार्थैः ।** किंभूतैः ? इत्याह–**असद्भिरिति** । संभवतो विशेषणविशेष्यभावः इति '**अविद्यया**' इति विशेषणम् अ[नेनै]व सम्बध्यते न पूर्वेण । **बहिरि**त्यादि निदर्शनम् । अविद्यया बहिरन्तः तत्त्वमाभाति इति ।

१५ ननु यदि सत्तामात्रं तत्त्वं कथं कारकादिभेदप्रतीतिः[1] इति चेत् ? अत्राह–**भेदैकान्तेऽपी**त्यादि । न केवलम् अभेदैकान्ते सत्तैकान्ते किन्तु **भेदैकान्तेऽपि** कार्यकारणभावनिषेधात् **कार [काणां]** कर्त्रादीनां **ज्ञापकानां** प्रत्यक्षादीनां **स्थितिः**[2] **नवं** नैव **परमार्थतः** किन्तु कल्पनातः । कल्पना च अन्यत्रापि ।

ननु भेदैकान्तस्य प्रमाणविषयत्वात् तत्र तत्स्थितिः परमार्थत इति चेत् ; अत्राह–**प्रति-**
२० **क्षणम्** इत्यादि । क्षणं क्षणं प्रति **नापि भेदोपलब्धिः** । क्व ? इत्याह–**बहिरन्तर्वा** । कथं नास्ति ? इत्याह–**यथा** येन क्षणिकैकपरमाण्वाकारप्रकारेण **व्यावर्ण्यते** सौगतैः भेदोपलब्धिः तेन प्रकारेण । कुत एतत् ? [३६८क] इत्यत्राह–**प्रत्यक्षस्य** इत्यादि । **प्रत्यक्षस्य** परकल्पित-कल्पनापोढाभ्रान्तज्ञानस्य[3] **विप्रतिपत्तिविषयत्वात्** विवादगोचरत्वात् । नहि तद् वादिप्रतिवादिनोः अविगानेन प्रसिद्धम् , येन ततः किञ्चित् सिद्धं चेत् अविवादं स्यादिति न सौगतेन
२५ तदेकान्ते[4] साधनं वाच्यम् । न चान्यकल्पनया सिद्धं नाम कस्यचित् साधनं वा अन्यथा बुद्धि-चैतन्ययोर्भेदसिद्धिरेवं[5] किन्न स्यात् ?

स्यान्मतम्–मा भूत् एकैकपरमाणुनिष्ठस्य प्रत्यक्षसिद्धिः ततो वा वस्तुनः; व्यवहारात्तु परस्य स्यात् , ततो भेदोपलब्धिरपि स्यादिति चेत् ; अत्राह–**प्रत्यक्षस्य विरुद्धा विचित्रा वा**
३० **प्रतिपत्तिः** अनेकान्तप्रतिपत्तिः **तद्विषयत्वात् ।** नापि भेदोपलब्धिः यथा व्यावर्ण्यत इति । मा भूत् प्रत्यक्षात्तदुपलब्धिः अनुमानात् स्यादिति चेत् ; अत्राह–**निर्विषयत्वाच्च अनुमान-**

(१) कारकक्रियादीनां भेदप्रतीतिः । (२) कारकज्ञापकस्थितिः । (३) "प्रत्यक्षं कल्पनापोढम-भ्रान्तमिति"–न्यायबि० १।४ । (४) क्षणिकैकान्ते । (५) सांख्यमतीय ।

स्येति । सामान्यविषय[मनु]मानम् *"अन्यत् सामान्यं सोऽनुमानस्य विषयः" [न्यायबि० १।१६,१७] इति वचनात् । सामान्यं च परस्य[1] न किञ्चित्, ततो मरीचिकाजलज्ञानवत् नातो[2] वस्तुसिद्धिरिति भाविभक्तिपरिणामेन[3] सम्बन्धः । एतदुक्तं भवति–यदि प्रत्यक्षं पूर्वं पश्चाच्च भेदैकान्तविषयं स्यात् युक्तमेतत्–तत उत्पत्तेः तदव्यभिचाराच्च तत्रानुमानं प्रमाणमिति, न चैवमिति । ५

यत्पुनरेतत् परस्य[4] मतम्–यद्यपि बहिरन्तश्च भेदवदभेदस्यापि प्रतिभासः तथापि भेद एव पारमार्थिकोऽव्यभिचारात् न (ना) भेदो विपर्ययादिति; तत्राह–न वै किञ्चिदि [त्यादि] [३६८ख] न वै नैव किञ्चित् प्रत्यक्षम् अन्यद्वा ज्ञानम् तन्मात्रतत्त्वं व्यभिचरति । क्व तर्हि तस्य व्यभिचारः ? इत्याह–भेदेष्वेव व्यभिचारात् ज्ञानस्येति । तथाहि–द्विचन्द्रादिज्ञानं द्वित्वं व्यभिचरति । ततो भेदवदभेदस्यापि न वा कस्यचित् सिद्धिरिति । १०

ननु सत्तामात्रं चेत् तत्त्वम्; तर्हि प्रतिपाद्यप्रतिपादकभेदविरहात् कुतः कः तत्त्वं प्रतिपादयत इति चेत् ? अत्राह–स्वेत्यादि । स्वो वादी परः प्रतिवादी तयोः सन्तानौ तयोर्विकल्पस्या व्य (ध्य) वसायस्य भेदस्य वा मिथ्यावभासाद् भेदैकान्तेऽपि कुतः सिद्धिः भेदैकान्तस्येति । तथाहि–स्वसन्तानप्रत्यक्षस्य विप्रतिपत्तिविषयत्वात्, अनुमानस्य निर्विषयत्वात्, परसन्तानविषयस्य[5] स्वप्ने तदभावेऽपि[6] व्यापारादिलिङ्गभावादिति भावः । अथ जाग्रद्दशायां परचेतसो व्याहारादिः १५ साक्षात्, स्वप्ने परम्परया, ततो न व्यभिचार इति; अत्राह–व्यापार इत्यादि । व्यापारादिबुद्धेश्च समीहा चेष्टा सैव तन्मात्रम् तत्राव्यभिचारे अङ्गीक्रियमाणे । केन प्रकारेण ? इत्याह–पारम्पर्येणापि । अपि शब्दात् 'साक्षात् तदव्यभिचारे' इति ग्राह्यम्, क्रियाऽव्यभिचारः क्रिया व्यापारव्याहारात्मिका इह गृह्यते, क्रियाग्रहणम् उपलक्षणं तेन घटादेरपि ग्रहणम्, तदव्यभिचारः किन्न स्यात् ? स्यादेव 'तद्बुद्धेः' इति सम्बन्धः, यतोऽव्यभिचारस्या (स्य) भवनाद्, बहिरर्थसिद्धिर्न भवेत् । एवं मन्यते–यथा स्वप्ने अर्थरूपक्रियाविरहेऽपि तदवभासदर्शनात् अन्यदापि[7] तद्विरहेऽपि[8] तदवभास इति [३६९क] नार्थसिद्धिः तथा स्वप्ने परम (पर) समीहा[ऽ]भावेऽपि व्यापारव्याहारनिर्भासबुद्धेर्भावाद् अन्यत्रापि[9] तदभावेऽपि[10] तद्भाव[11] इति न सन्तानान्तरसिद्धिः इति । २०

एतेन स्वप्नान्तिकशरीरमवितथं कल्पयन्[12] विनिवारितो द्रष्टव्यः बहिरर्थाऽनिराकरणात् । २५

अत्र प्रज्ञाकरमतमाशङ्क्य दूषयितुं स्वपरेत्या [दि] । सर्वविकल्पातीतं तत्त्वम् इति । कुतः ? इत्यत्राह–सर्वथा[ऽ]विद्यात्मकत्वात् । कस्य ? इत्याह–स्वेत्यादि । स्व स्व [श्च] परश्च क्ष (क्र) मश्च हेतुफ[ल]भावः तेषां विकल्पो व्यवसायः । अनेन तेषां प्रत्यक्षविषयतां दर्शयतां (ता सत्तां) दर्शयति तस्य । अत्र दूषणमाह–प्रमाणाऽभावाद् इत्यादि । तस्य सर्व-

(१) बौद्धस्य । (२) अनुमानात् । (३) 'आ' इति तृतीयाविभक्तिः । (४) बौद्धस्य । (५) अनुमानस्य । (६) परसन्तानाभावेऽपि । (७) जाग्रद्दशायामपि । (८) अर्थक्रियाविरहेऽपि । (९) जाग्रद्दशायामपि । (१०) सन्तानान्तराभावेऽपि । (११) व्यापारव्याहारादिसद्भावः । (१२) प्रज्ञाकरः ।

विकल्पातीतस्य[य] तत्त्वस्य **अनुपपत्तिः तदनुपपत्तिः**। कुतः ? **प्रमाणाभावात्**। तथाहि–न तत्र प्रत्यक्षं प्रमाणम्, अनेकान्तात्मकसुखादिघटादिव्यतिरेकेण तदनुपलब्धिः (ब्धेः)। न च धर्मधर्मिविकल्पाभावे अनुमानं विकल्पेतरस्वरूपाभावे च। अत्र निदर्शनमाह–**भेदवदिति**। नीलादिसुखादिनानात्वस्येव **तद्वद्** इति। एतेन प्रथमार्थेन कारिका व्याख्याता।

५ इदमपरं व्याख्यानम्–**भेदैकान्तेऽपि** इत्यादिः। न केवलमभेदैकान्ते अपि तु **भेदैकान्तेऽपि कारकज्ञापकस्थितिः न वै** नैव **परमार्थतः** किन्तु पुरुषपरिणामपक्ष इति भावः। अनेन **'अक्रमं क्रमजन्मार्थैः सद्भिराभाति'** इति व्याख्यातम्। कुत एतदिति चेत् ? अत्राह–**प्रतिक्षण**मित्यादि। सुगमम्। एतदपि कुतः ? इत्याह–**प्रत्यक्षस्य** इत्यादि। स्वसंवेदनाध्यक्षस्य ग्राह्यग्राहकसंवित्तिभेदरूपस्य [३६९ख] **विप्रतिपत्तिविषयत्वात्**, इन्द्रिय-

१० प्रत्यक्षस्यापि अनेकावयवरूपाद्यात्मकभाति (कस्य विप्रति)पत्तिविषयत्वात्, **निर्विषयत्वाच्च** मिथ्याविकल्पवासनोपकल्पितस्वांशमात्रविषयत्वाद्वा। **अनुमानस्य कुतः** प्रत्यक्षादनुमानाद्वा **भेदैकान्तस्य सिद्धिः** परिणामस्यैव स्यादिति मन्यते।

अनेन **बहिरन्तराभाति तत्त्वमि**वेति निगदितम्। **न वै** न खलु। किम् ? **विज्ञानं सन्मात्रतत्त्वं** संवेदनं मात्र (दनमात्रं) तत्त्वं संदनं [सत्]संवेदनमित्यर्थः। सदि (सदे)र्गत्य-

१५ र्थस्या (स्य) वेदनार्थत्वात्। **व्यभिचरति सर्वेषाम्** आत्मनाम् संवेदनापेक्षया **एकात्मकत्वाद्** एक एवात्मा परमार्थसन्नित्यर्थः। क तर्हि व्यभिचारः ? इत्याह–**भेदेष्वेव** सुखादिष्वेव **व्यभिचारात्** ज्ञानस्येति।

ननु स्वपरसन्तानभेदात् कथं पुरुषमात्रमिति चेत् ? अत्राह–**स्वपरे**त्यादि। अनेन **'अक्रमं क्रमजन्मार्थैरसद्भिरविनाशा भाति'** इति व्याख्यातम्। उपसंहारमाह–**स्व-**

२० **परे**त्यादि। **सर्वविकल्पातीतं** सर्वभेदरहितं **तत्त्वं** पुरुषस्वरूपम्। **इति** शब्दः पूर्वपक्षसमाप्त्यर्थवचो [प्तौ। अत्रोत्त]रमाह–**प्रमाणाभावात्** इत्यादि। तस्यात्मनः सकलपरिणामात्मतोपपत्तिः। कस्य चे [कस्येव ? इ]त्याह–**भेदवद्** (**भेदैकान्तवत्**) इति। सर्वस्य सर्वतो व्यावृत्ति[:] **भेदः** [तस्य **एकान्तः**] तस्येव तद्वद् इति। कुतः ? इत्याह–**प्रमाणाभावात्** 'सर्व (र्वं) पुरुषस्यैकस्य परिणामः' इत्यत्र प्रत्यक्षस्य प्रमाणस्याभावात्। नहि यथा एकसन्तानपतितेषु

२५ सुखादिषु अहमहमिकया अस्खलदेकत्वप्रत्ययविषयत्वं तथा सर्वस्य तत्रोत्तसुर (सर्वसन्तानान्तर) सुखादिषु [३७०क] घटादिषु च। योऽपि (यापि) तत्रे यत्तत वीति (सच्चेतनादिना एकत्व) प्रतीतिः सोऽपि (सापि) समानपरिणामविषया, नैकत्वविषया, तत्तथाननुभवनात्। न चान्यप्रतीतेः अन्यविषयसिद्धिः, अन्य[था]नीलप्रतीतेः पीतसिद्धिः स्यात्। ततः प्रत्यक्षस्य अत्राभावः, तदभावादनुमानस्यापि तत्पूर्वकत्वादस्यै। न चैकात्मपरिणामित्वमन्तरेण जगतः किञ्चिदनुपपन्नं

३० यतः तत्परिकल्पनं स्यात्। सर्वस्य स्वसामग्रीतः एव भावात्। स्वपर-दातृगृहीतृ-वध्य-वधकादिव्यवहारोऽप्यत्र दुर्घटः। तन्न अनुमानात् [तत्सिद्धिः।]

---

(१) सवनं गमनमित्यर्थः। (२) सद्गमने धातोः। (३) घटादिषु सुखादिषु च। (४) अनुमानस्य। (५) एकात्मपरिणामस्वीकारे।

ननु 'प्रमाणाभावात्' इत्यसिद्धम्, *"पुरुष एवेदम्" [ऋक्० १०।९०।२] इत्यादि आगमस्य भावादिति चेत्; न; अस्यं अध्यक्षबाधितत्वेन अनागमत्वात् पि ट क त्र या दिवत्, तदन्तरसद्भावाच्च । यदि वा, तस्यामलस्य निर्विकल्पस्य ब्रह्मणा [णो]ऽनुपपत्तिः, तदनुपपत्तिः । कस्येव ? इत्याह–भेदैकान्तवद् इति । भिद्यते अन्यस्मात् सर्वतः इति भेदा [दः] निरंशज्ञानं तस्येव तद्वद् इति । कुतः ? प्रमाणाभावात् । तदभावोऽपि प्रत्यक्षस्य विप्रतिपत्तिविषयत्वात् चेतनेतरभेदविषयत्वात्, निर्विषयत्वाच्च अनुमानस्य । तत्रापीदं वक्तव्यम्–कुतः सिद्धिः अभेदैकान्तस्य इति ? आगमोऽपि यदि ततोऽनन्यः; तद्वदसिद्धिः (द्धेः) । न च तदेव प्रतिपाद्यं प्रतिपादकं च, विरोधात् । आगमप्रतिपत्तिरेव वा अस्मिन् दर्शने तत्प्रतीतिः इति कस्तत्र आगमस्योपयोगः ?

किंच, आगमाद् ब्रह्म वा तत्स्वरूपं प्रतिपद्येत, अन्यो वा ? प्रथमपक्षे– १०

स्ववित्तिरहितं ब्रह्म यदि वेत्ति, ततः कथम् ।
आत्मानं घटवत् पूर्वमिति सर्वं निरूपितम् ॥१॥
विद्याऽविद्याविभागोऽयं [३७०ख] निक्षिप्तोऽवि त्तिक्त एकोके (ऽविविक्तके) ।
नेत्याहो (नेत्यपो) ध्रियते तस्मान्मानत्राणविवर्जितः ॥२॥
तस्यात्मवेदनं नित्यं तच्चेत् प्रागपि विद्यते । १५
आगमादस्य वैफल्यं सिद्धस्यास्तु क्रिया कुतः ॥३॥
आगमेन कृतत्वेऽस्य कथं नित्यत्वमुच्यताम् ।
तदनित्यत्वतः प्राप्तमात्मनोऽपि तदेव तु ॥४॥
अविकल्पात्मसंवित्तै(त्ति)रन्या चेदागमाद् भवेत् ।
आत्मभूतैव तस्येह ध्रुवता कथमुच्यते ॥५॥ २०
न चान्ययात्मसंवित्तिशून्यया वेत्ति कश्चन ।
आत्मानमन्यथा प्राप्तम् आत्मवैफल्यमञ्जसा ॥६॥
तन्न वेत्त्यात्मना रूप स्वसं (पं स्वं सद्) ब्रह्म ततः पुनः ।
अन्येन वेदने तस्य तदद्वैतं कथं भवेत् ॥७॥
अविद्यानिर्मितोऽन्यश्च स कथं प्रतिपद्यताम् । २५
ब्रह्मरूपं जलभ्रान्तेः पिपासानाशकं न हि ॥८॥
अन्योऽपि वेत्तिमात्मानं (चेत्तमात्मानं) यदि सोऽस्तु कथं हि सन् ।
अन्येन वेदने तस्य वार्यते नानवस्थितिः ॥९॥
अन्यस्यापि ततोऽन्येन यस्मात् वित्तिपरिग्रहः ।
ब्रह्मवद् वित्तिसद्भावः तस्य स्यात् स्वयमेव चेत् ॥१०॥ ३०

(१) आगमस्य । (२) भेदसाधक-आगमान्तरसद्भावाच्च । (३) ब्रह्मणः । (४) अभेदवादे । (५) ब्रह्मप्रतीतिः तयोरभेदात् (६) अभेदस्वरूपम् । (७) आत्मवेदनस्य । (८) अभेदात् ।

अविद्यानिर्मितत्वेऽस्य का वार्त्ता वत भण्यताम् ।
ब्रह्मणा वेदनं तस्य यदि भण्येत भावतः ॥११॥
विज्ञानरात्मता प्राप्ता ब्रह्मणि स्यात्मवेदने ।

नन्न कस्यचित् ब्रह्मप्रतिपत्तिः । तन्न युक्तम्–

५ *"अनि (अती)न्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥"[वाक्यप० १।३८] इति ।

कस्यचिद् दृष्टत्वाभावादिति ।

आगमस्य ततोऽन्यत्वे तदद्वैतं कथं मतम् ।
तेनास्य वेदने [३७१क] प्राप्तो ग्राह्यग्राहकतानयः ॥

१० अवेदने कथं सिद्धिरागमस्यास्तु तत्त्वतः ।
अविद्यैव मतः सोऽपि त्वया चेदागमः कथम् ॥
तेनास्तत्त्वं प्रतीयेत सं वा केन प्रतीयताम् ।
अप्रतीता तथा वाच्या अन्यत्वेनेतरेण वा ॥
अविद्या कथमुच्येत विद्यायाः पण्डितैः स्वयम् । इति ।

१५ ततः स्थितम्–'प्रमाणाऽभावात्' इत्यादि ।

इतश्च नैकान्ततो भेदोऽभेदो वाऽर्थानामिति दर्शयन्नाह–भेदा[भेदा]त्मक इत्यादि ।

[भेदोऽभेदात्मकोऽर्थानामन्यथानुपपत्तितः ।
भेदात्मकस्तथाऽभेदः तत्त्वं नैकान्ततस्ततः ॥११॥

लोकस्य मार्गप्रतिपत्तेः प्रमाणं अन्धयष्टिकल्पम् । तदविद्यात्मकं चेत् केनायं २० प्रतिपक्षमन्धायति ? समारोपव्यवच्छेदस्यापि तत्त्वाप्रतिपत्त्यात्मकत्वात् कुतस्तत्त्वं प्रतिपद्येत ? यदिमौ नान्योन्यमतिशयाते यतः परमार्थसत्त्वाभावः प्रतीयते । तन्न *"यथादर्शनमेवेयं मानमेयफलस्थितिः" अपि तु परमार्थतः, परमार्थाभ्युपगमान्यथानुपपत्तेः अव्यवस्थाप्रसङ्गादिति । भेदैकान्ते संविदितस्य असंविदिताकारासंभवे भ्रान्तिरेव न क्वचित् स्यात् । संवेदनस्य कंचनाकारं(रम)संवृण्वतो विभ्रमस्यैवायोगात् व्यक्ताकार- २५ त्ववत् ।]

प्रस्तावाद् अर्थानाम् एकसन्तानसुखादीनाम् न सन्तानान्तराणां[६] तत्र [अ]भेदाऽनभ्युपगमात् । भेदो नानात्वम् । स किम् ? इत्याह–अभेदात्मकः कथञ्चिदेकत्वस्वभाव इत्यर्थः । कुतः ? इत्याह–अन्यथानुपपत्तितः इति । अन्यथा अन्येन भेदस्याऽभेदात्मत्वाभावप्रकारेण अनुपपत्तितः भेदस्य अर्थानाम् इति वा योज्यम् । यथैव हि तेषां

(१) आगमात् । (२) आगमः । (३) भिन्नत्वेन अभिन्नत्वेन वा । (४) "यथानुदर्शनञ्चेयं मानमेयफलस्थितिः । क्रियतेऽविद्यमानापि ग्राह्यग्राहकसंविदाम् ॥"–प्र० वा० २।३५७ । (५) प्रकरणात् । (६) सन्तानान्तरगतसुखादीनाम् अभेदो नास्ति इत्यर्थः ।

भेदाऽभावे नार्थक्रियादयः तथा [अ]भेदाऽभावेऽपि । **भेदात्मकः तथा** तेन अन्यथानुपपत्ति-प्रकारेण **अभेदः तत्त्वमने (त्त्वं नै)कान्ततः ततः** ।

नेनु सर्वस्य ग्राह्यस्य तैमिरिककेशादिवदसत्त्वात् **'अर्थानाम्'** इत्ययुक्तमिति चेत्; अत्राह—**प्रमाणम्** इत्यादि । **प्रमाणं** प्रत्यक्षादि **अन्धयष्टिकल्पम्** । कस्य सम्बन्धि ? इत्याह—**मार्गप्रतिपत्तेः** यो येनाभ्युपगतो मोक्षोपायः स तस्य मार्ग इष्यते । [अभ्युपगता] च सौग- ५ तेन प्रमेयासत्यता निर्वाणोपायः, ततः सैवे तस्य **मार्गः**, तस्य **प्रतिपत्तेः** । न हि सा प्रमाणता-मन्तरेण सिध्यति विषयवत् । कस्य स (त)त्तथाभूतम् ? इत्याह—**लोकस्य** तथागतजनस्य । ततः किम् ? इत्याह—**तच्चेद्** इत्यादि । **तत्** प्रमाणं **चेद्** यदि **अविद्यात्मकं** [३७१ख] स्वरू-पेऽपि च भ्रान्तम् । एवं मन्यते—स्वप्ने घटादेरविद्यात्मकत्वदर्शनात् अन्यदापि परेण तस्य तत्त्व-मिष्यते, तदुभयत्र तत्त्वदर्शनात् प्रमाणस्यापि तदिष्यताम् इति **केन** हेतुना **अयं** सौगतलोकः १० **प्रतिपक्षं** सकलस्य परमार्थसत्त्वे मन्धामति । न् । ते ( सत्त्वम् **अन्धायति** ) न केनचिद् इत्यर्थः । परमार्थप्रमाणाभावे प्रतिपक्षवस्त्व (वत् स्व)पक्षस्याप्यसिद्धेः इति ।

ननु न सौगतः कस्यचित् केनचित् तत्त्वतोऽसत्त्वं साधयति येनाऽयं दोषः, किन्तु परमार्थसत्त्वाभावे यदारोपितं बहिरन्तर्वा परेण तत्सत्त्वं तदेव अनुमानेन अविद्यात्मनापि निरा-क्रियते इति चेत्; अत्राह—**समारोप** इत्यादि । परमार्थसत्त्वरहितेऽपि परमार्थसत्त्वज्ञानं **समारोपः** १५ तस्य **व्यवच्छेदो** निरासः तदनुमानं वा तस्यापि न केवलं प्रत्यक्षस्य **तत्त्वाप्रतिपत्त्यात्मकत्वात्** । **तत्त्वम्** अविद्यात्मकत्वं तस्याऽ**प्रतिपत्तिः** तदा**त्मकत्वात्** । यथैव हि प्रत्यक्षात् तथा तद्व्यव-च्छेदादपि न तत्त्वप्रतिपत्तिरिति । [न] ततोऽपि तत्प्रतीतिरिति चेत्; अत्राह—**कुत** इत्यादि । **तत्त्वं** मिथ्यात्वं **प्रतिपद्येत** विभ्रमाऽसिद्धेः इति भावः । **यद्** यस्मात् तत्त्वप्रतिपत्तिरूपादियौ (दिमौ) विचार्यमाणौ भेदाऽभेदैकान्तौ द्रव्यपर्यायैकान्तौ **न अन्योन्यमतिशय(या)ते यतः** २० **परमार्थसत्त्वाभावः प्रतीयते** ।

तदस्ति (नन्वस्ति) स्वसंवेदनाध्यक्षं परमार्थत इति चेत्; अत्राह—**तन्न** इत्यादि । **तत्** तस्मात् सर्वविकल्पाभावप्रतीतिरूपात् स्वसंवेदनात् [३७२क] **न** *"[11]**यथादर्शनमेवेयं मानमेय-फलस्थितिः ।"** [प्र० वा० २।३५७] कथं तर्हि सा ? इत्याह—**अपि तु** किन्तु **परमार्थतः** । कुतः ? इत्यत्राह—**परमार्थे**त्यादि । **परमार्थस्य** सकलविभ्रमादिस्वभावस्य यो**ऽभ्युपगमः तस्य अन्यथा** २५ अन्येन तत्त्वतो मानमेयस्थित्यभावप्रकारेण **अनुपपत्तेः** हेतोः तत्त्वतः "'सा' इति सम्बन्धः ।

ननु [12]तदभ्युपगमश्च स्यान्न च तत्त्वतः [13]तत्स्थितिः; इत्याह—**अव्यवस्थाप्रसङ्गादिति** । 'विभ्रमादिकमेवास्ति न नित्यत्वादिकम्' इत्यभ्युपगमस्य या **व्यवस्था** तदभावोऽ**व्यवस्था** तस्याः **प्रसङ्गात्** तत्त्वतः तत्स्थितिः इति । अनेन **'अर्थानाम्'** इति समर्थितम् ।

---

(१) विज्ञानवादी प्राह । (२) प्रमेयासत्यता । (३) जाग्रदवस्थायामपि । (४) अविद्यात्मकत्वम् । (५) अविद्यात्मकत्व । (६) अविद्यात्मकत्वम् । (७) प्रतिपक्षम् अन्धकल्पितमिव मूते । (८) बाह्यार्थ-वादिना । (९) समारोपव्यवच्छेदरूपादनुमानादपि । (१०) दर्शनानुसारेण व्यवहारेणेत्यर्थः । (११) मानमेयफलस्थितिः । (१२) सकलविभ्रमाभ्युपगमश्च । (१३) मानमेयफलस्थितिः ।

ननु भवतु(न्तु) अर्था बहिरन्तश्च, तथापि तेषां भेदात्मकोऽभेदो [अभेदो] वा भेदात्मकः कुतः, विरोधादिति चेत ? अत्राह–भेद इत्यादि। **भेदैकान्ते संविदितस्य** चेतनस्य इतरस्य वा ज्ञानेन विपर्यीकृतस्य वस्तुनः **असंविदितः** तदैव तेनैव ज्ञानेन [अ]विपर्याकृतो य **आकारः** क्षणिकक(त्व)कार्यजननसामर्थ्यविषयाकारविवेकादिलक्षणः **तस्याऽसंभवे** तस्य सर्वात्मना
५ संवेदनाङ्गीकरणे इत्यर्थः, **भ्रान्तिरेव** (रेव) **न कचिद्** बहिरन्तर्वा याद (**स्याद्**)भ्रान्तिः सर्वत्र **स्यात्** इत्येवकारार्थः । तथा **भेदैकान्ते संविदितस्य** [चेतनस्य इतरस्य] वा सच्चेतनादिरूपेण **असंविदितस्या**विनाशिविवेकरूप**स्याऽसंभवे भ्रान्तिरेव न कचित् स्यात्** । कुत एतत ? इत्यत्राह–**संवेदनस्य** इत्यादि । **संवेदनस्य** स्वपरगोचरज्ञानस्य **कंचन आकारं** क्षणि[क]-त्वादिकं रूपं **मुंगृण्वतो विभ्रमस्यैवाऽयोगात्** । अत्र निदर्शनमाह–**व्यक्ताकारत्व** [३७३ख]
१० **वदिति** । तथा च प्रयोगः– यस्य यो विषयोऽसंवृतः तस्य न तत्र भ्रान्तिः, यथा विवक्षित-संवेदनस्य सच्चेतनाद्याकारे, असंवृतश्च ज्ञानस्य सुखाद(दे)र्विवादास्पदीभूत आकार इति नानु-मानं भ्रान्तिव्यवच्छेदफलं नाम । इष्यते च परेण भ्रान्तिः, ततो मन्यामहे–संविदिताकार इति । अनेन **भेदोऽभेदात्मक** इत्यादि समर्थितम् ।

ननु भवन्मतेऽपि यथावस्थिताशेषपदार्थग्रहणस्वभावस्य जीवस्य कथं भ्रान्त (भ्रान्ति)-
१५ संभव इति चेत ? अत्राह–**जीवस्य** इत्यादि ।

**[ जीवस्य संविदो भ्रान्तिनिमित्तं मदिरादिवत् ।**
**तत्कर्मागन्तुकं तस्य प्रपञ्चोऽनादिरिष्यते ॥१२॥**

**ज्ञानस्वभावो जीवः चेतनस्यापरिणामिनः अचेतनस्याऽपरिणामिनः जीवस्य निषे-धात् नैरात्म्यासिद्धेश्च तदन्यथात्वं द्रव्यान्तरसम्बन्धात् मदादिवत् । यदि पुनः कर्मणामेव**
२० **कर्तृत्वभोक्तृत्वप्रबन्धोऽनादिः ; निरात्मकादयन्न विशिष्येत, स्वभावान्तरानवधारणात् क्षणक्षयादिवत् । आत्मनस्तथापरिणाममन्तरेण प्रयत्नसुखदुःखादिदर्शनबुद्धीनां समवायि-कारणतानुपपत्तेः अनुपयोगादिति । चेतनस्य तदेव कर्म साक्षात् संसारनिमित्तं न पुनः प्रयत्नसधर्मा जीवपरिणामः । द्रव्यान्तरसम्बन्धोदयोदीरणादिवशात् मिथ्यादर्शनादि-विकारदर्शनात् , तत्परिक्षयान्मोक्षः । ईश्वरादिकं कल्पयतापि अतिप्रसङ्गात् । तस्यापि**
२५ **ईश्वरः संसारनिमित्तं स्यात् जीवाविशेषात् । यथाकर्मसम्बन्धं विपर्यये वा प्रवर्तने पारमैश्वर्यानुपपत्तिः ।]**

**जीवस्य** आत्माऽपरनामकस्य । किंभूतस्य ? इत्याह–**संविदि[द]** इति । समीचीना, यथावस्थिताशेषवस्तुग्रहणरूपा वा, तत्तदास्येन (तत्तादात्म्येन) स्थिता वा[3] विभ्रमहेतुत्वाऽयोगात्, इतरथा यस्य कस्यचित् कर्मणो यस्य कस्यचिद् भ्रान्तिः इति नाभ्रान्तिः कश्चित् (कस्यचित्)
३० स्यात् । किमिव तन्नास्य [इ]ति चेत् अत्राह–**मदि[रादि]वत्** । आदिशब्देन [4]मदन-त्वोप्रादि

(१) जैनमतेऽपि । (२) उद्धृतोऽयम्–न्यायवि० वि० प्र० पृ० १७९ । प्र० नि० पृ० ७१ । (३) अन्यथा । (४) कामोद्वेग ।

(क्रोद्रवादि)परिग्रहः । यथैव हि देवदत्तविभ्रमहेतुः मदिरादिः तस्य तथैव कर्मापि । अथ अत-दीयोऽपि सूर्यग्रहणादिः तद्विभ्रमे हेतुः, शुक्ले वस्त्रे ततः[1] पीतज्ञानदर्शनात् ततो व्यभिचार इति चेत ; न ; तत्सम्बन्धे तद्धर्मीनां तदीयत्वात् । एवमन्य[द]पि कुचोद्यं चिन्त्यम् ।

ननु कर्मसम्बन्धे जीवस्य न चेत् स्वरूपहानिः ; न ततस्तद्भ्रान्ति [:, अतः] मुक्तेतरा-विशेषः । तद्धानि स्वेद ([2]तद्धानिश्चेत , अ)नित्यत्वमात्मनः इत्यभावः । न चैतदिष्यते तद्धा- ५ दिना । तदुक्तम्–

*"यस्यात्मा वल्लभः तस्य समासं (स नाशं) कथमिच्छति ।"

[प्र० वा० १।२३६] इति चेत् ;

अत्राह–**जीवस्य** इत्यादि । **मदिरादिवत तत्कर्म तद्भ्रान्ते (तद्भ्रान्तेः) निमित्तम्** । एतदुक्तं भवति–[३७३क] यथा मदिरादिसम्बन्धे तस्य कथञ्चिदन्यथाभावः, १० अन्यथा मत्तेतराऽविशेषः सन्तानभेदो वा, [तथा] कर्मसम्बन्धेऽपि इति ।

योऽपि मन्यते–न तस्य मदिरादेरपि स्व[रू]पान्यथाभावो नित्यत्वात अपि तु मदावस्था ततोऽर्थान्तरभूता जायते इति; तस्योत्तरम्–तदवस्थायास्ततो भेदे न स मत्तः स्याद् आत्मान्तर-वत् । [5]तस्याः तेन अनुभा (भ)वान् मत्त इति चेत ; कथमेवं योगी न [6]स्यात । समवाय(या)-भावात न [7]ततो विशेषः । अथ अवस्था तत्कार्यत्वात तस्य इत्युच्यते ; ईश्वरादेरपि उच्यताम १५ अविशेषात । निषिद्धश्च नित्ये हेतुफलभाव इति न किञ्चिदेतत ।

स्यान्मतम्–तत्कर्मास्तित्वे किं प्रमाणमिति ? तत्राह–**जीवस्य** इत्यादि । **जीवस्य** स्वपरावभासनस्वभावस्य या **भ्रान्तिः** तस्याः **तत्कर्म मदिरादिवत्** 'प्रतीयते' इत्यध्याहारः । किं पुनः [8]तत्तस्या[9] यतोऽनुमीयत इति चेत् ? अत्राह–**निमित्त**मिति । यतो नित्यत्वाद्येकान्त-भ्रान्तेः म[दिरा]दिवत् कर्म निमित्तम् , ततः तत्ततः प्रतीयते । तथाहि–प्राणिनां नित्यत्वाद्ये- २० कान्तभ्रान्तिः तत्सम्बन्ध(तत्सम्बद्ध)द्रव्यान्तरविशेषपूर्विका, तत्त्वात , मदिराद्युपयोगिनो दिगादि[भ्रा]न्तिवत् । योऽसौ तद्द्रव्यान्तरविशेषः स [10]नः कर्म इति मे[11] ।

परे प्राहुः–उपलादौन (उत्पलादौ[12]) कदाचिद् भ्रान्तिर्भवतु तदुपयुक्तद्रव्यविशेषपूर्विका तथा दर्शनात् , क्षणक्षयाद्येकान्तभ्रान्तिस्तु सत्पूर्व (तत्पूर्व) भ्रान्तिनिमित्ता, परस्य कर्मणोऽन्यस्य वा निमित्तस्यादर्शनादिति । नन्वेवम्[13] अङ्कुरोऽपि अदृष्टबीजः तत्पूर्वको न भवेत् । अथ तज्जाती २५ [14]यस्य [15]तत्पूर्वकत्वदर्शनात् तस्यापि तथानुमानम् ; [३७३ख] प्रकृतेऽपि समानमिदम् । यथा च इन्द्रियभ्रान्तयः तथा मनोभ्रान्तयोऽपि मत्तस्य द्रव्यान्तरसम्बन्धात् प्रतीयन्ते । अथा (अथ)

(१) सूर्यग्रहणात् । (२) स्वरूपहानिश्चेत् । (३) जीवस्य । (४) मदावस्थायाः । (५) मत्तः न स्यात् तेन मदावस्थायाः प्रत्यक्षेणानुभवात् । (६) योगिनि तदवस्थायाः समवायो नास्तीति चेत् । (७) समवायस्य नित्यत्वात् सर्वगतत्वाच्च न ततो विशेषः, तस्य सर्वत्राविशेषात् । (८) तत्कर्म । (९) भ्रान्तेः । (१०) अस्माकं जैनानाम् । (११) 'मे' इति निरर्थकम् । (१२) नीलोत्पले पीतभ्रान्तिः पित्तादि-संक्षोभात् भवति । (१३) अदर्शनाद् यद्यभावः । (१४) अङ्कुरस्य । (१५) बीजपूर्वकत्व ।

विशिष्टोपदेशादपि [1]तद्भ्रान्तयो दृश्यन्ते; ता अपि तदुपदेशसहकारिणः कर्मणः [2]कर्मण एव मदिरादिवत् । अपि च [3]तद्भ्रान्तेरेव भ्रान्तिसंभवे चिरगाढसुप्तोत्थितस्य कुतः तत्संभवः, स्वापादौ मनोभ्रान्तेरभावात्, पुनस्तथैवाऽस्मरणात्, तथापि [4]तत्र तदभ्युपगमे न संहृताशेषविकल्पावस्थासंभवः कस्यचित् । [5]तज्ज्ञानमात्रस्यापि तत्रानभ्युपगमः; न च व्यवहितं कारणम् इत्युक्तम् ।
५ ततः तस्याः कर्म निमित्तमिति । [6]तन्नित्यत्वे भ्रान्ते न (र्न) उपरम इति चेत्; अत्राह–**आगन्तुक**मिति । तत्कार्यभ्रान्तेः कादाचित्कत्वात् [7]तत् कादाचित्कमित्यर्थः । नहि नित्यकार्यं कादाचित्कं युक्तम् । तदुक्तम्–

*"**कारणस्याक्षये तेषां कार्यस्योपरमः कथम् ।**" [न्यायवि० १।१०३] इति ।

एवमपि पूर्वं शुद्धस्य ततो (सतो) मुक्तवत् कथं कर्मणा सम्बन्ध इति चेत्? अत्राह–
१० **तस्य** इत्यादि । **तस्य** कर्मणः **प्रपञ्च**(ञ्चः)प्रवाहोऽ**नादिरिष्यते**, तत्कार्यप्रबन्ध[स्या]नादित्वप्रसाधनात् तद्गतिः ।

कारिकां विवृण्वन्नाह–**ज्ञान** इत्यादि । [**ज्ञानस्वभावो जीवः**] कुत एतत्? इत्यत्राह–
**चेतनस्याऽपरिणामिनः** सांख्यकल्पितस्य **अचेतनस्याऽपरिणामिनो** वैशेषिककल्पितस्य, **जीवस्य निषेधात्** निराकरणात् **नैरात्म्याऽसिद्धेश्च** कारणादिति । ज्ञानस्वभावस्य अन्यथात्वं
१५ कुत इति चेत्? अत्राह–**तदन्यथात्व**मिति । **तस्य** जीवस्य **अन्यथात्वं** भ्रान्तत्वं [३७४क] **द्रव्यान्तरसम्बन्धात्** आत्मद्रव्याद् अन्यत् कर्मद्रव्यं दतंतरं (तदन्तरं) तेन सम्बन्धात् । निदर्शनमाह–**मद**(**मदादि**) इत्यादि । यथा **मदादि** तदन्यथात्वं तत्सम्बन्धात् तथा प्रकृतम् ।

[8]ननु न कुतश्चित् [9]तस्य अन्यथात्वं नित्यत्वेन [10]अनाधाराऽप्रहेयातिशयत्वात्, केवलं कर्मणां प्रकृतिपरिणामविशेषाणां शरीरेन्द्रियादिकरणात् कर्तृत्वं सुखदुःखादिनंशति (दुःखाद्यभि)-
२० व्यक्तिहेतुत्वाद् भोक्तृत्वम् । पुरुषे तु भोक्तृत्वमुपचारेणाकर्तृ[त्वात्] परमार्थेन तदभावादिति चेत्; एतदेव दर्शयन्नाह–**यदी**त्यादि । परमतस्य सूचने **यदी**ति, पक्षान्तरस्य **पुनरति** (प्रकान्तरस्य **पुनरिति**) **कर्मणामेव** नात्मनः इत्येवकारार्थः । किम्? इत्याह–**कर्तृत्वभोक्तृत्वप्रबन्धः** । किंभूतः? इत्याह **अनादिः** 'इष्यते' इत्यध्याहारः । एतद् दूषयन्नाह–**निरात्मकान्न विशिष्य** (ष्ये)**तेति**–**निरात्मकाद्** आत्माभावपक्षाद् **अयं पक्षो न विशिष्येत** न भिद्येत, कर्तृत्व-
२५ भोक्तृत्वरहितस्य सतोऽप्यात्मनो[ऽ]सदविशेषात्[11] इति भावः ।

अथ मतं द्रव्यान्तरसम्बन्धकृतान्यथात्वलक्षणं[12] भोक्तृत्वं तस्य न विद्यते अर्थान्तरभूतस्य सुखादेरनुभवनलक्षणं तु विद्यते *"**चैतन्यं पुरुषस्य स्वरूपम्**" [योगभा० १।१।९] इति वचनात्, इति चेत्; अत्राह–**स्वभावे**त्यादि । चैतन्यात्मकसुखाद्यनुभवरूपभोक्तृत्वस्वभावादन्यो [13]नित्यनित्यनिरवयवदर्शनस्वभावः **तदन्तरं तस्य अनवधारणाद्** अनिश्चयात् **क्षणक्षयादिवत्** ।

(१) मनोभ्रान्तयः । (२) 'कर्मणः' इति पुनर्लिखितम् । (३) पूर्वभ्रान्तेरेव । (४) स्वापादौ । (५) तस्मात् ज्ञानमात्रमपि स्वापादौ न स्वीक्रियते इति शङ्काकर्तुः प्रज्ञाकरस्याभिप्रायः । (६) कर्मणो नित्यत्वस्वीकारे । (७) कर्म । (८) सांख्यः प्राह । (९) जीवस्य । (१०) अनाधेयाप्रहेयातिशयत्वात् । न कश्चिदतिशयः आधातुं प्रहातुं वा शक्यते इत्यर्थः । (११) असत्तुल्यत्वात् । (१२) विकारित्वं । (१३) 'नित्य' इति पुनर्लिखितम् ।

एको हि हर्षविषादादिविवर्त्तना(न)चैतन्यस्वभावोऽनुभूयते नाऽपरम् इति। तर्हि प्रयत्नस्य समवायात् कर्तृत्वं सुखदुःखादिदर्शनस्य [३७४ख] भोक्तृत्वम् आत्मनो न कर्मणाम् इत्येके[३]। तान् प्रत्याह–**आत्मन** इत्यादि। **आ[त्म]नो** जीवापरनाम्नः **तथा** तेन प्रयत्नसुखादिदर्श(दर्शन)प्रकारेण यः **परिणामस्तमन्तरेण प्रयत्नश्च सुखदुःखादि** वा (श्र, आ)दिशब्देन इच्छादिपरिग्रहः **दर्शनं** च प्रयत्नादे रूपादेश्च **बुद्धिः** तेषां **समवायिकारणस्य** भावः तत्ता ५ तस्या **अनुपपत्तेः** तदन्यथा[त्व]मिति पदघटना। कुत एतत्? इत्याह–**अनुपयोगा**दिति प्रयत्नादिरूपेण(णाऽ)परिणामात्, परिणामिकारणस्यैव समवायिकारणतोपपत्तेः इति भावः।

कारणात् कार्यभेदैकान्ते समवाय(स्य)समवायिनिमित्तकारणभेदाऽपरिज्ञानम्। यत्रोत्कलितं कार्यं जायते तत् समवायिकारणमिति चेत्; किमिदं 'यत्रोत्कलितम्' इति? यत्र समवायेन सम्बध(द्ध)म् इत्युक्तं (इत्ययुक्तम्)। न च पटतदवयवव्यतिरेकेण [त]दन्तरालस्थितमपरं[१] पश्यामः। तथापि तद्दर्शनकल्पने वरम् अवयवाऽवयविनोः गुणगुणिनोः जातितद्वतोः कथञ्चित्तादात्म्यमविगानदृष्टमस्तु। तथा च कृतनाशाऽकृताभ्यागमदोषपरिहारः। न केवलं तयोस्तादात्म्ये मेव (तदेवा)विरुद्धम् अपि तु दर्शनकल्पनमपि, अदृश्यस्य। कथञ्चित्तादात्म्यं च तथादर्शनाद् वस्तुनो रूपम्। न च स्वरूपेण कस्यचिद् विरोधः; निःस्वभावतापत्तेः।

ननु [न] दर्शनात् समवाय[व्य]वस्था, अपि तु तत्कार्यतः। तच्च कार्यम् [किम्?] इत्याह–'अवयवेषु अवयवी इति प्रत्ययः' इति चेत्; न; तादात्म्येऽपि तदुपपत्तेः। [३७५क] इह तन्तुषु पटः इति कोऽर्थः? तेषु कथञ्चित्तादात्म्येन वर्तते इत्यर्थः, यतो विवक्षातः 'पटे तन्तवः' इत्यपि प्रतीयते। तदेवं समवायाऽसिद्धेः 'यत्रोत्कलितम्' इत्यु(त्ययु)क्तम्।

एते[न] स्वकारणकारणा(ण)समवाय्यसमवायिकारणम् इति निरस्तम्। न च प्रथमं रूपादिरहितस्य पटस्योत्पत्तिः प्रतीयतेऽध्यक्षतः येन तद्रूपाद्युत्पत्तौ तन्तुरूपादीनाम् असमवायिकारणता स्यात्, रूपादिसहितस्यैव उत्पत्तिदर्शनात्। आशुवृत्तेः तथादर्शनाभिमान इत्यपि वार्त्तम्; सर्वत्र तथा प्रसङ्गात्। ततः स्थितम् **आत्मन** इत्यादि।

अथ मतम्–भवतु आत्मनः तथापरिणामे प्रयत्नादिसमवायिकारणतोपपत्तिः, तथापि जैनस्य किं सिद्धम्? इत्याह–**चेतनस्य** इत्यादि। **चेतनस्य** प्रयत्नसुखदुःखादिदर्शनपरिणामस्य **तदेव** द्रव्यान्तररूपमे[व] **कर्म संसारनिमित्तम्** इष्टानिष्टशरीरादिकारणं **साक्षात्**, तदन्तरं (तदनन्तरं) हीनस्थानपरिग्रहदर्शनात् मत्तस्य अशुचिस्थानपरिग्रहवत्। न पुनः प्रयत्नसधर्मा जीवपरिणामः; तस्य [अ]कारणत्वात्। अथ देशादिप्राप्तेर्वाञ्छापूर्वकत्वदर्शनात् सो च (सापि) तन्निमित्तम्; न; अशुचिस्थानपातिना मत्तेन व्यभिचाराद् इत्येवकारार्थः। कुत एतत् तदेव कर्म तन्निमित्तम्? इत्यत्राह–**द्रव्यान्तरे**त्यादि। **द्रव्यान्तरं** व्याख्यातम्, तेन **सम्बन्धस्य उदयो**

(१) तुलना–"एकमेवेदं हर्षविषादाद्यनेकाकारविवर्तं पश्यामः तत्र यथेष्टं संज्ञाः क्रियन्ताम्।"–प्र० वार्तिकाल० ३।२७७। (२) समवायात्। (३) वैशेषिकाः। (४) समवायम्। (५) स्वशब्देन पटरूपं गृह्यते, तस्य कारणं पटः, तत्कारणेषु तन्तुषु समवायि तन्तुरूपं पटरूपं प्रत्यसमवायिकारणम्। (६) पटरूप। (७) पटस्य।

यथाकालफलदानम् उदीरणा अपक्वपाचनम् आदिशब्देन द्रव्यान्तरसंस्कारादिपरिग्रहः, तस्य वशात् मिथ्यादर्शनादेः मिथ्यात्वस्यादेः [३७५ख] आदिशब्देन मिथ्याज्ञानपरिग्रहः, विकारस्य जीवपरिणामस्य दर्शनात् । एवं मन्यते–संसारिणो जीवस्य आगन्तुकसुखदुःखादिकं द्रव्यान्तरबन्धोदयोदीरणवशात् आगन्तुकत्वात् मिथ्यादर्शनादिवत् ।

५ तथो (ततो) यदुक्तं परेण–*"विवादास्पदीभूतं सुखदुःखादिकं संसारिणः प्रयत्नसधर्मणा तद्गुणेन कृतम्, कार्यत्वे सति तदुपका[र]कत्वात् ग्रामादिवत्" इति; तन्निरस्तम् । यदि परम्परया; सिद्धसाधनम् । अथ साक्षात् ; तर्हि द्रव्यान्तरसम्बन्धात् तद्विकारस्य साक्षाद् दर्शनेऽपि अन्यहेतुकल्पने अनवस्था । भवतु तदेव संसारकारणमिति चेत् ; अत्राह–तत्परिक्षयात् कर्मपरिक्षयात् मोक्ष इति । तथाहि [यत्] यन्निमित्तं तत् तदभावे न भवति यथा १० बीजाभावे अङ्कुरः, कर्मनिमित्तश्च संसार इति ।

परः प्राह–

*"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव च ॥"

[महाभा० वनप० ३०।२८] इति

१५ ईश्वरः तन्निमित्तम् इति ।

*"कालः पचति भूतानि" [महाभा० आदिप० १।२७३-७५] इत्यादि वचनात् कालः तन्निमित्तम् इति ।

*"पुरुष एव" [ऋक्० १०।९०।२] इत्याद्यभिधानात् पुरुषः कारणम् ।

*"प्रकृतेर्महान्" [साङ्ख्यका० २२] इत्यादिवचनात् प्रकृतिः कारणम्, [न] कर्मैव इति;

२० तत्राह–

ईश्वरादिकं 'संसारनिमित्तम्' इत्यनुवर्तते । 'कल्पयतोऽपि' इति पदेन एतेन एतद्दर्शयति–उक्तविधिना न तत्र किञ्चित् प्रमाणम्, केवलं कल्पनामात्रमिति । तदभावे कर्माभावे अतिप्रसङ्गात् । अतिप्रसङ्गं दर्शयन्नाह–तस्यापि इत्यादि । केवलम् अन्येषां मुक्तात्मनां संसारिणां चाविशेषेण तत् तन्निमित्तं स्याद् अपि तु तस्यापि ईश्वरस्यापि ईश्वरः २५ संसारनिमित्तं [३७६क] स्यात् । कुत एतत् ? इत्यत्राह–जीवावि[शे]षात् । जीवैः

(१) तुलना–"देवदत्तविशेषगुणप्रेरितभूतकार्याः तदुपगृहीताश्च शरीरादयः कार्यत्वे सति तदुपभोगसाधनत्वात् गृहवदिति ।"–प्रश० किरणा० पृ० १४९ । (२) अदृष्टेन । (३) अव्यवस्था स्यादित्यर्थः । (४) "कालः सृजति भूतानि कालः संहरते प्रजाः । संहरन्तं प्रजाः कालं कालः शमयते पुनः ॥ कालो विकुरुते भावान् सर्वाल्लोके शुभाशुभान् । कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः ॥ कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः । कालः सर्वेषु भूतेषु चरत्यविधृतः समः ॥ अतीतानागता भावा ये च वर्तन्ति साम्प्रतम् । तान् कालनिर्मितान् बुद्ध्वा न संज्ञां हातुमर्हसि ॥"–महाभा० । (५) "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्"–ऋक्० । (६) "प्रकृतेर्महान् ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः । तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥"–सांख्यका० ।

**अविशेषाद्** ईश्वरस्येति । यथैव हि निःकर्मणां जीवानामसौ[1] संसारकारणं तथा तथाविधस्य-न्मानोऽपि (स्य आत्मनोऽपि) स्यात् । अथ सर्वज्ञत्वाद् आत्मनत्त (आत्मानं न) दुःखेन योज-यति; [त]त एव परमपि निर्दोषं न तेन योजयेत् शुद्धविपस्तद संवान् (शुद्धधियस्तदसंभवात्)।

एतेन क्रीडा तत्र निषिद्धा। तस्य तया तन्निमित्तत्वे आत्मन्यपि स्यात् । दृश्यन्ते हि तया[2] प्रराणिका [पूरणिकाः[3]] आत्मानं चित्सारयन्तः ।'स्वभावत एव स[4] तन्निमित्तम्' इत्यपि नानेन ५ परिहृतम् । न चादर्शने परत्रैव स तस्य[5] स्वभावो नात्मनि इति विभागो [यु]क्तः । यदि वा तस्यापि ईश्वरस्यापि संसारनिमित्तम् अन्ये जीवाः । कुत एतत् ? इत्यत्राह-**जीवाऽविशेषात्** । अकर्मणां हि सर्वज्ञत्वादिना गुणेन जीवानां विशेषाभावात् ।

ननु किमुच्यते तदभाव इति, यावता तद्भावे स तन्निमित्तमिति चेत् ; अत्राह-**यथा-कर्मसम्बन्धम्** इत्यादि । अत्रायमभिप्रायः-न कर्मणा [ई]श्वरस्य ते[न] वा कर्मणः किञ्चित् १० क्रियते, केवलं तयोरन्योऽन्यसहकारिणोः कार्ये व्यापारः । कर्मणा वा प्रेरित ईश्वरः कार्यं जनयति नकर्मतरवत् (कर्मान्तरवत्), ईश्वरेण वा[6] कर्म अचेतनत्वाद् वास्यादिवत् इति ? तत्र प्रथमपक्षे **'यथाकर्मसम्बन्धम्'** इत्यादि । अन्यत्र **'विपर्यये च'** इत्यादि । यस्य प्राणिनो यः कर्मसम्बन्धः मुरूपा (पौऽ)न्यथा वा झटिति फलदायान्य (दायी अन्य)था वा तदनुसारेण **यथाकर्मसम्बन्धं प्रवर्त्तने**[7] तत्सम्बन्ध (न्धं) सहकारिणमाश्रित्य कार्यजन्मनि ईश्वरस्य प्रवृत्ता- १५ वङ्गीक्रियमाणायां **प(पा)रमैश्वर्यानुपपत्तिः (त्तेः) 'अतिप्रसङ्गात्'** इत्येतद् [३७६ ख] अत्रा-प्यनुवर्त्तते । **तदेव** कर्म **'संसारनिमित्तम्'** इति सम्बन्धः । तथाहि-कर्मसहकारिणः तस्य कार्यं कुर्वतोऽपि यदि पारमैश्वर्यम् ; कालादेरपि स्यादविशेषात् । अथ ईश्वरो ज्ञत्वाज्ञत्वात् (ज्ञत्वात् ज्ञात्वा) कार्यकारणकलापं कार्यं जनयति अन्यथा कालादिः विपर्ययात्[8] , ततोऽयं विशेष इति चेत् ; कुतस्तस्य[10] तत्परिज्ञानसिद्धिः ? [11]जननात् ; कालादिना व्यभिचारः । 'आत्मत्वे सति २० तज्जननात्' इत्यपि नोत्तरम् ; गाढसुप्तेन स्वव्यापारव्याहारहेतुना व्यभिचारः । 'सर्वव्यामोह-रितत्त्वे (रहितत्वे) सति' इति चेत् ; तदपि कुतः ? सर्वज्ञानात् ; अन्योऽन्यसंश्रयः-सर्वव्या-मोहविरहसिद्धौ तत्परिज्ञानम् , अतः तत्सिद्धिरिति । तन्न कालादेरस्य[12] विशेषः । भवतु वा तत्परिज्ञानम्, तथापि [13]ततोऽस्य[14] न विशेषः अकिञ्चित्करत्वात्तत्परिज्ञानस्य । यो हि कर्मवशात् अकर्त्तव्ये प्रवर्त्तमानमज्ञं ज्ञात्वा कर्त्तव्ये प्रवर्तयति जनम् , तस्य परिज्ञानं फलवत् , [15]अयं पुनः २५ [16]तत्रैव । यदि यादिव (यदि वा) **यथाकर्मसम्बन्ध(न्धं) प्रवर्त्तने** सर्वज्ञत्वादिना गुणेन यत् **पारमैश्वर्यं** तस्याऽनुपपत्तेः **कर्मैव तन्निमित्तम्** ।

अत्र **'अतिप्रसङ्गात्'** इति नापेक्षणीयम् । तथाहि-कर्म अचेतनमपि यदि यथाकालं कार्यजननसमर्थम् ; तत एव तन्निष्पत्तेः किम् ईशेन तज्ज्ञेन ? नहि तथाजननासमर्थम् अन्य-सन्निधानेन जनयति, अन्यथा यवबीजं शाल्यङ्कुरं तत्परिज्ञानवतः सन्निधाने कुर्यात् । ज्ञानं ३०

---

(१) ईश्वरः । (२) क्रीडया । (३) इन्द्रजालकारिणः । (४) ईश्वरः । (५) ईश्वरस्य । (६) प्रेरितं । (७) कर्मसम्बन्धात्मकं सहकारिणम् । (८) ईश्वरस्य । (९) अज्ञत्वात् । (१०) ईश्वरस्य । (११) उत्पादनाच्चेत् । (१२) ईश्वरस्य । (१३) कालादेः । (१४) ईश्वरस्य । (१५) ईश्वरः । (१६) तं प्रवर्तयति इति सम्बन्धः ।

च सहकारि निषेद्धुमशक्यम् । न चेशस्तथा । अथ तस्य[1] तत्सामर्थ्यं तेन[2] क्रियते ; [३७७ क] तर्हीशेन क[र्म] जन्यते न कार्यम् इति कथं स[3] तत्सहकारी [4]तज्जनयति ? द्वयमपि स[5] एव इति चेत् ; कुत एतत् ? अन्यतः तथाविधजनककर्माऽसंभवादिति चेत् ; ईश्वरस्य तत्कार्यद्वयजनने कुतः सामर्थ्यमायातम् ? [6]अहेतुकम् ; सर्वत्र स्यात् , इतरथा अन्यत्रापि किं हेतोः

५ कार्यनियमकल्पनेन ? तत्सामर्थ्यस्य नित्यत्वाददोष इति चेत् ; न ; तन्निषेधात् । स्वहेतोः इति चेत् ; कर्मणोऽपि तत एव इति किम् ईशेन ? इति स्थितम्—**यथा** इत्यादि । अथ कर्मणा ईश्वरः प्रेरितः, तेन तत् कर्म कार्यकृत् इष्यते ; तत्राह—**विपर्यये वा** इत्यादि । उक्तक्रमाद् अन्यः क्रमो विपर्ययः, स च ईश्वरकर्त्तृत्वादिमते[ऽ]नन्तर एव संभवति, तस्मिंश्च **प्रवर्त्तने पारमैश्वर्यानुपपत्तेः कर्मैव तन्निमित्तम्** । तथाहि—पृथग्जनवत् कर्मणा प्रेरितस्य तस्य[7] प्रवर्त्तने न ततो विशेषः ।

१० किञ्च, तेन[8] प्रेरितः, पृथग्जन एव स (स्व) कार्यं विदधातु किमीशप्रेरणेन ? अचेतनमपि [9]तत् ईशं प्रेरयति न तज्ज्ञा ([10]तत्)नमिति [किं]कृतो विभागः ? 'अन्येन (अथ तेन[11]) प्रेरितमीशं प्रेरयति' इत्ययुक्तम् , अनवस्थापत्तेः । तन्न कर्म ईश्वरं प्रेरयति । नापि ईश्वरः कर्म; पारमैश्वर्यानुपपत्तेः । तथाहि—स्वं कार्यमेव तेन कृतं किं कर्मप्रेरणेन ? [12]यस्य कार्येऽसामर्थ्यं तस्य [13]तत्प्रेरणे सामर्थ्यम् अतिश्रद्धेयम् । कर्मण एव वा [14]तदस्तु किं तत्प्रेरकेण ।

१५ अथ अचेतनं तद्[15] वास्यादिवत् चेतनाधिष्ठितमेव (चेतनाधिष्ठितमेव) कार्ये [प्र]वर्त्तते[16] तदधिष्ठापकस्य[17] ज्ञानादे[ः] कथं चेतनत्वं घटादिवत् ? अस्मदादिवत् स्यादिति चेत् ; तदेतद् सत् ; [18]यदसता समुदायहतम् (तः समुदाहृतम् ); अस्मदादेरपि [19]ततो भेदे; न चेतनत्वम् । ज्ञानसमवायाच्चेतनत्वं चेत् ; न; तन्निषेधात्[20] । सतोऽपि सर्वगतत्वेनाऽविशेषात् किं क्व ज्ञानम् ? अथ सम्बन्धा(न्ध्य)विशेषेऽपि सम्बन्धविशेष इष्यते; कुत एतत् ? स्वभाव[त] इति चेत् ; [21]तदपि

२० कुतः ? तथा दर्शनात्[22] ; युक्तमेतद् यदि गगनादिपरिहारेण ईश्वर एव किं देव (किञ्चिदेव) ज्ञानं दृश्येत । स एव पश्यतीति चेत् ; कोशपानात्[23] प्रत्येयम् । एतेन योगिनि(न) श्चिन्तिताः । स्वभावत एव च सम्बन्धनियमे किं समवायेन ? इहेति प्रत्ययोऽपि [24]तत एव भविष्यति । तन्न परस्य कश्चित् चेतनो यः तस्य[25] अधिष्ठाता स्यात् । ज्ञानात(त्त)स्याभेदे अन्यत्रापि गुणगुणिनोर्भेदैकान्तो विशीर्येत । तथा च अनीश्वरस्य अनित्यज्ञा[ना]दिस्वभावस्य कार्यत्वम् इति,

२५ [26]तद्दृष्टान्तेन ईश्वरस्यापि [27]तत्प्रसक्तमिति तस्यापि अन्यो धीमान् कर्त्ता, ततः पारमैश्वर्यानुपपत्तिः इति ।

(१) कर्मणः । (२) ईशेन । (३) ईश्वरः । (४) कार्यम् । (५) ईश्वर एव । (६) यदि कारणं विना तर्हि । (७) ईश्वरस्य । (८) कर्मणा । (९) कर्म । (१०) पृथग्जनम् । (११) कर्मणा । (१२) ईश्वरस्य । (१३) कर्मप्रेरणे । (१४) कार्योत्पादकत्वमस्तु । (१५) कर्म । (१६) "प्रधानपरमाणुकर्माणि प्राक् प्रवृत्तेः बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते अचेतनत्वात् वास्यादिवत् ।"—न्यायवा० पृ० ४५७ । (१७) ईश्वरस्य । (१८) असिद्धस्य उदाहरणरूपेण कथनं कृतम् । (१९) चेतनत्वात् ज्ञानाद्वा । (२०) समवायनिराकरणात् । (२१) ईश्वरस्वभावं ज्ञानमिति । (२२) इति चेत् । (२३) एतदुच्यमानं मद्यपानादेव बुद्धौ समाविशति । (२४) स्वभावादेव । (२५) कर्मणः । (२६) अस्मदादिदृष्टान्तेन । (२७) कार्यत्वं ।

किंच, यदि सर्वमचेतन [नं चेतना]धिष्ठितमेव कार्ये प्रवर्त्तते इत्येकान्तः ; तर्हि यस्य यत् कर्मादि स एव तस्यापि (तस्या)धिष्ठाता इति व्यर्थम् ईश्वरकल्पनम् । नहि [1]तस्यापि तत्र सन्निधानादपरम् अधिष्ठातृत्वम् । [2]प्रेरकत्वमिति चेत् ; [3]अन्यस्याप्यस्तु । 'तदज्ञाने तत्कथम्' इत्यपि नोत्तरत्वानक्षोत्तरत्वात् (न; उक्तोत्तरत्वात्) सुप्तस्याऽज्ञानेऽपि स्वाङ्गावयवप्रेरणं(ण)-दर्शनादिति । ५

यदि पुनरिदं चोद्यम्–शरीरसम्बन्धात् प्राग् अशरीरस्य कथं तदधिष्ठातृत्वमिति ? तदीश्वरेऽपि समानमिति दर्शयन्नाह–**जीवोपयोग** इत्यादि ।

**[जीवोपयोगयोग्यैरीश्वरस्यानुमीयते ।**
**वितनोश्चेच्छा तद्धेतुः शरीरकरणादिभिः ॥१३॥**

**शरीरेन्द्रियादिसङ्गमनुभवतोऽनिष्पन्नकायकरणस्य उत्पत्तुः कथमात्मोपभोगयोग्य- १० निष्पादनसामर्थ्यम् ? तत्परिग्रहात् निष्पन्न[स्य]तत्कृतिर्न संभाव्येत । पारिशेष्यादीश्वरः कारणमिति वैशेषिकादयः । वितनुकरणस्य पुनरिच्छया जीवोपभोगयोग्यशरीरादिकरणं कथं संभाव्येत ? तदुत्पत्त्यविशेषात् , प्रतिषिद्धं च । तत्परिणामोपगमेऽपि समवायिकारण-त्वस्थित्वाप्रवृत्त्यादेश्च परिणामिन एव संभवात् प्रवर्तनालक्षणाः दोषास्तज्जन्महेतवः कथञ्च स्युः ? अत एव कर्मसम्बन्धोपपत्तेः । चेतनकृतं किञ्चिदुपभोगयोग्यं संप्रेक्ष्य सर्वत्र १५ कल्पनायां सतनुकरणकृतिः किन्न प्रसज्येत ? तथा च अनवस्था । दृष्टव्यतिक्रमे स्वकर्मणः तत्सामर्थ्यं कल्पयितुं युक्तम् ।]**

**च** शब्दो[३७८ क]अप्यर्थो भिन्नप्रक्रमः '**ईश्वरस्य**' इत्यस्यानन्तरं द्रष्टव्यः । न केवलमन्यस्य अनीश्वरस्य अपि वी[तु ई]**श्वरस्यापि** । किंभूतस्य ? **वितनोः** अशरीरस्य । किम् ? **अनुमीयते** । कैः ? इत्याह–**शरीरका(क)रणादिभिः** आदिशब्दाद् भुवनादि- २० परिग्रहः, अभेदोपचारात् तद्गताः कार्यत्वादयः **शरीरकरणादयः** उच्यन्ते । किंभूतैः ? इत्याह–**जीवापयोगयोगैः (जीवोपयोगयोग्यैः)** ईश्वराद् अन्य(न्ये)**जीवा** गृह्यन्ते, तस्य '**ईश्वरस्य**' इत्यनेन अभिधानात् , तेषामु**पयोगः** तज्जननव्यापारः तत्र **योग्यैः** यथा ईश्वरेण ते निष्पादयितुं शक्याः तथा अन्यैरपि इत्यर्थः । तस्य का[4] किमनुमीयते ? इत्याह– **इच्छा** सिसृक्षा । किंभूता ? इत्याह–**तद्धेतुः** शरीरकरणादिकारणादिकारणम्[5] । यथा २५ वितनोरन्यस्य तद्धेतुः सो(सा)नानुमीयते तथा ईश्वरस्यापीति भावः । यदि वा **चशब्दः** अवधारणे, ईश्वरस्येव(स्यैव) किमनुमीयताम् ?

ननु यथा ईश्वरस्य [6]तत्करणे सामर्थ्यम् , नैवमन्यस्येति चेत् ; युक्तमेतद् यदि तथादर्शनं स्यात् । नहि दृष्टेऽनुपपन्नं नाम । अथ ईश्वरेण सर्वस्य जननात् किमन्येनेति चेत् ? एतदपि युक्तं यदि कुतश्चित् सिद्धं स्यात् , यावता शरीरादिकार्यदर्शनात् ईशोऽप्यनुमीयते । [7]तच्च नानाविधमिति ३०

(१) ईश्वरस्यापि । (२) अस्मदादेरपि । (३) प्रेरकत्वम् । (४) 'का' इति प्रश्ने । (५) 'कारणादि' इति निरर्थकं पुनर्लिखितम् । (६) शरीरादिकरणे । (७) कार्यम् ।

तथाविधम् आत्मनः कर्तारमनुमापयन्ति (ति) घटपटनगरारामादिवत् । अथ केनोच्यते–[ए]कस्य कारणदर्शनाद् एकः प्रतीयते ? प्रतीयताम् यदि कार्ये तद्विज्ञानानुगमः स्यात्, न चैवम् शब्दाद् इत्येवंनिभयत्र्यत्रापरा (चैवमिति । अत्रापरः) प्राह–सकलं जगद् एकोऽवयवी तस्य प्रासादवद् अनेककर्तृसंभवेऽपि [३७८ ख] सूत्रधारसमानेन एकेन सकलकारकग्रामवेदिना भवितव्यम् इति;
५ तदप्ययुक्तम् ; यतः एकस्यापि भागशः अनेकसूत्रधारसंभवात् ।

'वितनुका(क)रणस्य' इत्यादिना कारिकां व्याख्यातु(तुं) शरीरेन्द्रियेत्यादि पूर्वमुपचति (पूर्वपक्षमुपन्यस्यति) तन्वादिमङ्गमनुभवति(तः) संसारिण इत्यर्थः । स्वयम् आत्मना [न] ईश्वरादिना, उत्पत्तुः गर्तादि(कृत्यादि) संबन्धितया जायमानस्य । किंभूतस्य ? इत्याह–अनिष्पन्नकायकरणस्य कथम् ? न कथञ्चित्, आत्मापयोग्य(आत्मोपभोग)योग्यनिष्पादन-
१० सामर्थ्य [म्] । कुतः ? इत्याह–तत्परिग्रा(ग्र)हेत्यादि । नोत्पत्तुः तन्निष्पादनसामर्थ्यमपि तु तद्विपरीतयोः पित्रोः इति चेत ; अत्राह–निष्पन्नेत्यादि । मैथुने तद्व्यापारात् । न च तदेव तत्र व्यावृत्तिः (व्यापृतिः) प्रतिमैथुनमपत्योत्पत्तिप्रसङ्गात् इति भावः । कर्मणा(णां) तत्र व्यावृत्ति (पृति) रिति चेत्यादि (चेत ; इत्याह–) तत्कृतिः शरीरेन्द्रियादिनं संभाव्येत । कुतः कस्य सा संभाव्यत [इत्याह–पारिशेष्यात्] इत्यादि । प्रसक्तप्रतिषेधे अन्यसिद्धि[:] पारिशेष्यं
१५ तस्माद् ईश्वरः कारणम् । तथाहि–शरीर तिपादि(न्द्रियादि) कार्यं कारणाविनाभावि, तस्य च उक्तविधिना [ना]न्यत् कारणम् इति पारिशेषाद् (ष्यात्) ईश्वरः इत्येवं वैशेषिकादयः । तत्त्वदूषकादयः । तत्त्वदूषणमाह–वितनुकरणस्य इत्यादि । वितनुकरणस्य 'ईश्वरस्य' इति विभक्तिपरिणामेन सम्बन्धः । पुनरिति वितर्के । इच्छया शरीरादिकरणं वाञ्छया कथं संभाव्येत ? किम् ? इत्याह–जीवोपभोग इत्यादि । इतरथा[तथा]विधस्य स्वयमुत्पत्तुः इच्छया
२० तन्निष्पत्तिः संभाव्येत । तस्येच्छा तादृशी कुतोऽवगम्यते ? [३६९ क] ईश्वरस्य कुतः ? कार्यनिष्पत्तेः ; अन्यत्र समानम् । 'जन्मोत्तरकालं तदिच्छातः कुतो न कार्यम्' इत्यपि नोत्तरम् ; ईश्वरेच्छा (च्छया) सर्वैक कार्यनियातं (सर्वैककार्यनिपातः स्यात्) । तत्र प्रमाणाभा वाह्यनिवारः (वोऽन्यत्राप्यनिवार्यः) संभाव्येत । सक्ष(साक्षा)दुत्पन्नेऽपि ततो जगत्कार्ये पुनस्तस्यामपि तन्नोत्पद्यते ।

२५ स्यान्मतम्–आत्मनः शरीरादिसम्बन्धकरणे न कस्यचिद् इच्छा अस्ति, सती वा कथं नेदानीं सर्वैः स्मर्यते इति ; [तन्न] सारम् ; यतः तस्यार्थस्यमरणे(तस्य अर्थस्मरणे)प्यनिवारणात् अस्मरणं मथापि (णमन्यत्राप्य) विशिष्टम्, सामर्थ्यम् उभयत्र सन्दिग्धमिति मन्यते । एतदेवाह–तद् इत्यादि । स चासौ उत्पत्ता वनेना(च तेनाऽ)विशेषाद् ईश्वरस्येति । यत एव विशेषोऽत एव वरमीश्वरण सिष्टः (रेण सृष्टः) एवं तदाराधनाद् धर्मसिद्धेः इति चेत् ;
३० अत्राह–प्रतिषिद्धं च इत्यादि ।

(१) तत्कृतिः । (२) 'तत्त्वदूषकादयः' इति पुनर्लिखितम् । (३) शरीरादिकरणरूपा । (४) उत्पद्यते इति उत्पत्ता ।

ननु मम बुद्धिमत्कारणमात्रसिद्ध्या प्रयोजनम्, तत्कारणम् ईश्वरो भवतु परो वा परिणाम्येव इति चेत्; अत्राह–**समवायी**त्यादि। **तस्य** ईश्वरस्य अन्यस्य वा **परिणामोपगमेऽपि**, अपिशब्दः पक्षान्तरसूचकः। कुतः तदुपगमः? इत्याह–**समवायी**त्यादि। **समवायिकारणत्वं च स्थित्वाप्रवृत्तिश्च आदिशब्देन** निमित्तकारणत्वादिपरिग्रहः तस्य **परिणामिन एव संभवात्** इति। तत्र दूषणम्–**प्रवर्त्तने**त्या[दि। **प्रवर्तनालक्षणा] दोषा** रागादयः **कथं न स्युः** नैव ५ ईश्वरस्येति। किंभूताः? इत्यत्राह–**तज्जन्महेतवः** तत्र तनु (**तत्**) शरीरेन्द्रियादिसम्बन्धलक्षणं **जन्म** तस्य **हेतवः**, तस्यापि संसार इतरजीववत् स्यादित्यर्थः। तस्य दोषास्तित्वे किं प्रमाणमिति चेत्? अत्राह–[३७९ख] प्रवर्त्तमानानां जन्तूनां प्रेरणा **प्रवर्तना** सैव **लक्षणं** चिह्नं येषां ते तथोक्ताः। तथाहि–यः परमिष्ट (परम इष्टानिष्ट)कर्मणा योजयति स रागादिमानेव (दिमानेव) तनो यथा ध्यानो [?] योजयति च तेन परमीश्वर इति। रागाद्यभावेऽपि तस्य तत्प्र- १० वर्त्तना[ऽ]विरोधादनैकान्तिको हेतुरिति चेत्; अत्रोत्तरम् '**तन्वादिकरणाद्**' इत्यादि भविष्यति। सतोऽपि (सन्तोऽपि) तस्य रागादयो न कर्मसम्बन्धकारणं देवताविशेषत्वाद् यथा मयूरस्य विषं न रमण (मरण)कारणम्। **अत एव** दोषसद्भावत एवं(व) **कर्मसम्बन्धोपपत्तेः तज्जन्महेत[वः] कथन्न स्युः** इति? अन्यथा सर्वस्यापि तैतस्तत्सम्बन्ध(न्धा)भावं इति मन्यते। १५

एवं तायत् (तावत्) स्वयुक्त्या संसारित्वं तस्य दर्शनम् (दर्शितम्)। अधुना परयुक्त्या दर्शयन्नाह–**चेतनकृतम्** इत्यादि। **चेतनकृतं सूपादि किञ्चित्**, न सर्वं तथा, प्रमाणाभावात् परस्य इति निरूपितम् *"भूता भव्याः" [सिद्धिवि० ३।८] इत्यादिना। किंभूतम्? इत्याह–**उपभोगयोग्यम्** प्राणिना(नां) भोग(ग्य)मित्यर्थः। तत्किं कृत्वा? इत्याह–**संप्रेक्ष्य** दृष्ट्वा **सर्वत्र** सर्वस्मिन् उपभोगयोग्य**कल्पनायां** क्रियमाणायां '**चे[त]नकृतत्वस्य**' इति सम्बन्धः। तथा २० च परप्रयोगः–राज्यादिवा(व)न्नरेन्द्रादिभिः केनचित् चेतनावता कल्पितं भुज्यते, भोग्यत्वात्, सूपादिवत्। योऽसौ ते (अन्ते) [१]कः संभवावान् (स भगवान्) महेश्वर इति। तत्र परिहारः–**सतनुकरणकृतिः** तनुकरणवता करणम् उपभोगयोग्यस्य **किन्न प्रसज्येतो** च (**ज्येत**?) अत्रापि स एव प्रयोगो दृष्टान्तोऽपि सूपकार एव **तथा च** तेना(न) च स्वशरीरादिकम् अन्ये[न] [३८०क] तदनुभुज्यते, तेनाप्यन्येन **इत्यनवस्था** इति भावः। अथासौ[२] अतनुकरण इष्यते अन्येन २५ वा दत्तं शरीरादि भुङ्क्ते; न; अत्राह–**दृष्टे**त्यादि। परोपभोगयोग्यस्य सूपादेः करणम्, दान (नं)वा सतनुकरणस्य सूपकारादेः अन्यदत्तं जातस्य(प्राप्तं) वा **दृष्टम्** तद्व्यतिक्रमे क्रिया [?] क्रियमाणे **स्वकर्मणः** भोक्तुर्यदात्मीयं कर्म तस्य **तत्सामर्थ्यं** भोक्त्रुपभोगयोग्यकरणसामर्थ्यं **कल्पयितुं युक्तम्**। यथा [अ]चेतनस्य चेतनानधिष्ठितस्य [३]तत्सामर्थ्यं न दृष्टं तथा चेतनस्य वितनुकरणस्यापि न दृष्टम्। कल्पनम् अन्यत्रापि समानमिति भावः। ३०

(१) ईश्वरस्य। (२) दोषात्। (३) कर्मसम्बन्धाभावः स्यात्। (४) ईश्वरस्य। (५) परमात्मा। (६) ईश्वरः। (७) उपभोगयोग्यकरणसामर्थ्यम्।

ननु स्वशरीरकरणसंचरणकरणं[1] प्राणभृतां[2] विततनुकरणस्यैव सर्वस्य दृष्टम् , तत्संचरणकरणे अपरतनुकरणादेरभावात् , तत्तेन दृष्टव्यतिक्रम इति चेत् ; उच्यते—स्वापाद्यवस्थस्य विचेतनस्यापि न दृष्टव्यतिक्रमः। नहि तस्यामवस्थायां परेण[3] चेतनाऽभ्युपगम्यते यतस्तदा चेतनः पुरुषः स्यात् । अन्यदा समाप्य(सत्यप्य)नुपयोगिनी । जैनोपगमा[त्] तदा[4] तदस्तित्वे तदुपगमादेव सर्वस्य[5] शरीरान्तरं कार्मणं[6] तत्संचरणकारणं सिध्येत् । अथेश्व[रः] तदवस्थस्य[7] तत्संचरणकारणं ततोऽयमदोषः , नहि स एव सतनुकरणप्राणभृतः तत्संचरणकारणमिति नातनुकरणस्य तत्संचरणहेतुत्व(त्वं) दृष्टं कुतः विचेतनाता(तनता त)त्प्रेरकस्य ? तथादर्शनात् , सतनुकरणस्यापि । ततो न कश्चिद् (किञ्चिद्)ऽतत् ।

अत्राह परः—नेश्वरस्य जन्महेतवो[दो]षाः, तद्रहितस्यापि च संसारनिमित्त[त्व]म् इति, तत्राह—तत्त्वाद् (तन्वादि) इत्यादि ।

[तन्वादिकरणात् सत्त्वान् भवक्लेशेन योजयन् ।
बुद्धिमानन्यथा कस्मात् स्वयं द्रोहमकुर्वतः[8] ॥१४॥
सकर्मणां वा जन्तूनां हेतुर्देहादि कर्मणि ।
ईश्वरेच्छाप्रवृत्तिः किं प्राणिस्थन्नेश्वराद्विना ॥१५॥

मुक्तात्मनां तनुकरणादिदुःखोपयोगमकुर्वतः स्वयं स्वप्रेरकं कर्म ईश्वरोऽवश्यमपेक्षते यतः तदिच्छामात्रं सन्निधापयति तत एव देहादिकं निष्पादयन् किमीश्वरेच्छया ? तद्वरमीश्वर एव]

[३८० ख] तत्त्वादी (तन्वादी)नां करणाद् भवक्लेशेन संसारदुःखेन कस्मात् कुतः कारणात् न कुतश्चित् योजयेत् सत्त्वान् प्राणिनः स्वयम् आत्मना द्रोहम् अपराधमकुर्वतः ईश्वरः, सर्वस्यात्मनो बुद्धिमत्त्वाऽव्यभिचारा[त्] । बुद्धिमानिति वचना[त्] निर्दोषया सकलविषयया बुद्ध्या तद्वयात (तद्वान्) गृह्यते जन्तुभिः इत्यादिना । अथापराधमकुर्वतोऽपि[9] तान् तैर्योजयति; तत्राह्यन्य (तत्राह—अन्य)था अपराधम (म)कुर्वतोऽपि[10]योऽपि योजयति इत्यन्यथाशब्दार्थः, प्रेक्षापूर्वकारितानुपपत्तिः । तत्र यद्यसौ[11][12] तांस्तैर्न योजयति संसाराभावः स्यादि[ति] संसारप्रवृत्त्यर्थं तैस्तान् योजयतीति चेत् ; अत्राह—भवक्लेश इत्यादि । तादृशेन प्रेक्षापूर्वकारिणा न भवक्लेशहेतुना इति भावः ।

यदि पुनर्मतम्—नाऽकृतापराधतान् (धकान्) स्वयमीश्वर[ः] संसारदुःखैर्जन्तून् योजयति, अपि [तु] भूतैरेव तादृशानि कर्माणि कृतानि यः (यैः) प्रेर्यमान (णः) तैः तद्योजने क्षमस्यो

(१) परलोकशरीरान्तरसंचरणम् । (२) प्राग्भवीयशरीरादिरहितस्य । (३) बौद्धेन । (४) सती अपि । (५) स्वापाद्यवस्थायाम् । (६) यतः आत्मा परलोके शरीरान्तरं प्रति संचरति । (७) शरीरान्तरसंचरण । (८) दोषरहितस्य, शरीरादिरहितस्य वा । (९) "अद्रोहकृत्सु तत्कार्यं निग्रहस्तेन योजयेत् । कर्तुं बुद्धिमता देवैरिदमन्यत्र भाषितम् ॥ तन्वादिकरणात्···"—न्यायवि० वि० द्वि० पृ० २३१ । (१०) सत्त्वान् । (११) ईश्वरः । (१२) ईश्वरः ।

(क्षमोऽपि औ)दासीन्यं न [ल]भत इति ; तत्राह–**सकर्मणां वा** इत्यादि । **सकर्मणामेव** न निष्कर्मणां **जन्तूनां देहादिकर्मणि हेतुः ।** का ? **प्रवृत्तिः** । कस्याः ? **ईश्वरेच्छायाः** अशेषां (अन्येषां) तत्प्रेर[क]कर्माभावादिति मन्यते । अत्र दूषणम्–**प्राणिस्थ**मित्यादि । **प्राणिस्थं देहादिहेतुः किन्न ईश्वराद्विना** ईश्वरमन्तरेण **'सकर्मणाम्'** इति सम्बन्धः । एवं मन्यते–यथा प्रत्यासत्त्या कर्माणि ईश्वरं प्रेरयन्ति नयन्ति[1] तथा देहादि हादिकुर्न्विति (कुर्वन्तु इति) ।　५

ननु देहादिकर्मणीश्वरेच्छायाः प्रवृत्तिर्हेतुरिति पूर्वः पक्षः कृतः, दूषणं पुनरीश्वर एवो-च्यते, [३८१क] पूर्वपक्षानुसारिणा च दूषणेन भवितव्यमिति चेत ; न; तास्थाता[तात्स्थ्यात् त]-च्छब्दमिति इच्छया ईश्वरः तेन च साध्य इति न दोषः ।

कारिकां विवृण्वन्नाह–**मुक्तात्मनाम्** इत्या[दि] । **मुक्तात्मनां तनुकरणादिदुःखोपयो-राम कुर्वन् कुतः** (पयोगमकुर्वतः) अकर्मकत्वात्तेषाम् , सकर्मणामेव कुर्वन्ति इत्यर्थः । **कर्म** 'तत्रोप-र्मी (र्वी)यत इति अध्याहारः । ततः किम ? इत्याह–**स्वयमित्यादि** । **स्वयं** स्वस्य **प्रेरकम् ईश्वरोऽपेक्षते कर्म**[त्या]**ग**वश्य(श्यं) नियमेन । तथा वा (चा)चेतनं(न)कर्ममाहात्म्याद् नियमेन । **यतः** यस्मात् सामर्थ्या[त्] **तदिच्छामात्रम्** ईश्वरेच्छामात्रं **सन्निधापयति** तत एव माहात्म्यात् देहादिकं **ततो निष्पादयेदचेतनम् किम् ईश्वरेच्छया** ? दूषणान्तरमाह–**तद्व[र]**मित्यादि ।　१०　१५

ननु न केनचित् प्रेरितोऽसौ[2] तन्निमित्तम् , अपि तु क्रीडया इति चेत ; अत्राह–**मुक्ता-त्मनोऽपि** इत्यादि ।

**[मुक्तात्मनोऽपि देहादि कुर्वन् स्यात् क्रीडनोऽन्यथा ।**
**बुद्धिमान् योजयेज्जन्तून् कथं भवितव्यतावशात् ॥१६॥**　२०

**यदि···।]**

न केवलं सकर्मणाम् अपि तु **मुक्तात्मनो**ऽन्यकर्मणोऽपि **कुर्वन् स्यात्** देहादीः (दि) क्रीडा(ड)नः **नान्यथा ।** न सिष्ट (शिष्ट)परिहारेण राजा कृतदोषं वधबन्धनादिना योजयन् क्रीडनो नाम । मुक्तात्मनोऽपि तत्करणे सिष्ट (शिष्टः) न स्यादिति चेत ; किं क्रीडनस्य (डनः स्यात ?) । तया तस्यापि करोतीति चेत ; अत्राह–**किं बुद्धिमान्** नैव क्रीडन इति सम्बन्धः ।　२५

किंच, यदि क्रीडनः सन् देहादीन् देहिनां विदधाति महेश्वरः, तदा शुभकारिणोऽपि नर-कादिना योजयेद् अशुभकारिणोऽपि स्वर्गादिना इति तदाराधनादिकमनर्थकम् ; एतदेवाह–**योज-येदि** [त्यादि] । **योजयेत् जन्तून्** 'देहादिभिः' [३८१ख] इति [वि]भक्तिपरिणामेन सम्बन्धः । कुतः ? इत्याह–**भवितव्य[ता]वशात्** न शुभाशुभकर्मवशात् **कथं** नैव सङ्करेण योजयेत् इत्यर्थः ।　३०

कारिकार्थं स्पष्टयन्नाह–**यदीत्यादि** । सर्वं गतार्थम् ।

---

**(१) 'नयन्ति' इति पुनर्लिखितम् । (२) ईश्वरः । (३) क्रीडया ।**

एतेन पद्मविकासकारणभास्वतं इव तस्य देहादिकरणे स्वभावः चिन्तितः । कर्मणो जीवस्य वा संसारिण[:] तत्स्वभावकल्पनापत्तेः ।

ननु देहादीनामारम्भका अवयवा बुद्धिमदधीनाः स्व(वि)कारित्वात् तन्त्वादिवत् । तथा, शरीरादयो बुद्धिमत्का[रणकाः स्वा]रम्भकावयवसन्निवेशविशिष्टत्वात् अचेतनोपादानत्वात् ५ कार्यत्वात् पटादिवत् इति चेत्; अत्राह–**स्थित्वा प्रवृत्ती**त्यादि ।

**[स्थित्वा प्रवृत्तिसंस्थानविशेषार्थक्रियादयः ।**
**अन्यथैवोपपद्येरन् ततो नेश्वरहेतवः ॥१७॥**

**नैव तनुकरणादीनां बुद्धिमद्धेतुकत्वे स्थित्वाप्रवृत्तिः अर्थक्रियाकारित्वं वा हेतुः व्यभिचारात् । नित्येषु [आत्मादिषु] स्वयमभिमतत्वात् । स्वारम्भकावयवसन्निवेशनिमि-**
**१० त्तत्वं सतनुकरणस्य घटादेरिव हेतुः स्यात् । बुद्धिमत्कारणपूर्वतामात्रं परेषामिष्टमेव । वितनुकृतः...तत् ।]**

नन्वेतद् ईश्वरसाधकं प्रमाणं पूर्वं **'जीवोपयोगयोग्यैः'** इत्यादिना दूषि[त]-मपि किमर्थं पुनर्दूष्यते इति चेत् ? न; पूर्वम् ईश्वरस्य वितनोः शरीरादिकरणसामर्थ्यं निरस्तम्, इदानीं तत्साधनं निराक्रियते इति विभागः । **स्थित्वा प्रवृत्तिश्च** विरम्य कार्ये व्यापारः
१५ **संस्थानविशेषश्च** स्वारम्भकावयवसन्निवेशभेदः **अर्थक्रिया** च कार्यः कारणान्ताः (कार्य-करणम्, ताः) **आदयो** येषाम्, **आदि**शब्देन कार्यत्वादिपरिग्रहः, ते, **अन्यथैव** ईश्वरा[भा]वप्रकारेण **उपपद्येरन्** ततो विरुद्धा इति ।

ननु विपक्ष एव भवन् विरुद्धो हेतुः, अयं तु सपक्षेऽपि घटादौ वर्त्तते, व्यभिचारी तु स्यात् । अथ नित्येश्वरविरुद्धे परिणामिनि वर्त्तते इति विरुद्ध उच्यते; तस्यैव साधने कथं
२० विरुद्धः ? नित्यत्वप्रतिज्ञाव्याघात इति चेत्; न; भवतोऽपि *"**लोके (कः) खलु अकृत्रिमः**" इत्यस्य [३८२क] तत्साधनेऽपि विरोधः । न च सेश्वरसाङ्ख्यवादिनः सत्प्रतिज्ञा ।

(१) सूर्यस्य । (२) ईश्वरस्य । (३) "महाभूतचतुष्टयमुपलब्धिमत्पूर्वकं कार्यत्वात्...सावयवत्वात्" –प्रश० कन्द० पृ० ५४ । प्रश० व्यो० पृ० ३०१ । वैशे० उप० पृ० ६२ । "शरीरानपेक्षोत्पत्तिक बुद्धि-मत्पूर्वकं कारणवत्त्वात्..." –प्रश० किरणा० पृ० ९७ । न्यायली० पृ० २० । न्यायमुक्ता० दि० पृ० २३ । "बुद्धिमत्कारणाधिष्ठितं महाभूतादिव्यक्तं सुखदुःखादिनिमित्तं भवति रूपादिमत्त्वात् तुर्यादिवत् । धर्मा-धर्मौ बुद्धिमत्कारणाधिष्ठितौ पुरुषस्योपभोगं कुरुतः करणत्वात् वास्यादिवत् ।" बुद्धिमत्कारणाधिष्ठितानि स्वासु स्वासु धारणादिक्रियासु महाभूतानि वायवन्तानि प्रवर्तन्ते अचेतनत्वात् ।" –न्यायवा० पृ० ४५७–६७ । "विवादाध्यासिताः तनुतरुमहीधरादयः उपादानाभिज्ञकर्तृका उत्पत्तिमत्त्वात् अचेतनोपादानत्वाद्वा... यथा प्रासादादि ।" –न्यायवा० ता० टी० पृ० ५९८ । न्यायमं० पृ० १९४ । "कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः । वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥" –न्यायकुसु० ५।१ । "तत्राविद्धकर्णो-पन्यस्तम् ईश्वरसाधने प्रमाणद्वयमाह–यत्स्वारम्भकेत्यादि । यत्स्वारम्भकावयवसन्निवेशविशेषवत् । बुद्धिमद्धेतुगम्यं तत्तद्यथा कलशादिकम् ॥ द्वीन्द्रियग्राह्यमग्राह्यं विवादास्पदमीदृशम् । बुद्धिमत्पूर्वकं तेन वैधर्म्येणाणवो मताः ॥ तन्वादीनामुपादानं चेतनावदधिष्ठितम् । रूपादिमत्त्वात्तन्त्वादि यथा दृष्टं स्वकार्य-कृत् ॥" –तत्त्वसं श्लो० ४७-४९ । (४) पृ० ४७७ । (५) शरीररहितस्य । (६) ईश्वरस्यैव । (७) "लोगो अकिट्टिमो खलु" –मूला० गा० ७१२ ।

चे (नन्वे)तस्य परिणामित्वे कार्यत्वेन अन्येश्वरपूर्वकत्वम् अनवस्थाकारि, अन्यथा अनैकान्तिको हेतुः इति चेन् ; अयमेव तर्हि दोषोऽस्तु किमपरेण इति चेत् ; न ; अन्यथा व्याख्यानात् । एवकारो निपातत्वाद् अपिशब्दार्थः, ततः '**अन्यथाप्युप च (प्युपपन्ने)-रंस्ततो नेश्वरहेतवः**' इत्यर्थः । '**नेव तनुकरण**' इत्यादि वृत्तिर्भविष्यति । यदि वा, य एवं वदति 'नित्योऽशरीरो महेश्वरः शरीरादिकारणम्' इति; तदपेक्षया एवकारो[ऽव]धारणे, [1] **अन्यथैव** न भाव एवोपपन्नेरन् **ततो न ईश्वरहेतवो** विरुद्धत्वात् । एवमनर्थं (एवमर्थं) चेश्वरग्रहणम्, इतरथा बुद्धिमद्ग्रहणं कुर्यात् । अत्र वृत्तिः **स्वारम्भक** इत्यादि ।

कारिकां विवृण्वन्नाह–**तनुकरणे**त्यादि । **स्थित्वा प्रवृत्तिः अर्थक्रियाकारित्वं वा [न] हेतुः** । कुतः ? **व्यभिचारात्** । अयमपि कुतः ? इत्याह–**नित्येषु** इत्यादि । **स्वयम्** आत्मना ईश्वरवादिनाऽभिमतत्वा[त्] स्थित्वाप्रवृत्तेः अर्थक्रियाकारित्वस्य च । नित्यग्रहणेन १० तत्रायम् बुद्धिमत्कारणाभावं दर्शयति, आत्मग्रहणेन स्वकार्येऽन(ऽन्य)चेतनाधिष्ठितत्वाभावम्, अन्यथा अनवस्था स्यात् । **स्वारम्भकावयवसन्निवेशनिमित्तत्वं स्यात्** '**हेतुः**' इत्यनुवर्त्तते । कस्य ? इत्याह– **सतनु (सतनु)करणस्य** । कस्येव ? इत्याह–**घटादेरिव** । अनेन इष्टसाध्यविपर्ययसाधनाद् विरुद्धमुक्तम् । एतेन कार्यत्वादिकं चिन्तितम् ।

यस्तर्हि सशरीरमनित्यज्ञानम् ईश्वरं कारणमिच्छति तस्य कथं दोषः ? इत्याह–**परेषाम्** १५ इत्यादि । **परेषाम्** [३८२ख] जैनैः **इष्टमेव** । किम ? इत्याह–**बुद्धिमत्कारणपूर्वतामात्रं** 'तनुकरणभुवनादीनाम्' इति सम्बन्धः । **च** शब्दः पूर्वसर्वदूषणसमुच्चयार्थः । एवं मन्यते–ईश्वरस्य ज्ञान-तनुकरणभुवनादीन्युपकरणानि यदि तत्कर्मणो [3] भवन्ति परस्यापि तत एवेति किम् ईश्वरेण ? तदधिष्ठितादिति चेन् ; एतदपि नाऽनेन उत्सृष्टम् । ईश्वरादेव इति चेन् ; तद्व्याघातः अकर्मवादश्च । अति (अनि)त्यज्ञानस्य दे (महे)श्वरस्य सकलोपकरणादिज्ञानं प्र मा ण सं ग्र ह- २० भा ष्ये निरस्तम् ।

किंच, स्वतन्वादिकरणे यत्नान याव[न्] परं तदपेक्षेत संसारित्वम् इतरवत् । अनपेक्षणे अन्यतन्वादिकरणेऽपि किं तदपेक्षणेन ? वितनुकरणोऽपि [4] स्वस्य देहादिकं सम्पादयन्ति (यति) न परस्य इति महती प्रेक्षापूर्वकारिता ! एतदेव दर्शयन्नाह–**वितनुकृतः** इत्यादि । निगमनमाह–**तदि**त्यादि । २५

क ण च र स्य अ क्ष पा द स्य च देहादीनाम् ईश्वरं कारणं वदतः स्ववचनविरोधम् इदानीं दर्शयन्नाह–'**संसार**' इत्यादि ।

**[संसारसुखसंवित्तिक्षयात् मोक्षात्मकं वदन् ।**
**देहादेरीश्वरो हेतुर्यदि शास्त्रं विहन्यते ॥१८॥**

**सू त्र का रः आत्मादितत्त्वज्ञानात् निःश्रेयसाधिगमं परं पुरुषार्थमाह । स एव** ३० **संसारं परं सूचयति, यतः देहादिरीश्वरहेतुः । तदनयोः परस्परविरोधात् सू त्र का र स्य**

(१) ईश्वरस्य । (२) नित्यस्य ईश्वरस्यापि अन्यचेतनाधिष्ठितत्वे । (३) ईश्वरकर्मणः । (४) अन्यजनस्यापि । (५) ईश्वरः ।

**बुद्धिमत्त्वं कथं कल्प्येत ? कः प्रेक्षावानपवर्गमचेतन्यं प्रतीयते तद्विषयं शास्त्रं कुर्यात् यतो नेश्वरो बुद्धिमान् ? तन्न, अन्यस्यासंभवात् ।]**

**देह आदिर्यस्य** सकलकार्यग्रामस्य स तथोक्तः तस्य **ईश्वरो** नित्यो व्यापी यदि हे **(हेतुः) शास्त्रे (स्त्रं)** क ण च रा देर्वचन म (नं तदेव)वा **विहन्यते** बाध्यते । किं ५ कुर्वन् ? इत्याह–**वदन्** कथयन् । किम् ? इत्याह–**मोक्षात्कथं (मोक्षात्मकम्)** मोक्षमित्यर्थः । कुतः ? इत्याहा (ह–) **संसार [सुख]संवित्तिक्षयात्** , **संसारो** जन्ममरणादिप्रबन्धः **सुख**ग्रहणमुपलक्षणं दुःखादेः, **संवित्ति**[:]बुद्धिः दुःखादिविन्सं चेतेरपि [३८३क] ग्रहणे (दुःखादिवित संविनेरपि तेनैव ग्रहणे) प्राप्ते तदुपादानं पृथक्[1] मोक्षस्यास्याऽयुक्ततां प्रतिपादयितुम् , [2]**तासां क्षयात्** । एतदुक्तं भवति–यदा सर्वोत्पत्तिमताम् एकस्व-
१० भावो नित्यो व्यापीश्वरः कारणम् ; तदा सर्वं सर्वदा सर्वेषामविशेषेण देहादय इति न तत्क्षयात् मोक्षः ; तदुक्तं न्या य वि नि श्च ये–

*"कारणस्याक्षये तेषां कार्यस्योपरतिः कथम् ।" [न्यायवि० १।१०३] इति ।

भव (न च) नित्यस्या (स्व)भावे या (अन्या)ऽतिशयस्य काचिदपेक्षा इत्युक्तम् । ननु तत्क्षय (ननु तत्क्षय)स्यापि स[4] एव कारणं तत्कथं तदनुपपत्तिरिति चेत ; संसारनिर्वाणपुर-
१५ प्रवेशः । ततो मोक्षमिच्छता प्रकृत्यादिवद् ईश्वरोऽपि तत्कारणं नाभ्युपगन्तव्य इति ।

यदि चैवं (वा, एवं) व्याख्यायते–**देहादी(देरी)श्वरो हेतुः यदि** । किं कुर्वन् ? **वदन् ?** किम् ? **शास्त्र[म्]** । किं भूतम् ? इत्याह–**मोक्षाह्व(त्म)कं** मोक्षस्य [स]न्निधानं यस्मिन्निति । कुतः ? इत्याह–**संसार**त्यादि । तर्हि **विहन्यते** परस्परविरोधेन स्वरो (ईश्वरो) निराक्रियते । तथाहि–सर्वदा आत्मनो देहादिकर्तृत्वं प्रतिपद्यमान एव संसारादिक्षो
२० (संसारादिक्ष)यान् मोक्षह्वकं (क्षात्मकं) शास्त्रं वदन् तदभावं वदतीत्येष विरोधः । अथ तच्छास्त्रं तत्प्रणीतं [न] भवत्यन्यतो[6] भावात् ; न सर्वमीश्वरकृतम् , तेन[7] व्यभिचारात् ।

अथवा, यदुक्तम् 'कर्मपरवशः किं बुद्धिमानवेतम (नचेतनम)तिशेते संसारिणं वाऽऽत्मानम्' इति ? तत्त्व (तत्र) परकीयं तद्बुद्धिमत्त्वसाधनमाशङ्क्य दूषयन्नाह–**संसार**त्यादि । **देहादेरीश्वरो हेतुः यदि** 'प्रतीयेत' [इ]त्यध्याहारः। कि कृत्वा [३८३ख] **तद्धेतुरसौ** ?
२५ इत्याह–**संसारसुखसंवित्तिक्षयात्** तत्क्षयमाश्रित्य शुद्धसुखसंवित्ती[:] समाश्रित्य इति यादेव (यावत । एव)मर्थं च संसारग्रहणम् , इतरथा सुखसंवित्तिग्रहणमेव कुर्यात । किं कुर्वन् समाश्रित्य तद्धेतुः प्रतीयते ? इत्याह–**वदन् मोक्षात्मकं शास्त्रम्** , मोक्षग्रहणं तदुपज्ञाशेषतत्त्वोपलक्षणार्थम् । अत्र दूषणम् **विहन्यते ईश्वर** इति । तद्यथा–यदि शुद्धं सुखं संवेदनं चेश्चेष्टं (चेश्वरस्येष्टम् ,) तदेव परेषामपि विधातव्यम् , न शरीरादि । यदि पुनः न शरीरा ये

(१) पृथक्संवित्तिपदस्य ग्रहणम् । (२) संसारसुखसंवित्तीनाम् । (३) 'कार्यस्योपरमः कथम्'–न्यायवि० । (४) ईश्वर एव । (५) संसारावस्थायामेव मोक्षः स्यादित्यर्थः समर्थकारणसद्भावात् । (६) ग्रन्थकारादेः । (७) अन्यकृतशास्त्रेण ।

च [?] आत्मानोऽपि तदेव कुर्यात । अथ कर्मणः सहकारिणः परत्र भावात्तत्रैव तत्कुर्या [त] नात्मनि विपर्ययात ; कर्मापि इष्टतया आत्मनि विधातव्यम् , अन्यथा नान्यत्रापि । तस्य तदा [तद]हेतुत्वे[3] कथमव्यभिचारो हेतूनाम्[4] ? अथ[वा] शास्त्र(स्त्रं) विहन्यत(ते) प्रमाणेन इति व्याख्यातव्यम् । अत्र '**कः प्रेक्षावान्**' इत्यादि वृत्तिर्भविष्यति ।

कारिकां व्याख्यातुमाह–**सूत्रकार** इत्यादि । **सूत्रकारः** अक्षपादादिः **परं** [५] **पुरुषार्थमाह** । किम ? **निःश्रेयसाधिगमं** निःशेषवैशेषिकगुणप्रहाररूपनिर्वाणप्राप्तिम् । कुतः ? इत्याह–**आत्मादेः तत्त्वज्ञानात्** , नेश्वरात ; अन्यथा तद्वैफल्यम् । ईश्वर(रो) यावत तत्त्वज्ञानोत्पादनात्यांया (नाया)त्मानं क्लेशयति तावन्मोक्षमेव विदधातु इत्येतदनेन दर्शयति । **स एव सूत्रकारः संसारं मुक्तेः परं** प्रकृष्टं **सूचयति** । कुतः ? इत्याह–**देहादिरीश्वरहेतुः 'इति'** शब्दोऽत्र द्रष्टव्यः । इत्येवमाह **यतः** । निगमयन्नाह–**तदि**त्यादि । यत एवं **तत्तस्मात** [२८४क] [१०] **अनयोः** सूत्रकारवचसोः **परस्परविरोधात् बुद्धिमत्त्वं कथं कल्प्येत सूत्रकारस्य** इति । यदि वा, **सूत्रकारो** महेश्वरः सर्वस्य तत्पूर्वकत्वात अपरं पूर्ववत्[6] । अयं तु विशेषः **बुद्धिमत्त्वं कथं कल्प्येत** 'ईश्वरस्य' इति । अथवा, अक्षपादादियप्रेप (अक्षपादो निः-श्रेय)साधिग[म]माह, **देहादिः सूचयती**ति वाक्यभेदेन व्याख्यातव्यम् । '**देहादिर्हेतुरीश्वरः**' इति च पाठोऽस्ति । तत्राप्येवं वाक्यभेदः **तदनयोः ईश्वरकारयोः सूत्रकारये** (ईश्वरसूत्रका- [१५] रयोः) **बुद्धिमत्त्वं कथं कल्प्येत ?** परस्य ईश्वरबुद्धिमत्त्वसाधकं '**कः**' इत्याद्याशङ्कते दूषयितुम्– **कः प्रेक्षावान्** अतीन्द्रियार्थदर्शी **अपवर्गम्** उपलक्षणमेतत् अशेषाऽऽत्मादितत्त्वस्य । किंभूतम ? **अचैतन्यं** चेतनारहितत्वं **प्रतीयते,** त (यतः) **तद्विषयं शास्त्रं कुर्यात्** न कश्चित ? सुगतादेर-सम्बंधा(रसम्बद्धा)भिधायित्वात् कणचरादेश्च तदुपदेशादेह(देव)[9] समीहितसिद्धेः **यतोऽ**-न्यस्य तंप्रतिपन्ना (तत्प्रतिपत्तौ) **नेश्वरो बुद्धिमान्** । **यत** इति वाऽऽक्षेपे **यतो न बुद्धिमान्?** [२०] तद्वानेव । अत्र दूषणमाह–**ने**त्यादि । यदुक्तं **तन्न** । कुतः ? उक्तप्रकारादन्यस्य मुक्तिप्रकारस्य **संभवावेवमन्यन्ते** (**संभवात्** । एवं मन्यते) यथा ईश्वरस्य अनन्तज्ञानस्वभावस्य सतः तद्विव-नुक (तद्विघातक)कर्मापाये यदा सर्वज्ञत्वं न कदाचिदा(द)चैतन्यं तथाऽन्यस्यापि । विशेषः पुनरयमेव भवन्स्यापगमेन (मलस्यापगमेन) कस्यचित स्वाभाविकस्तदपायोऽन्यस्योपायात , [२५] ततोऽन्या(न्यो)विमुक्तिं प्रति यतत इति ।

एतदेव दर्शयन्नाह–**आत्मलाभ**मित्यादि ।

**[[10]आत्मलाभं विदुर्मोक्षं जीवस्यान्तर्मलक्षयात् ।**
**नाभावं नाप्यचैतन्यं नचैतन्यमनर्थकम् ॥१९॥**

(१) अन्यप्राणिषु । (२) कर्मणः । (३) ईश्वराहेतुकत्वे । (४) कार्यत्वादीनाम् । (५) बुद्धिसुख-दुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा विशेषगुणाः । (६) तत्त्वज्ञानं व्यर्थं स्यात् । (७) महेश्वरपूर्वकत्वात् । (८) व्याख्येयम् । (९) ईश्वरोपदेशादेव । (१०) तुलना–"न हि गुणादिविनाशात् जडः, गुणगुणिविनाशात् शून्यः, भोग्यविरहात् तदभोक्ता"–लघी० स्ववृ० श्लो०७६ । "स्वरूपावस्थितिः पुंसस्तदा प्रक्षीणकर्मणः । नाभावो नाप्यचैतन्यं न चैतन्यमनर्थकम् ॥"–तत्त्वानु० श्लो० २३४ ।

न वै निर्वाणम् अभवितुः निरात्मकम् अशेषगुणवैकल्यं सात्मकं दृश्य[दर्शन-रहितम्] शिष्मः द्रव्यान्तरवत् । किं तर्हि? मल[क्षयात्] जीवस्य आत्मलाभं मणिवत् । अन्यथा व्यर्थः प्रयासः । तथा सति नेश्वरो बुद्धिमान् अशेषगुणवैकल्यरूपमोक्षाभिधानात्, न कणभक्षादिः तदर्थं तद्वचनात् प्रवृत्तेः, परस्परविरुद्धाभिधानात् बुद्धवत् ।]

**जीवस्य आत्मलाभम्** अ[न]न्तज्ञानादिस्वभावलाभं **विदुर्मोक्षं** । तल्लाभः (तल्लाभः) कुतः? इत्याह–**अन्तर्मलक्षयात्** जीवस्य स्वभावान्यथाभावोऽन्तर्मलम् [३८४ख] तस्य क्षयात् । अनेन सामर्थ्याद् द्रव्यमलक्षयोऽप्युक्तः, तदभावे तदभावात् । **नाभावं जीवस्य मोक्षं विदुः** अस्याऽप्रमाणत्वात् । नापि तस्याचैतन्यं चेतनारहितत्वम् । किं **विदुः? [मोक्षं]** अत एव **न चैतन्यमनर्थकं** ग्राह्यशून्यं तस्य तं विदुः । स्वपरप्रकाशनलक्षणस्य ¹⁰ प्रतिबन्धाभावे नितरां लक्षणाभिव्यक्तिः न पुनरभावः । नहि भानुः जलदपटलविलये स्वपर-प्रकाशनरूपं विजहाति ।

[कारि]कां विवृण्वन्नाह–**नवै** नैव **निर्वाणं शिष्यः**(शिष्मः) । किम्भूतम् भवितं (तस्य ? **अभवितु**) रनुत्पत्तिमात्रस्य । वैशेषिकनिर्वाणाद् विशेषमाह–**निरात्मकम्** । तथा **न चैव निर्वाणं शिष्यः** (शिष्मः) । किम्भूतम् ? **अशेषविशेषगुणवैकल्यम्** बुद्ध्यादितत्त्वम् । सौगतादस्य ¹⁵ विशेषमाह–**सात्मकमिति** । कस्येव तद्वैकल्यं नवै ? इत्याह–**द्रव्यान्तरवदिति** । जीवा(व)-द्रव्यादन्यद् द्रव्यं पृथिव्यादि **तदन्तरम्** तस्येव **तद्वत्** । यथा निःस्वभावताभयात् न पृथिव्या-देरशेषगुणवैकल्यं तथा जीवस्यापि । अनेन परस्य तद्वैकल्य(ल्ये) दृष्टान्ताभावमाह । **तथा नवै निर्वाण(णं) शिष्मः** । कथम्भूतम् ? इत्याह–**दृश्येत्यादि** । किंभूतं तर्हि तद्भवन्तः कथयन्ति ? इत्याह–**किं तर्हि** इत्यादि । **किं तर्हि** किन्तु **जीवस्य** ज्ञस्वभावस्य **आत्मलाभं निर्वाणं** शिष्मः ।

(१) तुलना–"तस्मादनादिसन्तानतुल्यजातीयबीजिकाम् । उत्खातमूलां कुरुत सत्त्वदृष्टिं मुमुक्षवः ॥" –प्रमाणवा० २।२५६ । "तत्र निरवशेषस्याविद्यारागादिकस्य क्लेशगणस्य प्रहाणात् सोपधिशेषं निर्वाण-मिष्यते । तत्रोपधीयतेऽस्मिन्नात्मस्नेह इत्युपधिः । उपधिशब्देन आत्मप्रज्ञप्तिनिमित्ताः पञ्चोपादानस्कन्धा उच्यन्ते । शिष्यते इति शेषः । सह उपधिशेषेण वर्तते इति सोपधिशेषं । किं तन्निर्वाणम्? तत्र स्कन्ध-मात्रकमेव केवलं सत्कायदृष्ट्यादिक्लेशतस्कररहितमवशिष्यते निहताशेषचौरगणग्राममात्रावस्थानसाधर्म्येण । तत्सोपधिशेषं निर्वाणम् । यत्र तु निर्वाणे स्कन्धमात्रमपि नास्ति तन्निरुपधिशेषं निर्वाणम् । निर्गत उपधि-शेषोऽस्मिन्निति कृत्वा, निहताशेषचौरगणस्य ग्राममात्रस्यापि विनाशसाधर्म्येण । तदेव चाधिकृत्योच्यते··· ऽसंलीनेन कायेन वेदनामध्यवासयत् । प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतसः ॥"–माध्य० वृ० पृ० ५१९–२० । (२) "नवानामात्मगुणानामत्यन्तोच्छित्तिर्मोक्षः ।"–प्रश० व्यो० पृ०६३८ । "यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः । तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्प्यते ॥ ननु तस्यामवस्थायां कीदृगात्मा-वशिष्यते । स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः ।"–न्यायम० पृ० ५०८ । प्रश० कन्द० पृ० २८७ । प्रश० किर० पृ० ६ । (३) तुलना–"तस्मात्तत्संयोगाद् दृश्यस्योपलब्धिर्या स भोगः, या तु द्रष्टुः स्वरूपो-पलब्धिः सोऽपवर्गः ।"–योगभा० २।२३ । (४) द्रव्यकर्माभावः । (५) अन्तर्मलरूपभावकर्माभावे । (६) जीवस्य । (७) जीवस्य । (८) मोक्षम् । (९) ब्रूमः । (१०) वैशेषिकस्य । (११) "शिवमजरमरुज-मक्षयमव्याबाधं विशोकभयशङ्कम् । काष्ठागतसुखविद्याविभवं विमलं भजन्ति दर्शनपूताः ॥"–रत्नक० श्लो० ४०। सर्वार्थसि० पृ०१।

कुतः ? इत्याह–**मलेत्यादि** । कस्य वा[1] ? इत्याह–**मणीत्यादि** । तदनभ्युपगमे दूषणभावान्यथे (दूषणमाह–**अन्यथा** इ)त्यादि । निर्वाणस्यास्याभावप्रकारेण **अन्यथा** मोक्षार्थिनां[2] **व्यर्थः प्रयासः** । सभावस्य (अभावस्य) नाशयितुमशक्तेः प्रयोजनाभावाच्च इति भावः । एवं जीवस्य आत्मलाभ-लक्षणो(णे) मोक्षे सति यज्ज्ञानं [३८५क] परस्य तद्दर्शयन्नाह–**तथा सतीत्यादि** । **तथा** तेन प्रकारेण **सति** जीवस्य आत्मलाभलक्षणे मोक्षे **नेश्वरो बुद्धिमान् अशेषविशेषगुणवैकल्यरूपस्य** ५ **मोक्षस्या नभि(स्याभि)धानात्**, **न कण (कण)भक्षादिः**[3] बुद्धिमान् **तदर्थं**[4] **तद्वचनात् प्रवृत्तेः** । एतदेव दर्शयन्नाह–**परस्परेत्यादि** । स्वात्मन्यवस्थानम् आत्मनोऽशेषगुणवैकल्येन, तस्मिन् सति[5] तदभावापत्तेः[6] **विरुद्धं** तदपि[7] तस्य तत्रावस्थानेन[8], तस्या**भिधानात्** । निदर्शनमाह–बुद्धेन तुल्यं वर्त्तते इति **बुद्धवत्** ।

बुद्धस्याऽबुद्धिमत्त्वं दर्शयन्नाह–**तत्त्वमित्यादि** । १०

**[तत्त्वं शून्यं पदार्थानां येषां ते निरात्मनः ।**
**निर्वाणं किं विशिष्येत तदर्थञ्च तपश्चरेत् ॥२०॥**

पञ्च[स्कन्ध]अपुनर्भवलक्षणं निर्वाणं स्वरसतः सिद्धं यदर्थं तपस्तपेत् । सन्तानस्य असंस्कृतत्वादसत्त्वात् । चरमचित्तस्य अकिञ्चित्करत्वेन अवस्तुत्वे तद्धेतुपरम्परया अपि तथाऽभावात् । द्रव्यसन्तानानां स्वहेतुफलप्रवृत्तिरेव लक्षणं परस्परप्रत्ययात्मकत्वात् । १५ कथमन्यथा 'यस्मिन् सत्येव यद्भाव एव विकारे च विकारः तत् कार्यमितरत् कारणम्' इति लक्षणं व्यवतिष्ठेत ? न चापरमन्योऽन्यप्रत्यक्षलक्षणम् । यदि पुनश्चिन्तामयीमेव प्रज्ञामनुशीलयतां विभ्रमविवेकनिर्मलमनःप्राप्तिः निर्वाणम्; तदपि मिथ्याभावनायां न संभवति [कामशोकभयोन्मादादिवत् ] नैरात्म्यम्...]

**ते** तव । कस्य ते ? इत्याह–**निरात्मनः** सौत्रान्तिकादिमतवतां([9]मतवतः) बुद्धस्य २० इत्यर्थः । ये **पदार्थाः** रूपादयः पञ्चस्कन्धः (न्धाः), बहिरर्थशून्याः विज्ञानसन्तानाः, सकल-शून्यता वेति **तेषां तत्त्वं** स्वरूपं **शून्यं** निःस्वभावं निरुपितविधिना तत्त्वस्य घटनायोगात् । तथा सति [किम् ? इ] त्याह–संसार (रात् ) **किञ्चिष्येन (किं विशिष्येत) निर्वाणं** तेनैव भिमतरयोः (अभिमततरयोः) अविशेष इति यावत् । दूषणान्तरमाह–**तदर्थम्** । किम् ? **तपः चरेत्त**[10] जनः । **च** शब्दो दूषणसमुच्चये । २५

[कारि]कार्थं दर्शयन्नाह–**पञ्चेत्यादि** । **निर्वाणं सिद्धम्** । किं रूपमपि (पम् ? इ) त्याह–**[अ]पुनर्भवलक्षणम्** । कुतः ? इत्याह–**स्वरस्व(स)तः** । कारणमन्तरेण कस्यचिदभावे पुनर्भवाभावादिति भावः । **यदर्थ(र्थं)** यस्य निर्वाणस्य निमित्त(त्तं) यस्तस्येन (**तपस्तपेत्**)

(१) वा इवार्थे । (२) कणाद-अक्षपादादयः । (३) मोक्षार्थम् । (४) ईश्वरवचनात् । (५) अशेषगुणवैकल्ये सति । (६) स्वात्मन्यवस्थानस्य अभावः स्यात् । (७) अशेषगुणवैकल्यम् । (८) स्वात्मन्यवस्थानेन । (९) विरुद्धमिति । (१०) मतवादिनः । (११) ते तव ।

तत्स्वत एव सिद्धम् । सन्तानक्षयार्थं तपस्तप्यत इत्येवं चेत्; अत्राह–[सन्ता]नेत्यादि । असंस्कृतत्वात् सन्तानिभ्यो भिन्नस्याभिन्नस्य वा सन्तानस्य स्या (तस्याऽ)सत्त्वात्, ततः तत्क्षयार्थो यत्नः किंशुकरागावधिरिफल एव इति भावः । इतश्च न तत्क्षयार्थो यत्न इति [३८५ख] दर्शयन्नाह–चरमेत्यादि । यस्य न कदाचिदपरं सजातीयं चित्तं भविष्यति तच्चरमचित्तं [न] स्यात् किञ्चित्करत्वेन।र्थक्रियाकारित्वेन अवस्तुत्वे सति तद्धेतुपरम्परया अपि तथा तेन अवस्तुत्वप्रकारेण अभावाय(त्र) सन्तानक्षयार्थं तपस्तप्यत इति । ततो विजाती(य)योगिज्ञाना-(न)भावादपि इति चेत्; अत्राह–स्वेत्यादि । स्व वत (स्वं च तत्) हेतुफलं च स्वोपादानोपादेय इत्यर्थः, ताभ्यां प्रवृत्तिः । केषाम् ? इत्याह–द्रव्यसन्तानानां गुणपर्यायवन्ति द्रव्याणि, तत्सन्तानानां द्रव्याणां च तत्प्रवृत्तिरेव लक्षणं तथैव दर्शनात् । न च यस्य यल्लक्षणं

१० तत्तदभावे भवति, स्वसंवेदनाभावे ज्ञानवत् । ततो यथा ज्ञानात् तत्संवेदनसिद्धिः तथा द्रव्यात् तत्प्रवृत्तिसिद्धिः इत्यस्य पुनर्दर्शनार्थं द्रव्यग्रहणम् । इतश्च तत्प्रवृत्तिरेव तेषाम्, इत्याह–परस्परेत्यादि । परस्परमन्योन्यं प्रत्ययः कारणं भावप्रधानोऽयं निर्देशः, स एव आत्मा स्वभावो येषां तेषां भावात् तत्त्वात् तेषां प्रवृत्तिरेव । एवं मन्यते–यथा योगिनोऽन्यस्य वा अचरमचित्तं सहकारिकारणम् अन्यथा विपक्षत्वायोगात्, तथा मच्चि (स्वचि)त्तस्यापि योग्यत्यो वा, अन्यथा

१५ रूपस्य रसं प्रति सहकारित्वेऽपि न रसस्य तंप्रति तद् इति *"एकसामग्र्य (सामग्र्य)-धीनस्य" [प्र० वा० ३।८] इत्यादि प्लवते । तथा सति उपादानसहकारिप्रत्ययसानिध्य (सान्निध्ये) विजातीयवद् अन्यदवि(पि) कार्य(र्यं) केन वार्यते ?

एतेन वम(चरम)स्योपादानशक्तिवैकल्यं निरस्तम्, अन्यत्रापि प्रसङ्गात् । अथापि स्यात् [३८६क] सजातीयानुसत्त्वा (नुबन्धात्) तस्य तृष्णापि कारणम् इति "तदनु[बन्धा]-

२० भावादननुसन्तानं" [नः] । तदुक्तम्–

*"दुःखे विपर्याससतिः तृष्णा वा बन्धकारिणम् (कारणम्) ।
प्राणिनो यस्य ते न स्तो न स जन्माधिगच्छति ॥" [प्र० वा० १।८३]

इति चेत्; न, तत्कार्यस्य हीनस्थानानु सत्त्वा (नानुबन्धसन्ता)नस्य तदभावेऽभावात् न चित्तमात्रस्यस्यातत्कार्यत्वा हि (त्रस्यातत्कार्यत्वात् वि)तृष्णेऽपि स्थानिति भावात् ।

२५ अथ मतम्–शुद्धाशयानां वहाव (महाक)रुणावशात् सदवस्था न (सदावस्थानम्) तदुक्तम्–
*"तिष्ठन्त्येव पराधीना येषां तु महती कृपा ।" [प्र० वा० १।२०१] सन्तानोच्छेदवतां तु

(१) उत्पादादित्रयरहितत्वात् असत्त्वादित्यर्थः । "उक्तं हि भगवता त्रीणीमानि भिक्षवः संस्कृतस्य संस्कृतलक्षणानि । संस्कृतस्य भिक्षव उत्पादोऽपि प्रज्ञायते व्ययोऽपि स्थित्यन्यथात्वमपि इति । न चाविद्यमानस्य खरविषाणस्येव जात्यादिलक्षणमस्ति ।"–माध्य० वृ० पृ० १४५ । (२) क्षणेभ्यः । (३) सन्तानक्षयार्थः । (४) युक्तम् । (५) हेतुफलभावप्रवृत्तिरेव । (६) कारणम् । (७) उत्तररसं प्रति । (८) उपादानकारणत्वम् । (९) 'रूपादे रसतो गतिः । हेतुधर्मानुमानेन धूमेन्धनविकारवत्' इति शेषः । (१०) तृष्णानुबन्धाभावात् । (११) न अनुसन्तानः अननुसन्तानः, पश्चात् सन्तानाभाव इत्यर्थः ।

तंदभावात् सदानवस्थायित्वमिति; तदयुक्तम् ; अचेतनवत्तदभावेऽपि स्वहेतोरेव प्रबन्धाऽनिवृत्तेः। तत[:] स्थितम्–'**परस्परप्रत्ययात्मकत्वात्**' इति ।

स्यादेतत् चरमचित्तस्योभयशक्तियोगेऽपि परत्र बहुलं तथा दर्शनात्तदनुरूपं या[वद्]-दृष्टकल्पनं युक्तम्, अन्यथा ज्ञानमनवयवेन स्वावभासि कथं सिध्येत् ? बा[ध]कमन्यत्रापि दर्शितम् 'रसाद् रूपप्रतिपत्तिर्न स्यात्' इति । विजातीयवत् सजातीयं कार्यं स्वयमेव न जायत ५ इति कथमुच्यते–'**स्वहेतुफलप्रवृत्तिरेव द्रव्यसन्ता[ना]नाम्**' इति ? तत्राह–**कथमन्यथा** इत्यादि । तत्प्रभवे(भवा)कारणान्यथा **यस्मिन्** कारणाभिमते **सत्येव** नासति **यद्भावो** यस्य कार्याभिमतस्य भावः उत्पाद एव इत्यवधारणीयम् **विकारे** च यस्य विकृतौ च **विकारो 'यद्विकारः'** इति द्रष्टव्यम् , इदम् उपादेयस्य, पूर्वं कार्यमात्रस्य लक्ष[णम्] **तत्तस्य कार्यं** तथेतरत् **कारणम्** इति च द्रष्टव्यम् इत्येवं **लक्षण[णं]** कार्यकारणयोः **कथं** न कथञ्चिद् **व्यवतिष्ठेत ?** १० यथैव हि [३८६ख] चरमचित्ताभिमते समर्थेऽपि स्वयमेव न भवति, तथा अस्मिन् सत्यपि स्वयमेव भविष्यति, यथा सभागमकुर्वतोऽपि विसभागकरणम् तथा विसभागमकुर्वतोऽपि अन्यकरणमिति न सामर्थ्यजन्यता कार्यस्य, कदाचिदुभयं वा स्वयमेव न भविष्यति, इति कार्यमकुर्वतोऽपि चरमस्य सत्त्वं नित्यस्यापि तमिति (तदिति) भावः ।

यदि मतम्–उपादानेन सहकारिकारणस्ते (णस्य तेन वोपा)दानस्यातिशयापादनं न सह- १५ कारित्वम् अपि तु सर्वेषाम् एकत्र कार्ये व्यापारः, स चरमस्यापि न विरुध्यते इति ; तत्राह–**नचे**त्यादि । **नचापरम्** उक्तादन्यत् **अन्योऽन्यप्रत्ययलक्षणं** किन्तु एतदेव । न हि सदा स्वं नित्यस्य समर्थस्य परापेक्षा इत्युक्तम् । एतेन अन्त्यशब्दस्य ककालीयानारंभे(सजातीयानारम्भे) सत्त्वं निरंशसन्ना (निरंशसत्ता) सम्बन्धोऽपि चिन्तितः ।

ननु मा भूत् चित्तसन्ताननिवृत्तिर्निर्वाणम् , आस्रववि(नि)रोधो निरास्रवचित्तोत्पत्तिः २० तत् स्यात् ; एतदेव दर्शयति दूषयितुं **यदि** इत्यादिना । **यदि पुनः विभ्रमविवेकनिर्मलमन-[:] प्राप्तिर्निर्वाणम्** । किं कुर्वताम् ? इत्याह–**चिन्तामयीमेव** अनित्यत्वाद्यनुमानरूपामेव नान्यां **प्रज्ञां** बुद्धिम् **अनुशीलयताम्** अभ्यस्यताम् इति । तत्र दूषणमाह–**तच्चे**त्यादि। **तदपि** निर्वाणं **न संभवति** इत्युक्तम् । कथम् ? **अतत्त्वभावने**त्यादिना। कस्मिन् सति तन्न संभवति ? इत्याह–

(१) महाकरुणाऽभावात् । (२) दीपादौ । (३) "सत्येव यस्मिन् यज्जन्म विकारे चापि विक्रिया । तत्तस्य कारणं प्राहुः···"–प्र० वा० १।१८२ । (४) कार्यम् । (५) सजातीयम् । (६) विजातीय । (७) सत्त्वमिति । (८) 'स्वं' इति निरर्थकम् । (९) निर्वाणम् । (१०) "कार्यकारणभूताश्च तत्राविद्यादयो मताः । बन्धस्तद्विगमादिष्टो मुक्तिर्निर्मलता धियः ॥···यथोक्तम्–चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥"–तत्त्वसं० प० पृ० १८४। (११) वृत्तस्थः श्रुतचिन्तावान् भावनायां प्रयुज्यते । धियः श्रुतादिप्रभवा नामोभयार्थगोचराः ॥ ५ ॥ श्रुतादिभ्यः प्रज्ञा प्रभवति (जायते) तत्र श्रुतमयी प्रज्ञा नामार्थम् , चिन्तामयी उभयस्य नाम्नोऽर्थस्य च कृते । भावनामयी प्रज्ञा केवलमर्थस्य कृत इति वैभाषिकाः । सौत्रान्तिकाः (वसुबन्धुः) श्रुतमयी प्रज्ञा हि आप्तप्रमाणजो निश्चयः, चिन्तामयी प्रज्ञा युक्तिनिध्यान (युक्त्या नितीरण)जो निश्चयः, समाधिजो निश्चयः भावनामयी प्रज्ञा ।"–अभिध० को० टी० पृ० १६१ ।

**मिथ्याभावनायां मिथ्या** परस्यै सर्वस्य (सर्वस्य क्षणिकत्वा) नुमानं तस्य **भावनायां** सत्याम्। नहि मिथ्याज्ञा[ना]भ्यासात् तत्त्वज्ञानं कामशोकभयोन्मादादिवत् ।

अपर आह–यथा आत्मन्यवैनतेयेऽपि 'वैन[ते]योऽहम्' [३८७क] इति, [1]मिथ्याभावनायामपि विषापहारः तथा प्रकृतायामपि दोषापहार इति चेत् ; न ; आत्मादिभावनायामपि
५ तत्प्रसङ्गा[त्], निदर्शनस्य चोभयत्र समानत्वात् । '[2]वस्तुप्रतिबन्धात् मिथ्यात्वेऽपि न दोषः' इत्यपि न यु[क्तम्, उ]क्तोत्तरत्वा[त्] तदभावादिति । 'तन्निर्वाणमुपपन्नं न तत्कारणम्' इत्यनेन दर्शयति । स्वयं च निर्वा(र्वी)जीकरणदृष्टान्तेन दीक्ष(क्षा)या निर्वाणहेतुत्वं साधयन्तं निराकृत्य विषापहारनिदर्शनेन मिथ्याभावनया: तत्साधयति इत्ययुक्तकारी ।

ननु मिथ्यात्वाविशेषेऽपि *"सर्वं दुःखमनित्यम्" इत्याद्युक्तेः विषयेषु वैराग्यम्
१० *"**उपस्थमूत्रछिः(छिद्र)वत्**" इत्युक्ते[:] *"**नात्मावि(दि)तत्त्वम्**" इत्युक्ते[श्च] । ततो नैरात्म्यभावनैव मुक्त्यङ्गमिति चेत् ; अत्राह–[**वैराग्य**] मित्यादि । अत्रायमभिप्रायः–आत्मेकोऽनादि[नि]धना(न)ज्ञानस्वभावः, तस्य आगन्तुका रागादयः, मर्त्या(शरी)रादयश्चेत्युक्तेऽपि तत्र तत्त्वविदो वैराग्यसंभवात् , यथा कस्यचित् महाद्भावस्य (महाकुलोद्भवस्य) कुतश्चिदकर्त्तव्ये प्रवृत्तस्य पुनः कुलशौर्यादिवर्णने तत्र वैराग्यम् , अतत्त्वविदो मूत्रच्छिद्रम् इत्युक्तेऽपि न तत्र तत् ।
१५ गलंगधि(गलद्गन्धि)रादितच्छिद्रदर्शनेऽपि [10]तस्य तत्र प्रवृत्तिदर्शनात् , [11]विपरीतस्य [12]वराङ्गमित्युक्तेऽपि [13]तदिति । [14]यदिति ।

यदि वा, मदीये पक्षे मिथ्याभावनायां निर्वाणं न संभवति आत्मवादिमते तु तदर्थमनुष्ठानमपि[15] । तथाहि–

*"**यः पश्यता(त्या)त्मानं तत्रास्याहमिति शाश्वतस्नेहः ।**
२० **स्नेहात् सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते ॥"**
[प्र० वा० १। २१९]

इति चेत् ; अत्राह–**चेतनोऽहम्** इत्यादि ।

**[ चेतनोऽहं मम ज्ञानं स्वरूपं कर्मणाऽरिणा ।**
**तद्वैकल्यमितीहेत कैवल्यार्थमुपायतः ॥२१॥**

(१) बौद्धस्य । (२) गरुडभिन्नेऽपि । (३) गरुडोऽहम् । (४) "कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः । अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥"–प्र० वा० २।२८२ । (५) अनुमानस्य परम्परया वस्तुप्राप्तेः । (६) "इदानीं नास्ति सामर्थ्यं दीक्षादीनामजन्मने । यदि स्यान्मरणादूर्ध्वमिति नास्ति प्रमेदृशी ॥...निर्ह्रासातिशयात् पुष्टौ प्रतिपक्षस्वपक्षयोः ॥२६७॥ दोषाः स्वबीजसन्ताना दीक्षितेऽप्यनिवारिताः ।"–प्र० वा०, प्र० वार्तिकाल० पृ० १६० । (७) "तस्माद् भूतमभूतं वा यद् यदेवाभिभाव्यते । भावनापरिनिष्पत्तौ तत् स्फुटाकल्पधीफलम् ॥"–प्र० वा० ३।२८६ । (८) जायते । (९) वैराग्यम् । (१०) अतत्त्वविदः । (११) तत्त्वज्ञस्य । (१२) श्रेष्ठमङ्गम् । (१३) वैराग्यम् । (१४) 'यदिति' निरर्थकमत्र । (१५) 'न संभवति' इति सम्बन्धः ।

**आ[त्मा]त्मीयतत्त्वमजानन्नेव कः दुःख[पीडितोऽपि] हिताहितप्राप्तिपरिहारयोः प्रवर्तेत मत्तवत् ? यदा पुनः कुतश्चित् अनन्तज्ञानादिकं चैतन्यमात्मतत्त्वं तत्त्वज्ञानेन च तदुपेयं मिथ्यात्वादि कर्म हेयं प्रतिपद्येत तदा आत्मानं परं वा निर्व्याधितं कर्तुकाम इव निसर्गात् तदुपायेऽभियुज्येत नान्यथा। एकान्तपक्षे स्वपरश्रेयःप्राप्तेरत्यन्तमसंभवात् ।]** ५

**चेतनः** स्वयं(स्व)परज्ञोऽहम् । कुतः ? इत्यत्राह–**मम ज्ञानं स्वरूपं** यतः अन्यथा [३८७ख] घटादिवत्तदयोगात् ।

[1]ननु ज्ञानसम्बन्धाच्चेतनो न ज्ञानस्य [2]तत्स्वरूपत्वादिति चेत् ; [3]सम्बन्धे तस्य प्राक्नार्थतन (प्राक्तनाचेतन)रूपपरित्यागे अनर्थकं तत्सम्बन्धकल्पनम् , तत्स्वरूपत एत (पत्यागत) एव चेतनोपपत्तेः । [4]तदपरित्यागे न चेतन[ः] स्यात् , तद्वाँस्तु भवेत् । नहि दण्डसम्बन्धाद् १० देवदत्तो दण्डो भवति । 'धनुः प्रविशति' इत्यादिवत्[5] स्यादिति चेत् ; न; उपचारमात्रं दृढप्रत्ययवर्जितं भवेवं (भवेत्) । कथं च भिन्न(न्नं)ज्ञानं [तस्य] ? सम्बन्ध(न्धा)सिद्धिः(द्धेः) । तदुपचारान्चेत् ; सोऽपि कुतः ? तत्सम्बन्धात्[6] ; अन्योऽन्यसंश्रयः ।

किञ्च, ज्ञानस्यापि स्वग्रहणविक[ल]स्य कुतश्चेतनता, यतोस्योपि (यतोऽन्योऽपि) तत्सम्बन्धाच्चेतनः स्यात् । अर्थग्रहणादिति चेत् ; न ; स्वग्रहणाभावे [7]तदयोगात् । स्वपरप्रकाशनं १५ वरमात्मन एव कल्पितं किमपरेण ज्ञानेन ? ततः स्थितम्–**'मम ज्ञानं स्वरूपम्'** इति ।

[8]सर्वस्य सर्वदर्शित्वं चेत् ; अत्राह–**कर्मणा** [इ]त्यादि । **कर्मणा** । किम् (म्भू)तेन ? **अरिणा** तत्स्वरूपनाशकत्वाद् वैरिणा । **तद्विकल्पं (तद्वैकल्यम्)** तस्य ज्ञानस्वरूपस्याऽसम्पूर्णत्वम् नियतप्रकाशनरूप**मिति** हेतोः **कैवल्यार्थं** केवलस्य कर्मविकलस्य आत्मनो भावः कैवल्यं तदर्थम् । **उपायतः** सम्यग्दर्शनादिकमुपादाय (मुपाय)माश्रित्य **ईहेत** यतेत । २० को हि नाम ज्ञानवा[न् आ]त्मनो वैरिणं सोपायविलयं वीक्ष्य(क्ष)माणोऽपि उपेक्षते तत्कृतागन्तुकसुखलेशपाशवशात् ।

कारिकां व्याख्यातुमाह–**आत्मेत्यादि** । अत्रायमभिप्रायः–अतत्त्वज्ञो वाऽऽत्मदर्शी तदर्थं न प्रवर्त्तेत, तत्त्वज्ञो वा ? त[त्र] प्रथमपक्षे सिद्धसाधनमित्याह–**कोनन्नेव (कोऽजानन्नेव) प्रवर्त्तेत ?** किम् ? इत्याह–**आत्मीयतत्त्वम्** [३८८ क] अनन्तज्ञानादिकं यावद्द्रव्यभावि- २५ त्वादिति निरूपयिष्यते, न शरीरादिकं[10] तत्प्रभवं वा सुखादिकं विपर्ययात्[10] परतन्त्रत्वाच्च[11] । के (क्वे)त्याह–**हितेत्यादि** । **हितं** निर्वाणं तत्साधनं च **अहितः** संसारः तद्धेतुश्च तयोर्याथासङ्ख्येन **प्राप्तिश्च परिहारश्च** तयोरिति । क इव ? इत्याह–**मत्तेत्यादि** ।

ननु दुःखानुभवे तदजानन्नपि तत्र प्रवर्त्तेत इति चेत् ; अत्राह–**दुःखेत्यादि** । नहि

(१) नैयायिकः प्राह । (२) आत्मस्वरूपत्वात् । (३) ज्ञानसमवाये । (४) अचेतनस्वरूपापरित्यागे । (५) उपचारात् । (६) चेत् ; । (७) अर्थग्रहणायोगात् । (८) तथा सति । (९) आत्मीयं तत्त्वम् । (१०) यावदात्मद्रव्यं तावत् शरीरादिकं न भवति । (११) इन्द्रियाद्याश्रितत्वात् ।

बुभुक्षापीडितोऽपि बालकः उदनं (ओदनं) तदुपायं च जानन् तत्र प्रवर्त्तते । द्वितीयपक्षे आत्मदर्शी तदर्थं प्रवर्त्तते ; इत्याह--**यदा** [इत्यादि] । **पुन**रिति पक्षान्तरद्योतने, **कुतश्चिद्** अनुमानादिप्रमाणा[न] **प्रतिपद्येत** पुरुषः । किम् ? इत्याह-**आत्मतत्त्वं** जीवस्वरूपम् । किं तत् ? इत्याह-**चैतन्यम्** ।

५ ननु तेन सर्वदा प्रतिपन्नं सर्वोऽपि, इति स तदर्थं प्रवर्त्तेत इति चेत ; अत्राह-**अनन्तज्ञान** इत्यादि । चैतन्यविशेषणम् अन्यत । तत्किम् ? इत्याह-**उपेयम्** । तथा **यदि पुनः प्रतिपद्येत,** किम् ? इत्याह-**कर्म** । किंभूतम् ? **हेयम्** । केन ? इत्याह-**तत्त्वज्ञान** इत्यादि । यथा च 'तत्त्वं यं' तथा प्रतिपादयिष्यते । पुनरपि किंभूतं तत् ? इत्याह-**मिथ्ये**त्यादि । तत्प्रभवं तदात्मा नित्वा (तदात्माऽनित्यत्वादिकं) तदुपयुक्तमदिरादिवत् । तत्र कुतश्चिदिति । तत्कुतो

१० जायते ? इत्याह-**निसर्गादितवा (निसर्गादि**त्यादि, **तदा) तदुपाये** निर्वाणोपाये **भिश्रक्ष्युत (अभियुज्येत)** । क इव ? इत्याह-**आत्मान**मित्यादि । **[आत्मानं]** स्वं **परं वा निर्व्याधितं कर्तुकाम इव,** वैद्य इव इत्यर्थः । यथा आत्मानं पश्यन्नपि वैद्यः तत्त्वदर्शी स्वस्य परस्य ताधागं (वा व्याधारोग)हानार्थं तदुपाये वमानादौ (वमनादौ) तदा(द)धिकं सुखं मन्यमानः प्रवर्त्तते तथा प्रकृतोऽपि पुरुष इति, न्यथा (**नान्यथा**) नापरेण प्रकारेण तत्राभियुज्येत

१५ [३८८ख] । कुतः ? इत्याह-**एकान्तपक्षे** [नित्यैकान्तपक्षे] क्षणिकैकान्तपक्षे च **स्वपरयोः श्रेयसो** मुक्तेः **प्राप्तेरत्यन्तमसंभवात्** ।

एतदपि कुतः ? इत्याह-**चित्ते**त्यादि ।

**[ चित्तस्वपरसन्तानभेदाभेदाव्यवस्थितेः ।**
**मैत्र्यादिर्विशेषेण क्रियासङ्करशङ्किनाम् ॥२२॥**

२० **स्वसंवेदनमेव लक्षणं चित्तस्य, अन्यथा सर्वचित्तचैत्तानामात्मसंवेदनं नोपपद्यते । न चैकान्तस्वसंवित्तिश्चित्तस्य भ्रान्तेरभावप्रसङ्गात् । यथादर्शनम् अनेकान्तात्मकत्वात् , यथाकृतं तत्त्वस्य स्वतः प्रतिपत्तेः । परतश्च न संभवत्येवाधिगतिः, ज्ञानान्तरस्य अतद्विषयत्वात् अनन्यवेद्यनियमात् अनेकान्तस्वरूपस्यापि ग्रहणाविरोधात् । तत्र स्वपरचित्तव्यवस्था । विषयाकारविवेकस्य स्वतोऽवोध्यस्य परत्वप्रसङ्गात् । परचित्तस्यापि**

२५ **सहोपलम्भादिभिः स्वस्वभावापत्तेः । चित्तानां कुतः सन्ततिः कार्य...स्वपर...यस्मिन् सति...खरविषाणवत् । न च...ततो नैरन्तर्यम् । कार्य...तथा चात्यन्तमसतः कार्यत्वं प्रतिषिद्धं वेदितव्यम् । कथं पुनः सतः कार्यत्वं कृतत्वात् कारणवदिति ? एकान्तानङ्गीकरणादनुकूलमाचरसि । यथैव तर्हि सत्कार्यं तथैव नोत्पत्तुमर्हति निष्पन्नत्वात् , यथा चासत् तथा च अत्यन्तमसंभवात् खपुष्पवत् इति । तच्चेदं कृतोत्तरम् । न क्वचिदेकान्त-**

३० **दर्शनं यदवलम्ब्य अनेकान्तसिद्धिः संशयादिना उपालभ्येत । तदपह्नवे क्व कस्य करणादयः ? स्वपरसन्तानभेदानुपलब्धौ सत्त्वभेदाभावात् । सत्यां च स्वपरसन्तान-**

(१) चैतन्यम् । (२) चैतन्य-कर्मणी । (३) 'यं' इति व्यर्थम् ।

**व्यवस्थायां कथमेवं पराप्रत्यक्षत्वात् कार्यादृष्टेश्च प्रमाणाभावात् गुणदोषान् कथञ्चिद-जानानोऽयं यथाविषयं मैत्र्यादीन् भावयेत् ? ]**

**चित्तं** द्विविधम्–क्षणिकन (कम)व्यापकं सौकतकल्पितम्, नित्यं व्यापकं च साङ्ख्य-वेदान्तवाद्यभिमतम्, तत्त्व **स्वे परो व** (तत्र **स्वः परश्च) सन्तानश्च** सभागहेतुफलप्रब-न्धः, तदभावे विसभागप्रस(गस)न्तानो दूरोत्सारित एवं (एव) तदपेक्षत्वात, तस्य **भेदश्च** ५ प्रव्यादी (पृथिव्यादी)नां नानात्वम् **अभेदश्च** तेषामेव एकत्वम् तेषाम् **अव्यवस्थितेः** कारणात् '**एकान्तपक्षे**' इति सम्बन्धः। तथाहि–निरंशं न किञ्चित सदपि चित्तं स्वतोऽध्यक्षतः प्रतीयते। अत एव नाऽनुमानतोऽपि ; हर्षविषादाद्यनेकाकारविवर्त्तस्य स्वयमनुभवात। विचारितं चैतद् विचारयिष्यते च। [1]तदप्रतीतौ च स्वपरेत्यादिव्यवस्थापि दुर्घटा। न केवल(लं) तत्र श्रेयः-प्राप्तेरत्यन्तमसंभवः किन्तु मैत्र्यादेरपि इति दर्शयन्नाह–**मैत्र्यादि**रित्यादि। न केवलं **आदि**- १० शब्देन करुणादेरेव परिग्रहः किन्तु दीक्षादेरपि, स त्क सिष्ठे (सः शिष्ये)ऽन्यत्र वा न क्वचि-त, अनुष्ठानवतः कस्यचिदभावादिति भावः। युक्त्यन्तरमाह–**विशेषेणे**त्यादि। न्यायातिरेक-म(मे)तेन दर्शयति। **क्रिया** व्यापारव्याहारादिः तस्याः **सङ्करः** सरागे वीतरागे(ग)[2]चेष्टासंभवः [2]तत्र वा सरागाचरणं(ण)संभवः तं किंतुनां (**शङ्कितुं**) शीलानां सौगतानाम्। क मिष्यादौ (शिष्यादौ) **मैत्र्यापि(दिः)** ? तस्य सतो ज्ञातुमशक्यत्वात। यदि वा तच्छङ्किनां साङ्ख्या- १५ नाम्। ते हि *"**सर्वं सर्वत्र विद्यते**" [3]इति वदन्तः मैत्रीविषये उपेक्षाविषयं [३८९ क] किन्न शङ्कते(न्ते)। एतेन वैशेषिकादिरपि चिन्तेतः (चिन्तितः) गुणिनो(गुणगुणिनो)र्भेदैकान्ते शिष्ट-त्वादिगुणाधारनियमाऽशिष्टेः(माद्दृष्टेः)।

कारिकार्थं कथयितुमाह–**स्वसंवेदनमेव** इत्यादि। अयमेवकारः स्थानत्रये द्रष्टव्यः–**स्वसंवेदनमेव लक्षणमेव चित्तस्यैव** इति। २०

ननु परसंवेदनमपि [4]तस्यास्ति तदपि लक्षणं कस्मान्नोक्तमिति चेत ; अव्यापकत्वात्, सुखादावसत्त्वात्। तदेव तल्लक्षणं कुत इति चेत् ? अत्राह–**सर्वे**त्यादि। स्वसंवेदनमेव चित्त-स्यैव लक्षणमेव इत्यस्याभावप्रकारेण **अन्यथा आत्मसंवेदनं** स्वरूपग्रहणं **नोपपद्यते** तदेकार्थम-समर्थ (तदेकार्थ)समवेतानन्तरज्ञानेन[5] अर्थापत्त्या[6] वा तद्ग्रहणे अनवस्थाप्रसङ्गादिति भावः। अनेन तल्लक्षणमेव इति कथितम्। केषाम् ? इत्याह–**सर्वेषां चित्तानां** नीलादिज्ञानानां **चैत्तानां** २५ सुखादीनामेव इत्यवधारणीयम्, [7]अन्यस्यापि प्रसङ्गात्। तदात्मवेदनाभावे च न विशेषव्यवस्था इति मन्यते। भवन्तस्य (भवतु तस्य) तदेव लक्षणमिति चेत् ; अत्राह–**न** इत्यादि। **न च नै** चि कान्त (नैव **एकान्ते) स्वसंवित्तिः** स्वस्य स्वयं गृहीतिश्चित्तस्य(तिः **चित्तस्य**) किन्तु कथञ्चि[दि]त्यर्थः। कुतः ? इत्यत्राह–**भ्रान्ते**रित्यादि। साङ्ख्यस्य पुरुषश्चेतनः यथा आत्मानं

---

(१) निरंशचित्ताप्रतीतौ। (२) वीतरागे। (३) "किं सांख्यमतमवलम्ब्य सर्वं सर्वत्र विद्यते।" –प्र० वार्तिकाल० पृ० १८०। (४) आत्मनः। (५) तदात्मसमवेतद्वितीयज्ञानेन। नैयायिकापेक्षया। (६) मीमांसकापेक्षया। (७) अन्यथा।

सच्चेतनादिरूपतया स्वत्वय(स्वय)मवगच्छति तथा चेत [1]प्रकृतिविविक्तया (क्तया) ; तर्हि सर्वदा [2]प्रकृतिपुरुषान्तरतत्त्वपरिज्ञानाव(नात) कुत इयं भ्रान्तिः-

*"तस्मात्तत्संसर्गादचेतनं चेतनवदिह लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः॥" [सांख्यका० २०] इति

५ यतः संसार स्यात् ? नहि निरंशयोस्तयोः[3] संयोगेऽपि ततथावेदने (तथा भेदज्ञाने) उपचारभ्रान्ति[३८९ ख]संभवः । प्रकृतेः सा भ्रान्तिः न पुरुषस्य इति चेत ; तस्याः स्वरूपावेदने कुतस्तद्व्यवस्था ? न ह्यचेतनमेवमवैति-'ममात्र भ्रान्तिः' इति । [4]तद्वेदने पुरुषकल्पनाऽनर्थक्यम । पुरुषोऽवैति चेत ; न ; तेन प्रकृतेरवेदने तदयोगात । वेदने यथा तस्यैव [5]स्वप्रधानग्रहणं यथार्थम , अयथार्थग्रहणं कुतश्चित्तथास्तु किं प्रकृतेर्विभ्रमकल्पे न (कल्प-

१० नेन) । कथमेकस्य[6] विभ्रमेतरकल्पनम् ? कथं प्रधानस्य[7] ? परिणामित्वात् ; पुरुषेऽपि [8]तत्कल्पने को विरोधः ? ततः स्थितम-'**नचैकयमृतेन (नचैकान्तेन) स्वसंविति[:] भ्रान्तेरभावश्च (वस्य) प्रसङ्गात्**' इति ।

एतेन ब्रह्मवादाभिनिनिरस्तः (वादोऽपि निरस्तः) ब्रह्मणोऽप्येकान्तेन स्वसंवित्तिसंभवे कुत ए- [व] नगरा[गा]मादिविभ्रमः तेन तदवेदनात ? स्वयं वेदने ब्रह्मणो वैक(फ)ल्यमिति ।

१५ यस्तु मन्यते-[अ]नेकक्षणस्थायि स[न्] न क्षणिकं ज्ञानम् आत्मनि समवेतम् , तत्र समवेताः सत्ताद्य (सत्तादयः) इति ; सोऽप्यनेन योऽस्टष्टो (नोत्सृष्टः[10]) यतः अर्थग्रहणरूपवद्-नेकक्षणसम्बन्धित्वं(त्व)स्यापि स्वत एव ग्रहणे कुतस्तत्र भ्रान्तिः ? यतस्तद्व्यवच्छेदार्थं शास्त्र-प्रणयनम् ।

एतेन [11]तस्यात्मनि तत्र सत्तादीनां समवेतत्वं चिन्तितम ।

२० किंच, सत्तादेस्ततो[12] व्यतिरेके किं तस्य रूपं यस्त्वयं (यत् स्वयं) जानीयात् , तेनचा (वा) संबंध्ये (सम्बध्ये)त ? अर्थग्रहणमिति चेत ; *"**अर्थग्रहणं बुद्धिः**" [न्यायभा० ३।२।४६] इति वचनात [13]तदपि ततो विभिन्नं कुतो न भवति सत्तावत्तत्रापि भेदप्रत्ययस्याः (यः 'अस्याः) बुद्धेरिदमर्थग्रहणम्' ? 'अस्या इदम्' इति भावात् बुद्धिरेव तद्रूपं यथा नीलमेव नीलरूपं जातिरेव जातिरूपमिति चेत ; [३९०क] उच्यते-अथ केयं बुद्धिरित्यर्थःग्रहमिति

२५ (बुद्धिरिति ? अर्थग्रहणमिति) चेत् ; पुनः पुनसादेवा(नस्तदेवा)वर्त्तत इति चक्रकम् । अपि च,

समवायस्य तेनैव वेदने विभ्रमः कुतः ।
तत्र तद्धेतुना(ता)भावे सम्बन्धित्वगतिः कुतः ॥
न च सत्तादिकं (दि) सम्बन्धशून्यं सम्बध्यते तया ।
स्वरूपं संविदश्चोपि (दन् कोऽपि) यतः कल्पनमर्हति ॥

---

(१) प्रकृतिभिन्नस्वरूपेण । (२) प्रकृतिपुरुषयोर्भेदपरिज्ञानात् । (३) प्रकृतिपुरुषयोः । (४) ममेति स्वरूपसंवेदने । (५) स्वस्वरूपम् । (६) स्वज्ञानग्रहणं । (७) पुरुषस्य । (८) एकस्य । (९) परिणामित्वकल्पने । (१०) खण्डित इत्यर्थः । (११) ज्ञानस्य । (१२) ज्ञानात् । (१३) अर्थग्रहणमपि ।

स्वरूपेद(ऽप्य)गृहीने चेद् विभ्रमः स्यात्ततोऽपरः ।
तस्यापि सर्वतो वित्तौ दूषणं तदवस्थकम् ॥

ततो यत्किञ्चिदेतत् । सौगतमतं तु *"वित्तेर्विषयनिर्भासविवेकानुपलम्भतः" [सिद्धिवि० १।२०] इत्यादिना चर्चितम् ।

इतश्च एकान्तपक्षे 'न चैकान्तेन श्च(स्व)संवित्तिश्चित्तस्य' इति दर्शयन्नाह–यथा- ५ दर्शनमित्यादि । दर्शनानतिक्रमेण यथादर्शनम् अनेकान्तात्मकत्वात् यथाकथं (यथाकूतम्) यथापराभिप्रायं तत्त्वस्य चित्तस्वरूपस्य [स्वतः]अप्रतिपत्तेः, कुतः *"स्वरूपस्य स्वतो गतिः [प्र० वा० १।६] ? अनेन–

*"यथादर्शनमेवेयं मानमेयफलस्थितिः ।
क्रियतेऽविद्यमानापि ग्राह्यग्राहकसंविदाम् ॥" १०

[ प्र० वा० २।३५७ ] इत्याद्यपि

अनेकान्त एव संभवति इति दर्शयति यथाकूतम् इत्यादिना । परस्य धर्माप्य (धर्म्याद्य)-सिद्धेः अनुमानाद्यभावात् कुतश्चिन्तामयी भावने[त्या]दि ?

स्यान्मतम्–न कस्यचिद्विज्ञान[स्य] स्वतः संवित्तिः, आत्मनि क्रियाविरोधात् । [नापि] परतः, तस्य अज्ञेयत्वाद् घटादि[वदि]ति; तत्राह–परतश्चेत्यादि । च शब्दः समुच्चये । न १५ केवलं यथाकूतं तत्त्वस्य स्वतः प्रतिपत्तिर्नास्ति किन्तु परतश्च प्रत्यक्षोत्तराद् (प्रत्यक्षादुत्त-रात) अर्थापत्त्यादेर्वा त्र (न) संभवत्येवाधिगतिरि[ति] । कुतः ? [३९०ख] इत्याह–ज्ञानान्तरस्य इत्यादि । विवक्षितज्ञानादन्य[त] प्रत्यक्षादि तदन्तरं तस्यान्तद्विषय (तस्य अतद्विषय)त्वात् निरंशदित्ता (निरंशादितत्त्वा)विषयत्वात् । एतदुक्तं भवति–स्वात्मनि क्रियाविरोधान्न तत्र ज्ञानप्रतिभासः, परत्रापि[न] निरंशस्य प्रतिभास इति कथोच्छेदः । हेत्वन्तर- २० माह–अनन्यवेद्य [इत्या]दि । यमान्न (यस्मान्न) न विद्यते अन्यद् वेद्यमस्य नान्यस्य वेद्यं तस्य नियमात् । अथवा अन्यचे (अन्यं च) तद्वेद्यं च तस्य नियमो(मः) तदेव गृह्यते ज्ञानेन, पुनरस्य तत्रा (नैत्राऽ)भिसम्बन्ध(न्धः) तस्मात् , अनेकान्ते(न्त)स्वरूपस्यापि ग्रहण(णा)विरोधात् । कथमन्यथा घटादिवत्तेनार्थ (वत् तेन अर्थ)ग्रहणम् ? प्राणादिवदसंपक्षस्याप्यस्य गमकत्वमुक्तम् ।

निरंशज्ञानसंवित्तौ यज्ज्ञानान्तरकल्पनम् । २५
तदनर्थकमे[व] स्यादन्यतः कार्यसिद्धितः ॥ इत्यनेन दर्शयति ।

यदि वा, अन्यस्य वेद्यं तस्य नियमः–ज्ञानान्तरेणैव ज्ञानं वेद्यते, न स्ववेद्यं नापि परोक्षं यत्त्वव (अन्यव)त्तेनार्थाग्रहणा[त] । नान्यवेद्यनियमोऽनन्यवेद्यनियमः तस्मात् । प्रथम-द्वितीये विषमदोषत्वात् , अन्यथा किं द्वितीयकल्पेन ? यद्वा यदुक्तं साङ्ख्येन बुद्धि[ः] प्रत्यक्षा परोक्षा परोक्षः पुरुष इति ; तत्राह–अ[न]न्यवेद्यनियमात् , वनान्यवेद्योरे (न अन्यवेद्यः अ)- ३० नन्यवेद्यः पुरुषः तस्य नियमात् , ततश्च स्वतः परतश्च तस्याग्रहणात् सर्वाग्रहणमेव ।

(१) स्वात्मनि । (२) ज्ञेयभिन्नत्वात् ज्ञानत्वादित्यर्थः । (३) 'अन्यवेद्यनियमात्' इत्यस्य । (४) नञ्समासे सति, 'अनन्यवेद्यनियमात्' इति सिध्यति । (५) सपक्षरहितस्य । (६) सन्तानान्तरवत् । (७) 'परोक्षा' इति निरर्थकम् ।

एतेन वेदान्तरपक्षोऽपि चिन्तितः ।

निगमयन्नाह–तत्रेत्यादि । यत एवं तत् तस्मात न स्वपरचित्तव्यवस्थेति ।

स्यान्मतम्–न चिन्तितं (चित्तं) तदन्तरा(न्तर)वेद्यं नापि परोक्षमेव सच्चेतनादिस्वभावेन स्वयं प्रत्यक्षत्वात, [इत्यत्राह–विपर्येत्यादि] विषयाकारा[र]विवेकः [३९१क] स्थूल-
५ स्तम्भाद्याकारशून्यत्वम, यदि वा, विषयः प्रधानं तस्याकारः कर्तृत्वादि तेन विवेकः तस्य । किंभूतस्य ? इत्याह–स्वतोऽग्राह्यस्य(ग्राह्यस्य) परोक्षस्य इत्यर्थः, परत्वप्रसङ्गात् सं चित्ते (संवित्तेः) सकाशादसत्त्वे (दन्यत्वे) प्राप्ते तत्र तद्व्यवस्थेति तस्य ततोऽन्यत्वे संविद्विषयाकारयोः तादात्म्यप्रसङ्गादिति भावः ।

इदमपरं व्याख्यानम्–विषयो [१]ज्ञानत्वादि ज्ञानवेद्यः ततो भिन्नः ततो विवेकस्येति । शेषं
१० पूर्ववद् इति ।

एतेन ब्रह्मणो[ऽ]विद्याविवेकोऽपि व्याख्यातः ।

एतेन *"अविभागोऽपि बुद्ध्यात्मा" [प्र० वा० २।३५४] इत्यादि मतम् ; तत्र; न विषयाकारादन्या संवित्ति[ः] नीलाद्याकारस्यैव तत्त्वात । तत्र सहोपलम्भनियमादिभिः इति कश्चित् सौगतः ; तत्राह–परचित्तस्यापीत्यादि । न केवलं विषयाकारस्य अपि तु परचित्तस्यापि
१५ स्वस्वभावापत्तेः विवक्षितज्ञानरूपतापत्तेः तत्तद् (न तद्) व्यवस्था इति । कैः ? इत्याह–सहोपलम्भनियमादिति (दिभिः) । यदि (आदि)शब्दा[त] सहोत्पत्त्यादिभिरिति ।

ननु विषयाकारस्य विज्ञानाद(द्) एकत्वं नानेकत्वमिति चेत् ; अयमयतो(मपरो) दोषोऽस्तु । इतश्च न स्वपरचित्तव्यवस्था इति दर्शयन्नानाम् (न्नाह–चित्तानाम्) इत्यादि । [चित्तानां] चेतसा(सां) कुत[ः] सन्ततिः ? कुतो न स्यात ? इत्याह–कार्येत्यादि । ततः
२० किं जातम ? इत्याह–स्वपरेत्यादि । तदसंभवं दर्शयन्नाह–यस्मिन् सतीत्यादि । विनष्टात् कारणात तत्संभव इति चेत ; अत्राह–नर (खर)विषाणस्येव इत्यादि । न सति नाप्यसति कारणे तदसंभवः किं तथेति चेत ; अत्राह–न चेत्यादि । गत्यन्तरस्याद्वयस्यापि तर्कतोऽभो (भा)वस्तस्य[३९१ख] देशाद्यपेक्षा[ऽ]योगात । अनन्त[रं] कारणमिति चेत ; अत्राह–ततो नैरन्तर्यमित्यादि । यतः खरविषाणस्येव असतः कथं हेतुत्वम ? ततो नैरन्तर्यमयुक्तत (क्तम ।) [कुतः ?]
२५ इत्यत्राह–कार्येत्यादि । नहि अत्यन्ताऽनन्तरविनष्टयोः कश्चिद्विशेष इति भावः । चिरविनष्टं तु कारणं नित्य[म]विशिष्टमिति न तदनपेक्ष्यते (तदपेक्षा इति) । तत्रासत्करणात (त्कारणम्) । नापि कार्यमिति दर्शयन्नाह–तथा च इत्यादि । [तथा च] तेनैव प्रकारेण अत्यन्तमसतो हेत्ववस्थायामविद्यमानस्य कार्यत्व (त्वं) प्रतिपिद्धम् वेदितव्यम् 'खरविषाणस्येव' इत्यनुवर्त्तते ।

ननु खरविषाणस्य सर्वदाऽसमा (ऽसतो) मा भूत् कार्यत्वम् , घटादेस्तु प्रागभागभाववतः
३० (प्रागभाववतः) स्यादिति चेत् ; अन्योऽन्यसंश्रयः । उत्पन्नस्य, नानुत्पन्नस्य खरविषाणवत् ,

(१) चित्तान्तरवेद्यम् । (२) 'ज्ञानत्वादि' इति निरर्थकम् । (३) 'विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥'–प्र० वा० । (४) संवित्तिरूपत्वात् । (५) अभिन्नस्य । (६) सिद्धे हि कार्यत्वे प्रागभावसिद्धिः, ततश्च कार्यत्वमिति ।

सम्बन्धे वा उत्पत्तिरि [ति ?] न च वस्तुव्यतिरेकेण प्रागभावो नाम (नाम) प्रमाणसिद्धोऽस्ति येन तद्वत[:] कार्यत्वम् । कारणसत्त्वैव प्रागभाव इति चेत् ; न सदेतत् ; यतः कारणस्यैवाऽपरिज्ञानात् । प्रागभावि कारणं न चे (चेत्) तथाविधं सर्व (सर्वं) भवेत् इत्यतिप्रसङ्गः । यैस्यान्वयव्यतिरेकौ कार्यमनुकरोति तत् कारणमिति चेत् ; किमिदम् अन्वयानुकरणम् ? तस्मिन् सति कार्यस्य भवनं चेत् ; अनुवंद्धः प्रसङ्गः-सहोत्पत्तिप्रसङ्गादिति ।

किं वा व्यतिरेकानुविधानम् ? तदभावेऽभवनं चेत् ; कार[ण]स्याभावे एव भवतः कथं तदनुविधानम् ? स्वकाले तस्य भावः , इत्यपि वार्त्तम् ; सर्वस्य तत्काले भावात् । तन्नासतः कार्यत्वम् ।

पर आह-**कथं पुनः** न कथञ्चित् **सतः** उत्पत्तेः प्राग् विद्यमानस्य **कार्यत्वम्** । कुतः ? इत्यत्राह-[३९२ क] **कृतत्वात्** कारणव्यापारात् प्रागेव जनितत्वात् **कारणवदि**ति । १०

नन्वपेक्षितपरव्यापारभावत्वं कृत[क]त्वमुच्यते, कृतकत्वात् कारणव्यापारात् प्रागवि (प्रागपि) सत्त्वाद् इत्यर्थात् , करोतेः क्रियासामान्यवाचित्वात् ।

यदि वा, कृतत्वात् , यद् यत् कार्यत्वं तत '**कथं पुनः सतः**' इति व्याख्येयम् । अथवा **कथं पुनः सतः कार्यत्वं कारणवत्** 'सत्त्वात्' इति गम्यते इत्येवं वाक्यम् ।

ननु नासतो जन्यत्वात् कार्यत्वम् अपि तु सतोऽपि व्यङ्ग्यत्वा[त् घटा]दिवत्तदिति १५ चेत् ; अत्राह-**कृतं (कृतत्वात्) कारणवदि**ति । **कृतत्वात्** 'परिहारस्य' इत्यध्याहारः । सर्वथा यथैव सतो न जन्यत्वं तथा व्यङ्ग्यत्वमपि इति । सो (स्वो) त्तरमाह-**तदेकान्त** इत्यादि । 'अत्यन्तं सतः कार्यत्वम्' **इत्येकान्तः**, तस्याऽनङ्गीकरणाद् **अनुकूलमाचरसि** केनैरपि (जैनैरपि) तस्य कार्यत्वानभ्युपगमादिति भावः । कथञ्चित् सतोऽपि कार्यत्वे दूषणमस्तीति दर्शयन्नाह परः-**यथैव**त्यादि । [**यथैव**] येनैव प्रकारेण **तर्हि** हेत्ववस्थायां **सत्कार्यां** (**यं तथैव**) २० तेनैव प्रकारेण **नोत्पत्ति(त्तु)मर्हति** । कुतः ? **निष्पन्नत्वात्** 'कारणवत्' इति योज्यम् । **यथा च** येन च प्रकारेण **असत् तथा च नोत्पत्तुमर्हति, अत्यन्तमसंभवात् खपुष्पवत्** । **इति** शब्दः पूर्वपक्षसमाप्तौ । तस्योत्तरमाह-**तच्चेदं** तदपि **कृतोत्तरम्** इति । किमुत्तरं कृतम् ? इत्याह-*"**प्रतिक्षणम्**" [सिद्धिवि०] इत्यादि । ततो निराकृतमेवतत् (मेतत्)-*"**अशक्तं सर्वम्**" [प्र० वा० २।४] इति, प्रत्यक्षादिप्रबाधनात् । २५

यदि विज्ञानमन्यद्वा अनेकान्तात्मकमुभयसिद्ध (द्धं) स्यादेवता नैवमे (देवं न चैवम् ए)-कान्तस्य भावादिति चेत् ; अत्राह-**न** इत्यादि । **क्वचिद्** बहिरन्तर्वा **न एकान्तदर्शन (नं)** **यदेकान्तदर्शनमवलम्ब्य** आश्रित्य [३९२] **द्रव्येष्वनेकान्तसिद्धिः उपालभ्येत** । केन कृत्वा ? इत्यत्राह-**संशय** इत्यादि । प्रत्यक्षविषये संशयादेरनवतार इति भावः । एकान्तवदनेकान्तस्यापि तत्कचिद् (न्तस्यापि न कचिद्)र्शनमिति चेत् ; अत्राह-**तदि**त्यादि । **तस्याऽनेका**- ३०

(१) "तस्मादन्वयव्यतिरेकानुविधायित्वं निबन्धनम् । कार्यकारणभावस्य"-प्र० वार्तिकाल० पृ० ६८ । (२) पूर्ववत् दोषः इत्यर्थः । (३) कारणव्यतिरेकानुविधानम् । (४) दूष्येत ।

न्तस्य प्रत्यक्षस्यापह्नवे क न कश्चित् कस्य न कस्यचित् करुणादयः । कुतः ? इत्यत्राह– **स्वपरेत्यादि** । **स्वस्य** निरंशचित्तस्य [**परस्य च सन्तानभेदस्य**] **अनुपलब्धौ** तत्प्रतिबद्ध-लिङ्गदर्शनात् परत्रापि नानुमानम् इति भावः । कुत एतत् ? इत्यत्राह–**सत्त्वभेदाऽभावादिति** । सत्त्वगुणाधिकादिप्राणिभेदाऽभावात् ।

५ ननु '**स्वपर**' इत्यादिना गतार्थमेतदिति चेत् ; न, तेन तत्सन्तानभेदस्य स्वरूपाभाव उक्तः, [1]अनेन स्वपरचित्तसन्तानभेदे सत्यपि सत्त्वानां भेदस्य गुणाधिक्यादिविशेषस्य प्रमाणा-भावेनाभाव उच्यते । एतदेव दर्शयन्नाह–**सन्तावे (सत्यां च [2])**त्यादि । सत्यामपि **स्वपरासत्त्व (स्वपरसन्तान)व्यवस्थायां** न केवलमसत्यां **कथमयं** सौगतो **यथाविषयं** गो[त्व]गुणाधि-कादिविषयानतिक्रमेण **मैत्रादा (मैत्र्यादीन्) भावयेत्** । किं कुर्वन् ? इत्याह–**अप्रतिपन्न**

१० **कानतः (अप्रतिजानानः) कथञ्चित्** केनापि प्रकारेण । कथं कान् ? इत्याह–**एवमित्यादि** । सुगमम् । कुत एतत् ? इत्यत्राह–**परेत्यादि** । परसन्तानस्य(स्या)**प्रत्यक्षत्वे** तद्गुणदोषा न प्रत्यक्षीभवन्तीति भावः । कायवाग्व्यवहारविशेषानुमेयाः स्युरिति चेत् ; अत्राह–**कार्य(काय)** त्यादि । तत एव **प्रमाणाभावादित्युच्यते** इति । न केवलमेव (लम् एवं) न वेत्यन्यगुणदोषान् सङ्कर[व्यतिकर]व्यतिरेकेण कथञ्चिदप्रतियन् कथमयं यथाविषयं मैत्र्यादीन् भावयेत् अपि तु तान-

१५ प्रतिजानानः [३९३क] सुगतमपि कथं जानीयादिति दर्शयन्नाह–'**विप्रलम्भशङ्कानुबन्धात्**' इत्यभिकां कारिकाम् ।

> **[ विप्रलम्भशङ्कानुबन्धात्**
> **चेष्टते चेत्यथाकृतं वीतदोषः सदोषवत् ।**
> **पुरुषातिशयो ज्ञातुं यत्नशक्यः किमिष्यते [3] ॥२३॥**

२० **वीतरागादयो विचित्राभिसन्धयः कायवाग्व्यवहारान् मिथ्यापि प्रवर्तयेयुः सदोष-वत् । सरागादिवत् पुरुषातिशयः सन्नपि ज्ञातुं यत्नशक्यः ; यदि पुरुषातिशयापेक्षि शास्त्रं प्रमाणमिष्टं स ज्ञातुं शक्येतेति धर्मकीर्ति वचनं पोप्लूयते । सुगतस्यापि तादृशः संभवात् । हरिहर···]**

**विप्रलम्भो** वचनं (वञ्चनं) तस्या (तस्य) **शङ्का** तस्या **अनुबन्धात्** कारणात्

(१) 'सत्त्वभेदाभावात्' इत्यनेन । (२) "मैत्र्यद्वेषः करुणा च मुदिता सुमनस्कता । उपेक्षाऽलोभः आकारः सुखिताः बत दुःखिताः । मुदिताः सत्त्वा बत च । मैत्रीभावनाया आकारः सुखितान् सत्त्वान् दृष्ट्वा सुखिताः बत सत्त्वाः, करुणाभावनायाः दुःखिताः बत सत्त्वाः, उपेक्षा माध्यस्थ्यरूपा । मुदितायाः मुदिता बत सत्त्वाः ।"–अभिध० टी० ८।३०। "सत्त्वेषु मैत्रीं गुणिषु प्रमोदं क्लिष्टेषु जीवेषु कृपापरत्वम् । माध्यस्थ्य-भावं विपरीतवृत्तौ सदा ममात्मा विदधातु देव ॥"–सामायिकपा० श्लो० १ । (३) तुलना–"तथान्य-गुणदोषेषु संशयैकान्तवादिनाम् । पुरुषातिशयो ज्ञातुं यत्नशक्यः किमिष्यते ॥"–न्यायवि० श्लो० ३८८ । प्रमाणसं० पृ० ११६ । (४)"पुरुषातिशयापेक्षं यथार्थमपरे विदुः । इष्टोऽयमर्थः प्रत्येतुं शक्यः सोऽतिशयो यदि । अयमेवं नवेत्यन्यदोषा निर्दोषतापि वा । दुर्लभत्वात्प्रमाणानां दुर्बोधेत्यपरे विदुः॥"–प्र०वा०१।२२०-२१ ।

**पुरुषातिशयः किमिष्यते** नेष्टव्य इत्यर्थः । [1]तदतिशयो हि यथार्थदर्शनादिगुणलक्षण इष्यते[ऽ][2]विप्रलम्भार्थः । तदुक्तम्–

*"ज्ञानवान् मृग्यते कश्चित्तदुक्तप्रतिपत्तये ।
अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥"

[प्र० वा० १।३२] इति । ५

*"वीतरागा अपि सरागा इव चेष्टन्ते" इति वचनात् [3]ततोऽपि विप्रलम्भाशङ्कानुवृत्तेः किं तेन इति तदनुवृत्तिकारणं दर्शयन्नाह–**चेष्टन्ते** व्याप्रियन्ते वेत्यादि (**चेत्** यदि) [4]**यथाकृतम्**। कः ? इत्याह–**वीतदोषो** वीतरागः । क इव ? इत्याह–**सदोषवद्**िति । दूषणान्तरमाह–**पुरुषातिशयः** सन्नपि **ज्ञातुं यत्नशक्यः किमिष्यते** ?

तदशक्यत्वं दर्शयन्नाह–**चेष्टन्ते चेद**ित्यादि । **वीतराग आदि**र्येषां यथार्थदर्शनादीनां ते १० तथोक्ताः । किंभूतास्ते ? इत्याह–**विचित्राभिसंचयभा (भिसन्धयः ना)**नाभिप्राया यतः । ततो यदि **कायवास्यव (वाग्व्यव)हारान्** मिथ्यापि न केवलं सत्यात(न ) **प्रवर्त्तयेयुः** । के इव ? इत्याह–**[स]दोषवद्**िति । दूषणान्तरमाह–**पुरुषातिशयः सन्नपि ज्ञातुं यद्य[शक्यः] सरागादय इवेति** । अत्र दूषणमाह–**पुरुष**ेत्यादि । **पुरुषस्य अतिशयो** यथार्थदर्शनादिरूपः **तस्मिन् पेक्षी (अपेक्षा)** यस्य तत्तथोक्तम् । किम् ? इत्याह–**शास्त्रं प्रमाणमिष्टम**भ्युपगतं **सौगतैर्यदि** १५ **स** यथार्थदर्शनादिलक्षणोऽतिशयो **ज्ञातुं शक्येत** इत्येवं **धर्मकीर्तेर्वचनं पोप्लुतेन (पोप्लूयते)** । कुत एतत् ? इत्यत्राह–**सुगतस्यापी**त्यादि [३९३ ख] ततः किम् ? इत्याह–**तादृश** इत्यादि । **तादृशः** संभवद (**संभवात्** , अ)सत्याभिधान[स्य] । दूषणान्तरं दर्शयन्नाह–**हरिहर**ेत्यादि ।

एवं तावत् *"**तायित्वात् प्रमाणो** एवं न (भगवान्) **चतुरार्यसत्याभिधान- लक्षणात् सुगततत्त्व(सुगतत्व)मनुमीयते, ततोऽप्युपायानुष्ठानम्**" इत्यादि व्याख्यानं *"**प्रमाणभूताय**" [प्र० समु० १।१] [6]इत्यादि(दे)निरस्तम् । अधुना *"**जगद्धितैषित्वात् शास्तृत्वम् उपायाभ्यामलक्षणम् अनुमीयते, ततोऽपि सुगतत्वम्**" इति व्याख्यानं[7] निरा- कुर्वन्नाह–**नदेतस्मिन्नेकान्ते** इत्यधिकां **कार्यं वे(चे)**त्यादि कारिकाम् । २०

**[नदेतदस्मिन्नकान्ते–**
**कार्यञ्च नानुमेयं चेत्समग्रादपि कारणात् ।**
**हेयोपादेयतत्त्वं वा सोपायं केन मीयते ॥२४॥** २५

(१) पुरुषातिशयः । (२) अविसंवादार्थम् । (३) पुरुषातिशयस्वीकारेऽपि । (४) यथाभिप्रायम् । (५) स्वदृष्टमार्गोपदेशकत्वात् । "ततः प्रमाणं तायी वा चतुःसत्यप्रकाशनम्"–प्र० वा० १।१४७ । "तस्माच्चतुरार्यसत्यप्रकाशनमेव तायः, तस्मात् । चतुःसत्योपदेशलक्षणात् कार्यभूतात् तायाद्धि भगवान् सुगत इति ज्ञायते ।"–प्र० वार्तिकाल० पृ० १६४ । (६) "प्रमाणभूताय जगद्धितैषिणे प्रणम्य शास्त्रे सुगताय तायिने । प्रमाणसिद्ध्यै स्वमतात् समुच्चयः करिष्यते विप्रसृतादिहैकतः ॥–प्र० समु० १।१ । (७) "उपायाभ्यास एवायं तादर्थ्याच्छासनं मतम्"–प्र० वा०, वार्तिकाल० १।१३९ ।

**प्रवृत्तिकामः प्रेक्षावान् मोपायं हेयोपादेयतत्त्वमन्वेषते न व्यसनेन । तच्चानागत-विषयमप्रमाणम् समग्र[कारणत्वे]ऽपि] प्रतिबन्ध[संभवात्] । तदर्थानर्थयोः इदन्तया नेदन्तया वा प्रमातुमशक्यत्वात् कथमर्थं अनर्थं सन्दिग्धे प्रवर्तेत निवर्तेत वा ? स्वयम-योनिशो मनस्कारेऽपि भविष्यति प्रमाणाभावात्, तथा दुःखसन्ततेः प्रवृत्तिनिवृत्त्योः,**
५ **स्यात् रूपादिवत् भूतैककालयोः नियमात् । नावश्यं [कारणानि कार्यवन्ति भवन्ति]**

**तदेतस्मिन्ननेकान्ते** सोगतैकान्ते इत्यर्थः । **कार्यं** च न केवलमकार्यम् अपितु कार्य-मपि **नानुमेयं** नानुमानपरिच्छेद्यं **चेद्** यदि । कुतः ? इत्याह–**समग्रादपि** न केवलमसमग्रात् **कारणात्** । [1]नावश्यं कारणानि कार्यवन्ति भवन्ति प्रतिबन्धवैकल्यसंभवादिति भावः । अत्र दूषण[माह]–**हेयोपादेयतत्त्व**मिति । **हेयः** संसार **उपादेयो** मोक्षः तावेव **तत्त्वं केन** न
१० केनचित् प्रमाणेन **मीयते** । किंभूत(तम्) ? **सोपायं** संसारस्य कारणमविद्यादृष्टे (तृष्णे) मोक्षस्य नैरात्म्यं(त्म्य)दर्शनं **वाशब्दः** अपिशब्दार्थः ।

एतदुक्तं भवति–नातीतः संसारो हेयोऽत्र (ऽनु) भूतत्वा[त्] । नापि वर्त्तमानः ; नुय-मानत्वात् (अनुभूयमानत्वात्) । भावी तु हेयः स्यात् । स च [न] प्रत्यक्षतोऽनुमीयते, तत्र तदप्रवृत्तेः, अन्यथा [2]चार्वाक त(कमत)मखिलं जगत् स्यात् । अथ प्रत्यक्षेऽपि तद्विपर्यय-
१५ समारोपाददोषोऽयम्; नैवम् ; सर्वस्य सर्वदर्शित्वापत्तेः । शक्यं हि वक्तुं सर्वस्य सर्व-दर्शित्वेऽपि तद्विपर्ययारोपान्नथा (न्न तथा) व्यवहार इति ।

ननु यदि न भावी [३९४क] संसारः प्रत्यक्ष [: ;] कथं भाविनि प्रत्यक्षं प्रमाणमुक्तं[3] प्र ज्ञा क े ण ? तत उत्पत्तेरिति चेत् ; तदितरत्र समानम् । न हि परस्माद् अन्यं चिन्त्यन्त (चित्तं न) जायते अतद्रूपं वा, अन्यथा किञ्चिदपि भाविनो न भवेत् । लोकस्य तथा व्यवहारा-
२० भावात् ततस्तन्नेति चेत्; अत एव न प्राप्यादृश्ययुक्तिः (?) अन्यत्रापि विजृम्भितैव ।

स्यान्मतम्–नान्य[त्] प्रत्यक्षं भाविनि संसारे प्रमाणं दृश्यैकत्वाव्य(ध्य)वसाया-भावात्, प्राप्ये तु प्रमाण(णं) [5]विपर्ययात् । तत्र तदव्य(ध्य)वसायस्य किन्निमित्तम् ? हेतुफलभाव इति चेत् ; प्रकृतेऽपि समानम् । 'वासना' इत्यपि नोत्तरम्; अन्यत्र समत्वात्, कथमन्यथा सत्त्वदृष्टिः ? भवतु तर्हि तत्र संसारे तत्प्रमाणमिति चेत् ; उक्तमत्र ।

२५ किञ्च, पित्रादिचेतसोऽपि भावनि (भाविनि) प्रत्यक्षत्वम्, स्पर्शादिवद् एकत्वव्यवसाय-निमित्तस्य ऐक्यसामग्र्यधीनत्वस्याऽविशेषात् । तन्न हेयः संसारः प्रत्यक्षतो नीयते[10] । नाप्यनु-मानतः; तत्प्रतिबद्धलिङ्गाभावात् । तेयं(?) चायतनं लिङ्गम् इति चेत् ; तथा हि–शरीर तृ कं (?)

(१) तुलना–"नावश्यं कारणानि कार्यवन्ति भवन्ति प्रतिबन्धवैकल्यसंभवात्"–हेतु बि० टी० पृ० २१० । (२) मन्त्रादिना । (३) भाविनि । (४) प्रत्यक्षस्याप्रवृत्तेः । (५) प्रत्यक्षमात्रप्रमाणकं स्यादि-ति भावः । (६) न चार्वाकमतप्रसङ्गो दोष इति चेत् ; (७) "ततो भाव्यर्थविषयं विषयान्तरगोचरम् । प्रमाणमध्यारोपेण व्यवहारावबोधकृत् ॥"–प्र० वार्तिकाल० पृ० ५ । (८) एकत्वाध्यवसायसद्भावात् । (९) प्राप्ये । (१०) ज्ञायते इत्यर्थः ।

चित्तं मध्यावस्थायामनु सन्धान (नुसन्धान) कारणमुपलब्धम्, उपलभ्यते तदन्त्यावस्थायाम-विकल (लम्) । न वा (चाऽ) विकले कारणे कार्यानुदयः, असत्कार्यप्रसङ्गात् इति; तन्न; यतः—

कारणात् कार्यसंवित्तिः तथा सति भवेदियम् ।

[1]नियमो लिङ्गसंख्यायाः कथं (कार्यं) व्रजति ते यया ॥

स्यान्मतम्—नान्त्याद्विग्रहसतृष्णा (ष्ण) चेतसो भाव्यनुसन्ध्य (सन्धा) नमनुमीयते, किन्तु ५ तस्यैव [2]तज्जननसामर्थ्यं स्वभावभूतम्, तावन्मात्रनिबन्धनत्वात्तदनुसन्धानस्य, ततः स्वभाव-हेतुरिति । तदुक्तम् [३९४ख]—

*"हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते ।

अर्थान्तरानपेक्षत्वात् सः स्वभावोऽनुवर्णितः ॥"

[प्र० वा० ३।१०] इति; १०

तदप्यसारम्; यतः ततः कार्यानुमाने को दोषः ? व्यभिचारश्चेत्; किं पुनर्योग्यतायाम-व्यभिचारः ? तथा चेत्; कार्येऽप्यस्तु । योग्यस्यावश्यंभाविकार्यत्वात् । न योग्यताप्य नियम (तापि नियमव) त्यनुमीयते अपि तु संभवः, तथाहि—अन्त्यं शरीरम् (सशरीर) तृष्णं वित्त (चित्तं) प्रतिबन्धवैकल्याऽसंभवे वि[व]क्षितकार्ये योग्यं तत्त्वात् पूर्ववदिति चेत्; अत्रेदं चिन्त्यते—तच्चेतसोऽनु सत्वाने (अन्त्यचेतसस्तदनुमानम्,) प्रतिबन्धासंभवि वा ? प्रथमपक्षे कारणात् १५ कार्यानुमानमदूषितं स्यात् ।

द्वितीये परलोकस्य प्रतिपत्तिर्न निश्चिता ।

प्रेक्षावतस्तथा च स्यात्तदभ्युपगमः [3] कथम् ॥

अभ्युपाये तथाप्यत्र मानचिन्ता वृथा भवेत् ।

अन्यत्रापि वि (हि) मानस्य सिद्धौ मानं करोतु किम् ॥ २०

संभवानुमितिर्मानं यदि नेति तयात्र किम् ।

संभवानुमितिर्मानं यदि किन्न विबन्धकम् ॥

सन्दिग्धविपदां (यं) ज्ञानं मानं चेति विरूकम्[4] ।

स्थाणुर्वा पुरुषो वेति ज्ञानं मानं भवेत्तथा ॥

कादाचित्की यतोऽर्थस्य प्रमिस्तत्रापि विद्यते । २५

अनिश्चितार्था मतिर्मानमतिसूक्तं च किमुतां (क्तं किमुच्यताम्) ॥

अथ गत्यन्तराभावा[न्] संभवानुमितिर्मता ।

कार्ये तत्रोत्तरं पूर्वमुक्तं न पुनरुच्यते ॥

विविधं ते यथा कार्यं कारणाव्यभिचारि ते ।

कारणं तद्वदेव स्यात् कार्यकावा (र्यस्याव्य) भिचारि मे ॥ इति । ३०

ननु तच्चेतसि न प्रतिबन्धवैकल्यसम्भ[वः, त]थापि स्वभावहेतोरेव तत्र गमकत्वे

(१) स्वभावकार्यानुपलब्धिभेदेन त्रित्वनियमः । (२) तज्जननसामर्थ्यमात्र । (३) परलोक-स्वीकारः । (४) असङ्गतम् ।

किं कारण[३९५क]कल्पनयेति चेत; कारणस्य गमकत्वे किं स्वभावहेतुना इति समानम? किंवा (किञ्च),

प्रोक्तं हेतुपरीक्षायामुत्तरं ह्यत्र सुन्दरम् ।
एक एव स्वभावः स्याद्धेतुस्तस्माद्विचारणात् ॥

५ अपर आह–तच्चित्तं भाव्यम(व्यनु)सन्धानकार्य (र्यं) तदव्यभिचारात् अर्थान्तरत्वे सति, भावि च कारणम्, कथमन्यथा अरिष्टादेर्मरणानुमानम्, ततोऽन(ऽनु)सन्धाने (नं) कार्य(र्यं)हेतुरिति; स न युक्तकारी; यतः पूर्वजन्मान्त्यचित्तानुमानाभावः स्यात्, तच्चित्तस्य आगामिकं चित्तं कारणम् अर्थान्तरत्व (त्वे) सत्यव्यभिचारात्, अन्यथा कथं भावि कारणम्? कारणत्वेनाभ्यभिमतस्यापि भाविनः तस्मा (तस्या)पेक्षया ऐहिकत्वात् ।

१० किं च, अ[ना]द्यनन्तसंसारवादिनः सौगतस्य न भावी भवः, तदतीतकर्मविप्रतिपत्तिवादिशून्य (?) ततस्तं प्रति कथमतीतजन्मानुमान (नं) कारणात् कार्यानुमितिप्राप्तेः । अथ तज्जन्म तद्वाच्य(च्य)मेततः कारणमिष्यते, नान्त्यचेतसो भाविभवानुमानं कारणात् कार्यप्रतिपत्तिप्रसङ्गात् । अन्योऽन्यहेतुत्वेऽप्युक्तम्–अन्योऽन्यसंश्रयान्नैकस्यापि सिद्धिरिति । तन्न परस्य हेयतत्त्वप्रतिपत्तिः । एतेन उपादेयमोक्षतत्त्वप्रतिपत्तिर्नास्ति इति दर्शितम्, उपायाभावात् ।

१५ तदप्रतिपत्तौ च कथं मोक्षार्थी तदुपाये प्रवर्त्तेत ?

ननु किमुच्यते उपायाभावादिति, यावता किल नैरात्म्याद(त्म्या)भ्यासः तदुपायः । तथाहि– यो यत्कारणमविकलमनुतिष्ठति स तत्फललाभी दृष्टः, यथाऽन्यथो रूप स साकारण (यथा रोगी व्याध्युपशमकारण)मविकलमनुतिष्ठन् [३९५ख] तदुपशमफललाभी, अनुतिष्ठति च कश्चित् मोक्षकारणमविकलं नैरात्म्यदर्शनाभ्यासमिति चेत्; उच्यते–युक्तमेतद् यद्यवि

२० (यद्यवि)कलकारणाद्वश्यं (णादवश्यं कार्य) [प्र]सवः । तथाभ्युपगमे नैतः कार्यानुमानं केन वार्येत ? कार्यादर्शने तदपि ज्ञातुं न शक्यते, तद्दर्शने किं तत्रानुमानेन इति चेत् ? तर्हि मोक्षकार्यानुमानं न [न स्यात् तद]दर्शने जगति कस्यचित्तदविकलकारणानुष्ठानस्य ज्ञातुमशक्यत्वात्, सर्वत्र प्रतिबन्धवैकल्याशङ्काऽनिवृत्तेः । तद्दर्शनात्तत्प्रतीतिरिति चेत्; न; तद्दर्शनाभावात् । चतुरार्यसत्योपदेशात्तत्प्रतीतिश्चेत्; सिद्धमाप्तोपदेशादागमप्रमाण्यम् । इदं

२५ त्वसिद्धम्–*"वीतरागा अपि सरागा इव चेष्टन्ते" इत्यादि । ततस्तत्सिद्ध (द्धि)मभ्युपगच्छतो न तदुपदेशात्तत्प्रतिपत्तिरभ्युपगन्तव्येति न तदुपायानुष्ठानम् ।

किंच, [क]थं कारणादर्शने कार्यप्रतीतिः, यतः ततस्तदनुमीयेत ? पूर्वदृष्टकार्यसाधर्म्यादिति चेत्; पूर्वदृष्टकारणसाधर्म्यात् कारणप्रतीतिरपि तथास्तु ।

अथ मतम्–अन्त्यकारणदर्शनात् पूर्वतत्स्मरण (णं) तथाप्रतीति (ते) र्नेतरथा, तथा सति

३० तत्स्मरणकाल एव कार्य (र्यं) प्रत्यक्षीभवतीति किमनुमानेन इति; तदसत्यम्; कार्यात् पूर्वकाल-

(१) भाविकारणवादी प्रज्ञाकरः । (२) भाविमरणकार्यभूतात् । (३) मोक्षाप्रतिपत्तौ च । (४) मोक्षोपायः । (५) कार्योत्पत्तिः । (६) कारणात् । (७) अविकलकारणत्वम् । (८) आप्तोपदेशात् । (९) मोक्षप्रतीतिः ।

भावि वा कारणमपि तथा प्रत्यक्षं किन्न स्यात् ? [1]खलविलान्तर्गतमन्यथापि[2] दृश्यते इति चेत् ; कार्यमपि तथा दृश्यत एव । तथाहि–शब्दादेर्दृश्यस्य सतोऽनन्तरभाव्यपि [३९६ क] कार्यं नावश्यं दृश्यम् , [3]तदभावेऽप्युक्तम् । यस्य तु व्यवहितमपि कारणम् तं प्रति सुपरिहारमिदम् ।

किंच, यथा दृष्टान्तस्मरणाभावेऽपि कार्यादेर्गमकत्वं तथा यदि कारणस्यापि, अनर्थकत (कं)चोद्यम् । अथ[त]दपि नेष्यते ; तर्हि निरवकाशमिदम्–*"तद्भावहेतुभावौ हि" [प्र० वा० ३।२६] [4]इत्यादि । अथ तथापि न कारणस्य गमकत्वम् ; न ; उपादेयतत्त्वाप्रतीतेः । एतेन उपायप्रतीतिरपि चिन्तिता, कार्याऽपरिज्ञाने कारणापरिज्ञानात् । ५

कारिकां विवृण्वन्नाह–**प्रवृत्ती**त्यादि । **प्रवृत्तिकामः** । कः ? इत्याह–**प्रेक्षावान्** । किं कुरुते ? इत्याह–**अन्वेषते** । किम् ? इत्याह–**हेयोपादेयतत्त्वम्** । किंभूत[म् ?] इत्याह–**सोपायं** सकारणम् । न प्रवृत्तिकामतदन्वेषते (कामस्तदन्वेषते) अपि तु व्यसनेन इति चेत् ; १० अत्राह–**न व्यसनेन,** अप्रेक्षावत्ताप्रसङ्गादिति मन्यते । भवत्वेवं को दोष इति चेत् ? अत्राह–**नच** (तच्च) इत्यादि । **तच्च** हेयोपादेयतत्त्वम् । किंभूतम् ? इत्याह–**अनागतविषयं** भाविकाल-योगम् (योग्यम्) **अप्रमाणम्** अविद्यमानप्रमाणं भाविनि प्रमाणाभावादिति । एतदपि कुतः ? इत्याह–**समग्रे**त्यादि । एतदपि कुतः ? इत्याह–**प्रतिबन्धे**त्यादि । ततः किं जातं परस्यं इत्याह–**तदर्थे**त्यादि । **तत्** तस्मात् उक्तान्न्यायात् **अर्थो** मोक्षः तत्कारणं च **अनर्थः** संसारः तत्कारणं १५ च तयोः **इदंतया** [अर्थतया **नेदंतया** अ]नर्थतया **वा प्रमातुमशक्यत्वात्** कारणात **कथ-मर्थे** मोक्षादौ **प्रवर्त्तेत परः** । किंभूते । इत्याह–**सन्दिग्ध**(ग्धे)तिवर्त्तेतया (**निवर्तेत वा अ-**) **नर्थे** संसारादौ **सन्दिग्धे** सति [5]**तस्मादिदमपेक्षम्**(क्ष्यम्) ।

स्यान्मतम्–अर्थो मोक्षः साकान्तद्धेतु (स [6]कामं तद्धेतुश्च) अतीन्द्रियत्वादस्तु [३९६ ख] सन्दिग्धः, अनर्थः पुनः संसारः तत्कारण व विपर्ययावत (–णं च विपर्ययात्) कुतः सन्दिग्ध २० इति चेत ? अत्राह–**स्वेय(स्वय)मयोनिसा(शो)मनस्कारेऽपि** इत्यादि । अ(यम)भिप्रायः–न खलु संसारः कण्टकवद् उद्धर्तुं शक्यः सति कारणे पुनः प्रवृत्तेः, अपि तु कारणक्षयेण । तच्च कारणमतीतं जातत्वानुशक्यं मासंतेतु (जातत्वान्न शक्यमपनेतुम्) । नापि वर्त्तमानम् ; जाये-मातत्वात् । (जायमानत्वात्) । भविष्यदेव तु प्रतिरुद्ध्यते, तदन्मयि ([7]तदन्य)विरुद्धाचरणेन । न च तत्र प्रमाणमिति । **स्वयम्** आत्मना **प्रमाणाभावात्** । क ? इत्याह–[8]**अयोनिसो(शो)** २५ **मनस्कारेऽपि** योनिम्–आर्यसत्यवत्म(वर्त्म)रूपं न (–पं तस्मिन्नसति) यो मनस्कारः तस्मिन्न-मिन् (न्नपि न)केवलम् अन्यस्मिन् **भविष्यति** तृष्णाविद्याचेतसि इत्यर्थः । किंभूते ? इत्याह–**भविष्यति** भाविभवभाविनि इत्यर्थः । **तथा दुःखसन्ततेः प्रवृत्तिनिवृत्त्योः प्रमाणाभावात्**

---

(१) खलविलान्तर्गतं बीजाख्यं कारणम् । (२) अङ्कुरानुत्पादकमपि । (३) शब्दस्य कार्यानुत्पाद-कत्वे अनर्थक्रियाकारित्वेन अवस्तुत्वं स्यात् इति भावः । (४) 'दृष्टान्ते तदवेदिनः । ख्याप्येते विदुषां वाच्यो हेतुरेव हि केवलः ।' इति शेषः । (५) बौद्धस्य । (६) 'अनर्थे' इत्यस्य पञ्चम्यन्तं 'अनर्थात्' इतिरूपमपेक्ष्यम् । (७) यथेच्छम् । (८) इन्द्रियग्राह्यत्वात् । (९) तत्प्रतिपक्षभूतचारित्रेण । (१०) "अयोन्या अन्यायेन क्लेशयोगेन च प्रवृत्तो मनस्कारः ।"–अभिध० को० टी० ४।९४ ।

भविष्यत्योरिति वचनपरिणामेन सम्बन्धः कार्यः । संसारकारणे संसारे तदभावे व (च) भाविनि प्रमाणाभावादिति भावः । कुत एतत ? इत्यत्राह–**रसादित्यादि** । **भूतश्च एककालश्च तयोर्नियमात्** 'प्रमाणस्य' इत्यध्याहारः । परप्रसिद्धं निदर्शनमाह–**रसाद्** इत्यादि ।

ननु इदयादः रूपान प्राग्ये भाविनि रूपादौ रेण (परेण) प्रमाणमिष्यते एव, तत्कथं निदर्श-
५ नमिति चेत ? उक्तमत्र । किंच, कथमस्मिन् दर्शने भूतैककालस्य रूपादेः कुतश्चिद्ग (द्र) तिः, अप्रतिबन्धात् (न) यत इदं सुभाषितम्–*"**भूतैककालानां गतिः**" इत्यादि । यदतीतं कारणं तदपेक्षमिदमिति चेत , [३९७क] यदि तत्र कस्यचित प्रवृत्तिविषयः किं तेन ? तं वि (नहि) पयइनेन ; न भाविन (भूतेन) भाव्यम । अथ भावि भूतं चैककार्यमिष्यते ; न ; भिन्नजात्या (काल्या) नाम एकत्र सहकारित्वाभावात , तथा [ऽ] व्यवहारात चरमक्षणाभावश्चेति
१० यत्किञ्चिदेतत । यदि मतं भविष्यतोऽपि कारणं (णात) गतिरिति चेत ; तत्राह–**नावश्यमि**त्यादि । भवतां तर्हि कथं नेदं चोद्यम ? इत्याह–**एकलक्षणे**त्यादि ।

कुत एतत ? इत्यत्राह–**यन्नोपपद्यत** इत्यादि ।

**[यन्नोपपद्यते यस्मिन्नेष्यति चानुदेष्यति ।**
**तल्लिङ्गं लोकतः सिद्धमविनाभावैकलक्षणात् ॥२९॥**

१५ **कर्मफलसम्बन्धतत्कारणादिकं प्रशस्तपण्डितवेदनीयम् अरिष्टं तथा लक्षणं कृतम् , यथा अहं मरिष्यामि, प्रकृतजनमस्तके भृङ्गं नोदेष्यतीति च, अत्रापि संशीतिरवतरति। प्रवृत्तोऽयं व्यवहारः इतरथा दृष्टेऽपि कुतश्चिदाशङ्कायां न कस्यचित् प्रवृत्तिः स्यात् ।]**

यत्पुनः (**यत्** पुनः) कारणस्य अन्यस्य वा रूपं **नोपपद्यते** न घटते **यस्मिन्** कार्या-
२० भिमते अन्यस्मिन् वा शकटादौ[2] । कस्मिन् ? इत्याह–**एष्यति** भविष्यति । किंभूते तस्मिन्नोपपद्यते ? इत्याह–**अनुदेष्यति** अनुत्पत्स्यमाने । **च** शब्दोऽवधारणे । **तद्**रूपं **लिङ्गं सिद्धम्** । कुतः ? इत्याह– **लोकत** इति । तदपि कुतः ? इत्याह–**अविनाभावे**त्यादि ।

कारिकार्थे 'न केवलं परस्य हेयोपादेयतत्त्वे सोपाये संशीतिरपि तु लोकव्यवहारेऽपि' इति दर्शयन्नाह–**कर्म** च **फलं** च तयोः **सम्बन्धश्च** ते **आद्यो** यस्य तत्तथोक्तं तत्कारणादि-
२५ कम । किंभूतम् ? इत्याह– [**प्रशस्त**] **पण्डिते**त्यादि । **प्रशस्तपण्डितवेदनीय(यं)**तत्किम् ? इत्याह–**अस्तं विष्टं(अरिष्टं)** नु (न तु) मनुष्येणापण्डितरूपेण, **तथा लक्षण(णं)**रूपं **कृतं** निश्चितं **यथा** येन निश्चितलक्षणप्रकारेण**ाहं मरिष्यामि**, अनेन भाविनि मरणेऽरिष्टादेरकार्यस्वभावस्यापि गमकत्वमाह **व्याजनमत (प्रकृतजन)मस्तके भृङ्गं नोदेष्यति इति च** तेन लक्षणं कृतम् , अनेन च स्वभावानुपलब्ध्यादेरपि भविष्यति[6] शृङ्गोदयाभावे[7], परस्य **अत्रापि** न
३० केवलं परलोकादौ **संशीतिरवतरति** ।

(१) द्विवचन । (२) "अतीतैककालानां च गतिर्नानागतानाम्"–प्र० वा० स्व० पृ० ४९ । (३) कृत्तिकोदयस्य हेतोः । (४) शकटोदयादौ साध्ये । (५) दर्शयन् कारिकार्थमाह इति अन्वयः । (६) भाविनि । (७) 'गमकत्वमाह' इति सम्बन्धः ।

स्यान्मतम्–कस्य [३९७ ख]चिद्रसायनादेः सेनावनाभो (सेवनतः) देवतानुग्रहाद्वा तस्य मरणं न भविष्यति शृङ्गं ये(वो)देष्यतीति संभावना यदा तदा संशीति[रिति] चेत ; अत्राह–प्रवृत्त्ये[त्तोऽ]यमित्यादि । विशिष्टाऽरिष्टदर्शने मरणं नदि (भवि)ष्यति न तत्र कुत-श्चिन प्रतिबन्धः संभवति इत्ययं व्यवहारः प्रसिद्धः, अन्यथा सर्वत्राऽनुमानविलोपः । तथा प्रा (प्र)कृतपुरुषमस्तके शृङ्ग(ङ्गं) न भविष्यती व (तीति च) प्रवृत्तोऽयं व्यवहारः, इतरथा ५ दृष्टे उदनावपि (ओदनादावपि) कुतश्चित् कण्टकादु(दु)देष्यतीत्याशङ्कायां न कस्यचित् प्रवृत्तिः स्यात् नेदानीं प्रवर्त्त्येत इति ।

ननु प्रतिभासाद्वैतस्य स्वसंवेदनाध्यक्षसिद्धस्य भावान्न हेयोपादेयतत्त्वं तदुपायो वा, नापि तत्र संशीतिः निर्णीतिर्वा ततोऽयमदोष इति चेत ; अत्राह–प्रत्यक्षेत्यादि ।

[प्रत्यक्षैकान्तचित्तानां कोपादेयेतरस्थितिः । १०
संविदां विभ्रमः सिध्येत् स्याद्वादेन विना कथम् ॥२६॥

कथञ्चित् संविदां विभ्रमेऽपि आत्मसंवेदनं प्रत्यक्षमभ्रान्तमिच्छन् स्याद्वादमनु-वर्तेत । सर्वथा मोक्षः संसारं नातिशेते । कथञ्च तद्भावनापरिनिष्पत्तौ दुःखसंवेदनं परिस्फुटमुपादेयम्? सर्वथा विभ्रमविवेकनिर्मलत्वे न किञ्चित् क्वचिदिदमपरिस्फुटं ज्ञानं यत् परिस्फुटं स्यात् । न च रागादिक्लेशनिवृत्तिः दुःखसंवेदनस्य स्फुटतैव काम···] १५

एकोऽन्तो धर्मो यस्य तच्च तच्चिजन्नं (तच्चित्तं) च निरंशचित्तमित्यर्थः । प्रत्यक्षं स्वसंवेदनवेद्यम् एकान्तचित्तं येषां सौगतानां तेषां कोपादेयेतरस्थितिः? उपादेयः प्रतिभासाद्वैतलक्षणो मोक्षः तस्य परेण मोक्षत्वोपगमात् , तदुक्तम्–

*"यद्यद्वैतेन तोपोऽस्ति मुक्त एवासि सर्वथा ।"

[प्र० वार्तिकाल० पृ० ५७] इति । २०

इतरो हेयो भेदः तयोः स्थितिर्व्यवस्था का? न काचित् , तन्निबन्धनप्रमाणाभावात् । न हि निरंशचित्तम् अन्यद्वा अनुभूयते, स्थूलनीलादिवेदनात् , यद् (यत)स्तदुपादेयम् । नात्रि (नापि) भेदबाधक(कं) येन स हेयः प्रथ(थे)त । देवान्वयं (नन्वयं) भ्रान्त्या तथा न भासते; तत्राह–विभ्रम इत्यादि । विभ्रमो भ्रान्तिः स्थूलादिप्रतिभासरूपः संविदाम् ऐक्त्यावार्थं (ऐक्याभावार्थं) बहुवचनम् , सिध्येत् स्याद्वादेन विना कथं सर्वथा विभ्रमे [३९८क] २५ तदयोगात् । नहि विभ्रमादेव विभ्रमसिद्धिः बहिरर्थवत् कथञ्चिदेकान्तसिद्धिः ।

कारिका(कां) व्याख्यातुमाह–कथञ्चिदित्यादि । कथञ्चित् स्थूलग्राह्याकारेण न स्व-संवेदन(ना)कारेण विभ्रमेऽप्यङ्गीक्रियमाणे संविदां न केवल[म]विभ्रमे स्याद्वादमतीष्ट-(मनिष्ट)मनुवर्त्तित(वर्तेत) । कः ? इत्यत्राह–आत्मसंवेदनं प्रत्यक्षमभ्रान्तम् इच्छेत् (इच्छन्) सौगतः इत्यर्थः । ततः स्वसंवेदनपरिहारेण स्थूलाकार एव विभ्रममभ्युपगच्छन्त ३० (च्छन्) सत् (तत)संख्यादिकं निराकरोति इति कथं स्वस्थः ?

---

(१) प्रतिभासाद्वैतवादी प्राह । (२) अनुभूयते । (३) भेदः ।

ननु मिरंसमेव सु(सं)विदां स्वरूपमाभाति न क (त)दाकार इति चेत् ; अत्राह–**मवंथेत्यादि । मोक्षः संसारं नातिशेते** मोक्षसंसारयोरविशेष इति यावत् । *"**ग्राह्यं न तस्य**" इत्यादिवचनात् आत्मसंवेदन (ने) नैकान्तिकं मोक्षः, तच्च संसारेऽविशिष्टमिति भावः ।

अन्येषां दर्शन(नम्–) न संसारो नामास्ति अनुनु (?) कल्पनायाम् इति; तेषां ५ चित्रैकसंवेदने तदने (?) तदप्रतिषेधः, इतरथा सकलशून्यतेति न मोक्षो नाम इत्युक्तम् । अस्मिन् दर्शने परमपि दोषं परस्य दर्शयन्नाह–**कथं** च इत्यादि । च शब्दो दूषणान्तरद (रं दत्त)मिति प्रदर्शने । **कथमुपादेयं** न कथञ्चित । किम् ? इत्याह–**दुःखसंवेदनं दुःखं** संसारिणः स्कन्धाः, तेषां **संवेदनं** ग्रहणम् । किंभूतम् ? **परिस्फुटं** विशदम् । किन्निमित्तम् ? इत्याह–**तद्भावनापरिनिष्पत्तौ** दुःखभावनासमाप्तिनिमित्तम् , निमित्तलक्षणेयं सप्तमी । कथन्नोपादेयमिति चेत् ? १० उच्यते–**सर्वथा विभ्रमविवेकनिर्मलत्वं** (त्वे) सर्वचेतसां **न** [३९८ख] **किञ्चित् क्वचिदिदं** (दम्)**परिस्फुटं ज्ञानं यद्** भावनापरिनिष्पत्तौ **परिस्फुटं स्यात्** । न चात्मसंवेदनैकान्ते दुःखसंवेदनं नामेति । यतः तदुपादेयत्वा[न] चित्तमेव परिस्फुटं भावतः स्यात् , नैव भवेत् ।

[स्या]न्मतम्–रागादि(दि)क्लेशविनिर्मुक्तिः भवान्तः, सा च दुःखसंवेदनस्फुटतेति वे (चेत् ; इ)त्याह–**न** चेत्यादि । **न च** नैव **रागादिक्लेशनिवृत्तिः स्फुटतैव दुःखसंवेदनस्य ।** १५ अत्र निदर्शनमाह–**कामे (काम)** त्यादि । अत्र स्पष्टतायामपि विभ्रमक्लेशभावादिति भावः ।

ननु कामशोकादिषु स्विष्ट (स्पष्ट)ता विकल्पे(ल्प)मात्रभावना[तः] उद्भवति (न्ती) भ्रान्ता युक्ता, न दुःखसंवेदनस्य स्पष्टता[3] अर्थसम्बन्धानुमानमूलत्वादिति वेश (चेत् ; अ)नुमानाभ्यासे तद्विषये एव सामान्ये स्पष्टता न स्वलक्षण इत्यनिवृत्तेः । नहि चित्राभ्यासे धनुषि कर्मणः स्पष्टाद् (स्पष्टता; इत्याह–) आस्रवसंवरनिर्जरादिषु **श्रुतं प्रमाणं स्यात्कार-** २० **लाञ्छनमविसंवादि ।**

**[प्रमाणमविसंवादि श्रुतं स्यात्कारलाञ्छनम् ।**
**ज्योतिर्ज्ञानादिचिन्तासुखदुःखाद्यदृष्टवत् ॥२७॥**

**सर्वथैकान्तविश्लेषात् सम्यग्दर्शनादिना सकलकर्मक्षयेण प्रतिलब्धात्मस्वभाव एव कैवल्यं भविष्यतीति सुनिश्चितं नश्चेतः । न हि तदभावे प्रमाणमस्ति । भावे किम् ? २५ अनुपदेशमलिङ्गमविसंवादं श्रुतज्ञानं मूम इति । तत्प्रत्यनीकसाधनस्य स्याद्वादेन निराकृतत्वात् । स्वयं बहिरन्तश्च अर्वाग्भागमध्यपरभागादिविवर्तकद्रव्यं दृश्याद्येकरूपं व्यावहारिकमलक्षयन् ज्योतिर्ज्ञानादिकमपरोपदेशं कथं प्रतिपद्येत ? न चैकान्तवादिनामत्र प्रमाणमस्ति । श्रुतेरतद्विषयत्वात् ।]**

स्यान्मतम्–अविसंवादस्तत्र प्रमाणान्तरवृत्तिः, न च सा जीवादावस्ति इति; तन्न युक्तम् ;

(१) 'तदने' इति व्यर्थम् । (२)"दुःखं संसारिणः स्कन्धाः"–प्र० वा० १।१४९ । रूपवेदनाविज्ञानसंज्ञासंस्काराख्याः पञ्च स्कन्धाः । (३) भ्रान्ता । (४) अत्र पाठस्त्रुटितो भाति । (५) प्रमाणान्तरप्रवृत्तिः ।

स्वात्मनि प्रत्यक्षस्य अपरत्रानुमानस्य तदनाशनन्ततयोश्च प्रमाणान्तरस्य वृत्तेरुक्तत्वात् । कर्मबन्धे[2] च, तथा नि (तथा हि–) स्वभावशुद्धस्य आत्मनः शरीरे अशुचिनि सरावस्थानं (सदावस्थानं) तस्य तत्र स्थापकतत्संदंध (त्सम्बद्ध) पुद्गलविशेषपूर्वकं तत्त्वात् गाढनिगडनिबद्धस्य सावोवि (साधोरिव) । कारागारे अन्यनस्तत्र तस्य प्रवेशो वा तत्पूर्वकः तत एव, मत्रस्याश्च वि (मत्तस्य अशुचि)-पूर्णगर्त्तप्रवेशवत् । व्याप्तिज्ञानं वा साधारणं (सावरणं) स्वविषये[ऽ]स्पष्टत्वार (त्) [३९९ख] ५ रजोती (नी) हाराद्यन्तरिततर्व्यापि (तर्वादि) ज्ञानवत् । मिथ्यादृशाम् अनेकान्ते नित्याद्येकान्तज्ञानम् आवरणवत् अतस्मिंस्तद्ग्रहात्मकत्वात्[3] मदिराद्युपयोगिनः स्थिरभूते भ्रमणानुभववत् । वासनादिनिषेधात् । तथा आस्रवे[4]; तद्यथा–चेतनस्य जीवस्य सतोऽभिरतिसहितं शरीरादिष्ववस्थानं तदभिलाषाद्युपात्तपुद्गलविशेषपूर्वग (कं) तत्त्वात् अङ्गनाङ्गाभिरत्यभिलाषोत्पत्तौ (त्यत्युपयुक्तौ) पथविशेपस्य कामुकस्य तदङ्गस्था[न]वत । तदभिलापो वा तदवस्थाननिमित्तम् आत्मनि १० पुद्गलमवस्थापयति योषिदङ्गाभिव (भिर) त्यभिलाषवदिति । एवमन्यत्रापि वक्तव्यम् । तदुक्तमत्रैव–*"शुभाशुभैर्यथाम्य (स्व)मास्रवैः स्वैः" [सिद्धिवि० ४।९] इत्यादि ।

ननु कस्यचित् तदौपधाभावेऽपि तदङ्गे तथावस्थानं दृष्टमिति चेत् ; न ; तस्यापि पक्षीकृतत्वात् न तेन व्यभिचारः । तदपि तथाविधकारणपूर्वकम् , अन्यथा सर्वस्य सर्वत्राङ्गनाङ्गे तत्स्थानं भवेत् । न चैवम् , स्वाङ्गनायामपि कस्यचिद् वैमुख्यदर्शनात् । नु (न तु) रूपाद्योऽपि[5] १५ व्यभिचारो नोत्तरं (चारात् । अतः) तस्यां तत्रापि तथाविधं किञ्चित् कारणमिति ।

स्यान्मत (तम्–) तदभिलाप[:] स्वस्य अत्र तु तदवस्थाननिमित्तं पुद्गल (लं) कारणम् , नावश्यं कारणानि कार्यवन्ति भवन्ति । नहि अङ्गनाद्दे (नाङ्गे) तदभिलापः सर्वोऽपि तदवस्थाननिमित्तं योगमात्मसात्करोति इति; तन्न सारम् ; उक्तत्वात्–*"कार्यं च नानुमेयं च" [सिद्धिवि० ७।२४] इत्यादि । २०

किञ्च,

> स्वभावानुपलब्धिपश्व (श्च) व्यवहारे कथं [भवेत्] ।
> लिङ्गं सं (सत्) योग्यताया च (श्च) व्याभिचारो न किं स्वतः ॥
> उपलभ्यानुपम्भवत् (श्चेत्) केवलस्तस्य कारणम् ।
> विषयामिपलो (याभिलाषः) कोऽपि भवबीजस्य कारणम् ॥ २५
> [३९९ ख] क्वचित् दृष्टस्य तस्यास्तु विपरीते परत्र तु ।
> प्रकृतेर्व्यौपधितस्य (तेऽप्यौपधेस्तस्य) केवलस्यैव हेतुता ॥

ननु तदभिलाषो यावद् अन्यस्य कर्मण[:] कारणं तावन्न तदवस्थानस्यैव इति चेत् ; न ; तस्मिंश्चिरविनष्टे कार्यानुदयप्रसङ्गात् । एतेन योगादेः कर्मत्वं निषिद्धम् । प्रयत्नसधर्मा आत्मविशेषगुणं[:] तत्साध्यः कर्म इति चेत् ; न ; प्रयत्नवत् पुद्गलविशेपसम्बन्धेऽपि देवदत्तं ३० प्रति योषिदाद्युपसर्पणदृष्टेः तत्सधर्मताऽसिद्धेः ।

---

(१) सन्तानान्तरे । (२) अनुमानप्रमाणस्य प्रवृत्तिः । (३) विपरीतत्वादित्यर्थः । (४) प्रमाणान्तरस्य प्रवृत्तिः । (५) अङ्गनाद्यभिलाषः । (६) ग्रन्थे चतुर्थपरिच्छेदे । (७) तन्निमित्तम् । (८) अदृष्टम् ।

किञ्च, तत्कर्म अचेतनं मूर्त्तमभ्युपगन्तव्यम्। कथमन्यथा देशान्तरस्थद्रव्याकर्षकम्, यतो विशेषात्तस्याकृष्टपरमाण्वारब्धं शरीरं स्यात् ? मूर्त्ता यदहय (एव ह्य)यस्कान्तादयस्तुयदा (दयोऽयसा)कृष्टिहेतवो दृष्टा नात्मादयः, इतरथा आत्मन एव तत्सिद्धेः किं कर्मकल्पनया ? तद्विशेषोपपत्तेः नाऽविशेषकल्पनापि।

५ यदि मतम्–अमूर्तोऽपि मन्त्रः तदाकृष्टिहेतुः अतो व्यभिचार इति ; न ; शब्दस्य मूर्त्तत्वात्। ध्यानेनानेकान्त इति चेत् ; न ; तस्य मूर्त्तकर्म चेतसि (विशिष्टस्य) तत्त्वात्, अन्यथा आत्मैव तद्धेतुः इत्युक्तं स्यात्, तत्र च उक्तो दोषः। प्रयत्नेन इति चेत् ; न ; कर्मविशिष्टात्मप्रदेशत्व(शस्पन्द)व्यतिरेकेण परं प्रति तदसिद्धेः। न च प्रयत्नस्य केवलस्य तद्धेतुत्वम् ; तदभावेऽपि तद्भावात्। ततो मूर्त्तमेव तदभ्युपगन्तव्यमिति कथं नाभिमतं परस्य न सिध्यति। १० तत्क्षयेवा (तत्क्षये चा)नुमानमदे वा ग मा दे वगन्तव्यम्।

ततोऽ**विसंवादि तत् श्रुत**मिति। केचिदि (च्चिव ? इ)त्याह–**ज्योतिर्ज्ञानादिवदिति**। [४०० क] ज्योतिर्निश्चयादि**ज्ञानम् चिन्ता सुखदुःखादि तदादि**र्येषां न (तद)**दृष्टादीनां** तेष्विव **तद्वत्** इति।

कारिकां व्याख्यातुमाह–**सर्वथैकान्त** इत्यादि। **सकलस्य कर्मणः क्षयेण** नाभ्याससा[पे]क्षेण विशिष्टादृष्टमात्रेण अनेन (अन्येन) वा **प्रतिलब्धोऽयम आत्मस्वभावो-** १५ तत्र (वः स च)ज्ञानादिलक्षणः स **एव कैवल्यं** तद् भविष्यति [इति] एवं **सुनिश्चितं नश्चेतः**। केन ? इत्याह–**सम्यग्दर्शने**त्यादि। तदपि केन ? इत्याह–**सर्वथैकान्त** इत्यादि। सुगमार्थमेतदसकृत्।

स्यान्मतम्–अध्यक्षादिबाधितेयं प्रतिज्ञेयं तत् कैवल्यमस्तु इति ; तत्राह–**नहि** इत्यादि। २० **तदभावे** कैवल्याभावे **न प्रमाणमस्ति**। विचारितमेतत् सर्वज्ञसिद्धौ। पर आह–**भाव** इत्यादि। तं प्रति उत्तरमाह–**श्रुते**त्यादि। न खलु ज्ञानविशेषमन्तरेण **अनुपदेशमलिङ्गमविसंवादं श्रुतज्ञानं संभव(वे)दिति**। पत्र (पटप)दार्थादिश्रुतज्ञानं तद्विपरीतं प्रमाणमिति चेत् ; अत्राह–**तत्प्रत्यनीके**त्यादि। **तस्य** उक्तकैवल्यस्य **प्रत्यनीकं** यत् तस्य **साधनस्य** सिद्धेः **स्याद्वादेन निराकृतत्वात्**। श्रुतज्ञानस्य वा तद्भावे (सद्भावे) **श्रुतज्ञानं ब्रूम** इति। [त]त्प्रत्यनीकसा- २५ **धनस्य** तदभावसाधनस्येति कस्मान्न व्याख्यायत इति चेत् ? न ; '**श्रुतज्ञानं ब्रूमः**' इत्यनेन तन्निरासात्। नहि तदभावे 'सर्वत्र सर्वका[लं]सर्वज्ञ (ज्ञो) नास्ति' इति वचनमविसंवादि संभवति। तत् नापौरुषेयम् ; निषेत्स्यमानत्वात्।

ननु स्याद्वादाभावात् कथं तेन कस्यचिद्बाधनमिति चेत् ; अत्राह–**दृश्ये**त्यादि। सुगतोऽन्यो वा क ण च रा दिः **स्वयम्** आत्मना [४००ख] **कथं न कंचन (कथंचन) प्रतिपद्येत**। किम् ?

(१) तदाकृष्टिहेतुत्वात्। (२) व्यभिचारः (३) जैनं प्रति। (४) प्रयत्नस्यासिद्धेः। (५) अपि तु सिध्यत्येव। (६) "दोषावरणयोर्हानिः निःशेषास्त्यतिशायनात्। क्वचिद् यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः॥" –आप्तमी० १।४। (७) आप्तमीमांसायाः अपरनाम देवागमः। (८) वैशेषिकाभिमत। (९) श्रुतज्ञानाभावे। (१०) श्रुतम्।

इत्याह–**ज्योतिर्ज्ञानादिकम्** । किंभूतम् ? इत्याह–**अपरोपदेशम्** अविद्यमानपरोपदेशे (शं) साक्षादसौ [1]तत्प्रतिपद्येत । अपि तु अन्यतः तत्साक्षात्कारिण इति भावः । **ज्योतिर्ज्ञानादिप्रति[पत्ति]-य[2]तः** तस्य तत्प्रतिपत्तेः स्याद्वादमन्तरेणाप्युपपद्येत । यत इति वाऽऽक्षेपे न चेति । किंकुर्वन्नसौ कथं तन्न प्रतिपद्येत ? इत्यत्राह–**अलक्षयन्** अनवधारयन् । क ? **बहिः** । किम् ? इत्याह–**अर्वाग्भाग** इत्यादि । **अर्वाग्भागादीनां** द्वन्द्वः पुनः तेषाम् **आदिशब्देन** बहुव्रीहिः **विवर्त्ता** (विवर्त्ता) स्तदर्थाः **तेष्वेकम्** अभिन्नं यद् **द्रव्यं** तदिति । पुनरपि किंभूतम् ? इत्याह–**दृश्ये**-त्यादि । **दृश्यादिरेकः** प्रधानं **रूपं** स्वभावो यस्य तत्तथोक्तम् । पुनरपि क किमि[ति] लक्षयन् ? इत्याह–**अन्तश्चे**त्यादि । किंभूतम् ? इत्याह–**व्यावहारिकम्** इति । दूषणान्तरं दर्शयन्नाह–**न च** इत्यादि । **न च** नैव **एकान्तवादिनां** वैशेषिकादीनां **अत्र** भाविनि जाति (ज्योतिर्ज्ञा)-नादौ **प्रमाणमस्ति** । कथमिति चेत् ? उच्यते–अत्र न तावत्प्रत्यक्षमैन्द्रियम् ; तेन इन्द्रियसंसर्गा-भावात् । नहि असता भाविना इन्द्रियसंसर्गः, अतिप्रसङ्गात् । तत्संसर्गे च (र्गाच्च) परस्य[3] [4]तत्प्रत्यक्षम् *"**आत्मा मनसा युज्यते तद् इन्द्रियेण तदप्यर्थेन**" [न्यायम० पृ० ७४] इति [6]वचनात् । एतन्मानसमपि तदत्र निरस्तम् ; तदपि आत्ममनःसंयोगसहचारिणाऽर्थेन जन्यते । न च पूर्वतत्संयोगकाले सोऽस्ति ; भा[वित्व]विरोधादिति । एवत (एवं) तन्मनसापि भावि भविष्यति सः, न तदा संसर्गः प्रा (प्र) कृतरयाप्यस्ति । परम्परासत्यत्वेऽप्यसता कीदृशः ? सत्त्वा[त्] कथं [४०१ क] सर्वस्य तत्र ज्ञानं न जन[येत्]घटः ? तदग्रहणात्मकत्वात् । कुत एतत् ? अबुद्धित्वादिति चेत् ; एतदपि कुतः ? अर्थग्रहणात्मकत्वात् ; अन्योऽन्यसंश्रयः, तथाहि–घटादेरबुद्धित्वे तदग्रहणात्मकत्वम् , अतोऽबुद्धित्वमिति । अथ घटग्राहिणा प्रत्यक्षेण स[7] [8]तद्ग्रहणविमुखः प्रतीयते ततोऽयमदोषः ; किं पुनर्नित्येश्वरज्ञानं तद्ग्रहणाभिमुखं प्रतीयते ? न चेत् ; कस्तस्य घटाद् विशेषः ? प्रतीयत इति चेत् ; न स्वयम् , अस्वसंवेदनात्मकत्वात् [9]अन्यथा परमतसिद्धिः । [10]तस्यैव [11]तत्तथेति [चे]त् ; किमेतद् ईश्वरचेष्टितम् ? तत्र यथा नित्यज्ञानं [12]तस्यैव नेतरस्य, तथा स्वसंवेदनमपि कुतोऽयं विभागो लभ्यते ? नह्येकधर्म (र्मेण) वैलक्षण्ये सर्वैरवि (पि) तथा भवति, अन्यथा तयोर्ज्ञानत्वादिनाऽपि वैलक्षण्यं भवेत् । अथ तेन[13] [14]तयोर्न विरोधः ; स्वसंवेदनेनापि न विरोधः ।

अथ इतरज्ञानस्य स्वसंवेदनप्रतिज्ञा अनुमानेन बाध्यत इति विपध (विरोधः) तथाहि–‘अनीश्वरज्ञानं ततो भिन्नेनैव ज्ञानेन वेद्यते ज्ञेयत्वात् पटादिवत्’ इति चेत् ; ईश्वरज्ञानेन हेतोर्व्यभिचारः[15] । यदि पुनः ‘अनीश्वरज्ञानज्ञेयत्वात्’ इति विशिष्य उच्यते ; तथाप्यगमक-

(१) ज्योतिर्ज्ञानादिकम् । (२) इन्द्रियसंसर्गात् । (३) नैयायिकस्य । (४) इन्द्रियप्रत्यक्षम् । (५) "तच्चेदं प्रत्यक्षं चतुष्टयत्रयद्वयसन्निकर्षात् प्रवर्तते । तत्र बाह्ये रूपादौ विषये चतुष्टयसन्निकर्षाज्ज्ञानमुत्पद्यते–आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति । सुखादौ तु त्रयसन्निकर्षात् ज्ञानमुत्पद्यते, तत्र चक्षुरादिव्यापाराभावात्···"–न्यायम० । "उक्तं च–आत्मा सहैति मनसा मन इन्द्रियेण···"–बृहत्सं० ७४।३ । (६) मानसप्रत्यक्षम् । (७) घटः । (८) अर्थग्रहण । (९) ईश्वरज्ञानस्य स्वसंवेदनात्मकत्वे । (१०) ईश्वरस्यैव । (११) ज्ञानं स्वसंवेदि । (१२) ईश्वरस्यैव । (१३) ज्ञानत्वादिना । (१४) ईश्वरज्ञान-अस्मदादिज्ञानयोः । (१५) तदपि ज्ञेयं न च ज्ञानान्तरवेद्यम् ।

त्वं व्यतिरेकाऽसिद्धेः । नहि विशेषणमात्रेण तत्सिद्धिः ; अतिप्रसङ्गात् । कथम् ? यदीश्वरस्य स्वपरग्राहिज्ञानं तावतैव सकलप्रयोजनसिद्धिः किमीश्वरेणा वारमलरेण(णाऽऽत्मान्तरेण)[1]? कथमवस्थानं [2]तस्येति चेत् ; कुत एतत् ? गुणत्वाद् रूपादिवदिति चेत् ; अत एव अस्मदादिज्ञानवत् अस्वसंवेदनमस्तु । ततो यथा ज्ञानत्वाऽविशेषेऽपि [3]तदेव स्वसंवेदनं [४०१ख] ततो (तथा)
५ [4]निराधारमप्यत्र भ्रमह । क[थ]मेवं सति तस्य गुणत्वम्[5] ? युगपत् स्वपरग्रहणस्वभावद्वयवत् क्रमेणाप्यनेकस्वभावसंभवप्रध्यन्वात (वोऽस्तु अध्यक्षसिद्धत्वात) । अथैकस्वभावेन यथा कारणम् अनेककार्यं[6] तत तथेदं स्वपरग्राहकमिति चेत ; न ; [7]परं प्रति दृष्टान्तासिद्धेः ।

एतेन इदमपि निरस्तम्–'अनेकस्य परस्येव स्वपरयोरपि तदेकमेव ग्राहकम्' इति ; तदितरवत [8]तदपि नात्मवेदनमिति न घटाद्विशेषः ।

१० स्यान्मतम्–ईश्वरः स्वज्ञानस्य अर्थग्रहणात्मकत्वं प्रत्येति ; तदपि चिन्त्यते–गृहीतस्य, इतरस्य वा ? न तावदितरस्य[9] ; इदंतया नेदन्तया वा तस्य व्यवस्थापित्तमश न्तो(स्थापयितुमशक्तः) ज्ञानकल्पनावैफल्यापत्तेः । गृहीतस्य इति चेत ; द्वितीयज्ञानाभावान्न युक्तमेवतत (मेतत) । भावे वा नित्यमेकत्रानेकम् , अनवस्थान(नं) च विज्ञानं प्रसज्येत ।

स्यान्मतम्–[10]तस्य ज्ञानद्वयमस्ति–एकं स्वतोऽन्यस्य[11] सर्वस्य[12] वेदकम् , [13]अपरं तस्येति;
१५ तन्न ; यस्मादेकत्र यावदो(यावद्)द्रव्यभाविनः सजातीयस्य युगपद् गुणद्वयस्याऽयोगात् अन्यथा घटादौ यद्वयं (रूपद्वयं) तथा भवेत । [14]अन्योऽन्यसंश्रयश्चात्रोक्तः । अथ महेश्वरः तज्ज्ञान(नं) स्वयमेव तथा प्रत्येति ; बहिरर्थमति(मपि)तथेति व्यर्थं सर्वत्र ज्ञानकल्पनम् । तथा प्रतिपद्यमानमात्मानं न चेदीशः प्रतिपद्यते ; कुतस्तेन तत्परिच्छेद[:] ? तदास्ति (तदस्ति)त्वं वा[स्वयं] प्रतिपद्यते चेत ; एकस्य स्वपरा[व]भासित्वम् । अ[त]श्चेत ; अनवस्थानम् । तन्नेश्वरज्ञानं
२० घटाद्विशिष्यत [४०२क] इति न ज्योतिर्ज्ञानादौ प्रमाणम् ।

एतेन[वैशेषि]कस्यापि चिन्तितम्–तस्य अचेतना बुद्धिः परोक्षः पुमानिति ।

सुगतज्ञानं तत्र प्रमाणमिति चेत् ; यदि तत् सकलभेपानुकारि (भेदानुकारि ;) कथं क्वचिदप्येकान्तसंभवः ? तत एवोच्यते–न वै(चै)कान्तवादिनामिति । प्रत्याकारं भेदे ; नैकः सुगतः ? तदाकारयितुः तेनादर्शनात् नापि सर्वज्ञः । कथत्या (कथमयं[15]) स्वमेकमनेकाकारं स्वयं
२५ प्रतिपद्यमानः [16]परं निसंक्षणिकंध्रुवं (निरंशं क्षणिकं ब्रुवन्) स्वस्थः ? निराकारं चेत ; तथैतत्[17] सर्वस्येति न युक्तम्–

*"अर्थेन घटयत्येनां[18] नहि भङ्ग (नहि मुक्त्वाऽ)र्थरूपताम् ।"

[प्र०वा० २।३०५] [19]इत्यादि ।

---

(१) मध्यवर्तिना । (२) ज्ञानस्य । (३) ईश्वरज्ञानमेव । (४) ईश्वरं विनापि तज्ज्ञानं निराश्रयमेव भवतु । (५) द्रव्याश्रयिणः एव गुणत्वं भवति न तु निराश्रयस्य । (६) करोति । (७) जैनेन तस्यापि अनेकस्वभावस्वीकारात् । (८) ईश्वरज्ञानमपि । (९) अगृहीतस्य । (१०) ईश्वरस्य । (११) स्वभिन्नस्य । (१२) अर्थजातस्य । (१३) द्वितीयं ज्ञानम् अर्थग्राहिज्ञानं वेत्ति । (१४) द्वितीयेन ज्ञातं सत् प्रथमज्ञानमात्मसत्तां ख्यापयेत् , ख्यापितात्मसत्ताकञ्च प्रथमं द्वितीयेन ज्ञायेत इति । (१५) बौद्धः । (१६) बाह्यार्थम् । (१७) निराकारत्वम् । (१८) बुद्धिम् । (१९) "तस्मात् प्रमेयाधिगतेः साधनं मेयरूपता ।" इत्युत्तरार्धः ।

सुगतवत् सर्वोऽपि सर्वदर्शी स्यादिति चेत् ; न ; नियतशक्तित्वाद् भावानाम् । नहि एकस्य शक्तिरशेषस्य । नाप्येकस्यापि या एकत्व(त्र)शक्तिः सैवान्यत्र ; अन्यथा सकलस्य ग्रहणवत् ज्ञानमपि ([1]जननमपि) सुगतस्य स्यादिति नेश्वरबाधनम्[2] । इतरथा स्वसन्तानज्ञानजननभिगत (जननमपि न तस्य) स्यादिति कथं वस्तुत्वम्[3] ? अथ तस्य[4] ग्रहणशक्तिरेव सर्वत्र[5], इतरा[6] तु क्वचिदेव[7] ; यद्य (यद्येवम् ए) कस्यैव नानात्मनि नितराम्[8] । एकस्य सर्वग्रहणेऽपि, अन्यत्र ५ विपर्ययात् ।

नन्वे[व]म् एकस्य शक्तिद्वयात्मक[त्व]मिति चेत् ; अयं परस्य[9] दोषोऽस्तु । न चाऽशेषग्रहणशक्तिरेव प्रतिनियतजननशक्तिः, सा[10] वा प्रकृता[11] ; ग्रहणजन[न]योरविशेष:(ष)प्रसङ्गात् । अनेकं वार्थ[म]नेकस्वभावेन प्रतियतः[12] [13]स्वात्मत (त्मन्य) नेकान्तः । एकस्वभावेन त्रिकालार्थग्रहणवत् यदि [14]तथाविधकार्यजननं[15] निरालम्बनमिदम्– १०

*"नाऽक्रमात् क्रमिणो भावः(वाः)" [प्र० वा० १।४५] इत्यादि ।

किंच, योग्यताबले[न] [16]तदर्थस्य ग्राहकम्[17] ; प्रतिबन्धद्वयव्याघातेन[18] लिङ्ग [४०२ख]-[19]सङ्ख्यानियमवैयर्थ्यम् । तत उत्पत्तेश्चेत् ; न भाविनः चिरभूतस्य वा ग्रहणं तस्मादनुत्पत्तिः (त्तेः) । [20]उत्पत्तौ च; अपरतत्कार्यकाल एव तेन[21] भ(भा)व्यमिति [22]तन्नियतकालता ।

स्यान्मतम्–इतरजनापेक्षयार्थस्य वि[भिन्न]कालत्वं न सुगतापेक्षया, तस्य साक्षात् १५ रूपेण सर्वज्ञेना (सर्वम् आ)त्मनि प्रतिभासमानं वर्त्तमानमेव, § [23]साक्षात्करणमेव वर्त्तमानमेव § साक्षात्करणमेव वत्त्व सम (च ज्ञत्वम)र्थस्य न वर्तमानकालसम्बन्धित्वं [24]तदभावादिति ; तदसारम् ; यतः तद् पेक्षयतेः (तदपेक्षया) तज्जनकमपि न किञ्चित् स्याद् वर्त्तमानेषु तदयोगात्, अनभ्युपगमाच्च । इतरापेक्षया अर्थादुत्पत्तिः तस्य[25], समकालयोः परमार्थतः कार्यकारणभावं प्रतियन्(न्) स भ्रान्तः स्यात् । तद्बलेन सुगतस्य परग्रहणे सोऽपि तथाविधः[26] इति २० न च वन्दनीयः । [एतेन] विभ्रमशून्यप्रतिभासाद्वैतपक्षाः निरन्ताः (निरस्ताः) । तन्न सुगतप्रत्यक्षमप्यत्र प्रमाणम् । अत एव नानुमानमपि तत्स्वार्थकस्वाधस्य (तत्पूर्वकत्वादस्य[27]) । ततः स्थितम्–न चेत्यादि ।

ननु प्रत्यक्षम् अर्थसन्निकर्षमतो (र्षजम्, अतो) जन्मया ([28]जन्मनाम)पेक्षते नागमः, ततः स[29] एवात्र प्रमाणमिति चेत् ; अत्राह–श्रुतेः इत्यादि । श्रुतेः आगमस्य अतद्विषयत्वात् २५ ज्योतिर्ज्ञानाद्यगोचरत्वात्, 'न चैकान्तवादिनामत्र प्रमाणमस्ति' इति सम्बन्धः । एवं मन्यते–

(१) उत्पादकत्वमपि । (२) स्वयं सुगतस्य सृष्टिकर्तृत्वप्राप्तेः । (३) अर्थक्रियाकारित्वाभावात् । (४) सुगतस्य । (५) अर्थेषु । (६) जननशक्तिस्तु । (७) स्वसन्तानज्ञानजनन एव । (८) अस्तु । (९) बौद्धस्य । (१०) जननशक्तिः । (११) ग्रहणशक्तिः । (१२) जानानस्य । (१३) स्वस्वरूपे । (१४) कालान्तरवर्ति । (१५) स्यात् तदा । (१६) ज्ञानम् । (१७) चेत् । (१८) तादात्म्यतदुत्पत्तिरूप । (१९) त्रित्वसङ्ख्या । (२०) चिरभूतात् भाविनश्चार्थात् सुगतज्ञानोत्पत्तिस्वीकारे । (२१) सुगतेन । (२२) अपरकार्यकालतायाम् कालान्तरस्थायित्वं स्यादिति भावः । (२३) § एतदन्तर्गतं पुनर्लिखितम् । (२४) कालाभावात् । (२५) ज्ञानस्य । (२६) भ्रान्तः । (२७) अनुमानस्य । (२८) उत्पत्तिमपेक्षते । (२९) आगम एव ।

यदे (यदा) कान्तवादिनां परोक्षविषयमध्यक्षं भवति तदा तत्पूर्विका श्रुतिरपि तद्विषया[1] स्यान्नान्यथा, न चैवमिति ।

मीमांसक आह– स्वत एव परोक्षश्रुतिः प्रमाणं न तत्प्रत्यक्षापेक्षा । तदुक्तम्–[४०३क]

*"स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
५ न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥"
[मी० श्लो० सू० २ श्लो० ४७] इति;

तत्राह–नाप्यभन्ये (नाप्यनये)त्यादि ।

**[नाप्यनया मार्गप्रतिपत्तिः यामाश्रित्य श्रुतेः स्मृतेः ।**
**मन्त्रं नित्यं प्राकृताः प्रतिपद्येरन् तदर्थकम् ॥२८॥**

१० नित्यस्यानेकार्थसंभवात् न तस्मादर्थं प्रतिपत्तुमर्हति, कथमन्यथा विप्रतिपत्तिः स्यात् । यदि पुनः रागादिरहितस्य कस्यचिदुपलब्धिर्यतो वेदार्थप्रतिपत्तिः स्यात् । रागादिमत्त्वेऽपि यदि कश्चिद् विवक्षिततदर्थतत्त्वं जानीयाद् ब्रूयाद्वा किं तेन ? न ब्रूमः रागादिमत्त्वात् अपि तु परोपदेशापेक्षीति; कः पुनः तदर्थदर्शिनः परः सः यस्योपदेशमुपवर्णादयः प्रमाणयन्तः कपिलादीन तिशेरते ? तदनेकार्थसंभवात् १५ कुतस्तत्त्वमिदन्तया नेदन्तया वा व्यवस्थापयेत् यतः पौरुषेयाद् विशिष्येत । ]

शब्दात् अर्थगतिनगरप्राप्तिहेतुत्वात् मार्ग इव **मार्गः** शब्दार्थसम्बन्धो वाच्यवाचकरूपः तस्य **प्रतिपत्तिः नापि** श्रोतुः । केन ? अन्व[य]परम्परैकान्तेनात्वा इवात्या (न्तेन ज्ञात्वा) जैमिन्यादयः शास्त्रार्थदर्शनविगुणत्वात्तेषाम् परै वेकान्तः (परम्परैकान्तः) तेन, न ह्यान्वेता (ह्यवेत्ता) परोत्वो (परात्) मार्गं प्रतिपद्यते । किंभूता सा नापी (स्ती) त्याह–**यःया** (?) २० **यामाश्रित्य श्रुतेः** वेदात् सकाशादकृत (कृत्रि) मायास्तत्त्वप्रतिपत्तिः स्यादित्याध्याहारः । कुतो यामामुत्ये (माश्रित्ये) त्याह–**स्मृतेः** । एतदुक्तं भवति–पूर्वं साक्षात् शब्दार्थसम्बन्धदर्शनः (शिनः) सम्बन्धप्रतिपत्तिः परस्य पुनः शब्दश्रवणात् तत्प्रतिपत्तिः, न चैवमिति । यदि वा, स्वर्गापवर्गयो**मार्गो** यागादिः तस्य **प्रतिपत्तिः नापीति** व्याख्येयम् । शेषं पूर्ववदिति । माभूत् तेन तत्प्रतिपत्तिः, श्रुतेरेव तु तत्त्वप्रतिपत्तिः स्यादिति चेत ; अत्राह–**मन्त्रमि**त्यादि । २५ **मन्त्र (न्त्रं)** घृताग्नाहवनवाक्यं स्वर्गादिदानसमर्थं **प्रतिपद्येरन्** इदन्तया जानीयुः । के ? इत्याह–**प्राकृताः** शूद्रादयो जैमिन्यादिकं (दिवत्) । तथा च तद्वत्तेऽपि तदर्थानुष्ठायिनः स्युः इति मन्यते ।

जैमिन्यादय एव तत्प्रतिपद्यन्ते नान्यदिति (नान्य इति) चेत् ; अत्राह–**नित्यमिति** । अयमभिप्रायः–यदा नित्यः सर्वगतो मन्त्रः पुरुषनिरपेक्षः स्वमर्थं प्रतिपादयति तदा सर्वत्र तद्- ३० विशेषात् शब्दोऽपि (शूद्रोऽपि)[2] प्र[ति]पद्येत, न वा कश्चित् । न ह्याकाशमेवं त्याहासमन्यं (मेकं प्रत्याकाशम् अन्यं) प्रत्यन्यथा । सा (अथा) सौ द्विजायैव तं प्रतिपादयति । कुत एतत् ? [४०३ख]

(१) परोक्षविषया । (२) शूद्रादयः ।

स्वभक्तत्वात् । पक्षपातिना किं तेन ? परोऽपि तद्भक्तः समुपलभ्यते । अथ तस्यैव आगम एव; तदपि कुतः ? तेन तदर्थानुष्ठानात् ; अन्येनापि दृश्यते । विप्रोपदेशात् ; किन्तेन, यदि मन्त्र एव समर्थं (तमर्थं) कथयति ।

एतेन [1]तेन पाठात्तस्येति[2] निरस्तम् ।

यदि पुनः द्विजाराधनातः तं प्रत्येव तत्प्रतिपादनसमर्थो जातः; कथं नित्यः ? ५

किं च, तदाराधनाक्रमो यदि मन्त्रार्थः; सोऽपि ततोऽन्येनापि प्रतीयते। नो चेत् ; पुरुषकल्पितो नाभिमतफलदायी स्यात् अन्यथा किं मन्त्रेण ? 'अथ विप्र एव तद्ग्रहणानुष्ठाने योग्यः, न चैतावता मन्त्रोऽनित्यः, नित्यानामपि आत्मादीनां कार्यनियमदर्शनात्' इति; तन्न सारम् ; यतः स्यादेतदेवं यदि परोपदेशादद्विजस्य तदर्थप्रतिपत्तिर्न स्यात् , अग्नेरिव धूमः, न चैवं ततः तद्दर्शनात् । द्विजस्यापि अपरोपदेशिका न तत्प्रतीतिः । १०

किंच, न ताव[त्] मन्त्रो 'द्विजोऽयम्' इति स्वयं ज्ञात्वा तस्मै स्वसमर्थं (स्वस्यार्थं) निवेदयति अचेतनत्वात् , अन्यथा आत्मज्ञानकल्पनावैक(फ)ल्यम् । नापि 'यस्मादहं ब्राह्मणः तस्मादहं मन्त्रार्थं गृह्णामि' इति द्विजो जानाति; ब्राह्मणत्वप्रतिपत्तेः तस्यापि स्वयमसंभवात् । वेत्तिनं प्रति (निवेदितं) चैतद् वर्णं (वृत्तो)स्वयमेव शास्त्रकृता। ततो **मन्त्रं नित्यं प्राकृता[ः]प्रतिपद्येरन्** इति । 'कम्' इति प्रश्ने उ[त्त]रमाह–तदर्थज्ञोऽयं[सम्]प्रदायाद् वृत्तते (वर्तते) मन्त्रार्थज्ञसम्प्रदायो भावप्रकारेण विशेष्यते तदभिमत (?) यतः तत्सम्प्रदायमन्तरेण प्राकृतानां तत्प्रतिपत्तेः मन्त्रो नित्यः न नात् (स्यात्) [४०४क] पौरुषेयात्मत्वात् । नहि परोपदेशापेक्षणे तस्य ततो भेदः । १५

कारिकां विवृण्वन्नाह–**नित्यस्य** इत्यादि । **न तस्माद्** नित्याद् वेदात् इति । कथम् ? इत्याह–**कथ(अथ)**मित्यादि । **अन्यथा** अन्येन ततः तस्य तत्प्रति[प्रत्ति]प्रकारेण **कथं विप्रतिपत्तिः स्यात्** [3]प्रतिव्याख्यात्रि(तृ)व्याख्याभेदः स्यात् । नहि स्वयमेव नियतं स्वमर्थं निवेदयति[4] वे ते (**वेदे**) नित्ये सति [5]सा युक्ता । अथवा, प्रतिपत्त्यभावो **विप्रतिप्रत्तिः कथं** कस्यचित **स्यादिति** चेत ? तदेक एवार्थः ततः प्रतीयत इ[ति]नास्ति सा इति; तत्राह–**अनेक** इत्यादि । वेदस्य पुरुषापेक्षया **अनेकस्य** नियोगादि[6]रूपस्या**र्थस्य संभवात्** कथं स्यादिति ? अथ, याना(यावा)नर्थो वेदात् प्रतीयते स सर्वोऽपि तस्यैव, अन्यथा न कोऽपि स्यादिति चेत ; अत्राह–**नित्यस्य** इत्यादि । स्वर्गोऽ**र्थः**, तस्य काम्यमानत्वात् *"**स्वर्गकामः**"[7] इति वचना[त्] तस्मै तन्निमित्तं तत्त्वं (तच्च) यागादि तत् (तम) **तस्मात् कथं प्रतिपत्तुमर्हति** ? कुतः ? इत्याह–**अनेकार्थसंभवाद्** वेदस्य अनेकार्थोऽर्थतत्त्वम्, अन्यथा 'सारमेयमांसभक्षणात् स्वर्गः स्यात्' एकः [8]तस्यार्थ इति चेत ; अत्राह–**कथ**मित्यादि । अनेकार्थसंभवाभावप्रकारेण **अन्यथा** ।

२०

२५

---

(१) द्विजेन । (२) द्विजस्य । (३) व्याख्यातारं व्याख्यातारंप्रति प्रतिव्याख्यातृ । (४) निवेदनकर्तृरि सति । (५) विप्रतिपत्तिः । (६) आदिपदेन भावनाविध्यादिपरिग्रहः । (७) 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादौ । (८) 'अग्निहोत्रं जुहुयात्' इत्यस्य अग्निं हन्तीति अग्निहः श्वा, तस्य उत्रं मांसं जुहुयात् खादेत् इत्यर्थः स्यात् । "तेनाग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रुतौ । खादेत् श्वमांसमित्येष नार्थ इत्यत्र का प्रमा ॥"–प्र० वा० ३।३१८ ।

ननु न जै मि नि [:] वेदाद् अर्थनार्थे(अर्थं)प्रत्येति, अपि तु स्वयं साक्षात् तत्प्रतिपद्य-[ते]वीतरागत्वात्, वेदेन यावद् बोधयति परमिति चेत् ; तदाह–**यदि पुनः** इत्यादि । कस्य च (**कस्यचित्**) जै मि नि(नेः)ब्रह्मणो वा रागाद्यातस्यरूप (**रागादिरहितस्य उपलब्धिः,** उप)लक्षणमेतत् यथार्थदर्शनस्य, **तद्यदि** स्याद् **यतो** रागादिरहितात् **वेदार्थप्रतिपत्तिः स्यात्**
'परस्य' इत्यध्याहारः । दूषणमत्र [४०४ ख] **कथं विवक्षित** इत्यादि । जै मि न्या दि ना हेतोर्व्यभिचारादि[ति]भावः । अथ तस्यापि पक्षीकरणान्न दोषः, तत्राह–**रा[गा]दिमत्त्वेऽपि** इत्यादि । **[विवक्षित]तदर्थतत्त्वं** वेदार्थतत्त्वं **कश्चिदतन्तरज्ञेय** (त्तरोक्तो) **यदि जानीयाद् ब्रूयाद्वा किमन्यथा तेन** कुतः पौरुषेयस्य वचनस्य प्रामाण्यं न स्यात् ? स्यादेव । कुतः ? इत्याह–**रागादीन्**यादि । 'तत्त्वज्ञानात्' इति च द्रष्टव्यम् ।

पर: प्राह–**न ब्रूमो रागादिमत्त्वादिति अपि[तु]परोपदेशो(शा)पेक्षी वेत्ति ब्रूयाद्वा इति** ब्रूमः, इतिशब्दः परपक्षसमाप्तौ । तत्र दूषणम्–**कः पुनरित्यादि** । **यस्योपदेशम्** उ प व र्षा द यो जै मि न्या द यः **प्रमाणं यतः** (णयन्तः) **क पि ल दी न तिमरते** । (**क पि ला दी न् अतिशेरते**) उ प व र्षा द यस्तत्त्ववादिनो न क पि ला द य इति भिन्नेरन् । **स कः परः** उ प व र्षा दि भ्योऽन्यः प्रकृष्टो वा कः ? [न] कश्चिन । कुतः ? इत्याह–**तदर्थदर्शि(शि) न** इत्यादि । वेदार्थदर्शन(र्शिन) इति । परोऽपि परोपदेशापेक्षी स[न]स्वार्थं वेत्ति ब्रूयात् ता(वा:)सोऽपि तदुपदेशापेक्षी इत्यनादिरियम् उपदेशपरम्पराऽविसंवादिनी इति चेत् ; अत्राह–**तदनेकार्थसंभवात्** कारणात् **कुतो** न कुतश्चित् प्रमाणादृत्य (णाद् **व्यवस्थापयेत्**) '**परः**' इति पदघटना । **किम्?** इत्याह–**तत्त्वमित्यादि** । इदन्तया अभिमतरूपतया **नेदं ब्रूया ना** (**नेदन्तया वाऽ**) नभिमतरूपतया वा **यतः** तत्त्वस्य व्यवस्थापनात् **पौरुषेयाद्** वचनाद् **विशेष्येत** वेद इति । एवं मन्यते–यदि तस्य एक एवार्थः § स्यात् परमार्थः § स्यात् परमार्थतः सन्नियतः तदा तस्य कल्पनाशतेनाप्यन्यथा कर्तुमशक्यत्वात् [४०५ क] स्याद्यत्यता (स्यादप्यना) द्युपदेशपरम्परातः तत्त्वप्रतिपत्तिः, अनेकार्थसंभवे त (तु) कस्तत्र अनादिः को वा कल्पितः इति तज्ज्ञायेतार्थ (न ज्ञायेत । योऽर्थः) शिष्टसंगृहीतोऽनादिरस्योत्य (दिः सः अन्योऽन्यः[3]) इति मतिः ; [कः] शिष्टः ? ब्राह्मण इति चेत् ; उक्तमत्र–'तदनिर्णयात्' इति । तत एव अनेकोऽपि तदर्थः स्यात् अविशेषात् ।

किं च, सौगतमतानुसारेणा (सारिणा) द्विजेन श्वपिशिताशनमुच्यमानं कुतोऽनादि न वेदार्थः ? अवान्तर (अर्थान्तर) कल्पना न, प्रमाणाभावात् । अथासौ न द्विजधु(जः, क)स्तर्हि सः ? ब्राह्मणःत्वं (णत्व) योगी चेत् ; किं पुनस्तस्य [4]तद्योगो नास्ति ? तथा चेत् ; कथं तदनुसरणात्[5] पूर्वं स ब्राह्मणः ? न हि गोत्वैः (गोत्व)सम्बन्धरहितः कर्कः[6] कदाचनापि गौरिति । तदापि न ब्राह्मण इति चेत् ; क इदानीं ब्राह्मणः ? यः कालत्रयेऽपि न मन्त्रान्तरायोगी ([7]मतान्तरयोगी) ति चेत् ; क एव (वं) प्रतिपद्यतां यतो देवदत्तादयः प्रतीयमानाः द्विज (जाः) कार्या हो सः (येहन्तारः)।

(१) मीमांसकाचार्याः । (२) § एतदन्तर्गतः पाठः पुनर्लिखितः । (३) कल्पितः । (४) ब्राह्मणत्वयोगः । (५) सौगतमतग्रहणात् प्राक् । (६) श्वेताश्वः । (७) धर्मान्तरकारी ।

तदाप्यसौ ब्राह्मणः [1]तदनुप्रवेशे तु विपरीतः इति चेत ; ननु किं ब्राह्मणत्वं नष्टम् ? तथा चेत् ; न नित्यं सामान्यमिति [2]कर्कमध्यमध्यासीनो मुण्डो न गौः स्यात्। अथ न नष्टम् ; तदनुप्रवेशेऽपि[3] ब्राह्मण एव । वेदे भक्त्यभावान्नेति चेत ; किं [4]तद्भक्तिरेव ब्राह्मण्यम् , अन्यद्वा ? प्रथमपक्षे न तत्सामान्यम् ज्ञानविशेषत्वात्तस्याः[5] । तथा च सुप्रावस्थस्य[6] व्यापादना वधेऽपि (व्यापादनेऽपि) न ब्रह्महत्यादिदोषः । द्वितीयपक्षे [7]तदभावेऽपि तदवस्थं तदिति स एव दोषः । अथ तद्भक्त्या[8] स एव ज्ञाप्यते ; न; शूद्रेऽपि तद्भावात्[9]। वेदपाठरहिते[10] सत्यपि[11] सा[12] न ज्ञायत इति [चेत :] कुतः तत्र[13] द्विजत्वज्ञानम ? गोत्रादेरिति चेत ; इतरत्र समानम ।

एतेन तदर्थानुष्ठानं प्रत्युक्तम । [४०५ ख] । तथाहि–[14]तदेव द्विजत्वम् , अन्यद्वा सामान्यम ? तदेव चेत ; तद्रहितः सिसुः(शिशुः)स[15] न भते (भवेत) । [तथापि तदा][16] तदभ्युपगमे अन्यदापि[17] कुतः तदनुष्ठाना[न ] स्यात ? अन्योऽपि स्यात[18]। तस्य तदभावान्नेति [चेत :]कुत एतत ? अद्विजत्वादिति चेत ; प्रकृतस्यापि त(न)भवेत । तदनुष्ठानात् स द्विज इति चेत ; अन्योऽन्यसंश्रयः–द्विजत्वे तदनुष्ठानम , अतस्तदिति ।

एतेन संस्कारादयोऽपि चिन्तिताः । सामान्यं तद्[19] इति चेत ; [20]तदभावेऽपि [21]तत्तदवस्थमिति [22]नामावब्राह्मण[:] । तत्र ब्राह्मणगृहीतोऽर्थः वेदस्य । बहुजनगृहीत इति चेत् ; न; अनेकोऽपि तद्गृहीत[23] एव समानसभक्षेऽपि (श्वमांसभक्षणमपि) बहुजनपरिगृहीतमेव । द्वेषेण तत्कल्पितम् अतो नार्थ इति चेत ; भक्त्या अन्योऽपि[24] द्विजैः कल्पित इति समानम् । ततः स्थितम्– **तदनेकार्थ** इत्यादि ।

वेदस्य प्रमाणत्वे परोक्तां युक्तिं दूषयितुं दर्शयन्नाह–**वेद** इत्यादि ।

**[वेदः प्रमाणं नित्यत्वात् कर्तुरस्मरणाद्यदि ।**
**स्वशास्त्रकर्तुः स्मर्ता अपलप्येत न किं परैः ॥२९॥**

**शब्दस्य अन्यस्य वा परिणामित्वं सिद्धम् इत्युक्तम् । अपरिणामेऽपि नचाक्षरराशेरपौरुषेयत्वं युक्तं येन वेदः स्वतः प्रमाणं स्यात् , शास्त्रान्तरस्यापि तदनुषङ्गात् विशेषाभावाच्च । कर्तुरस्मरणान् व्यभिचार्ययमपि । तावता प्रमाणत्वे शास्त्रान्तरस्यापि प्रमाणत्वं भवेत् न वा श्रुतः । वर्णानां पदानां च न क्वचित् प्रामाण्यं न भवेत् । सङ्केतात्तदर्थप्रतिपत्तौ प्रकृतवाक्यराशेरितरं प्रति न कश्चिद्विशेषः ? पौरुषेय्या व्यक्त्या च । स्वतः प्रमाणत्वे सङ्केतादर्शिनोऽपि प्रमाणं स्यात् । कर्तुरस्मरणेऽपि प्रबन्धानादित्वं स्यात् । तथापि कथं प्रामाण्यं तद्राशेः म्लेच्छव्यवहारवत् । तत्र अपौरुषेयस्यापि सङ्केतवशात्**

(१) सुगतमतानुप्रवेशे । (२) अश्वमध्ये तिष्ठन् मुण्डः । (३) सौगतमतस्वीकारेऽपि । (४) वेदभक्तिरेव । (५) भक्तेः । (६) द्विजस्य मारणेऽपि । (७) वेदभक्त्यभावेऽपि । (८) वेदभक्त्या । (९) वेदभक्तिसद्भावात् । (१०) वेदपाठाधिकाररहिते शूद्रे । (११) विद्यमानापि । (१२) भक्तिः । (१३) ब्राह्मणे । (१४) वेदार्थानुष्ठानमेव । (१५) द्विजः । (१६) अनुष्ठानरहितत्वेऽपि शिशुकाले ब्राह्मणत्वस्वीकारे । (१७) यौवनाद्यवस्थायाम् । (१८) अद्विजोऽपि वेदार्थानुष्ठानात् द्विजः स्यात् । (१९) द्विजत्वम् । (२०) वेदार्थानुष्ठानाभावेऽपि । (२१) द्विजत्वम् । (२२) सुगतमतानुसारी । (२३) बहुजनगृहीत एव । (२४) यागादिरूपः ।

अर्थप्रतीतौ विश्रामः । सम्प्रदायाविच्छेदोऽपि पौरुषेयस्य विप्रतिपत्तिनिराकरणोपायः स्यात्, तदर्थदर्शिभिः पुनः पुनः उच्छिन्नस्य उच्छिन्नस्य प्रवर्तनात् ।]

**वेदः प्रामाण्यं (प्रमाणम्)** । कुतः ? इत्याह–**नित्यत्वाद**पौरुषेयत्वात् । एव (वं) मन्यते–शब्दे [अ]प्रामाण्य (ण्यं) रागादिकृत दृष्ट चित्जन्मनि । (कृतं दृष्टम् विट्जन्मनि[1]) ५ रागादयश्च पुरुषाश्रिताः, ततो वेदात् पु[रुषः]निवर्तमानः स्वाश्रयान् रागादीनादाय निवर्तते । रागादिनिवृत्तौ च तन्निबन्धन (म) प्रामाण्यमपि निवर्तते इत्यौत्सर्गिकं प्रामाण्यमवतिष्ठते । तथाहि–यन्नि (न्नि) बन्धनं न तत्तदभावे भवति पावकाभावे धूमवत् । रागादिनिबन्धनं च शब्दे[अ]प्रामाण्यम् । ततो वेदे तदभावान्न भवति । तदुक्तम्–

> *"शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितम् ।
> १० तदभावः क्वचित् सिद्धो गुणवद्वक्तृकत्वतः ॥
> वेदे वक्तुरभावानु (त्तु) दोषाशङ्कं च (शङ्कैव)नास्ति नः ।" [४०५क]
> [मी० श्लो० चोदना० श्लो० ६२] इति ।

कुतस्तत्र नित्यत्वमिति चेत ? अत्राह **क[र्तु]रस्मरणात्** । तथाहि–यदस्मर्यमाणकर्तृकं तन्नित्यं यथा गगनम् तथा वेदः । **यदि** शब्दः पराभिप्रायद्योतकः । अत्र दूषणम्–**[स्वशा-** १५ **स्त्रकर्तुः** इत्यादि । **स्वशास्त्रस्य** स्वामृता (स्वमता) गमस्य प्रवचनादेर्यः **कर्त्ता** जिनादिः तस्य यः **स्मात्ता (स्मर्ता) सोऽपलप्येत न किं परैः** अपलप्येतैव जैनादिभिः । इदमत्र तात्पर्यम्– वेदवत् प्रधानस्यापि (प्रवचनस्यापि) तदस्मरणं तेन तत्त्वमस्तु, तत्र[2] वेदेऽपि हिरण्यगर्भादयः स्मर्यन्ते । तदपलापोऽन्यत्रापि इति न वेदेतरयोः विशेषः स्यात् । अन्यचिद् (अन्यथा) वेदेऽपि तव्य (स्मर्तव्य)मिति ।

२० [कारि]कायाम् अनुक्तोति (अनुक्तां) नित्यत्वस्य असिद्धतां दर्शयन्नाह–**शब्दस्य** इत्यादि । वाशब्द इवार्थः । **अन्यस्य** सुवर्णादेरिव **शब्दस्य** अनेकान्तमन्तरेण अदः तत्र मित्युक्तम् , **अपूर्वमन्यस्य** (?) **परिणामित्वं सिद्धम्** कु मा रि ल स्ये व [इति] दृष्टान्तः ।

ननु परिणामनित्यत्वं न कूटस्थनित्यत्वम् हेतुः, तस्य च उभया (य) सिद्धत्वात् नासिद्धो

(१) व्यभिचारिपुरुषे । (२) रागाद्यभावात् । (३) दोषाभावः । (४) 'तद्गुणैरपकृष्टानां शब्दे सङ्क्रान्त्यसम्भवात् ।' इति शेषः । (५) "तेन वेदे व्यवहरद्भिः अवश्यं स्मरणीयः सम्बन्धस्य कर्ता स्यात् व्यवहारस्य च···तस्मात् कारणादवगच्छामो न कृत्वा सम्बन्धं व्यवहारार्थं केनचिद् वेदाः प्रणीता इति···तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्धः ।"–शाबरभा० १।१।५ । बृहती० पृ० १७७ । "यदा चाप्त-प्रणीतत्वात् शब्दोऽर्थं प्रतिपादयेत् । न स्वशक्त्या तदाप्तत्वं मितो न स्मर्यते कथम् ॥ तस्मादवश्यं स्मर्तव्यस्य वेदानां सम्बन्धानां च कर्तुरस्मरणात् योग्यानुपलम्भनादभावेऽवधारिते सिद्धं वेदानां सम्बन्धानां च नित्यत्वमित्याह दृष्ट इति ।"–मी० श्लो० सम्बन्धा० श्लो० १२३, १३० । न्यायरत्ना० । "कथं पुनरपौरुषेयत्वं वेदानाम् ? पुरुषस्य कर्तुरस्मरणात् ।"–प्रक० पृ० १४० । "कर्तुरस्मरणाच्चापौरुषेयत्वम्"–भाट्टदी० पृ० ३३ । नयवि० पृ० २७९ । "स्मर्तव्यत्वे सत्यस्मरणात् योग्यानुपलब्धिनिरस्तस्य कर्तुरनुमानासंभवात् समाख्याप्रवचननिमित्तत्वात् अपौरुषेया वेदा इति ।"–शास्त्रदी० पृ० ६९, ६१६ । (६) अपौरुषेयत्वं नित्यत्वं वा । (७) प्रवचन इव । (८) प्रवचनेऽपि ।

हेतुः इति चेत् ; अत्राह–**परिणामे**ऽपि परिणामनित्यत्वेऽप्यङ्गीक्रियमाणे **नवाक्ष(न चाक्षर)राशेर-पौरुषेयत्वं युक्तम्** अपुरुषकर्तृकत्वम् उपपन्नम् **येन** पुरुषाश्रितदोषाभावात् **स्वतः प्रमाणं वेदः स्यात्** । कुतस्तन्न युक्तम् ? इत्याह–**शास्त्रान्तरस्यापि** इत्यादि । **तदनुषङ्गाद्** अपौरुषेयत्वानु-षङ्गात् परिणामनित्यत्वस्य तत्रापि भावात् । न चैवम् , अतो व्यभिचारी **हेतुः** इति भावः ।

अथ 'दुर्भणत्वादिमत्त्वे सति तन्नित्यत्वात्' इति विशिष्टोऽन्यर्त इति न दोषः; तत्राह– ५ **विशेषाभावाच्चेति** । तदन्तरपरिहारिण(हारेण) वेदे विशेषस्याभावात् , अशेषविशेषस्य अन्य-त्रापि[४०६ख] करणसंभवा[त] । **च** इत्यवधारणे । परस्य तत्र नित्यत्वसावकां(साधिकां) युक्तिं हन्तुमाह– **कर्तुरित्यादि** । **व्यभिचारी अयमपि** हेतुः । दूषणान्तरमाह–**तावतेत्यादि** । **तावता** कर्तुरस्मरेण(स्मरणे) नित्यत्वमात्रेण **प्रमाणत्वे वेदस्य** कर्त्तुस्मर्ता एननस्मत (कर्तुः स्मर्ता एव न स्मृतः) **शास्त्रान्तरस्यापि** न केवलं वेदस्य हिरण्यगर्भादिवत् ततः तस्यापि **प्रमाणत्वं** १० **भवेदिति** । अनेन उत्तरभागो व्याख्यातः । अथ शास्त्रान्तरस्य तथापि न प्रमाणत्वम् ; तत्राह **श्रुतेः** इत्यादि । **प्रमाणत्वमिति** ।

किंच, श्रुतेर्वर्णानां[पदानां वाक्यानां] वा प्रमाणत्वं भवेदिति पक्षाः । तत्रान्य(तत्राद्य) पक्षद्वये दूषणमाह–**वर्णानां पदानां च न क्वचित् प्रमाण्यं न भवेत्** , अपि तु वेदवयादावपि (वेदवत् वर्णपदादावपि) भव[त] प्रतिषेधद्वयेन प्रत्यक्षा(प्रकृता)र्थगतेः । नहि लोके वेदे च १५ वर्णपदःअग्न्यादि(वर्णपदे अग्न्यादिरूपे भिन्ने, उ)भयत्राविशेषात् । तृतीयपक्षे द्वैद्वत(द्वैतम्, कृत)-सङ्केतापेक्षाणाम् , अन्यथाभूतानां वा ? प्रथमपक्षे दूषणमाह–**सङ्केत** इत्यादि । **प्रकृतवाक्य-राशेः** वैदिकवाक्यराशेः **इत्यं प्रति**(इतरं प्रति)पौरुषेयवाक्यराशिं प्रति **न कश्चिद्विशेषः** प्रमाणत्वेतरकृतो न भेदः । कस्मिन् सति ? इत्याह–**सङ्केतात् तदर्थप्रतिपत्तौ**, रागादिमान् पुरुषः सङ्केतं कुर्यादिति तन्नियतः सङ्केत इति मन्यते । दूषणान्तरमाह–प्रकृतवाक्यराशेः पौरुषेय- २० वाक्यान्तरं प्रति न[क]श्चिद् विशेषः । **व्यक्तिः** सदा सतः तद्वाक्यराशेः प्रकाशनम् , न तदर्थस्य **सङ्केत**त्यादिना उक्तत्वादस्य । **पौरुषेयी** च सा **व्यक्तिः** चिति(चिन्तिता) । **तया** तद्राशेः ईतरं प्रति न कश्चिद् विशेषः ।

एवं मन्यते–यथा[अ]सतां वाक्यराशेः[४०७क] रागादिमवा(मता)करणे नेति नियतार्थता, तथा प्रकृतवाक्यराशेः सतोऽपि तथाविधपुरुषेण व्यक्तौ तदन्यथा व्यक्तिरिति स २५ एव दोषः ।

ननु यथा[10] व्यङ्ग्यं तेनापि (तेनाभि)व्यक्तिः, घटादौ तथादर्शनादिति चेत् ; न खट्वादौ (खड्गादौ[11]) मुखादेरन्यथापि[12] व्यक्तिदर्शनात् । अथ सर्वत्र प्रसृतस्य तद्वाक्यराशेः न केन-

---

(१) शास्त्रान्तरात् । (२) शास्त्रान्तरपरिहारेण । (३) वाक्यानां प्रमाणत्वमित्यत्र । (४) द्वैतमिति द्वौ विकल्पौ वक्ष्यमाणौ इत्यर्थः । (५) वैदिकवाक्यराशेः । (६) पौरुषेयवाक्यराशिं प्रति । (७) वैदिकवाक्य-राशेः । (८) रागादिमता । (९) इष्टविपरीता अभिव्यक्तिः स्यात् । (१०) यादृशम् । (११) आयते खड्गे आयतः मुखः दृश्यते । (१२) आयताद्याकारतया ।

चिदन्यथा व्यक्तिः क्रियते, जनापवादभयादनादेयताप्राप्तेश्च, या भ्रान्त्या कस्यचिदना(न्य)-थापि तद्व्यक्तिः सोऽव्ययनम्लत्यानके स (सापि अभ्यस्तास्तिक)समुदायान्निवर्त्तते । [अ]त एवेन्द्रोत्सवे सहभूय वेदज्ञाः तत्पाठमद्यापि शोधयन्तीति चेत ; उच्यते–अनादावतीते काले तथैव सर्वत्रार्यं प्रकृत(प्रसृत) आसीदिति किमत्र प्रमाणम ? न तावत प्रत्यक्षम ; इदानीन्तनस्य कस्य-

५ चित तत्कालाध्यक्षाभावात । भावे युक्तं(ऽयुक्तम) । तत्कालीन[स्य] स्यादिति चेत ; कोशपानं विधेयम । नाप्यनुमानम ; तदभावात । तद्धि(नन्वि)दमस्ति–'वेदः तत्काले सर्वत्र प्रकृत(प्रसृत) एव तत्त्वाद् यथेदानीम' इति चेत ; कथमेवं भ र ता(भा र ता)दीनां तत्काले प्रकृ(सृ)तत्वं न स्यात ? व्यास कृतिबाधनादिति चेत ; न ; हिरण्यव्यक्तिबाधनमत्रापि । अस्य विलोपो(पे) अन्यत्र कः समाश्वासः ? अथ यथेदानीं तथा अन्यदापि वेद आसीदिति प्रसिद्धिः अत्र प्रमा-

१० णम ; अन्यदा हिरण्यगर्भादिकृत इत्यपि प्रसिद्धिः अविशिष्टास्ति । नाप्यागमः ; तदभावात । नहि आत्मनः सर्वदा सर्वत्र प्रसृतत्वप्रतिपादकः परस्य आगमोऽस्ति, कार्येऽर्थे तदभ्युपगमात ।

एतेन अनागते काले तत्प्रसृतत्वेऽप्रमाणं(तत्त्वाद्वेदस्य प्रामाण्यं) चिन्तितम । तदेवं सर्वदा तत्प्रसृतत्वसिद्धेः कदाचिदन्यथापि व्यक्तिः संभाव्यत इति ना(न) [४०७ ख] पौरुषेयादस्य विशेषः ।

१५ ननु यदुक्तम–'सङ्केतवशात्तदर्थप्रतिपत्तौ' इति ; तदयुक्तम ; तद्वशात पदस्यार्थः प्रतीयते न वाक्यस्य, प्रतिपन्नपदार्थस्यापूर्वस्यापि श्लोकस्यापि श्रवणे तदर्थप्रतीतिदर्शनात , वाक्यार्थश्च वेदार्थ इति चेत् ; अत्राह–**स्वत** इत्यादि । **स्वतः** स्वमाहात्म्यात तद्वसन्नि(तद्वक्तृनि)-रपेक्षत्वात **प्रमाणत्वे** स्वार्थप्रतिपादकत्वे प्रकृतवाक्यराशेः **सङ्केतादर्श(र्शि)नोऽपि प्रमाणं स्यादिति** । परिज्ञातपदार्थस्य सर्वस्यापि तद्वाक्यराशिश्रवणा द(णेऽपि) परोपदेश(शादेव) तदर्थ-

२० प्रतीतिः स्यात , न चैव(वम ।) [न] च पण्डितोऽपि परकाव्यं तदुपदेशाद् यथावदवगच्छति ।

स्यान्मतम , यदुक्तम–'**पौरुषेयव्यक्त्या(क्त्या) प्रकृतवाक्यराशेः इतरं प्रति न कश्चिद् विशेषः**' इति; तदनुपपन्नम् ; तद्व्यक्तिरपि नित्यैव पुनः पुनः प्रवर्त्तते न पुनरपूर्वात(र्वा) कदाचित केनचित कृतात(कृतेति) । तत्कर्तुरस्मरणादिति ; तत्राह–**कर्तुरस्मरणेऽपि** इत्यादि । संभावनायाम **अपि**शब्दः, तद्व्यक्तेः यः कर्ता तस्यास्मरणेऽपि **प्रबन्धानादित्व(त्वं) स्याद्**

२५ व्यक्तेः न पुनः नित्यत्वमेव । भवत्वे(त्वे)वम् इति चेत् ; अत्राह–**तथापि** इत्यादि । **[तथापि]** तत्प्रबन्धानादित्वप्रकारेणापि **कथं प्रामाण्यं तद्राशेः म्लेच्छव्यवहारवत्** ।

(१) वेदः । (२) वेदत्वात् । (३) महाभारतरामायणादीनाम् । (४) अतीतकाले । (५) 'महाभारतं व्यासकृतम्' इति प्रसिद्ध्या । (६) 'हिरण्यगर्भेण व्यक्तो वेदः' इति प्रसिद्ध्या । (७) अतीतकालेऽपि । (८) 'हिरण्यगर्भः समवर्तताग्रे, यो वै वेदांश्च प्रहिणोति' इत्यादिना हिरण्यगर्भकृतो वेदः इति प्रसिद्धिः वेदेऽपि समानेति भावः । (९) 'कुर्यात्' इति विध्यंशे एव तत्प्रामाण्यस्वीकारात् । (१०) सङ्केतवशात् । (११) परोपदेशादेव । (१२) तुलना–"म्लेच्छादिव्यवहाराणां नास्तिक्यवचसामपि । अनादित्वात्तथाभावः पूर्वसंस्कारसन्ततेः ॥ तादृशेऽपौरुषेयत्वे कः सिद्धेऽपि गुणो भवेत् ।"–प्र० वा० ३।२४५–४६। अष्टश० अष्टस० पृ० २३८ ।

प्रकृतं निगमयन्नाह-**तन्न** इत्यादि । **न[अ]पौरुषेयस्यापि** वाक्यराशेः **सङ्केतवशादर्थप्रतीतौ** कथं **विश्वासः** इदीनीन्त(नीन्तन)स्य रागादिमत्त्वा[त]सङ्केतविधातुः । यदि वा, व्यक्तिवन्[1] तत्करणमपि अन्यथा संभाव्यते इति चेत ; अत्राह-**पौरुषेयस्य** इत्यादि । [४०८क][**पौरुषेयस्य**] पुरुषवचनस्य **विप्रतिपत्तिनिराकरणोपायः स्यात्** । कः ? इत्याह-**समुपाया (सम्प्रदाया) विच्छेदोऽपि** न केवलं माहात्म्यमेव । सोऽपि कुतः ? इत्याह-**तदर्थदर्शिभिः** इत्यादि । शास्त्रार्थदर्शिभिः, **पुनः पुनः** उच्छ(च्छि)न्नस्य **उच्छ(च्छि)न्नस्य प्रवर्त्तनात्** सम्प्रदायस्य । ५

अथ मतम्-अपौरुषेयवत् पौरुषेयमपि शास्त्रम् अर्थे तादात्म्यादिप्रतिबन्धाभावात् प्रमाणं मा भूत् , अत्राह-**शास्त्रम्** इत्यादि ।

> **[शास्त्रं शक्यविशेषरूपविषयाशेषं प्रमाणं स्वतः,**
> **सर्वज्ञैः सह चेतसो विनियतं प्रतिपादकैः स्यात् परम् ।**
> **कोऽन्यः शंसति वेदवेदकवचःऽन्यं वचश्चेत्कथम् ,**
> **तत्त्वं वस्तुगतागतं जडधियः शुद्धोदनेः शिष्यकात् ॥३०॥]** १०

**शास्त्रं प्रमाणम्** । कुतः ? इत्याह-**स्वतः** स्वयोग्यतावशात् न तादात्म्यादिबलात् , कृत्तिकोदयवद् भविष्यति[2] शकटे । सर्वं स्यादिति चेत् ; अत्राह-**विनियतं** किञ्चिदेव न सर्वम् । किं तत् ? इत्याह (ह-)**शक्य** इत्यादि । **शक्यस्त्वासा (शक्यश्चासौ) विशेषश्च** प्रत्यक्षादिरूपः तस्य **विषयो** गोचरोऽ**शेषो** यस्य तत्तथोक्तं प्रमाणान्तरादि(वि)संवादकम् इति यावत् । अतीतानागतयोरसतोः प्रवर्तमान(नं) निर्विषयं तदप्रमाणम् ; तत्राह-**सर्वज्ञैः सह तश्चेतः(चेतसः)प्रमाणम्** । एव(वं) मन्यते-यथा सर्वज्ञात्म(सर्वज्ञज्ञानम्)तीतादौ प्रवर्त्तमाना अपि(नमपि) स्वतः प्रमाण(णं)परमार्थतः तथा इदमपि इति । ततः 'यदि च सामान्यं व्यक्तिर्वा[वा]च्यं शब्दानां भवेत् अतीतानागतं वाच्यं न स्यात्' इति[3] ; तन्निरस्तम् ; सर्वज्ञानवक्षा वृत्तस्यापि तत्रानिधारणात् (सर्वज्ञज्ञानवत् अतीतानागतस्यापि तत्रावधारणात्) । १५ २०

यत्पुनरेतत्-

> *"अतीतानागतेऽप्यर्थे सामान्य[वि]निबन्धनाः ।
> पिनिविशन्ते (श्रुतयो निविशन्ते सद)सद्धर्मः कथं भवेत् ॥" २५
> [प्र०वा० २।३४] इति[4] ;

तत्रेदं चिन्त्यते-कुतोऽतीतानागतयोर्न तद्धर्मः ? तयोरसत्त्वात् । कदाऽसत्त्वम् ? स्व-

(१) अभिव्यक्तिवत् । (२) भाविनि । (३) "अतीतानागतं वाच्यं न स्यादर्थेन तत्क्षयात्"-प्र० वा० २।१८ । (४) "अतीतानागतेऽप्यर्थे सामान्यनिबन्धनाः सामान्याश्रयाः श्रुतयो निविशन्ते व्यवतिष्ठन्ते-आसीत् घटो भविष्यतीत्यादयः । तथा चासतो घटस्य सामान्यं धर्म इत्युक्तं स्यात् तच्च सामान्यं सत् असतोऽतीतादेर्धर्मः कथं भवेत् ? न हि तैक्ष्ण्यं शशविषाणस्य भवति ।"-प्र० वा० मनोरथ० ।

काले ; वर्त्तमानमपि (नेऽपि) तदनुषङ्गः, तस्याप्यन्ये (प्यन्य) कालापेक्षयोऽतीतानागतत्वा (पेक्षया अतीतानागतत्वात्)। कथमेवं [४०८ख] सर्वज्ञ (सर्वज्ञाः) निर्विषयाः शब्दयतनस्यः (स्त्वेवम स्युः) तेषामपि[1] सामान्यं व्यक्तिर्वा विषयः। उभयत्रापि शब्दवत प्रसङ्गः। अथान्यकाले ; स्वकाले तर्हि शब्दं (सन्) प्रसक्तमिति कथं तद्धर्मः सामान्यमसद्धर्मः ? अथातीतादेर्वर्त्तमानस्य (मानेऽ)-
५ सत्त्वात्तदसद्धर्म इत्युच्यते ; तर्हि चित्रैकज्ञाननीलाकारे अविद्यमानेषु पीतादिषु वर्त्तमानम-सद्धर्मः स्यादिति दुस्तरम्।

अथ अतीतादेः स्वरूपेण प्रतिभासने कथमतीतादि ? तदुक्तम् (तदप्युक्तम्–)

***"स्वरूपेण हि य दृष्टं (यद् दृष्टं) तदतीतादिकं कथम् ?**
**नहि अदृश्याद् अतीतादि परं रूपादिभा(द्विभा)व्यते ॥"**

१० [प्र० वार्तिकाल० ३।२४]

इति चेत ; न सत्यमेतत् ; यतः सर्वज्ञेषु[2] स्वरूपेण प्रतिभासमानं कथम अतीतादिकमति (कमिति)समानम। न समानम, तेषु[3] प्रतिभासमानस्य सर्वस्य वर्त्तमानत्वादिति चेत् ; उक्तमत्र न तेषां[4] किञ्चित कारणं स्यात वर्त्तमानानां[5] तदनभ्युपगमात।

किंच, सुगतश्चेत स्वहेत्ववस्थानं (स्थां न) प्रत्येति ; कथं सर्वज्ञः ? प्रत्येति चेत् स्वात्मना
१५ वर्त्तमानतया ; कथमात्मनः तत्त्वाभ्यासदशां हेतुं[6] जानीयाद् ब्रूयाद् वा ? अन्यथा समकालं रूपं प्रतीयमानं रसस्य हेतुं जानीयादिति रसात् सामग्र्यनुमानं कुर्वती (ता) धर्मकीर्त्तिता (ना) सुगतमतं न व्यज्ञायि। यदि पुनरात्मनः[7] प्रागभावितया ; न तर्हि स्वरूपेण प्रतिभासमानं न वर्त्तमानता (सतं न वा वर्तमानतया)। अथ सुगतः स्वरूपादन्यन्न पश्यति ; कुत एतेन (एतत् ?) ***"नान्योऽनुभाव्यो बुद्ध्यास्ति"** [प्र०वा० २।३२७] [8]इत्यादि वचनादि[ति]चेत ; कथमे-
२० वम आगमप्रामाण्यं निराकुर्वतो (ता) योगिनो [४०९ क] नतिप्रकृता (न निराकृताः ?)। तन्न-युक्तम्–***"भूतार्थभावनाप्रकर्षजं योगिप्रत्यक्षम्"** [न्यायबि० १।११] इति। स्वरूपमात्र-दर्शिनो योगिन इति चेत् ; सर्वेऽपि स्युः[9] अविशेषात्। कथं चैवं स्वरूपमात्रयस्यवसानं (मात्र-पर्यवसाने) सर्वज्ञान (ज्ञत्वं) कस्यचित सिध्येद् इत्युक्तम्। प्रतिभा[सा]द्वैतं च चिन्तितम्। कस्य-चित्[10] तत्सिद्ध्यभ्युपगमे सुगतस्यापि तत्सिद्धिरनिवारिता इति सर्वज्ञा इव शब्दा अप्यतीता-
२५ दावप्रतिषिद्धप्रसंग (प्रसराः) इति सामक्तं (साधूक्तम्) **सर्वज्ञैः सहेति**।

ननु शास्त्रं चेद् अर्थे प्रमाणम् शब्देन्द्रियज्ञानयोरविशेषः तदुक्तम्–***"सैवैकरूपाच्छ-ब्दादेर्भिन्नाभासा मतिः कुतः ?"** [प्र०वा० २।२४] [11]इति। यदि वा, [12]तत एव अर्थप्रतीतेः

(१) सर्वज्ञानामपि। (२) सर्वज्ञज्ञानेषु। (३) सर्वज्ञज्ञानेषु। (४) सर्वज्ञज्ञानानाम्। (५) कारणत्वानभ्युपगमात्, अनन्तरपूर्वस्यैव कारणत्वस्वीकारादित्यर्थः। (६) हेतुत्वेन। (७) तत्त्वाभ्यासदशाम्। (८) 'तस्या नानुभवोऽपरः। ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते॥' इति शेषः। (९) योगिनः स्युः। (१०) सर्वज्ञान। (११) "सैव प्रत्यक्षाप्रत्यक्षाभासा भिन्नाभासा मतिः एकरूपात् शब्दादेः, आदिशब्दात् गन्धरसादेः कुतः ? एकरूपविषया च भिन्नाभासा चेति विरुद्धम्।"–प्र० वा० मनोरथ०। (१२) शब्दादेव।

इन्द्रियसंहतेर्वैफल्यं स्यादिति। एतदप्युक्तम्–शब्दाद् व्यक्तिरूपप्रतिपत्तौ तात्स्थेवत्संहतेः (तौ न ताव-दक्षसंहतेः) साफल्यम् , वैफल्यं भवेदिति; तत्राह–**प्रतिपादकैरि**ति। परांत्वमव (**परं** तत्त्वमव)-बोधयद्भिः। एतदुक्तं भवति–सर्वज्ञवचनाच्चेत् जनः तत्त्वमवैति स्वरूपेण; कथं न उक्तदोषद्वयम्? नो चेत्; किं सर्वज्ञपरिकल्पनेन? यतः इदं सुभाषितम्–*"ज्ञानवान् मृग्यते" [प्र०वा० १। ३२][1] इत्यादि। विकल्पाकारमिति चेत्; कथं तदप्रतिबद्धजन्मनः? अथ 'सर्वज्ञे[2]षु विकल्पोऽ- ५
स्ति न युक्तमेतत्; उक्तोत्तरत्वात्। तथाहि–स्वलक्षणगोचरश्चेत् तेषु विकल्पः; न पूर्वदोष-परिहारः, परत्रापि तदनिवारणा[त्] नापि प्रमाणसंख्याव्यवस्था[3]। अवस्तुसामान्यगोच[र]-श्चेत्; अस्तु, तेषु भ्रान्तता[4]। तत्र (तन्न) किञ्चिदेतत्। मानादि (तन्वनादि) सर्वज्ञैः सह इति चेत्; अत्राह–**स्याद्** इत्यादि।

ननु वेद्यवेदकवचनानामभावात् कथं कस्यचित् कस्यचित् शास्त्र (स्त्रं) स्वतः प्रमाण- १०
मिति चेत्; अत्राह–**कोऽत्र (न्य)** इत्यादि। [५०९ ख] मिद्धोदिनः शिका (**शुद्धोदनेःशिष्य-कात्**) दिग्नादेः (दिग्नागादेः) **कोऽन्यो** विपश्चित् **संस (शंस)** त्युच्चारयति, किन्तु स एव। किम्? इत्याह–**वचः**। किंभूतम्? इत्याह–**वेद्यं** च घटादि **वेदकं** च ज्ञानं **वच**श्च घटा-द्यभिधानम् तानि **शून्यानि** निःस्वभाविति (निःस्वभावानि) यस्मिंस्तत्तथोक्तम्। अनेन परस्य स्ववचनविरोधं दर्शयति। तथाहि–किञ्चिदपि चेन्नास्ति; **[कथम्]** केने (केन) तत्प्रतिपादकं १५
वचनम्? अस्ति चेत्[5]; कथं 'न किञ्चिदस्ति' इति? स्वप्नादिवत् स्यादिति चेत्; कथं त[त्]? भ्रान्त्या इति चेत्; उक्तमत्र विभ्रमैकान्ते तदसिद्धेरिति[6]। सर्वविकल्पातीततयेति चेत्; अत्रा-प्युक्तम्। किंभूतात्? इत्याह–**जडधियः** इदन्तया[निदन्तया]वा तत्त्ववेदन[वि]मुखधियः। आनापि (अनेनापि) स्वसंवेदनाध्यक्षविरोधम्[7]। तथा शून्यता चेत्, स्वसंवेदनाच्च ध्यात (ज्ञाने) सर्वविकल्पातीतता, सा चेतसा (चेतसा) तद्वेत्ति[8]। कुत एतत्? इत्यत्राह–**तत्त्व (त्त्वं)** जीवा- २०
[दि]वस्तु, **वस्तुबलेनागतं यतः**।

इति र वि भ द्र पादपङ्कज च (भ्रम) रा न न्त वी र्ये विरचितायां
सि द्धि वि नि श्च य टीकायां शास्त्रसिद्धिः सप्तमः प्रस्तावः।

---

(१) 'कश्चित्तदुक्तप्रतिपत्तये...' इत्युत्तरांशः। (२) सर्वज्ञेषु। (३) प्रमेयद्वैविध्याद्धि प्रमाणद्वित्वसंख्या व्यवस्थाप्यते। (४) स्यादित्यर्थः। (५) 'अस्ति' इति कथ्यते। (६) किञ्चिदस्तीति यदि उच्यते। (७) विभ्रमस्याप्यसिद्धेः। (८) दर्शयति।

# [अष्टमः प्रस्तावः]

## [८ सर्वज्ञसिद्धिः]

ननु '**सर्वज्ञः**' इत्यवाच्यम् ;[1]तदभावात् प्रमाणाभावेन इति चेत् ; अत्राह–**सिद्धोऽर्थ** इत्यादि ।

**[ सिद्धोऽर्थः सकलः त्रिकालविषयोऽनेकान्ततत्त्वात्मकः,**
**बुद्ध्यात्मा परमार्थतः स्वविषये वैशद्यमासादयन् ।**
**आवरणातिशयः प्रहीणतिमिराक्षेन्द्रपलम्भादिवत् ,**
५ **हेतुः कर्मविमोक्षणाय न पुनर्द्रव्यस्य लोके श्रुतः ॥१॥]**

**[अर्थः]** स्वपरप्रकाशको भावः, **बुद्धिः** सैव **आत्मा** जीवः न पुनः बुद्धेरन्यः[2] तत्प्रतिभासविरहात् । **सिद्धो** निश्चितो यथोक्तन्यायात् । यदि पुनः[3]ततोऽन्यः स्यात् कुम्भकारस्यापि[4]तया सम्बन्धाभावान्नाभावात्(न्धाभावात्) न घटादिकम् उपलब्धिमत्कारण[मि]ति कुतः तद्ब-लात्[5] कस्यचित् चेतनावतः तनुभुवनादिकर्तृत्वम् , यतः तस्य[6] सकलहेतुफलग्रामपरिज्ञानं
१० सिध्येत । अथ तत्कार्यत्वाद्[४१०क]बुद्धिः तस्य[7] इत्युच्यते ; घटादेरपि उच्यताम् , प्रमेय-कार्यत्वेनापि तदभ्युपगमात् । आलम्बनप्रत्ययत्वान्नेति[8] चेत् ; आत्मनः(आत्ममनः) संयोगस्य स्यात् । असमवायिकारणत्वान्नेति चेत् ; कस्य तर्हि ? समवायिकारणस्य इति चेत् ; न ; हेतुफलयोः भेदैकान्तेन समवायीतरकारणविधिकस्य (तरकारणविभागस्य) कर्तुमशक्यत्वात् ।

अथ यत्र समवेतं चेति (भवति[9]) कार्यं तत् समवायिकारणम् ; 'समवेतम्' इति कोऽर्थः ?
१५ समवायेन वृत्तम् ; कोऽयं समवायो नाम ? अयुतसिद्धयोराधाराधेयभूतयोः यः सम्बन्ध इहेति-प्रत्ययहेतुः[स] समवाय[10] इति चेत् ; न ; हेतुफलविशेषयोरेव[त[11]]त्प्रत्ययहेतुतोपपत्तेः । ननु हेतौ हेतुरिति बुद्धिः, फले फलमपि न सिति न हेतौ (फलमिति, न इहेति इ)ति चेत् ; तर्हि समवायेऽपि इहेतिबुद्धिः स्यात्[12] न पुनः इदं सामान्यम् इदं सामान्यम् इत्यनुगतबुद्धिः, समवायस्यात्र प्रत्ययहेतुत्वं न पुनः प्रकृतहेतुफलयोः हेतुरिति किंकृ[त]मेतत् ।

२० किंच, समवाय[ः]समवायिभिरसम्बद्ध्यमान एव योगिनोऽन्यस्य वा यदि 'अयं समवाय इति तन्तुषु पटः' इति च बुद्धिमुत्पादयति स्वमाहात्म्यात् न आकाशादिः ; तर्हि पटोऽपि तन्तु-भिरनभिसम्बद्ध्यमान एव 'अयं पटः' इति[स] च इहेति बुद्धिमुत्पादयेत्[13] तत एव । अयमेव त्वान्यः पक्षः (?) वृत्तेदं (वृक्षे) शाखा इत्यपि प्रतीतेः, तत्न(तत्र) द्वयोरपि (भि) सम्बन्धः । ततो यथा शाखा-

(१) सर्वज्ञाभावात् । (२) भिन्नः । (३) बुद्धेर्भिन्नः । (४) बुद्ध्या । (५) घटदृष्टान्तात् । (६) तनुकरणभुवनादिकर्तुः । (७) ईश्वरस्य । (८) न घटस्य । (९) उत्पद्यते । (१०) "अयुतसिद्धानामाधार्या-धारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः ।" –प्रश० भा० पृ० ५। (११) इहेतिप्रत्यय । (१२) अत्र पाठस्त्रुटितः इति । (१३) स्वमाहात्म्यादेव ।

यां वृक्ष इति ततो भवति बुद्धिः तदा तत्र[1] शाखा इत्यपि इति चेत् ; न ; शाखाया [2]वृक्षारभ्यु(रभ्य)त्वप्रसङ्गा[त् । अ]थ यत् पूर्वं तदारं(तद् आरम्भकम् ;)शाखाश्च पूर्वा इति ; तन्न सारम् ;[४१० ख]पूर्वा(पूर्वं)तामामदर्शनात् पटात् पूर्वं तन्तुवत् । अनुमीयन्त इति चेत् ; शाखाभ्यः पूर्वं वृक्षोऽस्तीत्यनुमीयताम् । सूक्ष्म(क्ष्मात्)स्थूलवत [3]स्थूलादपि सूक्ष्मस्य कपालादेर्दर्शनात् । अथ दृश्यस्य सतोऽदर्शनम् पूर्वबाधकम् ; एतदन्यत्रापि समानमिति न किञ्चिदेतत् । ५ न च कुण्डबदरसम्बद्ध्यमान एव कश्चिद् 'इह कुण्डे बदराणि' इति प्रत्ययहेतुः प्रतिपन्नः, यतोऽन्यत्र[4] तथा कल्पना स्यात् । तत्सम्बन्धः समवाय इति चेत् ; 'इह समवायिषु समवायो वर्त्तते' इति बुद्धिर्यदि अन्यसमवायनिबन्धना ; अनवस्था । नो चेत् ;अनयैव व्यभिचारस्तत्साधनस्य।

स्यान्मतम्–विशेषणीभाव:(व)सम्बन्धनिबन्धना तद्बुद्धिरिति ; तन्न सारम् ; समवायवत् [5]जात्यादयोऽपि द्रव्यादीनां विशेषणम् इति सर्वत्र तद्बिन्धत्व(तन्निबन्धनत्व)प्रसङ्गात् । १० विशेषणीभावेऽपि समवायवत्[6] प्रसङ्गः चिन्त्यः । तन्न समवायो नाम ।

अथ बुद्धिरूपतयात्मनः परिणाम[णाभात् अ[7]]स्यात्तत्र[8] समवायः ; तर्हि सिद्धमिदम् '**बुद्धिः आत्मा**' इति । ननु सौगतमतं स्यादिति चेत् ; अत्राह–**अनेकान्ते त**(न्तेत्यादि) तत्त्वतः सिद्धः तदात्मा इत्य**नेकान्तः तत्त्वं** स्वरूपं यस्येति । एकस्याऽनेकधर्मात्मकत्वस्य कल्पितत्वाद् अनर्थः स भवेत् इति चेत् ; अत्राह–**अर्थः** सिद्धो निरूपितनीत्या नियतविषय[:] १५ सिद्धः । ततो न विवादपरिसमाप्तिः इति चेत् ; अत्राह–**त्रिकालविषय** इति । त्रिषु कालेषु व्यवस्थिताः पदार्था अपि त्रिकालशब्देन उच्यन्ते, **त्रयः काल (ला) विषयो** यस्य इति । [9]तदभावे [४११ क] सकलव्याप्तेरसिद्धेर्न किञ्चिदनुमानं भवेत् । चोदना वा कस्मै[त्रि]कालविषयमर्थं निवेदयेत् ? यतः *"**चोदना हि**" [शाबरभा० १।१।२] [10]इत्यादि सुभाषितं भवेत् ।

सर्वज्ञरहितं सर्वं चिन्तयंश्चारुचक्षुषा । २०
स चार्वाकश्चिरं चित्रवधं नीतोऽनया दिसा(शा) ॥

कश्चिदेव तथा स्यादिति वैशेषिकः ; तत्राह–**सकलो** निरवशेषः, नहि कश्चिदेवात्मा चेतनः । साकल्येन व्याप्ति[:]ज्ञं या । तथा चेत् ; इतरो तरो [11](इतरोऽपि), नानुमानो(नं) वा स्यात् । न चानुमानमन्तरेण अजातोऽपि(चार्वाकोऽपि)जीवतीति निरूपितम् ।

यदि मतम्–षट्प्रमाणकः तद्विषयः[12] इति सिद्धसाधनम् ; तदुक्तम्– २५

(१) वृक्षे । तुलना–"पटस्तन्तुष्वित्यादिशब्दाश्चेमे स्वयं कृताः । शृङ्गं गवीति लोके स्यात् शृङ्गे गौरित्यलौकिकम् ॥"–प्र० वा० १।३५० । "वृक्षे शाखाः शिलाश्चाग इत्येषा लौकिका मतिः ।···ताः पुनस्तास्विति ज्ञानं लोकातिक्रान्तमुच्यते ॥"–तत्त्वसं० पृ० २६७। लघी० स्ववृ०पृ० १४।(२) वृक्षोत्पाद्यत्व । (३) घटात् । (४) इह तन्तुषु पटः इत्यत्र । (५) सामान्यादयः । (६) विशेषणीभावोऽपि स्वसम्बन्धिभ्यां सम्बद्धः असम्बद्धो वा इत्यादि । (७) बुद्धेः । (८) आत्मनि । (९) त्रिकालविषयकजीवाभावे । (१०) "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थमवगमयितुमलं नान्यत्किञ्चनेन्द्रियादिकम्"–शाबरभा० । (११) सर्वज्ञोऽपि सिद्धः स्यात् । (१२) त्रिकालविषयः ।

*"यदि षड्भिः प्रमाणैः स्यात् सर्वज्ञः केन वार्यते ।"

[मी० श्लो० चोद० श्लो० ११०] इति[1];

तत्राह–**स्वविषय** इत्यादि । स्वस्मि[न्] त्रिकालरूपे **विषयो(ये) वैशद्यमासाद्य-**

न्न व(**सादयन्**, तत्र च) '**सकलः**' इति न सम्बद्ध्यते उत्तरग्रन्थविरोधात् । **स्वग्रहणेन**

५ नियतसर्वज्ञत्वनिषेधः । नहि सर्वस्वगोचरं निरावरणं ज्ञान(नं) नियतप्रकाशकं युक्तम् भानुमण्डल-

वत् । तदुक्तम्–

* "ज्ञो ज्ञेये कथमज्ञः स्यादिति (स्यादसति )प्रतिबन्धरि ।

दाह्येऽ(ह्येऽ)ग्निः दाहको न स्याद[स]ति प्रतिबन्धरि ॥"

[योगबि० श्लो० ४२१ ] इति[2] ।

१०   यत्पुनरत्रोक्तं प्रज्ञाकरेण–*"**सकलविषयत्वे सति आत्मनो निरावरणत्वे तत्र वैशद्य-**

**(द्यं) सिध्यति तत्सिद्धौ च तद्विषयत्वं सिध्यति इत्यन्योऽन(न्य)समाश्रयः ।**" इति ; तत्

'**त्रिकालविषयः**' इत्यनेन निरस्तम् । न तस्यानुमानमन्तरेण प्रतिभासाद्वैतेऽपि जीवितमस्ति

इत्युक्तम् । तच्च व्याप्तिग्रहणमन्तरेण नेत्यपि[3] । विषयग्रहणेन कामशोकभयादिवद्[4] वैशद्यमिति

निषिद्धम् । नहि तद्विषये वैशद्यम् [४११स्य] ।

१५   ननु त्रिकालविषयं मनोज्ञानम् अन्यस्य तददृष्टेः । तेन किमिव तत्र विशदं यथार्थं वा

स्यात्, दृष्टान्तयुक्त्या(क्त्य)भावे तदसिद्धेः । तदुक्तम्–

*"मृष्यमाणो यथाङ्गारः शुक्लतान्नेति जातुचित् ।

मनोज्ञानं तथाभ्यासात् नैव याति सदर्थताम् ॥" इति ;

तत्राह–**प्रहीण** इत्यादि । **प्रहीणं तिमिरम्,** उपलक्षणमेतत् रजोनीहारादेः, यस्य

२० तत्तथोक्तम् **अक्षम्** इन्द्रियं यस्य तस्येन्द्रुपलम्भ(तस्य **इन्दुपलम्भ**) आदिर्यस्य वृक्षोपलम्भादेः

सोऽपि तथोक्तः स इव **तद्वदिति** । एवं मन्यते–यथा चन्द्रादिज्ञानं स्वविषये अविशदमयथार्थं

वा आवरणवशात् न स्वतः तथा मनोविज्ञानम्, यथा च तद् आवरणापाये विशदं तत्र यथार्थं

च तथा मनोज्ञानमपीति । एवं हि भवदीयं भवेद् यदि तद् अविशदायथार्थग्रहणस्वभावं नित्यं

वा स्यात्, तच्चायुक्तम् '**अनेकान्ततत्त्व**' इति वचनात्, सत्यं स्वप्नावावसत्या(सत्यस्वप्ना-

२५ दिवत् सत्य)विशदयथार्थग्रहणदर्शनाच्च । तथापि तत्स्वभावं तद् इति चे(चेत् हि)चन्द्रादि-

ज्ञानमपि तत्स्वभावम् इति न परतोऽप्रामाण्यम् । यथा चात्र तिमिरादि तत्कारणमुपलभ्यते तथा

मनोज्ञानमनुमीयते । न च मीमांसकस्य अनुमान[म]प्रमाणं वेदनित्यताऽसिद्धिप्रसङ्गात् ।

(१) मीमांसकः । "एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते । नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥"–मी० श्लो० चोदनासू० श्लो० १११ । (२) उद्धृतमिदम्–जयध० प्र० भा० पृ० ६६ । अष्टस० पृ० ५० । 'असति प्रतिबन्धके···न स्यात्कथमप्रतिबन्धकः'–योगबि० । (३) अनुमानम् । (४) उक्तम् । (५) काल्पनिकं भावनात्मकम् । (६) कामादिभावनाविषये । (७) मनोज्ञानम् । (८) "घृष्यमाणो हि नाङ्गारः शुक्लमेति जातुचित् । निजः स्वभावसम्पर्कः केनचिन्न निवार्यते ॥"–प्र० वार्तिकाल० २।२३४ । (९) दोषात् ।

ननु[द्वि]चन्द्रादिज्ञानं यदि तत्स्वभावं कदाचनापि न ततो विशदस्य यथावस्थितस्य वाऽर्थस्य प्रतीतिः स्यादिति चेतिदितितत्र(चेन ; तदितरत्र)समानम् । अथ सत्यस्वप्ने तस्य अन्यतः सत्यार्थता वैशद्यं च, तत एव चन्द्रादिज्ञाने ज्ञानेऽपि इति स्वतोऽप्रामाण्यं परतः [४१२क] प्रामाण्यमिति प्रसक्तम् । अन्यस्यादर्शनमुभयत्र समानम् ।

ननु तदुपलम्भवत तस्य स्वविषये वैशद्यासादनेको(वैशद्याभावादनेकान्तो)हेतुः इति चेत ; ५ अत्राह–**[अ]तिशयो हेतुः** इति । **अतिशय** उत्कर्षः । कस्य इति चेत ? उच्यते– **[आवरणस्य] 'प्रहीणतिमिराक्षेन्दूपलम्भादिवत स्वविषये वैशद्यमासादय-न्तीति(यन्'** इति) वदता 'प्रहीणावरणतिमिर' इत्युक्तं भवति । तस्माद् **आवरणातिशयो हेतुर्लिङ्गम** । तथा च प्रयोगः–आवरणप्रहाणं पुरुषेषु कचित परमकाष्ठानिष्ठम अतिशयत्वात तिमिरादिप्रहाणवत । १०

ननु तत्प्रहाणवत दृष्टिप्राहमस्य(प्रहाणमस्य)तिशयवद् उपलभ्यते ततोऽस्या अपि तद्वद्-भावः स्यात , न चैवमिष्यते, ततो व्यभिचार इति चेत ; अत्राह–**कर्म** इत्यादि । **कर्मणां नि(वि)मोक्षणम** आत्मनः सकाशाद् अपसारणं तस्मै तदर्थो हेतुः न पुनः तदत्यन्ताभावार्थः। कुतः ? इत्याह–**न पुनः** नैव **द्रव्यस्य** जीवस्य पुद्गलस्य अन्यस्य वा क्षयः अत्यन्ताभावोपल-(भावो ल)क्ष्यते यतः सतोऽत्यन्तविनाशाभावात इति प्रतिपादितमिति न पुनरुच्यते । ततो न १५ यथात्मनःर्मणां तथा तस्यप्यनात्मना(ततो यथा आत्मनः कर्मणां तथा तस्या अपि न आत्मनः) विमोक्षणसंभवान्न व्यभिचार इति भावः । यदि वा ज्ञानस्य थैसत्यस्य(वैशद्यस्य)वा अतिशयो गृह्यते ।

नन्वेवं **स्वविषये सद्य(वैशद्य)मासादयन् सिद्धो**ऽपि किं सुगतोऽन्यो वेति विशेष-रूपतया न सिद्धः तत्प्रतिबद्धहेत्वभावादिति चेत ; अत्राह–**श्रुत** इत्यादि । **श्रुतेः(श्रुतः)**श्रवण- २० विषयतामुपनीतो **लोके** अनन्तरप्रस्तावे नाः(वा)स्याद्वादः स्यात्कारलाञ्छनो वाक्यराशिः प्रशस्तो वा कर्मफलसम्बन्धादिविशेषः **ततः**[४१२ख]सिद्धिः (सिद्धः) 'तद्विशेषः' इत्यध्याहारः, वचनविशेषाद् वक्तु(क्तृ)विशेषसिद्धे[र]प्रतिषेधात ।

ननु सुगतेनापि कल्पितः स्याद्वाद उक्त इति सोऽपि नैतस्तत्र वैशद्यमासादयन् सिद्धः स्यादिति चेत ; अत्राह–**परमार्थतः** । २५

स्यान्मतम्–ज्ञानस्य वैशद्यम् अक्षव्यापारात ; अक्षाणां च सन्निहिते वर्त्तमाने व्यापारः, तत्कथं सं तत्र वैशद्यमासादयन् सिद्धोऽपि सर्वज्ञः स्यात । उक्तं च–

> *"सन्निहितं वर्त्तमानं च गृह्यते चक्षुरादिना ।
> न तत्स[मु]द्भवं ज्ञानं जायतेऽतीतभाविनि ॥" इति ।

चेत ; अत्राह–**धीः** इत्यादि । ३०

(१) 'ज्ञाने' इति दुर्लिखितम् । (२) आवरणप्रहाणवत् । (३) दृष्टिज्ञानम् । (४) दृष्टेरपि । (५) आवरणवत् । (६) आकाशादेः । (७) दृष्टेः । (८) तदविनाभावि । (९) श्रुतात् कल्पितात् । (१०) बुद्ध्यात्मा । (११) "सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना"–मी० श्लो० सू० ४ श्लो० ८४।

**[ [1]धीरत्यन्तपरोक्षेऽर्थे न चेत्पुंसां कुतः पुनः ।**
**[2]ज्योतिर्ज्ञानाविसंवादः श्रुताच्चेत् साधनान्तरम् ॥२॥**

**परोक्षज्ञानमिष्यत एव कथमनागतार्थविशेषेषु ज्योतिर्ज्ञानाविसंवादः तत्स्वभाव-कार्ययोः प्रागग्रहणात्, श्रुतेश्च तत्र प्रामाण्यानभ्युपगमात् विध्यादिविषये नियमात्, ५ प्रमाणान्तराभावात् । यदि पुनः त्रिकालविषया श्रुतिरिष्यते, प्राप्तं परोक्षाणां पुरुष-ज्ञानमिति ।]**

मानन्तगोक्ता (**धीः** अनन्तगोक्ता) बुद्ध्यात्मा वैशद्यमासादयन्त (यत् **न**) **चेत्** न विद्यते यदि । **क्वा**(क ? अ)**त्यन्तपरोक्षेऽर्थे** धर्मादि (धर्मादौ) । 'स्वतः' इति द्रष्टव्यं लिङ्गादिव्य-पोहार्थम् । **कुतः** प्रमाणान्न कुतश्चित् । **पुनः** इत्यत्र वीप्सार्थो द्रष्टव्यः—पुनः पुनः अनाद्यनन्त-१० काले, **ज्योतिर्ज्ञानाविसंवादः ज्योतीषि(ज्योतींषि)** ग्रहनक्षत्रादीनि तेषां **ज्ञानं** ग्रहणा-पराग(णोपराग)प्रचलनादितत्फलतत्कारणाभावधर्मादिप्राणिक्षेत्रादिपरिच्छेदः तस्या**विसंवादः** तदभावे तदन्यकारणाभावात् । केषाम् ? इत्याह—**पुंसाम्** पृथगतान्यम् (पृथगात्मनाम्) अस्ति च तदविसंवादः ततोऽस्ति तत्र धीरिति । यस्तु क्वचिद् विसंवादः समास्त्रार्थ(सः शास्त्रार्थ)-सम्बन्धापरिज्ञानात् लिङ्गलिङ्गिसम्बन्धाऽज्ञानाद् अनुमेयज्ञानविसंवादवत् । तत्सवम्ब(तत्सम्ब-१५ न्ध)परिज्ञाने तदविसंवाददर्शनात् । अपौरुषेयं शास्त्रमस्ति ततः तदविसंवाद इति चेत् ; अत्राह—**[श्रुतात्]** शास्त्रात् **चेत्** तदविसंवादः **साधनान्तरम्** अतिशयरूपात् सर्वज्ञस्यरा(सा)धना-दिदं शास्त्ररूपम् अपरं साधनम् । [अ]विसंवादाद्वा तमन्तरेण [४१३क] तदभावात् ।

कारिकां विवृण्वन्नाह—**परोक्षज्ञानमि**त्यादि । ननु परोक्षस्य अस्मदाद्यपेक्षया देशादिव्य-वहितस्य धर्मादेर्ज्ञानं केन अनुमानमवेष्यते, येनैवमो(वं चो)द्यते ? न सौगतादिना सर्वज्ञ-२० वादिता(ना) ; प्रत्यक्षस्यापि तज्ज्ञानस्य तेनाभ्युपगमात् । नापि मीमांसकेन ; आगमस्यापि तेनाभ्युपगमात् । न च लौकायतिकेन ; तज्ञा(तज्ज्ञा)नस्यानुमानस्य अन्यस्य वा प्रमाणत्वेन तेनानभ्युपगमादिति चेत् ; 'सौगतेन' इति ब्रूमः । तथाहि—यस्माद् उत्पन्नं यदाकारानुकारं (रि च) तस्यैव ग्राहक(कं) ज्ञानं सुगतस्यापीति तदाकाराभायकः परोक्ष[ः] । स च तदाकारज्ञानव्य-तिरेकानु (कात्) यथा अस्मदादिभिरनुमीयते तथा सुगतेनापीयितरथा (पि, इतरथा) प्रत्यक्षेण २५ अनुमानेन वा[त]दर्थस्य तेनाऽपरिच्छेदात् पृथग्जनादप्यसौ पापीयान् । यदिवा, चा[र्वा]केणेति शिष्मः । तेनस्र(तेनापि अ)सर्वज्ञागमजादिना(वादिना[10]) व्यवहारमिच्छता परचैतन्यादाविव नष्टादावप्यनुमानमभ्युपगन्तव्यम्, अन्यथा न संपूर्णव्यवहारसिद्धिः ।

(१) उद्धृतोऽयम्—"···श्रुताच्चेत्···" प्र० मी० पृ० १२। (२) तुलना—"ग्रहादिगतयः सर्वाः सुखदुःखादिहेतवः । येन साक्षात्कृताः तेन किन्न साक्षात्कृतं जगत्॥"—न्यायवि० ३।४१४। चन्द्रसूर्योपरागादेः ततः संवाददर्शनात् । अप्रत्यक्षेऽपि पापादौ न प्रामाण्यं न युज्यते ॥—शास्त्रवा० २।३। (३) असर्वज्ञानाम् इत्यर्थः । (४) अत्यन्तपरोक्षेऽर्थे । (५) सर्वज्ञसिद्धिमन्तरेण । (६) शास्त्रेऽविसंवादाभावात् । (७) परोक्ष-ज्ञानस्य । (८) इति नियमात् । (९) तदाकारज्ञानान्यथानुपपत्तेरित्यर्थः । (१०) सर्वज्ञागमनिरा-करणवादिना ।

भवतु तत्तदेवेति चेत् ; अत्राह–**कथमनागत** इत्यादि । **अनागतार्थविशेषेषु ग्रहणादिषु** भाविषु **ज्योतिर्ज्ञान(नाऽ)विसंवादः कथं**[न कथं]चित । कुतः ? इत्यत्राह–**तद्** इत्यादि, **तेषाम्** अनागतार्थविशेषाणां ये **स्वभावकार्ये** तयोः **प्रा[गग्रहणात्]** ग्रहणादेः पूर्वनिर्णयासंभवात् । एवं मन्यते–सुगतेन सह तत्स्वभावस्य निर्णये तेषामनागतार्थातां(तार्थता) कुतः ? तद्रूपज्ञानस्य प्रश्नादेर्वा तत्कार्यस्यापि निर्णये स एव दोषः । 'नहि भावि कारणम्' इति निरूपितम् । ५ यदि वा, अनुमानप्रवृत्तिः(त्तेः) [४१३ख] प्राज्ञात(प्राग् व्याप्ति)निर्णयासंभवात् एकद्विप्रमाणनियमवादिनाम् इति द्रष्टव्यम् । तर्हि परोक्षज्ञानम् आगमोऽप्यस्ति ततोऽयमदोष इति; तत्राह–**श्रुतेश्च** इत्यादि । श्रुतिजनितं परोक्षार्थज्ञानं **श्रुतिः** तस्याश्च तत्र अनागतग्रहादौ **प्रामाण्यानभ्युपगमात्** सौगतादिभिः । इदमत्र तात्पर्यम्–यदा अनागतविषयं प्रत्यक्षमनुमानञ्चा(नं वा) सुगतस्य अन्यस्य वा न विद्यते, तदा अपौरुषेयी श्रुतिः तत्र प्रमाणमितव्या । न च तत्प्रमाणमिति १० मीमांसकैः तत्प्रामाण्यमिष्यत इति चेत; अत्राह–**विध्यादी**त्यादि । **विधिः आदि**र्यस्य नियोगभावनादेः स एव **विषयः** तत्र **नियमात्**; श्रुतेस्तत्रैव प्रामाण्याभ्युपगमात् मीमांसकैरपि इति । अन्यदेव तत्र प्रमाणमिति चेत् ; अत्राह– **प्रमाण** इत्यादि । निरूपितात् प्रमाणादन्यस्य [**प्रमाणान्तरस्य**]तत्राऽ**भावात्** इत्यर्थः । अथ अविशेषेण **त्रिकालविषया श्रुतिः इष्यते**; तदाह–**यदि पुनः** इत्यादि । तत्रोत्तरमाह–**प्राप्तम्** इत्यादि । १५

अथ वेदः स्वयमेव परोक्षमर्थं प्रतिपादयति इति किं तत्र ज्ञानेन इति चेत ? अत्राह–**त्रिकालविषयम्** इत्यादि ।

**[ त्रिकालविषयं तत्त्वं कस्मै वेदो निवेदयेत् ?**
**अक्षय्यावरणैकान्तान्न चेद्वेत्ति तथा नरः ॥३॥**

**पुरुषाः कुतश्चनापि तदविद्यावरणविच्छेदानिष्टेः न बोद्धुमर्हन्ति, तत्प्रकर्षानिवारणात् । वेदो न कस्यचित् स्वतः प्रमाणम्, तदविनिश्चयात् । ]** २०

**कस्मै** न कस्मैचित् **वेदो निष्पादयेत्(निवेदयेत् )तत्त्वम्** । किन्तु(किं तत् ?) **त्रिकालविषयम्** अचेतनत्वात् इत्यभिप्रायः । चक्षुरादिवत् स्वयोग्यं(ग्ये) तत्र ज्ञानं जनयेत् सर्वस्य न वा कस्यचित् तत्र सङ्केतानर्थक्यम् । किमपिमेवेण(किमविशेषेण) न निवेदयेत् ? इत्याह–**अक्षय्यावरणे(णै)कान्तात्** कारणात् **न चेद्** यदि **वेत्ति** त्रिकालविषयं तत्त्वं २५ **तथा** विशदप्रकारेण **नरः** तथा [४१४क] तद्वेदने निवेदयेत् सङ्केतकारिणो विशिष्टस्य नरस्य अभावादिति ।

वेदार्थस्य साक्षात् कश्चित् ज्ञाताऽस्तु न तु सर्व इति चेत ; अत्राह–**पुरुषा** इत्यादि । तद्विषयदोषावरणविच्छेदाद् बोद्धुमर्हन्तीति निवेद[य]न्नाह–**कुतश्चनापि** इत्यादि । न केवलं

(१) एकप्रमाणवादिनः चार्वाकस्य, द्विप्रमाणवादिनः बौद्धस्य च । (२) वेद । (३) अनागते । (४) प्रमाणं स्वीकृतम् । (५) अनागतादौ । (६) उद्धृतोऽयम्–प्र० मी० पृ० १२। (७) त्रिकालविषय ।

स्वत एव **अपि तु कुतश्चन** कारणात् सम्यग्दर्शनादेः तच्च (तच्च) रागादि **अविद्यावरणं** च तयोर्विच्छेदस्य नाशस्य **अनिष्टेः न वोढुमर्हन्तीति** ।

ननु साकल्येन तदावरणविच्छेदो नास्ति पुरुषाणाम् अनाकमनोविभ्रमे (?) इति चेत् ; अत्राह–तदित्यादि । **तस्य** तद्विच्छेदस्य **प्रकर्षस्य** अतिशयस्य सर्वज्ञा[ज्ञ]सिद्धेरनिवारणात्
५ **'प्राप्तं परोक्षाणां पुरुषज्ञानम्'** इति । चर्चितमेतदनन्तरम् ।

ननु सत्यम् , पुरुषा न वेदार्थं वोढुमर्हन्ति, वेदः पुनरपौरुषेय[:]**स्वतः** स्वार्थं प्रतिपा- (पा)दयति । तदाह–**वेद** इत्यादिना । परः पृच्छति कस्य **प्रमाणम्** इति वेद इति । तं प्रत्याह– **न कस्यचित्** मुकथयेत (स कथयेत) । कुतः ? इत्यत्राह–**तदित्यादि** । वेदार्थतत्त्वाऽविनि- **श्चयात्** पुरुषत्वेन रथ्यापुरुषवत् स्वयं तर्हि निश्चयाभावात् , वेदस्य वाऽचेतनत्वेन तत्र विनि-
१० श्चयानुत्पादनात् इति भावः ।

किंच, सर्वं वचनं[अन्यथा , अ]र्थप्रतिपादनं च पुरुषापेक्षम् आत्मनि द्वय (द्वयं) दृष्टमपि यदि वैदिकं वचनमन्यथा संभाव्येत, तर्हि पुरुषेषु अर्थज्ञानं विशदं अक्षा[द्] दृष्टमपि तदभावेऽपि स्यात् ।

ननु वेदे कर्तु[र]स्मरणं साधनमस्ति नेह तदिति चेत् ; न ; अत्रापि ज्ञानातिशयोऽस्ति
१५ इति दर्शयन्नाह–**जीवानाम्** इत्यादि ।

**[जीवानामसहायाक्षादाशास्त्रार्थविदः क्रमात् ।**
**विज्ञानातिशये विद्वान्न वै विप्रतिपद्यते ॥४॥**

स्थावरादेः शास्त्रार्थतत्त्वज्ञपर्यन्तस्य जीवराशेः उत्तरोत्तरबुद्धिप्रकर्षं प्रति न कश्चिद् विप्रतिपत्तुमर्हति अन्यत्र विप्रकृष्टसंशीतिवादिनः शौद्धोदनिशिष्यकात् । शास्त्रा-
२० र्थविदां च तदर्थज्ञानप्रकर्षः स्वभावपाटवाभ्यासतारतम्यात् सर्वथाऽस्त्येव । कथम् ? उपनिबन्ध···तथैव कस्यचित् शास्त्रार्थनिरपेक्षं परोक्षज्ञानपाटवं यदि स्यात् किं विरुध्येत ? यतोऽसंभवत्प्रकर्षेषु स्वत एव वेदः प्रमाणं न स्यात् । यथा वचनत्वाविशेषेऽपि वेदः स्वत एव स्वार्थं प्रतिपादयति तथा पुरुषत्वाविशेषेऽपि कश्चिदेव अक्षनिरपेक्षः परोक्षार्थं विषयी- करोति । लोके कीदृशं प्रमाणं सर्वज्ञस्याभावसाधकम्, प्रत्यक्षादेः अभावविषयत्वविरोधाद-
२५ भावप्रमाणवैफल्यापत्तेरनभ्युपगमाच्च । तदभावे शास्त्रं युक्त्यबाधितमस्ति ।

'नास्ति सर्वज्ञः अनुपलब्धेः खपुष्पवत्' इत्यत्रोच्यते–यदि साधकप्रमाणनिवृत्तिः आत्मा वा तद्रहितोऽनुपलब्धिः ; यथास्वं नैरात्म्यं प्रसज्येत । न ह्यसर्वदर्शी तथैव सर्वात्मविशेषान् साक्षात्कर्तुमर्हति । तत एव प्रत्यात्मविशेषाणामनुमातुमशक्यं लिङ्गा-

(१) आवरणविच्छेदस्य । (२) अर्थानाम् । (३) 'नास्ति कश्चित् वेदार्थतत्त्वज्ञः पुरुषत्वात् रथ्यापुरुषवत्' इत्यनुमानेन । (४) एतद्द्वयम् । (५) अपौरुषेयम् नित्यं च । (६) इन्द्रियात् । (७) इन्द्रियाभावेऽपि । (८) अपौरुषेयत्वसाधकम् । (९) उद्धृतोऽयम् –···विज्ञानातिशये··· न्यायवि० वि० द्वि० पृ० २५२।

भावात् । तदविशेषेण अनेकान्तात्मकवस्तुतत्त्वसाधनात् । कुतश्चित्तत्प्रतिपत्तौ अप्रतिपन्नविशेषाविनाभाविनः प्रतिपन्नस्वभावस्यापि तथैवानात्मकत्वप्रसङ्गात् । ततो न कस्यचिदुपलब्धिरिति सर्वाभावः । श्रुतस्याप्येवं प्रसङ्गात् । न हि···विशिष्टविषयत्वात् पुरुषार्थसिद्धेः । अन्यथाऽनवधेयत्वमेव शास्त्रस्य । तदियं प्रतिपत्तृप्रमाणनिवृत्तिः सर्वसम्बन्धिनी प्रतिपत्तुमशक्येति न केवलं सर्वज्ञाभावं साधयति अपि तु सर्ववस्तुव्यतिरेकं च । भावे तर्हि किं प्रमाणम् ? शास्त्रं ब्रूमः । तत्सद्भावप्रतिपादनात् चतुर्दशगुणस्थानोपवर्णनाच्च । कथमस्य प्रामाण्यम् ? चोदनायास्तर्हि कथम् ? नित्यत्वात् , तस्यास्तत् ; तत एव प्रवचनस्यास्तु । कथं प्रवचनस्य नित्यत्वम् ? यथा चोदनायाः । कथं तर्हि चोदनायाः नित्यत्वम् ? कर्तुरस्मरणादिति ; तत एव परमागमस्य । परमागमस्य तीर्थकराः कर्तारः स्मर्यन्ते इति चेत् ; ननु कणभक्षादयो वेदस्य कर्तारं स्मरन्ति । कणभक्षादीनां स्मरणस्य अप्रामाण्ये पुनः इतरेषां परमागमकर्तृविषयस्मृतेः प्रामाण्ये न कश्चिद्विशेषः । तदेतत् प्रवचनमपौरुषेयम् , तीर्थकराः समुत्पन्नं प्रवचनं प्रवर्तयन्तीति सर्वज्ञागमयोः प्रबन्धनित्यत्वेन नित्यत्वोपगमात् कुतस्तत्र एवमन्योन्याश्रयणं स्यात् । तन्नानुमानं सर्वज्ञाभावसाधनं प्रवचनं चेति स्थितम् । न च नानेकान्तशासनं जीवानां नानापरिणामप्रतिपादकम् । न च तत्प्रत्यनीकं प्रमाणमस्ति स्याद्वादेन बाधितविषयत्वात् पिटकत्रयवदिति । स हि एकान्तो न संभवति निर्विषयं चेति राजपथीकृतमेतदिति । यदि पुनः ते न सर्वज्ञाः वक्तृत्वादिभ्यः [वक्तृत्वात् पुरुषत्वात् रागादिमत्त्वात् ] रथ्यापुरुषवदिति; जैमिनिरन्यथा [वेदज्ञः कुतः] ? नहि किञ्चित्साधर्म्यात् सर्वं तथैवेति प्रतिपत्तुं युक्तमतिप्रसङ्गात् । तदिमे वक्तृत्वादयोऽहेतवः अन्यथानुपपत्तिरहितत्वात् विपक्षे बाधकाभावात् । 'सर्वज्ञो नास्त्यनुपलम्भात्' इति व्याप्तिसाधने [3]स्वोपलब्धिः [असिद्धा] सर्वप्रामाण्य···सर्वज्ञानां [स्वपरोपलम्भसंभवात्]

न विद्यते **[सद्भागो]** यस्य **तदसद्भागम्** [४१४ ख] अतर्क(**अक्ष**)मिन्द्रियम् तस्माद् एकेन्द्रियादेः **आशास्त्रार्थविदः जीवानां** प्राणिनां**[क्रमात्]**क्रमेण**[वि]ज्ञानातिशये न वै विद्वान् विप्रतिपद्यते**, यथा परमाणोः परिमाणाद् आरभ्य आगगनात् परिमाणातिशय इति । नन्वयमर्थः *"ज्ञानस्यातिशयात् सिध्येद् विभुत्वम्" [ सिद्धिवि० ८।८ ] इत्यादिना [4]प्रतिना प्रतिपादयिष्यते, तत्किमर्थमिह उच्यते ? तस्माद् अन्यथा व्याख्यायते— **विद्वान्** पठितैः(पण्डितः)शास्त्रेषु उक्तानुक्तपर्यालोचनपटुः **न[वै]**नैव**[वि]प्रतिपद्यते** अक्ष-

(१) तुलना—"एवं यत्केवलज्ञानमनुमानविजृम्भितम् । नर्ते तदागमात् सिध्येत् न च तेन विनागमः ॥ सत्यमर्थबलादेव पुरुषातिशयो मतः । प्रभवः पौरुषेयोऽस्य प्रबन्धोऽनादिरिष्यते ॥"-न्यायवि० ३।४१२-१३ । (२)तुलना—"सर्वज्ञप्रतिषेधे तु सन्दिग्धा वचनादयः ।"-न्यायवि० २।३४९। (३) तुलना—"सकलज्ञस्य नास्तित्वे स्वसर्वानुपलम्भयोः । आरेकासिद्धते तस्याप्यर्वाग्दर्शनतोऽगतेः॥"-न्यायवि० ३।४०६। "सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी । विन्ध्याद्रिरन्ध्रदूर्वादेरदृष्टावपि सत्त्वतः ॥"-तत्त्वसं० पृ० ६९ । प्रमाणसं० पृ० १००। त० श्लो० पृ० १३। आप्तमतत्त्ववि० पृ० ९४। (४)'प्रतिना' इति द्विर्लिखितम् ।

(अनक्ष)**विज्ञानातिशये** अतीन्द्रियार्थग्रहणयोग्यतायां ज्ञानस्य । कस्य ? इत्याह–**[आ]शास्त्रार्थविदः आ** समन्तात् सकलात् (सकलस्य) शास्त्रस्य वेदस्य योतिः (ज्योतिः) **शास्त्रस्य** वा **अर्थम्** अतीन्द्रियं वेत्तीति **तदर्थवित्** सर्वज्ञः तस्य । कुतस्तदतिशयः ? इत्याह–**अक्षकृत् सद्दाक्षा (असद्दाग्याक्षात्** अक्षा)भावात् । अथ अक्षाभावे कुतः स इति चेत् ?

५ अत्राह–**क्रमादिति** आम्नायाद् आगताद् दर्शनादेः । **जीवानाम्** इति निर्धारणे षष्ठी । यो हि विद्वान् स्वयं शास्त्रानुक्रम(माद)र्थमभ्यूह्य जानाति स कथमन्यत्र असद्दा[या]क्षार्थस्य ज्ञानरि विप्रतिपन्न [ने]ति भावः ।

ननु तदतिशये यद्यपि वद्वांत (विद्वान्) विप्रतिपद्यते, संसते (संशेते) अत्यन्तादृश्ये [1]अनक्षज्ञाने गत्यन्तराभावात् । तदुक्तम्–

१० *"[2]अनिश्चा(श्च)यकरं प्रोक्तम् ईदृक्षानुपलम्भनम् ।
तन्नैरा(वा)तीन्द्रियार्थानां सदसत्तादिविनिश्चयौ ॥"
[ प्र० वा० २।९४ ]

इति सौगतः, तत्राह–**स्थावराद्** इत्यादि । **स्थावरो** वृक्षादिः **आदिर्यस्य शास्त्रार्थतत्त्वज्ञः पर्यन्तो** यस्य तस्य । कस्य ? इत्याह–**जीवराशेः** अनेन **'जीवानाम्'** इति [४१५क] व्याख्यातम् ।

१५ **उत्तरस्योत्तरः** अधिकस्यापि अधिको **बुद्धिप्रकर्षो** यस्य स तथोक्तः **तं प्रति न कश्चित् विप्रतिपत्तुमर्हति** वक्ष्यमाणम् इति **अन्यत्र शौद्धोदनिशिष्यकात्** । किंभूतात् ? इत्याह–**अविप्रकृष्ट [विप्रकृष्टसंशीतिवादिनः[3]]** इत्यादि । स एव विप्रतिपत्तुमर्हति संशीतेर्विप्रतिपत्तिनिबन्धनत्वात् । अन्यः कस्मान्न विप्रतिपत्तुमर्हति इति चेत् ? अत्राह–**शास्त्रार्थविदां च** इत्यादि । **च** शब्दः अप्यर्थः, शास्त्रेण अर्थं विदन्तीति तदर्थविदः तेषामपि न केवलमन्येषां विवादगोचराणाम् **तदर्थ-**

२० **ज्ञानप्रकर्षः** शास्त्रार्थज्ञानाधिक्यम् **सर्वथा** सर्वप्रकारेण **अस्त्येव** । स कुतः ? इत्यत्राह–**स्वभाव** इत्यादि । **स्वभावेन पाटवं** च **अभ्यासश्च** तौ **आदी** यस्य औषधादिसेनादेः (सेवनादेः) तस्य **तारग्यात्(तारतम्यात्)** । **'कथम्'** इति प्रश्ने तस्य उत्तरम् **उपनिबन्ध** इत्यादि । को हि नाम स्वयं शास्त्रार्थ(र्थं) प्रतिपद्यमानः अन्यत्रापि(त्र वि)प्रतिपद्यते ? अनेन **'विद्वान्'** इति प्रतिपादितम् । **तथैव** तेनैव स्वभावपाटवाभ्यासादितारम्य(तारतम्य)प्रकारेण **कस्यचित्** पुरुष-

२५ विशेषस्य **शास्त्रार्थनिरपेक्षं परोक्षज्ञानपाटवं यदि स्यात् किंचिरुध्येत(किं विरुध्येत ?)** न किञ्चित् । एतेन शेषं निवृत्तम्[5] ।

तदनभ्युपगमे दूषणमाह–**तथा** इत्यादि । **यतो** जै मि न्या देः प्राकृताद् वि(ताऽवि)-शेषात् **स्वत एव** पुरुषनिरपेक्ष एव **प्रमाणं वेदो न स्यात्** स्यादेव । ततः स्थितम्– **यथा**

(१) अतीन्द्रियज्ञाने । (२) "अनिश्चयकरं प्रोक्तं ईदृक्क्षानुपलम्भनम् । तन्नात्यन्तपरोक्षेषु सदसत्ताविनिश्चयौ ॥–किन्तु ईदृगतीन्द्रियार्थविषयमनुपलम्भनमनिश्चयकरं प्रोक्तम्, सत्यप्यर्थे सम्भवात् । तत् तस्मात् अत्यन्तपरोक्षेषु सदसत्तानिश्चयौ न स्तः, सत्यपि प्रमाणावृत्तेः । प्रमाणनिवृत्तावपि अर्थाभावासिद्धेः ।"–प्र० वा० मनोरथ० २।९४ । (३) "विप्रकृष्टविषया पुनरनुपलब्धिः प्रत्यक्षानुमाननिवृत्तिलक्षणा संशयहेतुः ।"–न्यायबि० २।४७ । (४) बौद्धः । (५) शेषः श्लोकांशः व्याख्यात इत्यर्थः ।

**वचनत्वाविशेषेऽपि वेदएवं(वेदः स्वत एव) पुरुषनिरपेक्षः स्वार्थं प्रतिपादयति तथा पुरुषत्वाविशेषेऽपि कश्चिदेव अक्षनिरपेक्षः परोक्षाथ(र्थं) विषयीकरोति इति ।**

नन्वेवं स्वपरपक्षयोरविशेष एव उक्तः स्यात् , न पुनः स्वतःप्रामाण्य(ण्यं) वेदस्य निराकृत(तं) स्यादिति चेत्; अत्राह–**संभवत्प्रकर्षेष्विति**। संभवदतीन्द्रियार्थदर्शनेषु पुरुषविशेष(षेषु) **स्वत एव प्रमाणं वेदो न स्या**दिति सम्बन्धः, [1]तेभ्य एव तत्प्रमाणत्वभावादिति भावः । ५

स्यान्मतम्–वेदस्य परानपेक्षस्य अर्थप्रतिपादने न किञ्चित् प्रमाणं वायव(बाधक)मस्ति पुरुषस्य तु अक्षानपेक्षस्य अर्थविषयीकरणा[ऽसंभव एव] तद्बाधकमस्ति तत्कथं साम्यमिति चेत् ? अत्राह–**प्रमाण**मित्यादि । **लोके** निरवशेषे जागति(जगति) कचित् तदभावसाधने सिद्धसाधनम् इति लोकग्रहणम् , **प्रमाणम् कीदृशं** न किञ्चित् प्रमाणमित्यर्थः **सर्वज्ञस्याभावसाधकं प्रत्यक्षादेः** प्रमाणपञ्चकस्य **अभावविषयत्वविरोधात् अभावप्रमाणवैफल्यापत्तेः अनभ्युपगमाच्च**। चार्वाकस्य नायं दोष इति चेत् ; न ; तस्य प्रत्यक्षैकप्रमाणवादिनः सर्वत्र लोके तदभावसाधनमयुक्तम्, स्वयं सर्वज्ञतापत्तेः, अनुमानादेरभावात् । पराभ्युपगमात् तस्य तदिति नोत्तरम् ; त(तत्) एव अतीन्द्रियज्ञानप्रसङ्गात् । यथैव परस्य अनुमानमन्तरेण [न] तद्व्यवहारः तथा [1]तदपि न अतीन्द्रियज्ञानमन्तरेण । अविशदं तदस्तु इति चेत् ; न; अनुमाने जीवति विशदमपि [1]तदनिषेधनि(म इ)त्यास्तां तावदेतत् । अभावः [11]तत्साधनम् ; तदुक्तम्– १५

*"प्रमाणपञ्चकं यत्र वस्तुरूपे न जीवते(जायते) ।
वस्तुसत्तावबोधार्थ(र्थं) तत्र(तत्रा)भावप्रमाणता ॥"

[मी० श्लो० अभाव० श्लो० १]

[४१६ क] इति चेत् ; न ; धर्मादेरपि[12] स[13] [14]तत्साधनम् , सर्वज्ञवत् प्रत्यक्षादेः [15]तत्राप्रवृत्तेः । आगमस्य भावादसिद्धः [16]तत्र प्रमाणपञ्चकाभाव इति चेत् ; न ; सर्वज्ञेऽपि २० तस्य[17] भावात् । तदाह–**तदभावे(तद्भावे)सर्वज्ञाभावे(ज्ञसद्भावे)शास्त्रम्** अस्माकम**स्ति,** ततोऽत्राप्यसिद्धम् अभावाख्यं प्रमाणमिति मन्यते ।

ननु सर्वज्ञोक्ततया [18]तत् प्रमाणम् , [19]तत्प्रमाणतया च [सर्वज्ञ]सद्भाव इत्यन्योऽन्यसमाश्रय इति चेत् ; अत्राह–**न युक्त्या बा(ह–युक्त्यबा)धितम्** प्रमाणेन यतु(णेन तु) बाधितं शास्त्रं[त]दस्ति । न तदुक्तत्वेन [20]तत्प्रमाणम् अपितु बाधारहितत्वेम(त्वेन) प्रत्यक्षादिवत् इति गम्यते । २५

ननु [21]तत्र शास्त्रं युक्त्या(क्त्य)बाधितम् असिद्धम्, अनुपलम्भस्य तद्बाधकस्य भावात् । एतदेव दर्शयन्नाह–**नास्ति** इत्यादि ।

---

(१) अतीन्द्रियज्ञेभ्यः एव । (२) अतीन्द्रियज्ञाभाव । (३) 'सर्वत्र सर्वज्ञो नास्ति' इति प्रत्यक्षं जानतः स्वयं सर्वज्ञता । (४) पराभ्युपगमादेव । (५) चार्वाकस्य । (६) लोकव्यवहारः । (७) अनुमानमपि । (८) व्याप्तिज्ञानं विना । (९) अतीन्द्रियज्ञानम् । (१०) अतीन्द्रियज्ञानम् , न विद्यते निषेधो यस्य तत् अनिषेधम् अशक्यनिषेधमित्यर्थः । (११) सर्वज्ञाभावसाधकम् । (१२) अतीन्द्रियधर्मादेरपि । (१३) अभावः । (१४) अभावसाधकः । (१५) धर्मादौ । (१६) धर्मादौ । (१७) आगमस्य । (१८) शास्त्रम् । (१९) शास्त्रप्रमाणतया । (२०) शास्त्रम् । (२१) सर्वज्ञे ।

अत्र केचित् चोदयन्ति–सर्वज्ञस्य धर्मिणोऽसिद्धौ आश्रयासिद्धिः। [1]सिद्धौ ; प्रतिषेधानु-
पपत्तिः तद्ग्राहकप्रमाणबाधनात्, असिद्धश्च हेतुः। नहि सिद्धस्य अनुपलब्धिः ; विप्रतिषेधात्।
किमर्थमिदम् अनुमानमुपन्यस्तम् ? परमतानुवादमात्रम् इत्येके ; न ; परस्य [2]तदभावा[त्], न
भाव[ः]प्रमाणात् तदभावसाधनात्। न च प्रेक्षावता तन्मतम् असम्य[ङ्]मनूद्यते इति ; तत्रो-
५ च्यते–अभावप्रमाणमेवमुक्तं नानुमानम्। तथाहि–**नास्ति सर्वज्ञः** इत्यभावप्रमाणम्। तत्कुतो
जायते ? इत्याह–**अनुपलब्धेः** प्रमाणपञ्चकाभावात्। क्वचित्–[किं वत् ? इत्य]त्राह–**खपुष्प-
वदिति**। यदि वा, अर्थापत्तिरियं पक्षधर्मत्वनिरपेक्षा। यदि वा, जैनमतापेक्षया परेणाद(परे-
णेदम्)अनुमानमुक्तम्। [3]तस्य हि मतम्–अस्ति सर्वज्ञः सुनिर्णीतासंभवद्बाधकप्रमाणत्वात्
सुखादिवत् [४१६ ख] इति। अत्र पूर्वपक्षे इदमुच्यते **यदि साधकप्रमाणनिवृत्तिः** सर्ववित्-
१० साधकस्य प्रमाणस्य निवृत्तिः **आत्मा वा तद्रहितः अनुपलब्धिः यथास्वं नैरात्म्यं प्रस-
ज्येत**। कुतः ? इत्यत्राह–**सर्वात्म** इत्यादि। तदेव दर्शयन्नाह। **नहि असर्वदर्शी तथैव** यत्र
**सर्वात्मविशेषा** व्यवस्थिताः **तान् साक्षात्कर्तुमर्हति**। अनुमानेन प्रत्येति इति चेत् ; अत्राह–
**ततदेव(तत एव)**इत्यादि। यत एव स तान् साक्षात्कर्तुं नार्हति **तत एव अनुमान(तु)मशक्यम्**,
भावप्रधानोऽयं निर्देशः असत्यत्र(अशक्यत्व)मिति। केषाम् ? इत्याह–**प्रत्यात्म** इत्यादि।
१५ कुतः ? इत्याह–**लिङ्ग** इत्यादि।

ननु परात्मनो(त्मानो) यतोऽनुमानात् प्रतीयते(यन्ते) ततः सामान्यविशेषात्मका एव, तन्न
युक्तम्–'**अनुमानम्(तुम्) अशक्यत्वं प्रत्यात्मविशेषाणाम्**' इति चेत् ; अत्राह–**तदविशेषेण**
इत्यादि। **तद्** इत्ययं निपातः तस्माद् इत्यस्य अर्थे वर्तते। तस्माद् अनुमानात् **अनेकान्ता-
त्मकवस्तुतत्त्वसाधनात्**। केन रूपेण ? इत्याह–**अविशेषेण** सामान्येन। [न]हि परात्मा नियते-
२० [न]विशेषेण संयुक्तोऽनुमानात् प्रतीयते, प्रत्यक्षानुमानयोरविशेषप्रसङ्गा**दनुमान(तु)मशक्यत्वं
प्रत्यात्मविशेषाणाम्** इति।

स्यान्मतम्–त्या(व्या[4])हारादिविशेषात् क्रोधादिविशेषोऽपि प्रतीयते, तन्नेदमुत्तरमिति ;
तत्राह–**कुतश्चिद्** इ[त्यादि]। **कुतश्चित्** व्यव(व्या)हारादिविशेषात् **तत्प्रतिपत्तौ** प्रत्यात्मवि-
शेषप्रतिपत्तौ सत्याम् **अप्रतिपन्नविशेषाविनाभाविनः**। एव(वं) मन्यते–व्याव(व्या)हारादिविशे-
२५ षात् क्रोधादिप्रतिपत्तिरपि अनुमान एव(नमेव) [5]तदपि क्रोधादिकम् [४१७ क]अवान्तरसामान्येन
विषयीकरोति न नियतविशेषेण। नहि क्रोधादेः प्रकृति(प्रति)क्षणसूक्ष्मविशेषाः अनुमानमशक्यः
(मातुं शक्याः)। ततस्तेषामनुपलब्धि(ब्धे)रभावः प्रसक्त इति; तन्न; **[अप्रतिपन्नविशेषं]**विना-
[न] भवति इत्येवंशीलस्य **अप्रतिपन्नविशेषाविनाभाविनः प्रतिपन्नस्वभावस्यापि** क्रोधादिसा-
मान्यस्य **तथैव अनात्मकत्वप्रसङ्गात्**। तथाहि–प्रतिक्षण[6]क्षणसूक्ष्मविशेषापेक्षया सामान्यविशेषा
३० आत्मनो भवति(न्ति) तदभावे तेऽपि तस्य न स्युः प्रतीयमाना अपि। न च तद्विविक्त आत्मा
उपलभ्यत इति तदभावो भवन् नैरात्म्यम् [स्यात्]। तत्र को दोष इति चेत् ? अत्राह–**तत**

(१) सर्वज्ञस्य। (२) सर्वज्ञाभावात्। (३) जैनस्य। (४) व्याहारो वचनम्। (५) अनुमानम्। (६) 'क्षण' इति द्विर्लिखितम्।

इत्यादि। **ततो** नैरात्म्यात् कस्यचिद् उपलब्धेरभावात् (न) **कस्यचिदुपलब्धिः** इत्युपलम्भनिवृत्तिभावात् सर्वज्ञवत् **सर्वाभावः**।

अथ श्रुतात् प्रत्यात्मविशेषाः प्रतीयन्ते इत्यदोषः; तत्राह–**श्रुतस्यापि** इत्यादि। **श्रुतस्यापि** न केवलं प्रत्यक्षादेरेव**म्** उक्तवत् **प्रसङ्गात्**। कुतः? इत्याह–**नहि** इत्यादि। तदपि कुतः? इत्याह–**विशिष्टविषयत्वात् पुरुषार्थसिद्धेरिति**। अथ विपर्यीकरोति शास्त्रम् इति ५ चेत्; अत्राह–**अन्यथा** इत्यादि। अनेन (अन्येन) निरवशेषविपर्यीकरणप्रकारेण अ **नाव (अनव)-धेयत्वमेव शास्त्रस्य** इति।

निगमयन्नाह–**तदियम्** इत्यादि। यत एवं **तत्** तस्मात् **इयम्** अ[न]न्तरवर्णिता **प्रतिपत्तृप्रमाणनिवृत्तिः प्रतिपत्तुः** मीमांसकस्य सम्बन्धिनी सर्वज्ञविषयप्रत्यक्षादि**प्रमाणनिवृत्तिः सर्वसम्बन्धिनी** सत्यपि **प्रतिप[त्तुम]शक्येति**। [४१७ख]प्रतिपत्तृग्रहणं **न केवलं सर्वज्ञाभावं** १० **साधयति अपि तु** किन्तु **सर्ववस्तुव्यतिरेकं च** सर्वभाववस्तुनोऽभावं च साधयति स्वापमदमूर्च्छाद्यवस्थायां सर्वत्र तन्निवृत्तेर्भावात्। अन्यैः तदा सर्वस्य दर्शनं न वं(न सर्व)स्येति किं कृतमेतत्? पुनस्तेनैव तस्य दर्शनम्; जन्मान्तरे तेनैव सर्वज्ञस्य दर्शने किं विभाव्येत? यदि वा, परोक्षज्ञानैकान्तवादिनः सर्वत्र तन्निवृत्तिरिति।

यथा च शास्त्रात् प्रतीयमाने धर्मादौ न साधकप्रमाणनिवृत्तिः अनुपलब्धिः, तथा सर्व- १५ मपि इति दर्शयितुम् आत्मानं परेण पर्यनुयोजयन्नाह–**भावे** सर्वज्ञस्य **तर्हि किं प्रमाणम्** इति? तत्रोत्तरं **शास्त्रं ब्रूमः** इति। कुतः? इत्यत्राह–**तदित्यादि**। **तस्य** सर्वज्ञस्य **सद्भावप्रतिपादनात्** [1]**चतुर्दशगुणस्थानोपवर्णनात्** न केवलं लब्धिकथनाच्चेति। **कथमस्य** [2]तत्सद्भावप्रतिपादकस्य शास्त्रस्य **प्रामाण्यमिति चेत्?** इति परमतम्; अत्रोत्तरम्–**चोदनायाः तर्हि कथमिति** धर्मादिप्रतिपादकम् वैदिकं वाक्यं चोदना, तस्याः कथं **प्रामाण्यम्?** उभयोरप्रामाण्ये धर्मादेरपि लोप २० इति मन्यते।

[3]पर आह–**नित्यत्वात् तस्याः** [4]तदिति। सूचिराह (सूरिराह–) **तत एव** नित्यत्वादेव **प्रवचनस्य** गुणस्थानप्रतिपादकस्य आगमस्य **अस्तु** प्रामाण्यम्। **कथं प्रवचनस्य** इति [5]परः; तस्योत्तरं **यथा** इत्यादि। पार्श्ववर्त्ती पृच्छति–**कथं तर्हि चोदनायाः नित्यत्वम्** इति? श्रोत्रियः प्राह–**कर्तुर[स्मर]णादिति**। आचार्यः प्राह–**तत एव** इत्यादि। कर्तुरस्मरणादेव २५ **परमागमस्य नित्यत्वम्** इति। **कर्त्तारः तीर्थकराः** परमागमस्य **स्मर्यन्त**[४१८क]**इति चेदिति** परमताशङ्का; अत्रोत्तरम्–**वेदस्य** इत्यादि।

**ननु साक्षादयो (कणभक्षादयो** [6]**)वेदस्य कर्त्तारं स्मरन्ति**। तेषां च स्मरणमप्रमाणमिति चेत्; अत्राह–**कणभक्ष** इत्यादि। **पुनः इतरेषां** मीमांसकानां या **परमागमकर्तृविषया स्मृतिः** तस्याश्च **प्रामाण्ये न कश्चि[द्वि]शेषो** वेदपरमागमयोरिति। ३०

ननु वेदे परवादिनामेव [7]तत्स्मरणं न वादिनाम्[8] ततस्तदप्रमाणम् उपपन्ने प्रवचने तु

(१) मिथ्यात्वसासादनादि अयोगिकेवल्यन्तानि। (२) सर्वज्ञसद्भाव। (३) मीमांसकः। (४) प्रामाण्यम्। (५) मीमांसकः। (६) वैशेषिकबौद्धादयः। (७) कर्तृस्मरणम्। (८) मीमांसकानाम्।

उभयेषां तत्स्मरणमिति नाप्रमाणमिति चेत ; अत्राह–**तदेतद्** इत्यादि । **तत्** सर्वज्ञप्रतिपादकम् **एतद्** विचार्यमाणं **प्रवचनमपौरुषेयं** नित्यम । यद्यपौरुषेयं तीर्थकराः (१)तत्र किं कुर्वन्ति येन तत्कल्पनमिति चेत ? अत्राह–**तीर्थकराः प्रवर्त्तयन्ति** (२)**समुत्मन्नं(न्नं)** समुत्सन्नं(न्नं) **प्रवचनम्** व्यञ्जयन्ति **इति** जैनाः । कुत इति चेत ? **मर्वज्ञागमयोः प्रबन्धनित्यत्वेन नित्यत्वोपगमात् ।**

५ कथं तस्य(३) तर्हि द्वादशाङ्गस्य समुच्छेदः ? वेदशास्त्रवदिति । तद्वदेता ग(देव आरा)तीयाचार्यैः(४) स्मरणं न का(क)रणम इति सर्वं सुस्थम ।

एवं सति यल्लब्धं तदाह–**कुतो** न कुतश्चित कारणात **तत्रैव(वं)** व्यवस्थिते न्याये सत्या न्यो(सति अन्यो ऽ)**न्याश्रयणं स्यात्** यत इदं शोभेत–

*"**नर्ते तदागमात् सिध्येत् न च तेन विनाऽऽगमः ।**"

१० [मी० श्लो० चोदना० श्लो० १४२] इति ।

परमपि यल्लब्धं तदपि दर्शयन्नाह–**तन्न** इत्यादि । यत एव शास्त्रं प्रमाणमस्ति **तत्** तस्मा**न्नानुमानं** किञ्चिदपि **मर्वज्ञ(मर्वज्ञा ऽ)भावमाधनं**(६) शास्त्रविषये तदप्रवृत्तेः इति भावः । तदुक्तं कैश्चित–

*"**अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।**
१५ **ये भवात्व(भावान्)वचनं तेषां नानुमानेन बाध्यते ॥**"

[ वाक्यप० १।३८ ] इति ।

अथ नामी(७) शास्त्रस्य विषय इति चेत ; अत्राह–[४१८ख] **प्रवचनं च** इत्यादि । **इत्येवं स्थितं** निश्चितमेतत ।

ननु मा भूदनुमानं तत्माधन(नं)शास्त्रान्तरं तु स्यात समबलत्वादिति चेत ; अत्राह–

२० **न वेद्याद्य(न चे**त्यादि । अयम)भिप्रायः–न तावद् **अनेकान्तशासनं न जीवानां नानापरिणामप्रतिपादकम्**(७) । ननु (न तु)यदेव यद्विधात् तदेव तस्य निषेध(र्धृ;) विरोधात । अन्यच्चेत ; **न च** नैव **तत्प्रत्यनीकं** शास्त्रं **प्रमाणमस्ति** । कुतः ? इत्याह–**स्याद्वादेन[बाधितविषयत्वात्]** इत्यादि । निदर्शनमाह–(९)**पि ट क त्र य वदिति ।**

ननु पि ट क त्र यस्य कथं स्याद्वादेन बाधितविषयत्वं यावता स्याद्वाद एव तेन बाधित-

२५ विषय इतरेद(इति चेत ; अ)त्राह–**स हि** इत्यादि । **स** पि ट क त्र ये प्रतिपाद्यमानः **हि** यस्माद् **एकान्तो न संभव[ति]** । कः ? इत्यादि (ह)–**निर्विषयम्** इत्यादि **वा इत्येवं** । कथं सा(स)न संभवति ? इत्याह–**राजपथीकृतमेतद्** इति । कृत प्रतिनि(वि)धानताम् अस्य अनेन दर्शयति । तथाहि–निर्विषयं यतः ततो मिथ्याज्ञानम् अनुमान(नं)यदि ; कुतः किं सिध्येत् ? नहि निर्विषया[त्] ततः(१०) तत्त्वसिद्धिः द्विचन्द्रादिज्ञानवत् ।

(१) प्रवचने । (२) उच्छिन्नम् । (३) जैनस्य । (४) शिष्यभूताचार्यैः । (५) सर्वज्ञः । (६) सर्वज्ञाभावसाधनम् । (७) अपि तु प्रतिपादकमेव । (८) निषेधकम् । (९) सूत्र-विनय-अभिधर्माख्यं पिटकत्रयम् । (१०) अनुमानात् ।

ननु मणिप्रभायां मणिज्ञानामिथ्याज्ञानमिथ्या (मणिज्ञानात् मिथ्या) ज्ञानादपि तत्त्वप्रतिपत्तिः ततो व्यभिचार इति चेत ; न ; तस्य साध्यान्तःपातित्वात् । यदि पुनः अनुमानमध्यक्षं चेत; तर्हि कल्पनापोढेन अभ्रान्तेन तेन भाव्यमिति न तेन व्यभिचारः । व्यवहारेण तत्तथा । यो हि मन्यते–य एव मणिर्दृष्टः स एव प्राप्त इति तं प्रति प्रत्यक्षं तद्[1] इति चेत ; यस्तर्हि मीमांसकादिः 'स एवायम्' इत्येकं [४१९क] प्रत्यभिज्ञानम् इन्द्रियजात (जम) विसंवादि मन्यते[2] तं प्रति तदपि ५ प्रत्यक्षमिति न प्रमेयद्वैविध्यात् प्रमाणं द्विविधम्, अस्य प्रत्यक्षत्वेऽपि सामान्यविषयत्वात्, [6]अविकल्पैकान्तव्याघातश्च । कथं चैवंवादिनः प्रत्यक्षसिद्धं (द्धा) क्षणिकता येन *"**यद्यथावभासते**" इत्यादि सूक्तं भवेत् । अस्य [8]विचारतोऽप्रत्यक्षत्वे तत एव प्रकृतस्यापि प्रत्यक्षत्वं मा भूत् ।

एतेन भाविनि प्राप्ये प्रत्यक्षत्व (त्वं) चिन्तितम् । किंच, यदि भाविनि प्रत्यक्षं प्रमाणम्; प्रतिबन्धद्वयव्याघात[:] । भावि च कारणं निषिद्धम् । ततो निराकृतमेतत्– १०

*"**अभिप्रायाविसंवादादपि भ्रान्तेः प्रमाणता ।**
**याति (गति)रप्यन्यथा दृष्टा पक्षश्चायं कृतोत्तरः ॥**" [प्र० वा० २।५६] इति ।

स्यान्मतम्–यदि भाविनि न प्रत्यक्षं प्रमाणं तर्हि प्रमाणमेव न भवेत् । यदि वर्त्तमाने स्यात् को दोषः ? न च वर्त्तमाने क्वचिद् व्यभिचारदर्शनात् सर्वत्र स युक्तः, स्वसंवेदनमात्रेऽपि तदनुषङ्गाद् इत्युक्तम् । १५

अपि च, यत्रानुमानमविसंवादं कथं निर्विषयम् ? अवस्तुसामान्यविषयत्वादिति चेत ; प्रत्यक्षमपि तथा स्यादिति [मणि]प्रभायां मणिज्ञानस्य अनुमानस्य अविसंवादः केन प्रतीयता (प्रतीयेत) ? नहि प्राप्यमणिप्रत्यक्षं निरंशपरमाणुग्राहकम् इत्युक्तम् । ततो न किञ्चिदेतदिति ।

ननु यदुक्तम्–'**तीर्थकराः प्रवचनं प्रवर्तयन्तीति**' इति ; तत्सत्यमस्तु, केवलं **ते सर्वज्ञा न** भवन्ति [10]**वक्तृत्वादिभ्यो रथ्यापुरुषवदिति;** तदेव दर्शयन्नाह–**यदि पुनः** इत्यादि । २० तत्र दूषणमाह–**जं मि निरन्यथा** इत्यादि । [४१९ख]

ननु पुरुषान्तरे वक्तृत्वादौ सति सर्वज्ञत्वमुपलब्धम्, उपलभ्यते च तीर्थकरेऽपि वक्तृत्वादिकमिति तत्रापि [11]तदस्तु, अन्यथा नु (न) कृतकत्वादेः अनित्यादिप्रतीः (प्रतीतिः) स्यादिति चेत ; अत्राह–**न हि** इत्यादि । तीर्थकरपुरुषान्तरयोः **किञ्चित्साधर्म्यात्** वक्तृत्वादिसाधर्म्यात **सर्वम्** असर्वज्ञत्वादिकं **तथैव** वक्तृत्वादिप्रकारेण **इति प्रतिपत्तु (त्तुं) न हि युक्तम्**, २५ **अतिप्रसङ्गात्**–वक्ता मूर्खो दृष्ट इति सर्वोऽपि तथा[12] स्यात । यदि पुनः पण्डितोऽपि सं[13] कादाचि (कदाचित्) दृश्यते; सर्वज्ञेऽपि (ज्ञोऽपि) दृश्यते इति समानम् ।

---

(१) "मणिप्रदीपप्रभयोः मणिबुद्ध्याऽभिधावतोः । मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥" –प्र० वा० २।५७। (२) अनुमानम् । (३) "तेनेन्द्रियार्थसम्बन्धात् प्रागूर्ध्वं वापि यत्स्मृतेः । विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ॥"–मी० श्लो० ४।२३६ । (४) प्रत्यभिज्ञानमपि । (५) प्रत्यभिज्ञानस्य । (६) प्रत्यक्षमविकल्पकमेवेति । (७) प्रत्यभिज्ञानस्य । (८) विचाररूपत्वात् । (९) प्रत्यक्षेऽपि हि अन्यद् दृश्यते प्राप्यते चान्यदिति । (१०) वक्तृत्वात् पुरुषत्वात् हस्तपादादिमत्त्वात् इत्यादिभ्यः । (११) असर्वज्ञत्वमस्तु । (१२) मूर्खः । (१३) वक्ता ।

निगमयन्नाह–**तदिमे** इत्यादि । यत एवं **तत्** तस्मात् **इमे** परेण उच्यमाना **वक्तृत्वादयोऽहेतवः** । कुतः ? इति[चेत्;] **अन्यथा** इत्यादि । [**अन्यथानुपपत्तिरहितत्वात्** ] न तादात्म्यतदुत्पत्त्यादिरहितत्वात् इत्यनेन दर्शयति तस्यात्र भावादिति निरूपितम् । असर्वज्ञ ज्ञाता (असर्वज्ञो वक्ता) सर्वदा तेषां दर्शनात् , कथं तद्रहितत्वमिति चेत् ? **विपक्षे**[1] **बाधकाभावात्** ।
५ कृतकत्वादिवत् विरोधो बाधक इति चेत् ; न ; [2]तद्ग्राहकाभावात् । यदि हि संवेदनोत्कर्षे [3]तदपकर्षः स्यात् , भवेद् विरोधगतिः, न चैवम् इति । अनुपलम्भस्तत्र बाधकः ; तदाह–**सर्वज्ञ** इत्यादि । [**सर्वज्ञो नास्ति अनुपलम्भात्** ] इत्येवं साध्येन हेतोः **व्याप्तिसाधने** अङ्गीक्रियमाणे । दूषणमाह–**स्वोपलब्धि** इत्यादि । सर्वेर्नोपलभ्यते इति चेत् अत्राह–**सर्वप्रामाण्य** इत्यादि । कुत एतत् ? इत्यत्राह–**सर्वज्ञानाम्** इत्यादि ।
१० तदुपाभ(तदुपलम्भाभावान्न) सन्ति सर्वज्ञाः, तत्कथं ते[6] स्वं परं वा सर्वज्ञमुपलब्धय(भ)न्त इति चेत् ? अत्राह–[४२०क] **सर्वज्ञाभा(ज्ञभा)वसन्देह** इत्यादि ।

**[ सर्वज्ञभावसन्देहेऽनुपलम्भो न सिध्यति ।**
**ततः स्यात्सर्वहेतूनां तत्रान्योऽन्यसमाश्रयः ॥७॥**

**'नास्ति सर्वज्ञः' इत्यत्र यथा अन्योऽन्याश्रयत्वं तथैव वक्तुः सर्वज्ञस्यानुपलब्धौ ।**
**१५ एतेन रथ्यापुरुषादन्ये सर्वे पुरुषाः रागादिमन्तो वक्तृत्वादिभ्यस्तद्वदिति साकल्येन रागादिमत्त्वसाधनं प्रत्युक्तम् । तथा तत्साधने जैमिन्यादेरपि साधनान्न वेदः प्रमाणमितरत् अन्यथेति ।]**

**सर्वज्ञानां** यो **भावः** परेण इष्यते तत्र **सन्देहे** **अनुपलम्भः** सर्वानुपलब्धिर्न **सिध्यति** सर्वज्ञाना(ज्ञानां) स्यपरोलम्भवात् (स्भसंभवात् ) । पुनरपि तेषां तदनुपलम्भेनाभाव-
२० साधने तदवस्थो [1]दोषोऽनवस्था चक्रकमिविमन्वनं(मिवावर्तनं) । अथ मतम्–यः सर्वज्ञः भा-(सर्वज्ञः स आ)त्मानं पर[ञ्च] पश्यति' इत्युच्यते; नासौ सर्वज्ञः पुरुषत्वादिभ्यो रथ्यापुरुषवदिति चेत् ; उक्तमत्र–'**अन्यथानुपपत्तिरहितत्वात् नैते हेतवः**' इति । सर्वज्ञस्य पुरुषस्व-(त्व)वक्तृत्वानुपलब्धिः (ब्धेः) प्रकृतव्याप्तिरिति चेत ; पुनरपि तदेवावर्तनं इति चक्रकम् ।

ननु[न]विपक्षे[ऽ]भावसिद्ध्या पुरुषत्वादयः क्वचित सर्वज्ञा वा भावं (ज्ञाभावं) साधयन्ति
२५ किन्तु यद्व्याप्त्यो(तद्व्याप्त्या) ; ननु सर्वज्ञाभावसन्देहे तद्व्याप्तिरपि कथं सिध्यति ? तथैव तदसन्देह इति चेत ; अन्योऽन्यसंश्रयः । तथाहि–सिद्धानां (द्धायां) तद्व्याप्तौ तदभावः सिध्यति तत्सिद्धौ च सा सिध्यति । तदाह–**ततोऽ**नुपलम्भस्याऽसिद्धितः **स्यात् तत्र** सर्वज्ञाभावसाधने व्याप्तौ वा **सर्वहेतूनां** पुरुषत्वा[दीना]**मन्योऽन्यसमाश्रयः** ।

कारिकां व्याख्यातुमाह–**नास्ति सर्वज्ञ** इत्यादि । सर्वज्ञाभावे सिद्धे सर्वाभावो(सर्वज्ञा-
३० भावो)पलम्भनं सिध्यति, तत्सिद्धौ च तदभावः[9] सिध्यति इति **अन्योऽन्याश्रयत्वं यथा, तथैव**

(१) तादात्म्यादेः । (२)अन्यथानुपपत्तिरहितत्वम् । (३)सर्वज्ञे । (४)विरोधग्राहक । (५)वक्तृत्वापकर्षः । (६) सर्वज्ञाः । (७) अनुपलम्भः स्वस्य सर्वस्य वा? इत्यादि । (८) व्याप्तिः । (९)सर्वज्ञाभावः ।

वक्तुः सर्वज्ञस्यानुपलब्धौ साध्यायाम् इतरेतराश्रयत्वम् । तथाहि–सर्वविदोऽभावे सिद्धे साकल्येन वक्तुः सर्वविदो[ऽ]दर्शनं ततः तदभावसिद्धिरिति ।

एतदन्यत्रापि दिशन्नाह[४२० ख] एतेन इत्यादि । एतेन प्रस्तूयमाण प्रस्ताव(मान-प्रस्तावेन)रागादिमत्त्वसाधनं प्रत्युक्तम् । केन रूपेण तत्साधनम् ? इत्याह–साकल्येन, रथ्यापुरुषाद् अन्ये सर्वे पुरुषाः रागादिमन्तः वक्तृत्वादिभ्यः तद्वदिति । कथं प्रत्युक्तम् इति चेत् ? उच्यते–तथा तत्साधने ऽपि न्याय दोषस्य साधनांत(नान्त)रेदाः[प्र]माणमितरत् अन्यथा । विवक्षितपुरुषस्येव तत्साधने ऽपि निः अन्यो वा तद्विपरीत इति तेन हेतूनां व्यभिचारः । अन्यत्रापि समानम् । ५

एवं तावत् तत्त्वा (एवं तावत् तत्त्वात्) चोदनावचनस्य[अ]प्रामाण्य(ण्यं)व्यवस्थाप्य[अ]-मुना– १०

*"तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितम् ।
अदुष्टकारणारब्ध(ब्धं)प्रमाणं लोकसम्मतम् ॥" इति

परकीयव्याख्यानं तदेव दर्शयन्नाह–प्रमाण(प्रामाण्य)मक्षबुद्धेश्च(श्चेत्) इत्यादि ।

[प्रामाण्यमक्षबुद्धेश्चेत्तथाऽबाधाविनिश्चयात् ।
निर्णीतासंभवद्बाधः सर्वज्ञो नेति साहसम् ॥६॥ १५

चक्षुरादिज्ञानस्य अन्यस्य वा अबाधितविषयत्वेन स्वयं यदि प्रामाण्यं ततः तेन प्रवचनस्यापि युक्तम् । अतः अस्ति सर्वज्ञः सुनिश्चितासंभवद्बाधकप्रमाणत्वात् सुखादिनीलादिवत् । तत्र सुनिश्चितासंभवद्बाधकप्रमाणं सिद्धं शास्त्रप्रामाण्यात् ]

अक्षबुद्धिग्रहणम् उपलक्षणमिति चोदनादिबुद्धिरपि गृह्यते, तस्याः तथा(यथा) येन प्रकारेण प्रभुना तेन(प्रवृत्त्या तेन) एव भाव(अबाधावि)निश्चयात् प्रामाण्यं चेत् यदि निर्णीतासंभवद्बाधः निर्णीतोऽसंभवन्वात (द्बाधो) यस्य स तथोक्तः सर्वज्ञ(ज्ञो)नेति साहसम् इति भावः । २०

कारिकां व्याख्यातुमाह–चक्षुरादिज्ञानस्य इत्यादि । अन्यस्य चोदनाज्ञानस्य वा स्वयम् आत्मना यदि प्रामाण्यम् । केन ? अबापि(अबाधि)तविषयत्वेन ततः तेन[अ]बाधितविषयत्वे[न] प्रवचनस्यापि सर्वज्ञप्रतिपादिका(पादका)गमस्यापि [४२१क] प्रामाण्यं युक्तम् । २५

प्रकृतं निगमयताह (निगमयन्नाह–) अत इत्यादि । अतः प्रवचनप्रामाण्याद् अस्ति सर्वज्ञः । कुतः ? इत्याह–सुष्ठु निश्चितम् असंभवद्बाधकं यस्य तत् तथोक्तं प्रमाणं शास्त्रं यस्य तस्य भावात् तत्त्वात् । निदर्शनमाह–सुखादि इत्यादि । बाह्येतरभेदेन दृष्टान्तद्वयोपदर्शनम् । तत्र यथा सुखादिनीलादिषु सुनिश्चितासंभवद्बाध[क]प्रमाणं प्रत्यक्षादि नैवं सर्वज्ञे,

(१) सर्वविदभावसिद्धिः । (२) अर्हतः । (३) रागादिमत्त्वसाधने । (४) वचनत्वात् चोदनावचनमप्रमाणम् इतरवचनवत् । (५) भाट्ट । उद्धृतोऽयम्–हेतुबि० टी० पृ० ३३ । प्र० परी० पृ० ६३ । त० श्लो० पृ० १७३ । प्रमेयक० पृ० ६११ । सन्मति० टी० पृ० ३१८ । नयोप० पृ० ३३ ।

ततोऽसिद्धो हेतुरिति चेत् ; अत्राह-सुनिश्चितेत्यादि । [1]सुनिश्चितासंभवद्बाध[क]प्रमाणं तत्र सर्वज्ञं सिद्धं यत परेणोक्तं 'प्रत्युक्तम्' इत्यनुवर्त्तते । कुतः ? इत्यत्राह-'शास्त्रप्रामाण्यात्' उक्तनीत्या तत्प्रतिपादकागमप्रामाण्यात् ।

अपरे 'शास्त्राप्रामाण्यात्' इति पठन्ति, तेषाम् अनन्तरमेव तत्प्रामाण्य[(2)]मेवत्प्रामाण्यं[(3)]-

५ समर्थनं[(4)] किं विस्मृतं येन एवं पठन्ति ?

संप्रति-

*"स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
नहि स्वतोऽसती शक्ति(क्तिः) कर्तुमन्येन शक्यते ॥"

[मी० श्लो० सू० २ श्लो० ४७] इति ।

१० "अदुष्टकारणारब्धं प्रमाणं लोकसम्मतम्" इति च पर[(5)]कीयं मतद्वयमाश्रित्य तत्प्रवचनस्य [प्रा]माण्यं व्यवस्थापयन्नाह-सर्वज्ञोऽस्ति इत्यादि ।

**[सर्वज्ञोऽस्तीति विज्ञानं प्रमाणं स्वत एव तत् ।
दोषवत्कारणाभावात् बाधकासंभवादपि ॥७॥**

**सर्वज्ञे अस्तीति विज्ञानं नहि [न स्वतः प्रमाणम् ।]न च तत् दोषवत्कारणं तत्प्रतिपादकस्यापि शास्त्रस्य अपौरुषेयत्वात् बाधकप्रमाणाभावः सिद्ध एव । स्वोपलम्भ···। कस्यचिदनुपलम्भमन्तरेण व्यतिरेकासिद्धेरभावप्रमाणवैफल्यापत्तेः । साकल्येन स्वयं लिङ्गेन्द्रियादिनिरपेक्षस्य भावप्रतिपत्तेः सर्वज्ञाभावप्रतिपत्तेर्विरोधात् ।]**

सर्वज्ञोऽस्ति इत्य(इति) प्रवचनाद्[(6)] यद्विज्ञानं सर्वज्ञगोचरमुपजायते तत् प्रमाणं स्वत एव नान्यतः कारणात् । हेत्वन्तरमाह-दोषवत्कारणाभावात् । अपि शब्दो भिन्न-

२० प्रक्रमः, अ[(7)]स्यानन्तरं द्रष्टव्यः । सोऽपि कुतः ? इत्याह-बाधकस्यासंभवादिति (वादपि)।

कारिकां विवृण्वन्नाह-सर्वज्ञोऽस्ति इति विज्ञानम् इत्यादि [५०१ख] । कुत एतत ? इत्यत्राह-नहि इत्यादि । ननु तस्य औत्सर्गिकं यत स्वतःप्रामाण्यं तद्दोषवत्कारणजन्यत्वे[ना-] पोह्यते इति चेत ; अत्राह-न च इत्यादि । न च नैव तत् प्रकृतं विज्ञानं दोषवत्कारणं दोषवत्कारणं यस्येति । कुतः ? इत्याह-तद् इत्यादि । [तत्प्रतिपादकस्यापि] सर्वज्ञप्रतिपादक-

२५ स्यापि न केवय(वलं)वैदिकस्य शास्त्रस्य अपौरुषेयत्वात् दोषाश्रयपुरुषरहितत्वात ।

ननु बारमानं(यद् बाध्यमानं) तद्दोषवत्कारणम, यथा[शुक्ले]शङ्खे पीतज्ञानम् , बाध्यमानं च सर्वज्ञोऽस्तीति[विज्ञानमिति] चेत ; अत्राह-बाधकप्रमाणाभावः सिद्ध एव । अनेन हेतोरसिद्धतामाह । अनुपलम्भो बाधक इति चेत ; अत्राह-स्वोपलम्भ इत्यादि । प्रमाणान्तरं

(१) तुलना-"तदस्ति सुनिश्चितासंभवद्बाधकत्वात् सुखादिवत्"-लघी० स्व० ११४। त० श्लो० पृ० १८५। आप्तप०श्लो० १०१। अष्टश० अष्टस० पृ० ४४। प्र० मी० पृ० १४। प्र० नि० पृ० २९। षड्द० बृह० पृ० १४ । (२) व्याख्याकाराः । (३) 'मेवत्प्रामाण्यं' इति व्यर्थमत्र द्विर्लिखितम् । (४) आगमप्रामाण्यसमर्थनम् । (५) मीमांसकीयम् । (६) शास्त्रात् । (७) 'दोषवत्कारणाभावात्' इत्यस्यानन्तरम् ।

बाधकमिति चेन ; अत्राह–**कस्यचिदनुपलम्भमन्तरेण** कस्यचिदपि सर्वज्ञस्य अन्यस्य वा अनुपलम्भमन्तरेण **व्यतिरेकाऽसिद्धेः** अभाव(वा)सिद्धेः [1]**अभावप्रमाणवैफल्यापत्तेः ।**

माभूदनुपलम्भात् तदभावसिद्धिः प्रत्यक्षात्तु स्यात् । अभावप्रमाणवैफल्यमिति चेत् ; तदिष्यत एव, प्रत्यक्षाविशेषत्वात्तस्य[2] इति परः । तं प्रत्याह–**साकल्येन** इत्यादि । प्रत्यक्षतः तदभावसाधने द्वैतं[3] भवति कविशा(कश्चित् , सा)कल्येन वा ? प्रथमपक्षे(क्षोऽ)भिमतत्वान्न [4] दूषयितुमाशङ्कितः सर्वभावसत्त्वस्य सप्रतिपक्षत्वात्[4] । द्वितीयेऽपि पक्षे द्वैतमेद्वैत(द्वैतम्–) सेन्द्रियाद् , अन्यतो वा ? अत्रापि प्रथमपक्षः श्रोत्रियस्य अनभिमतः सन्निहितमात्रे चक्षुरादि-व्यापारोपगमनेन नाशङ्कि(नाशङ्कि)तः । केवलं[४२२क]द्वैतद्वये स्य(अन्त्य)पक्षद्वयमवशिष्यते । तत्र **साकल्येन** अनवयवेन **स्वयम्** आत्मना लिङ्गेन्द्रियादिनिरपेक्षस्य मीमांसकादे[:] **भावप्रतिपत्तेः सर्वज्ञाभावप्रतिपत्तेः विरोधात्** तत्प्रतिपत्तेः[6] इति भावः । तथाहि–साकल्येन स्वयं तदभावप्रतिपत्तिश्चेत् कस्यचित् ; स एव सर्वज्ञ इति तत्प्रतिपत्तिः[7] । सा चेत् न ; स सर्वज्ञ इति न तत्प्रतिपत्तिरिति । यदि वा, तथा तत्प्रतिपत्तेः सकाशाद् विरोधात् *"**सम्प्रयोग**" [मी० सू० १।१।४][10]इत्यादेः बाधकप्रमाणाभावः सिद्ध एव इति । एवं तावत् परप्रसिद्धया धर्मादिवत् सर्वज्ञस्य आगमात् सत्तां प्रसाध्यता(प्रसाधयता) तत्र *"**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।**" [मी० श्लो० अभाव० श्लो० १][11]इत्यादि निरस्तम् ।

अधुना अनुमानात्[12] तां प्रसाध्य[13] तन्निराकुर्वन्नाह–**ज्ञानस्य** इत्यादि ।

**[ज्ञानस्यातिशयात् सिध्येद्विभुत्वं[14] परिमाणवत् ।**
**वैशद्यं क्वचित् दोषमलहानेस्तिमिराक्षवत् ॥८॥**

**यथा···दोषा [वरणयोः क्षयात् वैशद्यम् मलहानेस्तिमिर···]**

**ज्ञानस्य विभुत्वं** सकलज्ञेयसाक्षात्करणलक्षणं **सिध्येत् ।** क ? **क्वचित्** मलविप-क्षभावनापर्यन्तवति पुरुष(षे) । कुतः ? इत्याह–**अतिशयाद्** वृद्धे[:]ज्ञानस्येति । कस्य वा[15] ? इत्याह–**परिणाम(परिमाण)वद्** इति । एतेन तत्र सुगतादेरपि विभुत्वं व्याख्यातम् ।

ननु तस्य भवतु विभुत्वम्, न च सकलव्यापिज्ञानस्य वा[ऽ]विशदस्य सकलस्य वा स्यादिति चेत् ; अत्राह–**वैशद्यम्** इत्यादि । **'ज्ञानस्य' 'अतिशयात्'** इति चानुवर्तते । तयोरति-शयात् । अत्र निदर्शनतिः(नं **मलहानेः)तिमिराक्षस्येव** तद्वत् ।

(१) अन्यथा। (२) अभावप्रमाणस्य। (३) द्वौ विकल्पौ। (४) प्रतिपक्षसापेक्षत्वात् असत्त्वसापेक्ष-सत्त्ववत्। (५) "सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना"–मी० श्लो० सू० ४ श्लो० ८४। (६) सर्वज्ञा-भाव। (७) सर्वज्ञप्रतिपत्तिः। (८) साकल्येन सर्वज्ञाभावप्रतिपत्तिः यदि न। (९)सर्वज्ञाभावप्रतिपत्तिः। (१०) "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां यद् बुद्धिजन्म तत्प्रत्यक्षम्"–मी० सू०। (११) 'वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता' इति शेषः। (१२) सर्वज्ञसत्ताम्। (१३) प्रमाणपञ्चकमित्यादि अभावप्रमाणग्रन्थम्। (१४) तुलना–"एतद्धि वर्धमानं यत्र निरतिशयं स सर्वज्ञः। अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य सातिश-यत्वात् परिमाणवदिति, यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः।"–योगभा० १।२५। प्र० मी० पृ० १२। (१५) 'वा' इवार्थः।

कारिका(कां)व्याख्यातुमाह–यथा इत्यादि । सुगमम् । कुतोऽस्य वैस्पष्टम (वैशद्यम्) इति चेत् ? अत्राह(अत्राह–)दोष इत्यादि । निदर्शनमत्राह–निस्ति(मलहानेरस्ति)मिर इत्यादि ।

स्यान्मतम्–'दोषावरणयोः[४२२ख]क्षयात् ।' इत्यत्रापि (इत्यत्रापि) नात्यन्तं क्षयोऽदर्शनात् सर्वात्मनस्य इति चेत् ; अत्राह–माणिक्यादेरित्यादि ।

५ [माणिक्यादेर्मलस्यापि व्यावृत्तिरतिशयवती ।
आत्यन्तिकी भवत्येव तथा कस्यचिदात्मनः ॥९॥

न ह्यत्रातिशयाद्धेतोः क्वचिद् व्यभिचारः इति । चैतन्याभावोऽस्त्येव, अज्ञानाद् ···आशास्त्रविदः]

**माणिक्यादेः** आदिशब्दात्[सु]वर्णादेः **अतिशयवती** वृद्धिमती **मलस्य** किट्टि-
१० कालिकादेः **व्यावृत्तिः आत्यन्तिकी भवत्येव कस्यचित्** मलप्रतिपक्षोपयोगप्रकर्षवतो[1] यथा **तथा आत्मनोऽपि** सा तथाविधा[2] भवत्येव इति ।

ननु बुद्धिव्यावृत्तिरपि अतिशयवत्यवती(शयवती) दृश्यते इति सापि क्वचित् आत्यन्तिकी स्यात्, अन्यथा हेतोर्व्यभिचार इति चेत्, अत्राह–न ह्यत्र इत्यादि । **न[हि]**खलु **अत्र** आत्मनि[**अति**]-**शयादिति[हेतोर्व्यभिचारः]**ततो यथा अचेतनस्य कर्मणः आत्मन्यभावः तथा आत्मनोऽपि
१५ कर्मणि अचेतनो(नसो)भाव इति साध्यान्तःपातित्वान्न व्यभिचारः इति । एतदेव दर्शयन्नाह–**क्वचिद्** इत्यादि । लोष्टादिरूपे पुद्गलादाव(दौ) **चैतन्याभावोऽस्त्येव** । कुतः ? इत्याह–**अज्ञान** इत्यादि । अा कुतः ? इत्याह–**आशास्त्रविद्** इति ।

ननु जैनस्य न निदर्शनमात्रतो हेतुर्गमकः अपि तु विपक्षे [illegible] , न च विशुद्ध्यभावे ज्ञानातिशयसाधकम् इति चेत् ; अत्राह–**ज्ञानम्** इत्यादि ।

२० [ज्ञानं निरुपमं नो चेत् वेद सर्वगतं स्वतः ।
सर्वज्ञविकलान् लोकान् कुतो वेदानकृत्रिमान् ॥१०॥

कृतमेतत्–उत्पाद···। अतो ज्ञानं द्रव्यं स्वभावं व्याप्नोत्येव । स्वविषये विपर्ययः परतः तिमिरादेः । प्रतिपक्षे सति रागाद्यपकर्षदर्शनात्, तत्प्रयोगातिशयवशात् दोषावरणविमुक्तेः कैवल्यसिद्धिः स्वभावोपलब्धिरेव न पुनः स्वभावातिक्रान्तिः । तन्न लङ्घ-
२५ नादिदृष्टान्तोऽपि ज्ञानस्वभावातिशयकाष्ठाप्राप्तिप्रतिरुणद्धि वैषम्यात् ।]

**ज्ञानं नो चे[त्]**नास्ति यदि कां(किं)भूतम् ? इत्याह–**निरुपमं** मलोत्तरम्[3] अतीन्द्रियं **विशदम**बाधम् । पुनरपि किंभूतम् ? इत्याह–**सर्वगतं** सर्वविषयपरिच्छेदनसमर्थम्, **स्वतः** स्वमहात्मा(स्वमाहात्म्यात्) नेन्द्रियाद्यपेक्षातः **कुतः** प्रमाणाद् **वेद** वेत्ति मीमांसको लौकायतिको वा **लोकान्** जगन्ति[४२३ क]किंभूतान् ? इत्याह–**सर्वज्ञविक-**

(१) शोधकोपायप्रयत्नप्रकर्षशीलस्य । (२) आत्यन्तिकी । (३) उदाहरणमात्रात् । (४) मलातीतम् निर्मलमित्यर्थः ।

**लानीति(नि)** । यदि वा **लोकान्** पुरुषान् **सर्वज्ञविकलान्** इति द्रष्टव्यम् ? **वेदान-कृत्रिमान**नादिनिधनान् **कुतो वेद** ? नहि तथाविधज्ञानमन्तरेण तद्वेद[न]संभवः इन्द्रिय-ज्ञानस्य तत्रासामर्थ्यात् , अनुमानाभावात् ।

ननु [1]इदमस्ति–विवादगोचरो [दे]शकालौ सर्वज्ञविकलौ(लौ) तत्रादा([2]तत्त्वात् आ)सन्न-देशकालवदिति चेत् ; न ; उक्तमत्र–अन्यथानुपपत्तिरहितत्वादहेतव इति, अन्यथा कंचिद्देश ५ (शं)कालं वा पण्डितपुरुषरहितं स्वमातृविवाहरहितस्योपलंभस्य(रहितं वोपलभ्य) सर्वे([3]सर्वान्) तथा किन्न साधयेत्(न)? पर्यायेण[4] नरान्तरेण वा तस्य दर्शनं[न] सर्वज्ञस्येति किंकृतमेतत् ? आग-मस्य [5]तदभावे अप्रमाणत्वात् , [6]विधा(ध्या)दिविषयत्वाच्च । उपमानन्तु भूतं(त) देशकालं(ल) न-स्माक्षात्करणमन्तरेण दूरोत्सारितमेव, सर्वोपमानोपमेये तदयोगात् । अर्थापत्तिः पुनः सर्वज्ञ(ज्ञा)-भावमन्तरेण कस्यचिदनुपजायमानस्य अर्थस्य अभावात् अयुक्ता वा(क्तैव) । १०

एतेन वेदानादित्वमपि चिन्तितम् । नहि तत्रानुमानम् ; लिङ्गाभावात् । कर्तुरस्मरणादयः कृतोत्तराः । आगमात्(मात्तद्)कृत्रिमत्वसिद्धिरिति चेत् ; कुतः तस्य प्राभाण्यम् ? [7]तत एव इति चेत् ; अन्योऽन्यसंश्रयः–सिद्धे तदकृत्रिमत्वे ततः प्रामाण्यम्, अतश्च तत्सिद्धिरिति । न चापरं वाक्यं तथाविधमस्ति येन तस्मादन्यस्माद् वेदस्य तत्सिद्धि[:]स्यात् । नापि तदन्तरेण किञ्चित् प्रतिपन्नमनुपपन्नमस्ति[४२२ख]येन अर्थापत्त्या[अ]कृत्रिमत्वप्रतिपत्तिः स्यात् । केवलं(लं) १५ प्रत्यक्षमवशिष्यते । तच्चेद्(दं) अनाद्यनन्तकालविपर्यीकरणेऽसमर्थं चेत् ; तत्ततः कुतः तत्प्र-तिपत्ति[रिति] ?

**'ज्ञानं निरुपमं सर्वगतमस्ति'** इत्येतद् व्याख्यातुमाह–**कृतमेतद्** इत्यादि । **कृतं** निश्चितमेतत् । किम् ? इत्याह–**उत्पाद** इत्यादि । निगमयन्नाह–**अत** इत्यादि । **अतो** न्यायात् **ज्ञानं** कर्तृ **व्याप्नोति एव** विषयीकरोत्येव । किम् ? **द्रव्यम्** । किंभूतम् ? इत्याह–**स्वभाव** २० इत्यादि । [8]सर्वस्याविशेषात् तत्तद् व्याप्नुयादिति चेत् ; अत्राह–**स्वविषय(ये)** लोकालोकरूपे **तद्विपर्ययः** तस्य ज्ञानस्य अप्रवृत्ति-अवैशद्य-मिथ्यात्वलक्षणो **विपर्ययः** 'जायते' इत्यध्याहारः । कुतः ? इत्याह–**परतः** कर्मणः । **'तिमिरादेः'** इत्यादि अत्र निदर्शन(नम्) । कुतः तत्प-रिक्षयलक्षणा सिद्धिः ? इत्याह–**प्रतिपक्ष** इत्यादि । दोषावरणयोः **प्रतिपक्षः** सम्यग्दर्शनादिः **तस्मिन् सति रागाद्यपकर्षदर्शनात्** [10]अदृष्टपूर्वार्थदर्शनाद् उपनिबन्धादेः अनन्यकर्तृकस्य प्रवर्त- २५ नात् । न चावरणविगमाभावे स्वविषयोन्मुखता ज्ञानस्य, तिमिरोपहतलोचनस्य तथा[ऽ]दर्शनात् । [11]**तस्य प्रयोगः** समग्रता तस्यातिसएवसात्(तिशयवशात्) **दोषा** रागादिः व्याख्यातः प्र मा ण

(१) "अतीतोऽपि कालः सर्वज्ञशून्यः कालत्वात् इदानीन्तनकालवत् ॥"–मी० श्लो० ता० पृ० ७५। (२) देशत्वात् कालत्वाद्वा । (३) पारसीकदेशान् स्वमातृविवाहशून्यान्, कालांश्च पण्डितरहितान् । (४) क्रमशः, कालान्तरे कश्चिदपण्डितोऽपि पण्डितो भवति । (५) सर्वज्ञाभावे । (६) वेदागमस्य कार्येऽर्थे प्रामाण्यात् न तु स्वरूपे । (७) अकृत्रिमत्वादेव । (८) प्रमाणसिद्धं वस्तु । (९) सर्वात्मना स्वभाव-सद्भावात् । (१०) सर्वथा नूतनपदार्थदर्शनात् । (११) प्रतिपक्षस्य सम्यग्दर्शनादेः ।

गं म ह भः ये, **आवरणं** ज्ञानादिप्रच्छाद[कं]कर्म **तयोः वियुक्तेः**(विमुक्तेः)सकाशात् **कैवल्य-सिद्धिः** । किंभूता ? इत्याह–**स्वभावोपलब्धिरेव** ।

स्यान्मत[म् अ]सर्वज्ञस्य सर्वज्ञत्वकल्पने [४२४ क]स्वभावातिक्रमो भवेदिति ; तत्राह–**न पुनः** नैव **स्वभावस्य** किञ्चिज्ज्ञत्वस्य **अतिक्रान्तिः** [1]तत्कल्पने जीवस्य तत्स्वभावात्[2]
५ [अभावः स्यात् ] ।

तत्रे(दे)वम् आत्मस्वभावे सर्वज्ञत्वे सिद्धे सति सिद्धं फलं दर्शयन्नाह–**तत्र** इत्यादि । यत एवं ज्ञानस्यातिशयाद् विमुक्तम् आत्मस्वभावं मलक्षयसाध्यत्वादपुनय(र्य)त्नसाध्यं **तत्तस्मा-नु(न्न) लङ्घनादिदृष्टान्तोदृ्या(न्तोऽपि, आ)दि**शब्देन उदकतापपरिग्रहः, **ज्ञानस्त(स्व)भावा-तिशयकाष्ठाव्याप्तिम् उपरुणद्धि** निराकरोति, दृष्टान्तेन तया(तस्या[3])**वैषम्यात्** ।

१० स कि(तत् कि)कारणं स्वभावोपलब्धिरेव सिद्धिर्न पुनः अविद्यमानधर्मा वा तमिति (?) चेत् ; अत्राह–**नहि** इत्यादि ।

**[न हि तत्कर्तुमशक्यत्वादक्षलिङ्गादिभिः [स्वयम्] ।**
**स्वविषयं व्याप्नुयाज्ज्ञानं नान्यथा······॥११॥**
**न किञ्चित्प्रतिपद्यं न विप्रकर्षादयं कथम्॥ १ ॥]**

१५ **[हि]**यतः **तस्या[ः]कर्तुमशक्यत्वात् अक्षलिङ्गादिभिः आदिशब्दाद्** आगमा-भ्यासधर्मादिपरिग्रहः,**स्वविषयं** सद्दासद्वर्ग([4]सदसद्वर्ग)लक्षणम् **व्याप्नुयात् ज्ञानं नान्यथा** न स्वतो दोषावरणापाये इति स्यात् । नहि आकाशादीनां बुद्ध्यादिसमवायिकारणत्वशक्तिरहितं (तत्त्वं)स्वतः अन्यतः तत्सहितं क्रियते, पदार्थस्वभावव्यवस्थाभावापत्तेः । अथ आत्मनः सकल-विषयग्रहणस्वभावज्ञानजनिका शक्तिः आत्मभूता[न]अन्येन क्रियते; आत्मनोऽपि क्रियाप्रसङ्गात् ,
२० ज्ञानं तु क्रियते इति चेत् ; उच्यते–[5]परया शक्त्या स(स्वभाव)भूतया स[6] ज्ञानं भिन्नम् उपजनयति[7], तथैव अर्थस्य ग्राहकोऽस्तु किं [8]भिन्नकल्पनया ? अथ भिन्नज्ञानमन्तरेण [9]तद्ग्रहणं नास्ति ; भिन्नशक्तिमन्तरेण तज्जननं मा भूत् । तथेति चेत् ; युक्तम् अत्र शक्तेरेव[४२४ ख]ज्ञानाभाव (ज्ञानभावे[10]:) सैव[11] तत्समयकारिणम्(तत्समवायिकारणम्)इत्यकारक आत्मेति तदवस्तुत्वम् । समवायनिषेधा[त् ]न सा तत्र समवेता । [12]सतोऽपि तस्याऽविशेषाद्[13] आकाशादेरपि सा न किम् ?
२५ यदि पुनः सम्बन्धस्याविशेषेऽपि सम्बन्धिनोर्विशेष इष्यते ; स कुतो मतः ? स्वयोगता(योग्यता) शक्तिः उन्य(न्य)ते,[त]स्या अपि ततो भेदे अनवस्था । अभेदे ; आद्यापि तथैवास्तु किं तद्भेद-कल्पनया इति स एव दोषः ।

किंच, शक्तेस्ततो भेदे नित्यत्वे व्यापित्वे च, अन्यथा न सर्वत्र सर्वदा ज्ञानोदयः, इति न

(१) स्वभावातिक्रान्तिकल्पने । (२) तत्स्वभावत्वात् । (३) ज्ञानस्वभावातिशयकाष्ठावाप्तेः । (४) सद्वर्गः द्रव्यगुणकर्मरूपः सत्तासामान्यसम्बन्धवान् , असद्वर्गश्च सामान्यविशेषसमवायात्मकः सत्तासम्बन्धरहितः स्वतःसन् इत्यर्थः । (५) द्वितीयया । (६) आत्मा । (७) चेत् । (८) भिन्नज्ञान । (९) अर्थग्रहणम् । (१०) ज्ञानात्मकत्वपरिणतिः । (११) शक्तिः । (१२) समवायस्य । (१३) समानत्वात् ।

युक्तम्-*"**सर्वगत आत्मा सर्व[त्र]उपलभ्यमानगुणत्वात्**" इति। यदि पुनः अन्यत्र अन्यदा [1]सा केनचित् क्रियते; कथं तद्रहितेन[2] तत्करणम् ? अन्यथा गगनादावपि तत् स्यात्। अयोग्यत्वान्नेति चेत् ; किं पुनः आत्मनि तद्योग्यम(ग्यताऽ)स्ति ? भिन्नं(अस्ति भिन्ना;) तथा चेद्नवस्थापरा[3] ततो नित्यव्यापिनी च सा इति किम् आत्मना ? तत एव तत्कार्यसिद्धेः। सैव आत्मा इति चेत्, अनुवद्धः प्रसङ्गा(ङ्गः-)ज्ञानोत्पाद-तदर्थग्रहणं [4]तयैवाऽस्तु इति। यदि पुनः भिन्नं ज्ञानत्व(ज्ञानं न)ग्रहणम् ; तर्हि भिन्ना शक्तिः [न] तज्जननमिति, शक्तेऽपि अपरा शक्तिः इत्यनवस्था चक्रकं शक्त्यन्तरस्य नित्यत्वसर्वगतत्वे। तन्न आत्मनो भिन्ना शक्तिः।

ननु यदि सैवार्थस्य ग्राहिका, तर्हि तस्याः सर्वस्य सर्वत्र सर्वदाऽविशेषात् सर्वोऽपि सर्वदर्शी स्यादिति चेत् ; न ; तज्ज्ञानस्यापि ततः सर्वत्र सर्वदा सर्वस्योत्पत्तिप्रसङ्गादिति [४२५क] परपक्षेऽपि स एव दोषः। सहकार(रि)वैकल्यान्नेति चेत् ; यथा तर्हि [5]तद्वैकल्यात् ज्ञानं न जनयति ; तथा आवरण(णा)वैकल्यादर्थं न गृह्णाति। [6]तस्य आवरणेन किं क्रियते ? तद्वैकल्येन[7] किं क्रियते ? न किञ्चिदिति चेत् ; आवरणेनापि न किञ्चित्। अर्थग्राहिका कुतो नेति चेत् ; ज्ञानवत् जनिका कुतो नेति समानम्। अथ [8]तस्या ईदृशः स्वभावो यतस्तद्वैकल्यान्न जनयति अपि तु सहकारिसाकल्याज्जनयति; तर्हि ईदृशोऽपि स्वभावोऽस्तु येन आवरणसद्भावे न प्रकाशयति अर्थम् अपि तु तद्वैकल्ये,भावशक्तेः अचिन्त्यत्वात् इति। तत्त्वा(तदा)वरणेना(णेन) न चेत् तत्स्वरूपखण्डन-(नम् ;) किं तेन ? तच्चेत् ; सौगतमतमिति चेत् ; सहकारिणा न चेत्तस्याः किञ्चित् क्रियते ; नान्यथा(नापेक्षा[10] इति)स एव दोषः। यथा [11]तत्सान्निध्येन करोति, तथा आवरणसान्निध्ये न ज्ञानस्वभावातिशयकाष्ठास्तु परोव(काष्ठापि, अपरेण)प्रकारेण **अन्यथा कथमयं प्रतिपद्येत।** किम् ? इत्याह-**न कश्चित्** इ (**किञ्चित्** इत्यादि)। सुगतम(सुगमम्)। अत्र हेतुमाह-**विप्रकर्षादि**वति(दिति) स्वभावादिव्यवधानात्।

अनन्तरार्थस्य(र्थं) *"**दशहस्तान्तरं व्योम्नीत्योम्नि(व्योम्नि यो नामोत्प्लुत्य गच्छति।**" [तत्त्वसं० पृ० ८२६ पूर्वपक्षे] इत्यादिकं प्रकारान्तरेण निराकर्तुं[12] **'यदि नाम'** इत्यधिकां **'दशहस्तान्तरम्'** इत्यादिकां कारिकामाह-

> **[यदि नाम**
> **दशहस्तान्तरं व्योम्नो नोत्प्लवेरन् भवादृशः।**
> **योजनानां सहस्रं किन्नोत्प्लवेत पक्षिराडिति ॥१२॥**

**वीर्यान्तरायक्षयातिशयवशात् लङ्घनादिशक्तेरतिशयप्रतिपत्तेः आगरुडादनिवारणात् सातिशयपुरुषोपपत्तिः।]**

---

(१) योग्यताशक्तिः। (२) शक्तिरहितेन। (३) द्वितीया। (४) शक्त्यैव। (५) सहकारिवैकल्यात्। (६) आत्मनः। (७) सहकारिवैकल्येन। (८) शक्तेः। (९) अनित्यत्वापत्तिरिति। (१०) सहकारिणोऽपेक्षा न स्यात्। (११) सहकारिसान्निध्येन। (१२) कुमारिलमतम्। श्लोकोऽयं कुमारिलोक्तमिति कृत्वा तत्त्वसंग्रहे उद्धृतः। 'न योजनशतं गन्तुं शक्तोऽभ्यासशतैरपि' इत्युत्तरार्धम्।

**दशहस्तान्तरं व्योम्नो नोत्प्लवेरं(रन्) भवादृशाः यदि नाम, योजनानां सहस्रं किन्नोत्प्लवेत पक्षिराड्** (पक्षिराट् ? उत्प्लवेत्) वैनेय । ओन्यन्तरत्वम[४२५ख] अन्यत्रापि नास्ति (तम्), युक्तं तस्य मनुष्य इति स पश्येत सधुना नरैः चालिमिरिति (?) वैनतेयस्या-दर्शनात योजनसहस्रोत्प्लवनम असिद्धमिति चेत ; न ; भेरुण्डादीनाम इतरपक्ष (पक्ष्य) पेक्षया सातिशयोत्प्लवनदर्शनात वैनतेये तदनिवार्यम इत्येवमुक्तत्वात ।

ननु च भेरुण्डस्य तदुत्प्लवनं जातिमात्रभावित्वात सहजम, पुरुषस्य तु ज्ञानातिशयो लङ्घ-नवदभ्यासजः इ[ति]तद्वन्नियतो युक्त इति चेत ; अत्राह–**वीर्यान्तराय** इत्यादि । **वीर्यं** सामर्थ्यं तस्य **अन्तरायः** यतोऽध्यावारंभः (ध्यनारम्भः) कर्मविशेषः तस्य **क्षयातिशयो** विश्लेषविशुद्धिः तस्य वशा (वशात्) **लङ्घनादिशक्ते रतिशयप्रतिपत्तेः** । आकुत (आ कुतः ?) इत्याह–**आगरुडाद् निवारणात्** कारणात **सातिशयस्य पुरुषस्य उपपत्तिः** सातिशयोपपत्तिः । एवं मन्यते [न] गरुडस्य सहजं लङ्घनम, अपि तु तद्विघातिकर्मक्षयजम, तथा प्रकृतमपि स्यादिति । कर्मादि (कस्मादि)दमवगम्यते ? आत्मनि वीर्यं सदेव केनचिद् आहतं तत्क्षयाद् व्यज्यते, न पुनः ज्ञात्यादेः अस्मदेव भवतीति चेत ; आत्मविशेषगुणत्वा[त]ज्ज्ञानवदिति ।

ननु यदुक्तम्–'**दोषावरणविमुक्तेः कैवल्यसिद्धिः**' इति ; तत (तत्र) दोषविमुक्ते[ः] सर्वज्ञेऽपि वक्तुर्य (वक्तरि अ)संभवात क्वचित, तत्प्रतिज्ञायाः[3] वचनलिङ्गजरा[गा]द्यनुमानेन बाधनात । [4]वचनं हि रागादिमत्कार्यमिति चेत ; अत्राह–**वचो रागादिमत्कार्यम्** [४२६क] इति ।

**[वचो रागादिमत्कार्यं सर्वं चेच्चोदना कथम् ।**
**प्रमाणं नित्यता तासां वक्तारः किं करिष्यते ॥१३॥**

**सर्वो वक्ता तत्त्वादेव रागादिमान् तत एव अविशेषेण यद्यप्रमाणम् ; कथं वेदस्य प्रामाण्यम् ? वाक्यानां[नित्यत्वे]ताल्वादिव्यापारवैफल्यम् अन्यथा अभिव्यक्तिः क्रियते न वाक्यमिति किंकृतमेतत् ? न च वैदिकवाक्यानि तत्त्वाविशेषेऽपि वक्तृदोषैर्नोपलिप्ये-रन् यतः प्रवचनमितरस्मात् विशेषयेत्, नान्यथा । न च वाक्यम् [इच्छाकार्यम् ]गुमादौ अन्यथापि दर्शनात् । बुद्धि[करणपाटवहेतुकं वाक्यम् ] तच्च ज्ञानपाटवं स्वकार्यं पर-स्मात् विशेषयेत् । न तन्नित्यवाक्यं तत्त्वतः, व्याख्याविप्रतिपत्त्यभावप्रसङ्गात् । वाक्या-न्तराणां चैतन्यनान्तरीयकत्वं न वेदवाक्यानामिति स्वभावातिक्रमो माभूत् । तत्...। ]**

अत्रेदं विचार्यते–सर्वं वचनं रागादिमत्कार्यम्, अथ किञ्चित् ? किञ्चिच्चेत् ; यदा (यद्) दृष्टकर्तृकं तत्तथा[6] कुतोऽवगम्यते ? अत (अन्य) दृष्टकर्तृकसाम्या[त्]चेत ; कुतः साम्यम ?

(१) गरुडः पक्षिजातीयः, इतरस्तु मनुष्यजातीय इति भिन्नजातीयत्वम् । (२) वीर्यमुत्पद्यते । (३) दोषविमुक्तिप्रतिज्ञायाः । (४) "अयं च वक्तृत्वाख्यो हेतुः 'यस्य ज्ञेयप्रमेयत्ववस्तुसत्त्वादिलक्षणाः' इत्यत्र आदिपदेन आक्षिप्त एवेति ।"–तत्त्वसं० प० पृ० ८८१ । (५) "ततश्चैतन्यकरणपाटवयोरेव साधकतमत्व-मिति ॥"–अष्टस० पृ० ७३। (६) रागादिमत्कार्यमिति ।

वर्णादेः इति चेत् ; सोऽयं वर्णादिः सर्वत्र समानः [1]तथा प्रत्यभिज्ञाना[न्न]वा किञ्चिद् इत्य-युक्तम्–*"**असदर्थाभिधानाद्**" इति चेत् ; असदर्थविषयं तर्हि वचनं रागादिमत्कार्य [मिति] तत्कर्तुरेव रागादिमत्त्वं नान्यस्य इति सिद्धसाधनम । यदि पुनः **सर्वं वचो** वचनं सर्वतत्त्वादे (सर्वज्ञादेः) **रागादिमत्कार्यं चेद्** यदि **चोदना** वेदवचांसि **कथं प्रमाणम्** [2]तत एव तद्वत [3]तत्कार्यत्वात् ।　५

ननु सर्वकर्तृकं सर्व (वं) तत्कार्यम उच्यते, चोदना पुनरकर्तृका नित्यत्वेन इति चेत् ; अत्राह–**नित्यता** इत्यादि । **तासां** चोदनानां सम्बन्धिनी **नित्यता** तासामेव **कर्तार (वक्तारः) किं करिष्यते** ? ते च तस्याः प्रमाणाभावेन निश्चेतुमश [क्यत्वा]त् । न हि [4]सा सत्यपि प्रत्यक्षेण निश्चीयते, तन्निश्चेतुः सर्व[ज्ञ]तापत्तेः । तदुक्तमत्रैव–'**ज्ञानं निरुप-मम्**' इत्यादि । केवलं कर्तुः [अ]स्मरणात (त्) साध्यते ; तदपि [5]जीर्णकूपादिना व्यभिचारी-त्यभ्यायतनन (रीत्यभिधाय तत्) निरस्यति । यदि वा, व्यभिचारिणी[6] प्रवचनादौ भावा[त्] इत्युक्तम । यद्वा, अन्यथा विचार्यते–कूटस्थनित्यता, परिणामनित्यता वा हेतुः स्यात ? प्रथमपक्षोऽ-युक्तः; प्रतिषिद्धत्वात् । द्वितीयोऽपि सुवर्णादौ [8]तस्यामपि सुवर्णादौका (सुवर्णका) रादिसाफल्यात्[9] ।　१०

कारिका ख्या (कां व्याख्या) तुमाह–**सर्वो वक्तव्ये**(**वक्त**)त्यादि । [**सर्वो**]निरवशेषो **वक्ता** [10]**तत्त्वाद**[**व**]**रागादिमान्** '[11]वचनं सर्वलिङ्गम' इति लिङ्गपरिणामेन सम्बन्धः । **तत एव वक्ता** (वक्तुः) रागादिमत्त्वादेव[४२६ ख]**अप्रमाणमविशेषेण यदि कथं वेदस्य प्रामाण्यम्** ? वेदस्य कर्ता नास्तीति चेत ; अत्राह–**वाक्यानाम्** इत्यादि । **ताल्वादिव्यापारवैफल्यम्** , **अन्यथा व्यक्तिरयतो** (रभिव्यक्तिः) **क्रियते न वाक्यम् इति किं कृतमेतत्** ? निरूपितं चैतत् ।　१५

ननु वैदिकाः शब्दाः स्वत एव अर्थमभिदधति न पुरुषात् ; [12]ततः कृत्रिमत्वेन अप्रामाण्यं तेषामिति चेत ; अत्राह–**न च** इत्यादि । [**न च**] नैव **वैदिकवाक्यानि वक्तृदोषौ ताप-** (**दोषैर्नाप**) **लिप्येरन्** [किन्तु] उपलिप्येरन्नेत्वा (रन्नेव, तत्त्वाऽ) **विशेषे**ऽपि पुरुषपूर्वकत्वाविशे-षेऽपि । न केवलं पूर्वोक्तविधिना [यतः] नित्यत्वविशेष (षो) वचनस्य सर्वज्ञत्वंप्रवचम (सर्वज्ञोक्तं **प्रवचनम्**,) **इतरस्माद्** वेदादविशेषयेत (वेदात् **विशेषयेत्**) प्रमाणत्वेन भिन्नं ततो व्यवस्थापयेत नान्यथा नप्रकाराण (नान्येन प्रकारेण) ।　२०

ननु चोक्तम्–'**रागादिमत्कार्यं वचः सर्वम्**' इच्छाया रागादिविशेषत्वादिति चेत् ; **न च वाक्यम्** इत्यादि । कुतः ? इत्याह–**सुप्तादौ** आदिशब्देन अन्यत्रगतचित्तादौ **अन्यथापि** [13]समनन्तरेच्छाहितप्रयत्नाभावेऽपि दर्शनाद्वास्येति (**दर्शनात्** 'वाक्यस्य' इति) किं तत्कारणम ? इत्याह–**बुद्धि** इत्यादि । सुप्तादौ बुद्धिव्यवस्थापनात् न व्यभिचारः[14] । अथ सर्वस्य [15]तत्पूर्वकत्वा-　२५

(१) वर्णत्वेन । (२) वचनत्वादेव । (३) रागादिमत्कार्यत्वात् । (४) नित्यता । (५) प्रस्तावे । (६) कर्तुरस्मरणम् । (७) नित्यता । (८) परिणामनित्यतायामपि । (९) कटककुण्डलादिपर्यायोत्पादने । (१०) वक्तृत्वादेव । (११) वचनशब्दः । (१२) यदि पुरुषात् अर्थमभिदध्युः तदा । (१३) अव्यवहित-पूर्वकालीनेच्छाप्रेरितयत्नाभावेऽपि । (१४) बुद्धिकरणपाटवाभावेऽपि वचनोत्पत्तिलक्षणः । (१५) बुद्धिकरण-पाटवपूर्वकत्वेऽपि ।

विशेषे कथमन्योऽन्यं समयानां भेद इति चेत् ; अत्राह–**न च (तच्च) ज्ञानपाटवं** जीवादिज्ञान-पाटवं **स्वकार्यं** प्रवचन(नं) **परस्मात्** सुगतादिवचनात् **विशेषयेत्** । दृश्यते हि तरज्ञाति (तत्त्वेतरज्ञानि) वचसां सत्येतरतया भेदः । तत्पाटवं नित्यं वाक्यं परस्माद् विशेषयेत् स्वकार्यम् इति चेत् ; अत्राह–**तन्नित्यवाक्यं तत्ततो** [४२७क] **[न]विशेषयेत्** । कुतः ? इत्याह–**व्याख्या-**
५ **विप्रतिपत्तेरभावप्रसङ्गात्** । एवं मन्यते–यदि नित्यत्वं स्वयं स्वार्थ(र्थं) प्रतिपादयेत्, युक्तमेतत्, न चैवम् । तद्विप्रतिपत्त्यभावप्रधानता वा निर्देशः, न नित्यत्वं वाक्यं परस्माद् विशेषयेत् । कुतः ? इत्याह–**व्याख्यानता (व्याख्याविप्रतिपत्त्य)**इत्यादि । तत्र यदुक्तम् 'वाक्यं बुद्धिपूर्वकमेव इति नियमः स्यात्' इति ; तन्न सुभाषितम् । वैदिकवाक्यस्य अन्यथा भावादिति चेत् ; अत्राह–**चैतन्य** इत्यादि । चैतन्यनान्तरीयकत्वं बुद्धिपूर्वकत्वं **वाक्यं नराणाम् (वाक्यान्त-**
१० **राणाम्)** प्रवचनादिवाक्यानां कथं साक्यकल्पितानवयवत्वेनात (शक्यकल्पितम् अवयवत्वेन **न**) **वेदवाक्यानां** तन्नान्तरीयकत्वम् इत्येवं यः परेण **स्वभावातिक्रमः** कल्पितः सर्वज्ञवीतरागवादिनं प्रति स्वभावातिक्रमं दोषं वदतापि **स मा भूत्** । कुतः ? इत्याह–**तत्ते (तत् श्रुतेः** इ)त्यादि । **तत्** सुगादौ इच्छाव (इच्छाऽप्यभि) चारि बुद्धिपूर्वकं कृत्वं (वक्तृत्वं) **श्रुतेः** वेदस्य **पौरुषेयत्वं** सावयवत्वे च (**साधयत्येव**) यतः तत्साधने निःकलत्वात् (?) ।

१५ ननु वाक्यत्वं स्यात् न च श्रुतेः पौरुषेयत्वं साधयिष्यति, विपक्षव्यावृत्तेः सन्देहादहेतु-[रित्याह–] **पुरुषातिशयः सिद्धः** इत्यादि ।

**[पुरुषातिशयः सिद्धस्तथैवेत्यनुमीयते ।**
**सर्वज्ञाभावसंवित्तेस्त्वन्यथानुपपत्तितः ॥१४॥**

**नित्यं वेदं ब्रुवतामपि सर्वज्ञो वीतदोषः सिद्धः । कुतः ? सकल···यथासमयं···**
२० **कर्तुरस्मरणात् वेदनास्तिक्यवचनाद्योः नित्यत्वाविशेषात् । न च सर्वत्र···। कथं [सर्वज्ञोऽसर्वज्ञैः ज्ञायते] यतः प्रवृत्तिकामस्तत्प्रवचनं प्रतिपद्येत । तदन्यत्रापि समानम् ।]**

**तथैव** इति श्रवणात् यथैव **इत्यनुमीयते** यत्तदोर्नित्यसम्बन्धात् । ततोऽयमर्थः–यथैव चान्यत्वा (वचनत्वाऽ)विशेषेऽपि आगमस्य वेदस्य नित्यता न परस्य, वक्तृत्वाद्यविशेषेऽपि पुरुषस्यातिशयः सर्वज्ञवीतरागादिलक्षणः सिद्धः तथैव, अन्यथा तन्नित्यतापि[४२७ख]माभूद-
२५ विशेषात् । नाविशेषे(षः) वेदे नित्यतानिबन्धनस्य प्रामाण्यस्य भा[वात्] पुरुषे त्वतिशयनिबन्धनस्य विपर्ययादिति चेत् ; न; अस्य (आगमस्य) तदतिशयनिबन्धनत्वेन प्रतिपादयिष्यमाणत्वात् अत्रैव । 'कर्त्रभावः तन्नित्यत्वनिबन्धनम्' इत्यपि तादृगेव । नहि सकलदेशकालकलापव्यापी व्यामीश (कलापव्यापी र्सः) तदतिशयमन्तरेण प्रत्येतुं शक्यः । तमन्तरेणात् (ण तत्) प्रतीयते

(१) शास्त्राणाम् । (२) आगमः । (३) चैतन्यनान्तरीयकत्वम् । (४) मीमांसकेन । (५) वेदनित्यतापि । (६) प्रामाण्यान्यथानुपपत्तेः नित्यो वेद इति । (७) वेदनित्यत्व । (८) कर्त्रभावः । (९) पुरुषातिशयमन्तरेण ।

इत्यनुक्तसमम् । यतः प्रा[ण]भृन्मात्रदर्शनेन यदि पदार्थसत्तामात्रं व्याप्यते तद्दर्शनं च स्मरणेन, युक्तमेतत् स्यात् , न चैवमिति ।

स्यान्मतम्–सर्वज्ञस्याभावात् न स[1] वेदस्य कर्त्ता, तस्यधेयतो(अन्यस्य च इयतो)ग्रन्थ-प्रबन्धस्य परोक्षेऽर्थे प्रमाणभूतस्य करणाऽसामर्थ्यात् सिद्धा तन्नित्यता[2], नैवं तदतिशयः, एवं-विधा(धो)पायाभावादिति ; अत्राह–**सर्वज्ञ(ज्ञा)भावसंवित्तेस्वा(स्त्व)न्यथानुपपत्तिनः पुरुषातिशयः सिद्धः** इति घनायमृदु(घटनात् । यत्तु) सर्वज्ञस्याभावानु(वान्न) स वेदस्य कर्ता इति, साकल्येन तदभावे[3] निश्चिते सति[4], शङ्का[ऽ]निवृत्तिरन्यथा[5] तन्निश्चयोऽपि[6] सर्वज्ञाद् इति भावः । ५

कारिकां व्याख्यातुमाह–**नित्यम्** इत्यादि । **नित्यं वेदं ब्रुवतामपि** न केवलमन्येषाम् **सर्वज्ञो वीतदोषः सिद्धो** वाक्यत्ववत् वक्तृत्वादेरपि सदोषत्वात् इति । युक्त्यन्तरं दर्शयितुं ‘**कुतः**’ इति पृच्छति । तदाह–**सकले**त्यादि । अनेन **सर्वज्ञ[:]सिद्ध** इति दर्शयति, ‘**यथा समयम्**’ इत्यादिना **वीतदोष** इति च[४२८क] नित्यत्वादेवं वेदो[न]नास्तिक्यवचनादिकम् अनित्यम् अविशेषत इति चेत् ; अत्राह–**कर्तुरस्मरणाद्** इत्यादि । **वेदनास्तिक्यवचनायो[:] नित्यत्वाऽविशेषात्** । यदि वा, नित्यत्वाद् वेदः प्रमाणम् नान्यो विपर्ययात् ; तत्र हेतोः व्यभिचारं दर्शयन्नाह–**नत्र (नच)** इत्यादि । अनेन वेदवत् मातृविवाहादेरप्रमाणस्यापि नित्यत्वं दर्शयति । प्रमाणं सोऽपि[7] चेत् ; वेदार्थवद् अनुष्ठेयत्वम् । कर्त्ता तस्य स्मर्यत इति चेत् ; अत्राह–**सर्वत्र** इत्यादि । १० १५

ननु भवतु सर्वज्ञः, सत्त्यसर्वज्ञेन(स तु असर्वज्ञेन)तज्ज्ञानज्ञेयविज्ञानरहितानेवा(रहितेनाव)गन्तुं न शक्यते । तदुक्तम्–

*"स[र्व]ज्ञोऽयमिति ह्येतत्तत्कालेऽपि बुभुत्सुभिः ।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥" २०

[मी० श्लो० चोदना० श्लो० १३४]

सर्वज्ञेन ज्ञायते;तन्मतेन सर्वज्ञप्रसङ्गात् । एतदप्युक्तम्–

*"कल्पनीयाश्च सर्वज्ञा भवेयुः बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥" २५

[मी० श्लो० चोदना० श्लो० १३५] इति ।

एतदेवाह–**कथम्** इत्यादि । मा ज्ञायता(तां) किं तेन ज्ञातेनेति चेत् ; अत्राह–**यत** इत्यादि । **यतो** यस्मात्वृद्धि(स्मात्तद्वि) ज्ञानात् **प्रवृत्तिकामः तत्प्रवचनं** सर्वज्ञप्रवचनं **प्रतिपद्येत**। तदुक्तम् *"**सर्वज्ञो येन न ज्ञातः**" [मी० श्लो० चोदना० श्लो० १३६]इत्यादि । इति चेत् ; अत्राह–**तद्** इत्यादि । **तत्** परकीयचोद्यम् **अन्यत्रापि** परमतेऽपि **समानम्** । ३०

(१) सर्वज्ञः । (२) वेदनित्यता । (३) सर्वज्ञाभावे । (४) स्यादिति । (५) तदभावो यदि न निश्चितस्तदा । (६) साकल्येन सर्वज्ञाभावनिश्चयोऽपि । (७) वेदः प्रमाणम् । (८) "सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति । तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥"–मी० श्लो० ।

एतदेव दर्शयन्नाह–**सर्वात्मज्ञान** इत्यादि ।

**[सर्वात्मज्ञानविज्ञेयाज्ञ यतत्त्वं विवेचयन् ।**
**नो चेद्वेत्ति कथं तस्य सर्वज्ञाभाववित्स्वयम् ॥१५॥**
**तज्ज्ञेयज्ञानवैकल्यात् यदि बुध्येत न स्वयम् ।३।**

नहि ...पुरुषविशेषस्यापि वक्तृत्वादिसामान्यादसर्वज्ञत्वसाधनेऽपि समानमेतत् , विपक्षेऽभावासिद्धेः ]

**सर्वे** स्थावरप्रभृतयः सकलजगद्वासिन **आत्मानो** जीवाः तेषां च यानि[**ज्ञानानि**] यत्र **विज्ञेयं** परिच्छेद्यम **अज्ञांयं(अज्ञेयम)** अपरिच्छेद्यं **तत्त्व(त्त्वं) तद्विवेचयन** प्रत्यक्षेण जानन , अन्यस्य तत्राव्यापारादिति निरूपयिष्यते[४२८ख] मीमां[सकः] सर्वज्ञः स्यात्।
१० यथैव हि सर्वज्ञस्य ज्ञानं तद्विज्ञेयतृत्वम (यतत्त्वं) वा जानता(वाऽजानता) 'सर्वज्ञोऽयम' इति ज्ञातुं न शक्यते, तज्ज्ञानेव (तज्ज्ञाने च) सोऽपि सर्वज्ञः, तथा सर्वात्मना(नां) तज्ज्ञानानांविज्ञेयाग्राज्ञयं(विज्ञेयाज्ञेय) तत्त्वस्य वा[अ]साक्षात्करणे एतेनाम(एतच्च) नुजानाति प्रवृत्तिम अन्यत्रने त्यजानेन (अन्यत्र नेत्यजानन) कथं साकल्येन सर्वज्ञाभाववित ? जानन् स एव सर्वज्ञः इति । तथा च *"**धर्मे चोदनैव प्रमाणम्**" *"**नान्यत् किञ्चन इन्द्रियादिकम्**" [शाबरभा०
१५ १।१।२] इति भाष्यं स्तवते (प्लवते) । सर्वज्ञत्वेन आत्मानं यदि स्वयमेव जानाति अन्योऽपि तथैव स्वं तथा जानाति इति तद्विषयानुपलब्धिर्धासिद्धा (लब्धिरसिद्धा)। अतः कः ? सर्वज्ञसद्भावश्चाबा- (व एव) अनेन ज्ञायते [इति] स एव दोषः । तथा सति *"**कल्पनीयाश्च सर्वज्ञाः**" [मी० श्लो० चोदना० श्लो० १३५] इत्यादि परपक्षेऽपि समानम ।

किंच, तस्य ज्ञानं कचित कदाचिद्यदि (कदाचिद् यदि) परिसमाप्तम् ; तावन्मात्रत्वम्
२० आत्मनां ज्ञानानां चेति प्राप्तमिति कथम अनाद्यनन्तता तेषामिति क इदानीं चेदस्य(वेदस्य) अनाद्यनन्ततां प्रतीयात् ? ततः परं तत्पाठको वा ? यतः सत्त्वं संभाव्येत ? अथ तत्परिसमाप्तावपि न तेषां तावन्मात्रता ; तर्हि तेनापरिच्छिन्नस्वरूपाणामपि भावात , न वा कालस्य किञ्चिज्ज्ञतासिद्धिः । यदि पुनर्न कचित् तत्परिसमाप्तमिष्यते ; न तर्हि बहुकल्पसहस्रैरपि '**सर्वात्मज्ञानविज्ञेयाज्ञे[य]तत्त्वविवेचनम्**' य एव तेन अज्ञातः तत्रैव सर्वज्ञत्वाशङ्का
२५ नात (न)निवर्त्तते ।

यस्यात्मकं(स्यान्मतम्) यथाभावमसौ प्रत्येति तेनाऽयमदोषः ; अन्योऽपि सर्वज्ञः (ज्ञ)

(१) प्रमाणस्य । (२) पुरुषेण । (३) "चोदनालक्षणोऽर्थो धर्मः"–मी० सू० १।१।२। "चोदनैव प्रमाणञ्चेत्येतद् धर्मेऽवधारितम्"–मी० श्लो० चो० सू० श्लो० ४। (४) "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थमवगमयितुमलं नान्यत् किञ्चनेन्द्रियादिकम्" –शाबरभा० १।१।२ । (५) सर्वज्ञस्य । (६) अवशिष्येत इति सम्बन्धः । (७) वेदस्य । (८) सर्वज्ञज्ञानपरिसमाप्तावपि । (९) आत्मनां ज्ञानानां वा । (१०) अपि तु तेनाज्ञातानामपि सद्भावात् । (११) कालत्वादिति हेतोः वर्तमानकालवत् इति यः सर्वज्ञताऽभावः साध्यते स न इति भावः ।

तथैव प्रत्येति इति तत्रास्य[४२९क]दोषा स्याद्भावात् । मयुक्तम्(दोषस्योद्भावनमयुक्तम् ।) एव-मन्यदपि परस्य दुश्चेष्टितां(तं) चिन्त्यम् । ननु स्यादयं दोषो यद्यसौ सर्वात्मज्ञानविज्ञेयाज्ञेय-तत्त्वं विवेचयेत् , यावता नैवमिति चेत् ; अत्राह–**नो चेत्** न यदि भयेत् (**भवेत्**) **स्वयम्** आत्मनैव **सर्वज्ञाभावविन् कथं** नैव । निरूपितमेतत् । सर्वज्ञ(ज्ञा)भावावेदने च *"**धर्मे चोदनैव प्रमाणम्**" इत्यन्ययोगव्यवच्छेदेन[1] चोदनाप्रामाण्यसाधनमसारम् । ५

किंच, तदभावसन्देहे[2] वेदेऽकर्तृत्वं[3] सन्दिग्धं कथं प्रामाण्यं साधयेत्[4] यतः प्रवृत्तिकामोऽ-पौरुषेयाद् वचनात् ततः प्रवर्तेत ? सर्वज्ञस्य अस्मदाद्यदृश्य[स्य]तत्कर्तुः[5] सद्भावाशङ्काऽनिवृत्तेः । अस्मरणमपि तदभावं[6] न साधयति ; स्मरणं हि अनुभवकार्यं न प्रमेयकार्यम् , अविशेषेण सर्वस्य[7] ततः तत्प्रसङ्गात् । [अ]तदभावात्[8] प्रमेयाभावात्[9] प्रमेयाभावः ; अन्यथा[10] धूमा(धूमा)भावात् सर्वा-भावः स्यात् । किन्तु यदि स्यात्[11] तत्कारणस्य[12] अनुभवस्य स्यात् । न च अस्मदाद्यनुभवः १० सर्वप्रमेयकार्यः येन तदभावे[13] विवक्षितप्रमेयाभावः स्यात् । तथा वेदस्य[अ]कर्तृत्वमिच्छता [14]तदभावो ज्ञातव्य इति न प्रकृतदोषपरिहारः ।

अथ तदविवेचयन्नेव [15]तदभावं वेति(वेत्ति ;) तत्राह–'**यदि**' इत्यादि । **तस्य** सर्वज्ञयस्य (सर्वज्ञस्य) **ज्ञानं** तस्य **ज्ञेयं** तत्र **ज्ञानं** तेन **वैकल्यात्** सुतरां सर्वात्मनामसर्वज्ञत्वम् **स्वयं न बुध्येत** असर्वज्ञ इति । कुत(कुतः ?) इत्यत्राह–**नहि** इत्यादि । गतार्थमेतत् । स्यादयं दोषो १५ यदि सर्वात्मनामसर्वज्ञत्वम् अध्यक्षेण प्रतीयेत, न चैवम[४२९ख]अनुमानेन तत्प्रतीतेरिति चेत् ; अत्राह–**पुरुष** इत्यादि । **पुरुषस्यवि(रुषवि)शेषस्य(स्या)पि** सुगतादेरसर्वज्ञत्वसाधनेऽपि न केवलं प्रकृतसाधने । कुतः ? इत्याह–**वक्तृत्वादि** इत्यादि । सुगतरथ्यापुरुषस्यो(रुषयोः) यद् **वक्तृत्वादिसामान्यम् तस्मात्** । तत्र किम् ? इत्याह–**समानमेतद्** अनुमानमिति । [16]सर्वात्म-ज्ञानविज्ञेयाज्ञेयावेदने सर्वज्ञा(ज्ञ) **विपक्षे** वक्तृत्वाद्य**भावासिद्धेः** । शेषमत्र चर्चित(चर्चितम्) २० चारुचक्षुषा स्वयमेवोपेण(मेवोह्यम्) ।

एव(एवं)परस्य सर्वज्ञताप्रतिपादने यत् फलं प्राप्तं तद्दर्शयन्नाह–**नर** इत्यादि ।

**[नरः शरीरी वक्ता वाऽसकलज्ञं जगद्विदन् ।**
**सर्वज्ञः स्यात्ततो नास्ति सर्वज्ञाभावसाधनम् ॥१६॥**

**सत्यपि पुरुषत्वादिसामान्ये यथा केचिदेव सर्वज्ञशून्यं जगत् तद्रागादिमत्त्वं वा** २५ **विदन्ति नेतरे तथैव यदि केचन सर्वज्ञाः स्युः किन्नोपपद्येत यतः सर्वज्ञो नैव स्यात् ?]**

(१) वेदान्यस्मिन्-सर्वज्ञे योगस्य-प्रामाण्यसम्बन्धस्य यः व्यवच्छेदोऽभावः तेन रूपेण । (२) सर्वज्ञाभावे संशये सति । (३) कर्त्रभावोऽपि । (४) वेदस्य । (५) वेदकर्तुः । (६) कर्त्रभावम् । (७) जैनादिकस्यापि । (८) स्मरणाभावात् । (९) 'प्रमेयाभावात्' इति द्विर्लिखितम् व्यर्थम् । (१०) अकार्यादपि यदि अकारणस्य अभावः स्यात्तदा । (११) यदि स्मरणाभावादभावः स्यात् । (१२) स्मरणकारणस्य । (१३) अनुभवाभावे । (१४) सर्वज्ञाभावः । (१५) सर्वज्ञाभावम् । (१६) असर्वज्ञत्वे साध्ये ।

**नर[:]**पुरुषः **शरीरी वक्ता वा सकलकलङ्क किंचिज्ज्ञत्वाजगद्विदतु(वा असकलज्ञम्** , किञ्चिज्ज्ञं **जगद्विदन्) सर्वज्ञः स्यात् ततो नास्ति सर्वज्ञाभावसाधनम्** , तत्साधनस्य तेन व्यभिचाराद् इति भावः ।

कारिकां विवृण्वन्नाह-**सत्यपि** इत्यादि । **सत्यपि** न केवलम् असति **पुरुषत्वादिसा-**
५ **मान्ये यथा केचिदेव सर्वज्ञशून्यं जगत्** जैमिन्यादयो **विदन्ति,** कस्य(तस्य) सुगतादे **रागादिमत्त्वं वा** परोक्षस्य विदन्ति **नेतरे** व्यापुरुषाः **तथैव यदि सर्वज्ञः(ज्ञाः) केचन स्युः किन्नोप[प]द्येत यतोऽनुपपत्तेः सर्वज्ञ(ज्ञः) नैव** न **कश्चिन स्यात्** ।

ननु स्यादयं दोषो यदि प्रत्यक्षेण जगत् तथा विदन्ति केचित्[१], किन्तु अनुमानेन । तथाहि-सर्वात्मज्ञानानि (नानि) प्रत्यक्षाभिमतानि विवादगोचरतां गतानि, इन्द्रियार्थसन्निकर्षजानि
१० नियतविषयाणि वा (वा), तत्त्वात्[२], अत्रेदानींतनाक्ष ज्ञानत्वं (दानीन्तनप्रत्यक्षज्ञानवत्)। तथा विषया विवादविषयाः[४३०क] प्रतिनियतार्थेन्द्रियाध्यक्षविषयाः, तत्त्वात्[३], विवक्षितविषयवत्[४] । तदुक्तम् (तदप्युक्तम्-)

*"यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
दृष्टं संप्रति लोकस्य तथा कालान्तरेऽप्यभूत् ॥"

१५ [मी०श्लो० चोदना०श्लो० ११३]

इति चेत ; न ; सत्यस्वप्नेन अस्य व्यभिचारात । *"**तद्धि सत्यस्वप्नज्ञानम् इन्द्रियासंसृष्टं व्यवहितं चार्थमवैति**" इति प्रमाणसंग्रहे[५] निरूपितम् ।

तर्हि बाधकवत् साधकस्यापि सर्वज्ञोभा (सर्वज्ञेऽभा-)वात् संशय इति चेत ; एतदेवाह-**साधक** इत्यादिना[६] ।

२० **[साधकबाधकाभावात् सर्वज्ञे संशयः क्वचित् ।**
**बाधकासंभवात् सिद्धं साधकस्यैव संभवात् ॥१७॥**

**केन तद्द्वयस्याभावनिर्णयः ? तत्र बाधकाभावनिर्णयात् । तत एव प्रत्यक्षस्यापि प्रामाण्यम् । यथादर्शनं तत्त्वप्रतिपत्तौ अतिप्रसङ्गात् । तत्र साकल्येन बाधकप्रमाणव्यावृत्तेरन्यत् साधकं नाम, यतस्तस्य साधकबाधकप्रमाणाभावात् सर्वज्ञत्वं संशीतिमवतरेत् ।**
२५ **साधकबाधकयोरन्योऽन्यं विधिप्रतिषेधलक्षणत्वात् ।]**

अत्र दूषणमाह-**बाधकासंभवा**[त्यादि] । **क्वचित्** पुरुषविशेषे सर्वज्ञत्वं सिद्ध (द्धम् ।) कुतः ? इत्याह-**बाधकाऽसंभवात्** । अनेनैतत् कथयति-बाधकाभावः परमार्थसत्त्वेन व्याप्तः, सुखादिस्वसंवेदने तथादर्शनात्, परमार्थत(स)त्त्वाभावे च ग्राह्यमरीचिकादिनिराद्याकारो (ग्राह्यमरीचिकादिनीराद्याकारे) बाधकाभावनिवृत्तेः । यन्निवृत्त्या यन्नियमेन निवर्त्तते तत्तेन व्याप्तम् , यथा

(१) जैमिन्यादयः । (२) प्रत्यक्षत्वात् । (३) विषयत्वात् । (४) घटादिवत् । (५) "स्वयं प्रभुरलङ्कनार्हः स्वार्थालोकपरिस्फुटमवभासते सत्यस्वप्नवत् ।"-प्रमाणसं० पृ० ९९ । (६) "साधकबाधकप्रमाणाभावात् सर्वज्ञे संशयोऽस्तु इत्ययुक्तम्..."-अष्टस० पृ० ४९ ।

ज्ञानत्वं स्वसंवेदनेन, निवर्तते च [1]तत्सत्त्वनिवृत्तौ [2]तदभाव इति ।

स्यान्मतम्–[3]तत्सत्त्वाभावेऽपि स्वप्नादिदृष्टघटादौ [4]तदभावा[त्]न तेन [5]तद्व्याप्तिरिति ; तत्तन्(तन्न) स्वसंवेदनग्राह्याकारयोरविशेषप्रसङ्गात् तदाकारनिवेदनात् । ततः स्वप्नादिग्राह्याकारस्य असत्त्वमिच्छता त[द्]बाधकसद्भावोऽभ्युपगन्तव्यः ।

अपरे मन्यन्ते–प्रागभावादौ तत्रासंबंध(सत्तासम्बन्ध)रहिते [7]तत्सत्त्वाभावेऽपि बाधकप्रमाणाभावः इति नानयोः [8]व्याप्यव्यापकभाव इति ; तन्न ; भावाद् भिन्ने[ऽ]भावे बाधकसतस्य (संभवस्य) दर्शितत्वात् , सत्तासम्बन्ध वा (न्धे च) । ततो य[त]एव बाधकासंभवाद् भावनिश्चयः तत एव तत्र[४३०ख]शब्देहम्बवदतः (सन्देहं वदन्तः) मूढमतय इति । ५

ननु न ततं एकेनं तत्स्वरूपात् केवलात् क्वचित् संशीतिर्निरस्यते, अपि तु साधकाभावसहितात् । साधकप्रमाणात्मको हि बाधकाभावो भावं गमयति । न च सर्वज्ञे सोऽस्तीति चेत् ; अत्राह–'सावकस्यैवं(साधकस्यैव)संभवात्' इति [11]व्यतिरेचको [12]निगतोऽयं(निपातोऽयं) 'सिद्धम्' इत्यस्याऽनन्तरं द्रष्टव्यः । साधकस्य संभवात् क्वचित् सर्वज्ञत्वं सिद्धं सच(सिद्धमेव) तत्संभवो दर्शितो नेह पुनरुपदर्श्यते । यदि च(वा) आत्मनः सकलपदार्थसाक्षात्कारी कस्यचिद् (कश्चिद्)अवस्थाविशेषः समस्तीति श्रोतो बाधकरहिता प्रतीतिः तत्साधकं प्रमाणमिति । १०

यत्पुनरुक्तं धर्मकीर्तिना–*"साधकबाधकप्रमाणाभावात्तर्हि सन्देहोऽस्तु" [13]इति ; तत्राह–केन प्रमाणेन तद्द्वयस्य साधकबाधकप्रमाणद्वयस्य अभावनिर्णयः न केनचिद् इति निवेदितमेतत् । एवं मन्यते–सर्वज्ञे हेतोः सन्देहसाधनम् , हेतुना[च] सिद्धेन भवितव्यम्, अन्यथा [14]ततः [15]तत्साधनायोगात् , सन्दिग्धासिद्धा(द्ध)वचनप्रसङ्गादिति । १५

ननु मा भूत् [16]तद्द्वयाभावनिर्णयः, सन्देहो भवद्वि(त्वि)ति चे[न ;] तते [17]एव [18]तत्र सन्देहः स्यात् न तद्द्वयाभावात् इ[ति । अस्तु] तत एव सन्देह इचिति(इति) चेत् ; अत्राह–बाधक इत्यादिना । [त]त्र शब्दः क्रमवाची, तन्न तत्सन्देहात्[त]त्र सन्देह इति भावः । तथापि तत एव तत्र सन्देहं(हः) चेत् ; अत्राह–तत एव इत्यादि । बाधकाभावनिर्णयादेव । कुतः ? इत्याह–प्रत्यक्षस्यापि, न केवलम् आगमस्य[४३१क] तत एव प्रामाण्यं य[तः] इति । २०

स्यान्मतम्–प्रतिभासात् तत्प्रमाण्यं न [19]त[तः] इति ; तत्राह–यथादर्शनम् इत्यादि ।

(१) परमार्थसत्त्वनिवृत्तौ । (२) बाधकाभावः । (३) परमार्थसत्त्वाभावेऽपि । (४) बाधकाभावात् । (५) परमार्थसत्त्वेन । (६) बाधकाभावव्याप्तिः । (७) परमार्थसत्त्वाभावेऽपि । (८) बाधकाभावपरमार्थसत्त्वयोः । (९) बाधकाभावात् । (१०) केवलेन । (११) व्यावर्तकः । (१२) एवकारः । (१३) तुलना–"साधकबाधकप्रमाणाभावमात्रं चात्र सन्देहेन लक्ष्यते ।"–प्र० वार्तिकाल० ४।९१ । "सेयं साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मोपलब्धिः विनश्यदवस्था विशेषस्मृत्या महाविनश्यदवस्थया एकस्मिन् क्षणे सती संशयज्ञानस्य हेतुरिति सिद्धम् ।"–न्यायवा० ता० टी० पृ० २४७ । न्यायकुमु० स्त० २ पृ० ८। "साधकबाधकप्रमाणयोर्निर्णयात् भावाभावयोरविप्रतिपत्तिः अनिर्णयादारेका स्यात् ।"–अष्टश० अष्टस०, पृ० ४९ । लघी० स्ववृ० पृ० २ । प्रमाणनय० १।११ । प्रमेयरत्नमा० ३।२९। प्र० मी० पृ० ५। (१४) हेतोः । (१५) सर्वज्ञसन्देहसाधनायोगात् । (१६) साधकबाधकाभावद्वय । (१७) साधकबाधकाभावसन्देहात् । (१८) सर्वज्ञे । (१९) बाधकभावनिर्णयात् ।

**तत्त्वप्रतिपत्तौ** प्रामाण्यप्रतिपत्तावङ्गीक्रियमाणायाम् **अतिप्रसङ्गात्** सकलज्ञानप्रमाणताप्रसङ्गात् , स्व वेदनद्वाह्यमपि (स्ववेदनवत् बाह्यमपि) निराकृ(कं)भवेत् ।

प्रकृतमुपसंहरन्नाह–**तन्न** इत्यादि । यत एवं **तत्** तस्मात् **न साकल्येन बाधकप्रमाण-व्यावृत्तेः** सकाशात् **अन्यत् साधकं** प्रमाणं **नाम** किन्तु सैव साधिका इति, **यतोऽ**न्यस्य साध-
५ कस्य (स्या) भावात् **तस्य** सर्वज्ञत्वस्य[साधक]**बाधकप्रमाणाभावात् सर्वज्ञत्वं संशीतिमवतरेत्** । एतदपि कुतः ? इत्याह–**साधक** इत्यादि । **साधकबाधकयोः अन्योऽन्यं** परस्परं **यौ विधि-प्रतिषेधौ** तावेव **लक्षणं** ययोः तयोर्भावात् **तत्त्वात्** । तथाहि–बाधकप्रतिषेध एव साधकविधिः, [1]तत्प्रतिषेध एव स(च) बाधकविधिः, तथा बाध[क]विधिरेव साधकप्रतिषेधः [2]तद्विधिरेव बाधक-प्रतिषेध इति । अन्यथा जीवच्छरीरे नैरात्म्यनिषेधः सात्मको न स्यात् , कृतकत्वादेर्वा हेतोः
१० असति विपक्षे अभावाभावो भावात्मको न भवेत् ध र्म की र्तेः इति । तन्न 'बाधकनिवृत्तिश्च स्यात् न च सर्वज्ञसद्भावः प्रतिबन्धाभावात्' इति ; सन्दिग्धविपक्षव्यावृत्तेः शेषवत् साधनम् ।

एतदेव दर्शयन्नाह–**कथम्** इत्यादि ।

**[कथं बाधकनिवृत्तिः सा सती सर्वविदोऽत्यये ।**
**जगत्सकलज्ञवैकल्ये तद्भावे हेतुरेव वा ॥१८॥**

१५ सती बाधकनिवृत्तिः सर्ववित्सत्तां साधयेत् नात्र संशयः । न वै कस्यचिदप्य-भावे बाधकप्रमाणमेव न स्यात् किन्तु तदभावे साधकप्रमाणं च न । तदियमेव निश्चिता सर्वज्ञसद्भावं कुतो न साधयति, साधकव्यावृत्तेरसंभवात् । प्रमेयान्तरस्यापि सत्त्वमबाधि-तविज्ञानज्ञेयत्वादेव । तदस्ति सर्वज्ञोऽपि । साधकबाधकप्रमाणाभावे संशयोऽपि मा भूत् नैरात्म्यवत् । सुप्तम्··· । इत्यलं प्रसङ्गेन ।]

२० **जगतः सकलज्ञवैकल्ये** साध्यविपर्ययरूपे **सति(सती) तद्बाधकनिवृत्तिः** संभ-वन्ती **तत्सद्भावे(तद्भावे)हेतु [:]** सर्वज्ञसद्भावहेतुः, **कथ**मिति ? तत्रोत्तरम्–**[बाधक] निवृत्तिः** इत्यादि । [3]व्यतिरे[च]को[४३१ स्य]नियतो([4]निपातः) **'सती'** तस्य (इत्यस्य) अनन्तरं द्रष्टव्यः । **बाधकस्य** या **निवृत्तिः** सा **सत्येव** । कस्मिन् सति ? इत्याह–**सर्व-विदोऽत्यये** सर्वज्ञाभावे, तन्निवृत्तेः[5] तत्सद्भावेन[6] व्याप्तत्वात् ।

२५ ननु कथं [7]तत्सद्भावाऽसिद्धौ तेन [8]तद्व्याप्तिः ? तन्निवृत्तेः तत्सिद्धिरिति चेत् ; अन्योऽ-न्यसंश्रयः । तथाहि–तन्निवृत्तेः तद्व्याप्तिसिद्धौ [9]ततः [10]तत्सद्भावः सिध्यति, पुनः तेन तद्व्याप्तिः इति ; तन्न ; शब्दानित्यत्वेन कृतकत्वादेर्व्याप्तिसाधनेऽप्यस्य समानत्वात् । अथात्र न धर्मिणि व्याप्तिसिद्धिः इष्यते, अपि तु सपक्षे घटादौ ; तर्हि त सर्वज्ञो धर्मिणि तन्निध्यत्वसद्भावेन व्याधिः

(१) साधकप्रतिषेध एव । (२) साधकविधिरेव । (३) व्यावर्तक इत्यर्थः । (४) एवकारः । (५) बाधकनिवृत्तेः । (६) सर्वज्ञसद्भावेन । (७) सर्वज्ञसद्भावासिद्धौ । (८) बाधकनिवृत्तेः व्याप्तिः । (९) बाधकनिवृत्तेः । (१०) सर्वज्ञसद्भावः ।

(तर्हि न सर्वज्ञे धर्मिणि [1]तन्निवृत्तेस्तत्सद्भावेन[2] व्याप्तिः) साध्यते किन्तु सपक्षे सुखादौ। [3]तत्र[न] [4]तत्सत्त्वमिति चेत्; यदापि त (घटादावपि न) शब्दाऽनित्यत्वम्। [5]अत्र अनित्यत्वसामान्येन[6]; अन्यत्र सत्त्वसामान्येन व्याप्तिरिति समानम्। एवमर्थं चोक्तम्–'**प्रत्यक्षस्यापि**' इत्यादि।

नन्वेवं बहिर्व्याप्तिरुपसिता (रुपदर्शिता) स्यात्। तव (न च) एतावता[7] हेतोगम (हेतोर्गमक)-त्वम्; [8]तत्पुत्रत्वादेरपि गमकत्वप्रसङ्गात्, अन्तर्व्याप्तेः [9]तस्य गमकत्वोपगमात्, [10]सा च धर्मिणि ५ गृह्यते। न चैतन्न निवृत्ते र स्ता (न चैतत् तन्निवृत्तेरस्ति इ) ति चेत्; अत्राह–**सती** इत्यादि। सर्वदे दि (सर्वविदि) धर्मिणि **बाधकस्य निवृत्तिः सर्वविदः सत्तां साधयेत् नात्र** साध्ये **संशयः** 'कार्यः' इत्यध्याहारः। अन्यथा चक्षुरादिविषयेऽपि सत्तासन्देहः स्यात्। बाधकनिवृत्तेः अन्यस्य [11]तल्लक्षणस्याभावा[त्, अ]दर्शनमात्रस्य व्यभिचारात्।

ननु इदमनुमानम् [12]तदन्तरबाधितविषय (यं) कथं साध्यसाधकमिति? तथाहि–नास्ति १० सर्वज्ञा (सर्वज्ञः) [४३२क] सुनिश्चितासंभवत्साधकप्रमाण त्वांतरा (णत्वात्। तदाह–) **न वै** इत्यादि। **कस्यचिद्प्यर्ह** त (**कस्यचिदपि** अर्ह) तोऽन्यस्य वा सर्वज्ञस्य **अभावे** अङ्गीक्रियमाणे **बाधकप्रमाणमेव न स्यात्** उक्तविधिना सर्वज्ञस्य इति **किन्तु** अपि तु **तस्याभावे** साध्ये **साधकप्रमाणं च न स्यात्** साधकप्रमाणाभावः स्यादिति। **न वै** नैव सर्वज्ञाभावे साधक-प्रमाणाभावस्य निश्चेतुमशक्तेः, तस्य तदन्तरस्य वा तत्साधकप्रमाणस्य भावात्। तदभावान्नेति १५ चेत्; कुतः [13]तदभावः? अन्यत इति चेत्; अस्य वैफल्यम्। अत इति चेत्; अन्योऽन्य-संश्रयः;–सिद्धे तदभावे साकल्येतदसा (ल्येन तत्सा) धक प्रमाणं न स्यादिति स्यानभवे (साधक-प्रमाणाभावे) च तदभावसिद्धिरिति यत्किञ्चिदेतत्।

उपसंहरन्नाह–**तत्** तस्माद् **इयं** बाधकप्रमाणव्यावृत्तिरेव नान्यत्। किं कृता? इत्याह–**निश्चिता** सती। किं करोति? इत्याह–**सर्वज्ञ** इत्यादि। साधकव्यावृत्तिः तदभावं कुतो न २० साधयति? इत्याह–**साधकव्यावृत्तेरसंभवात्** सर्वज्ञाभावे तन्निर्णया[संभवा]द् इति भावः। विपक्षे बाधकं दर्शयन्नाह–**प्रमेयान्तरस्यापि** सुखादिरूपस्य न केवलम् अशेषवित्प्रमेयस्य **सत्त्वं** परपार्श्वतत्त्वम (सत्त्वं परमार्थत्वम) **अबाधितविज्ञानज्ञेयत्वादेव**, [14]दर्शितमात्रस्य व्यभिचारि-त्वात्। अर्थक्रियाकारणादिति चेत्; न; तदप्रतिभासने ततः तदिति स्वपा (निश्चया ऽ) योगात्। प्रतिभासनेऽपि उक्तम्। अबाधितप्रतिभासात् तद्व्यवस्था; अन्यत्र समाना। एतेन अर्थक्रियातः २५ तदिति निरस्तम्, अनवस्था च तत्रापि तदन्तरापेक्षणात्। सत्तासम्बन्धात्[15] इत्येके; मरीचिका-तोये शक्रतो (तत्कृतो) न? बाधनादिति चेत्; पतितोऽसि[४३२ख] मदुपदिष्टो धर्मन्य च सर्थे-(ष्टे धर्मे इत्येवमर्थं) चेत्कारकरणम्।

(१) बाधकनिवृत्तेः। (२) सर्वज्ञसद्भावेन। (३) सुखादौ। (४) सर्वज्ञसत्त्वम्। (५) शब्दा-नित्यत्वे साध्ये। (६) व्याप्तिरिति चेत्;। (७) सपक्षे बहिर्व्याप्तिमात्रेण। (८) गर्भस्थो मैत्रतनयः श्यामो भविष्यति मैत्रतनयत्वात् इत्यादेः। (९) हेतोः। (१०) अन्तर्व्याप्तिः। (११) सत्तालक्षणस्य। (१२) अनु-मानान्तर। (१३) सर्वज्ञाभावः। (१४) दर्शितं दर्शनविषयीभूतम् एतावन्मात्रेण प्रमाणत्वं नेति भावः। (१५) सत्त्वम्।

स्यान्मतम्–अबाधितविज्ञानज्ञेयत्वम् अशेषविदि असिद्धम् ; इत्यत्राह–तदबाधितज्ञानज्ञेयत्वम् **अस्ति सर्वज्ञे**ऽपि, गतार्थमेतत् । तन्न सूक्त (क्तम्–) *"**साधकबाध[क]प्रमाणाभावात्तत्र संशयः**" इति ।

दूषणान्तरमात्र(मत्रै)व दर्शयन्नाह–**साधन(धक)** इत्यादि । **साधकप्रमाणं** सर्वज्ञविषयं ५ ज्ञानम् **बाधकं प्रमाणं** तदभावविषयं [१]तेन **तदभावे** तद्विषयज्ञानरहितत्वे अङ्गीक्रियमाणे **संशयोऽपि मा भूत्** । नहि धर्मिमात्रस्याप्यग्रहणे सं युक्तः । निदर्शनमाह–**नैरात्म्यवत्** [२]पञ्चत्वे इव तद्वत् ।

ननु सर्वज्ञानम् आत्मार्थानं [३]पञ्चत्वे तदभावात् कथं नदिति चेत् ? अत्राह–**सुप्त** इत्यादि । पूर्वं सौगतं [४]परं [५] मीमांसकं प्रति । एतेन धर्म्यसिद्धिर्निरस्ता । परमप्यत्र वक्तव्यमस्ति इति दर्शयन्नाह–**इत्यलं प्रसङ्गेन** इति ।

१० ननु सत्यपि सर्वज्ञे कथम् अर्हन्नेव सर्वज्ञो नेतरः ? तदुक्तं [६]युक्तम् ।

*"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतभेदः कथं तयोः ॥"

[तत्त्वसं० श्लो० ३१४९ पूर्वपक्षे] इति ।

एतदेव दर्शयन्नाह–**सत्यपि** इत्यादि ।

१५ **[सत्यपि स्वानुभूतस्य तत्त्वमेकान्तवादिनः ।
अलक्षयन्तः कल्प्येरन् सर्वज्ञाः किं परीक्षकैः ॥१९॥]**

तत्रोत्तरमाह–**एकान्तवादिन** इत्यादि । सुगतादयः **तत्त्वं** स्वरूपम**लक्षयन्तो**ऽनिश्चितवन्तः । कस्य ? **स्वात्र(स्वानुभूतस्य)** वस्तुनः सुखादिर्नीलादेः अनेकान्तात्मनोऽनुभूतस्य **एकान्तरूपतया** लक्षणात् **कल्पेरन्(कल्प्येरन्)सर्वज्ञः(ज्ञाः) किं परीक्षकैः** ? नैव ।

२० स्यान्मतम्–परचेतोवृत्तीनां दुरन्वयत्वात् कथमवगम्यते 'तदलक्षयन्तः' इति ? अन्यथाभिधाना[४३२क] दूरतलिवाद्विप्रन्तति (द् विप्रलभन्ति) प्रायाः ।

तत्रापि–

**[सर्वस्यैव सतः सिद्धा स्थित्युत्पत्तिव्ययात्मनः ।
क्वचित् कथञ्चिदुद्भूता वृत्तिरन्यतमात्मनः ॥२०॥**

२५ उत्पत्तिरात्मलाभः, स्थितिः [सत्त्वम्], नाशः पुनः स्वभावप्रच्यवनम् च, एतत् परस्परैकार्थात्मकं कथम् ? **अपरिणामिनोऽपि तावत् क्षणिकस्य कलान्तरस्थायिनो वाऽर्थस्य यो यदात्मा यथाभूतः स तं सदैव लभते । न च त्यात्मव्यतिरेकेण उत्पत्तिः स्थितिर्विपत्तिर्वा युज्येत, द्रव्यान्तरव्यावृत्तिलक्षणत्वात् स्वस्वभावस्थितेः । परिणामिनश्चार्थस्य सतः पूर्वस्वभावप्रच्युतिरेव पुनः स्वभावान्तरप्राप्तिः । परिणामिकारणस्य स्वकार्या-**

---

(१) ज्ञानम् । (२) संशयः । (३) शून्यत्ववत् इत्यर्थः कदाचित् स्यात् मृतवत् इत्यर्थः । (४) शून्यत्वे । (५) प्रति । (६) द्वितीयम् । (७) 'सुक्तम्' इति निरर्थकं पुनर्लिखितम् ।

त्मविवर्त प्रत्यन्यानपेक्षणात् । पूर्वस्य वैकल्यम् उत्तरस्य वैकल्यम् । सतो द्रव्यस्य दृश्यं मध्यरूपं कथञ्चित्सदेव, अन्यथा...सर्वथा...। स्वसन्तानपतितमुत्तरपरिणाममप्राप्नुवतः परोपकारासंभवात् । सकल...। परस्परप्रवर्तननिवर्तनाभ्यामन्वयव्यतिरेकलक्षणत्वादन्योऽन्यं द्रव्याणाम् । तदन्ते क्षयदर्शनात् पूर्वमपि क्षयमिच्छन् मध्ये स्थितिदर्शनात् पूर्वापरकोट्योरपि स्वभावस्थितिं निश्चेतुमर्हति अविशेषात् । दृश्यादृश्याद्यात्मकमेकम् प्रत्यक्ष- ५ परोक्षवत् उद्भूतरूपस्पर्शादिपुद्गलवत् । प्रत्यक्षस्वभावस्यैव कथञ्चिदनुमेयतोपपत्तेश्च । नहि तद्विरुद्धम् ; संवित्तेरपि अभावप्रसङ्गात् । तन्मिथ्यैकान्ताभिनिवेशवन्तः...किंच उत्तरत्र निपतस्यमानत्वात् । ]

ननु (नतु) अनेकान्तात्मकत्ववत एकस्य प्रतिक्षणं स्थित्युत्पत्तिव्ययात्मकत्वम् , न च मन्या (मण्या) दीना (नां) तथोत्पत्तिव्ययौ, चरमध्य (गान्त्य) क्षणानां च स्थितिः प्रतीयते इति चेत ; १० अत्राह-**सर्वस्यैव** इत्यादि । **सर्वस्यैव** न नियतस्य चेतनेतरवर्गस्य **सतो** विद्यमानस्य, हेतुफलभावेन । किंभूतस्य ? इत्याह-**स्थितित्व (तिय)** त्यादि । तस्य किम् ? इत्याह-**सिद्धा** निश्चिता । का ? इत्याह-**वृत्तिः** । किंभूता ? **उद्भूता** । किं सर्वत्र सर्वथा ? **न** इत्याह, **क्वचित् कथञ्चिद्** इति स्थित्युत्पत्तिव्ययानां मध्ये **अन्यतमात्मनः** अन्यतमस्वभावस्य मन्यादौ (मण्यादौ) स्थित्यात्मनः संसारिजीवादौ त्र्यात्मनः । १५

कारिकां व्याख्यातुं पूर्वपक्षयन्नाह-**उत्पत्तिः** इत्यादि । **उत्पत्तिः** प्रादुर्भावः । का ? इत्याह-**आत्मलाभः** आत्मनः स्वरूपस्य[लाभः], प्रागसतो न कारणसमवायः सत्तासमवायो वा इति भावः । तथाहि-पूर्वं स्वतः सतश्चेत् समवायः उत्पत्तिः ; आत्मादिविभुत्वादीनां च स्यात् । असतश्चेत् ; शशविषाणादीनां भवेत् । पूर्ववत् पश्चादपि तेषामसत्त्वात् नेति चेत् ; किमिदं तदसत्त्वम् ? तत्सम्बन्धाभावश्चेत् ; सोऽपि कुतः ? अभावाच्चेत् ; अन्योऽन्यसंश्रयः- २० तथाहि-सिद्धे तदभावे तत्सम्बन्धत्वाभावः, तस्माच्च तदभाव इति । कारणाभावात् तदभावे इदमे[व] वक्तव्यम् । तद्यथा कुतः तत्कारणाभावः ? अत्यन्ताभावरूपत्वात् । तदपि कुतः ? कारणाभावात् ; अन्योऽन्यसंश्रयः । कथं[४३३ख] व (च) प्रध्वंसाभावो विद्यमानः ? यतो मुद्गरादिसाफल्यम् । नहि तस्य[स]मवायि-असमवायिकारणमिष्यते । 'निमित्तकारणमस्ति' इति चेत् ; इतरत्र (इतरत् नेति) कुतः ? अदर्शनादिति चेत् ; तेन एव बुद्धिशब्दादीनाम् अत्यन्तभिन्नम् २५ आत्माकाशादि समवायिकारणं न स्यात् । नहि तदुपलभ्यते यथोपवर्ण्यते परेण । निराधारता स्यात् चेत् ; अस्तु, को दोषः ? नि (र्नी) रूपता इति चेत् ; न ; प्रध्वंसेन व्यभिचारात् । गुणत्वाभावश्चेत् ; किमिदं गुणत्वं नाम ? स्वरूपमेव इति नोत्तरम् ; प्रध्वंसेतिपि (सेऽपि) प्रसङ्गात् । एतेना (न) गुणत्व (त्वं) चिन्तितम् । द्रव्याश्रितत्वम् इति चेत् ; तदपि कुतः ? गुणत्वादिति तु भा (दुर्भा) षितम् , अन्योऽन्यसंश्रयात्-गुणत्वे तदाश्रितत्वं ततो गुणत्वमिति । ३०

---

(१) प्रतिक्षणम् । (२) शशविषाणादीनाम् । (३) शशविषाणादीनामभावे । (४) इति चेत् ; । (५) कारणाभावे अत्यन्ताभावरूपता सिद्ध्यति, तस्याश्च कारणाभाव इति । (६) समवायिकारणम् असमवायिकारणं च कुतो न ? (७) अदर्शनादेव । (८) शब्दादीनाम् । (९) द्रव्याश्रितत्वम् ।

यत्पुनरेतत्–*"बुद्ध्यादिः गुणः निषिध्यमानद्रव्यकर्मभावत्वे सति सत्तासम्बन्धित्वाद् रूपादिवत्" इति[1]; तदपि न सुन्दरम् ; प्रध्वंसेन व्यभिचारात् । न व्यभिचारः ; तस्य [सत्ता]सम्बन्धित्वाभावादिति चेत् ; न; तस्य सत्तासम्बन्धोऽपि[भवतु]दोषाभावात् । कथमन्यथा 'प्रध्वंसः सन्' इति प्रत्ययः ? औपचारिक इति चेत् ; कुत एतत् ? तत्सम्बन्धाभावात्स्या(भा-
५ वाच्चेत्[2] ; तद)पि कुतः ? तत्प्रत्ययस्य औपचारिक[त्वाच्चे]त् ; अन्योऽन्यसंश्रयः । अथ प्रध्वंसे सत्प्रत्यय उपचरितो 'द्रव्यादिविषयउपचरितो'[3] द्रव्यादिविषयत्वे सति तत्प्रत्ययत्वा[त्] सामान्यादिवदिति ; तद्विषयत्वं[4] कुतः ? तत्प्रत्ययोपचारात् ; पुनः अन्योऽन्यसंश्रयः । अथ न प्रध्वंसो द्रव्यादीनामन्यतमोऽन्याश्रियत्वेताप्रतीतेच(न्यतमः, अन्याश्रितत्वेनाप्रतीतेः । अ)त एव बुद्ध्यादिरपि[४३४ क]न स्यादिति तदेव आवर्तते इति चक्रकप्रसङ्गः ।

१० स्यान्मतम्–प्रध्वंसाता(ध्वंसे सत्ता)सम्बन्धे अभावत्वं हीयते इति[5] ; तस्योत्पादे अर्थक्रियाकारित्वे वा कुतो न हीयते ? ततो यथा तदविशेषेऽपि तन्न हीयते तथा तत्सम्बन्धाविशेषेऽपि इति सर्वं सुस्थम् ।

किञ्चित(किञ्च)तत्सम्बन्धाभेदेऽपि यदि द्रव्यादीनां भावाभावभेदः ; [अभावोऽपि]भिन्न[:] स्यात् , अवान्तरसामान्यस्य अभावेष्वपि निषद्धुमशक्यत्वात् । अन्यथतत्र(अन्यथा तत्र
१५ अ)भावप्रत्ययाभिधानानुगमो दुर्लभो भवेत् । तन्न बुद्ध्यादीनां गुणत्वं प्रध्वंसवदिति न समवायिकारणसिद्धिः ।

अथ बुद्ध्यादेः का[दा]चित्कत्वं समवायिकारणं गमयति ; तदपि प्रध्वंसेन व्यभिचारि । 'भावत्वे सति'[7] इत्यपि न सुन्दरतरम् ; प्रध्वंसवत् भावस्यापि कस्यचित् तथोत्पत्त्य(त्त्य)विरोधात्, चित्रत्वाद् भावस्वभावानाम् । अथ बुद्ध्यादेः समवायिकारणाभावे[8] कुत उत्पत्तिः ?
२० प्रध्वंसवत् निमित्तकारणात् किन्न स्यात् ? इतरथा प्रध्वंसस्यापि न स्यात् । निर्हेतु प्रध्वंसभावे न कारणाभावप्रयुक्त [:कार्याभाव] इति चेत् ; सोविक्रते(सोऽपि कुतः ?)अभावत्वादित(ति)चेत्[6] ; उक्तमत्र । अपि च, 'घटादीनां कारणं सत्तासम्बन्धो वा 'अस्ति' इति कुतः ? स्वरूपेण सत्त्वे तदपि वेतिने चेत् स्वत्व(तथेति स्वरूपसत्त्व)मायातम् । उभयमपि नेति चेत् ; पदार्थान्तरं तथाविधं किन्न स्यादतः(त् ? यतः)पदार्थसंख्यानियमो व्यवतिष्ठेत । अदर्शनादिति चेत् ; अन्यत्र समानम् ।
२५ तस्माद् 'आत्मलाभ उत्पत्तिः' इति ।

स्थितिमाह **स्थि[ति]**रित्यादिना । **पुनः** इत्यादिना सं(नाशं)**स्वभावशब्देन**[४३४ ख] भावा[द्]भिन्नं स्वातसं(नाशं)प्रतिषेधति[9] **प्रच्यवनम्** इत्यनेन सतः तिरोभावम्, निरूपितं चैतत् । **एतत्** उत्पत्त्यादित्रयं **परस्परस्य** अन्योऽन्यस्य **एकार्थ आत्मा** स्वभावो यस्य तत्तथोक्तम् ।

(१) तुलना–"गुणः शब्दो द्रव्यकर्मान्यत्वे सति सत्तासम्बन्धित्वात् रूपादिवत् ।" –प्रश० व्यो० पृ० ६४९ । (२) सन्निति प्रत्ययस्यौपचारिकत्वे तत्सम्बन्धाभावः, तस्मिंश्च तत्प्रत्ययस्यौपचारिकत्वमिति । (३) 'द्रव्यादिविषय उपचरितो' इति पुनर्लिखितं व्यर्थम् । (४) सत्प्रत्ययस्य द्रव्यादिविषयत्वम् । (५) चेत् ; । (६) चेत् ; । (७) 'भावत्वे सति कादाचित्कत्वात्' इति । (८) समवायिकारणाभावेऽपि । (९) प्रतिषेधति ।

'कथम्' इत्येतत् कारिकाव्याख्यानेन परिहरन्नाह–**अपरिणामिनोऽपि** इत्यादि । **अपरिणामिनोऽपि** इत्यादि । **अपरिणामिनोऽपि** न केवलं परिणामिनः, **तावत्** शब्दः भावनायाम् । कस्य ? इत्याह–**अर्थस्य** । किंभूतस्य ? **क्षणिकस्य कालान्तरस्थायिनो वा** नित्यस्य इत्यर्थः । तस्य किम् ? इत्याह–**यो (यो) यस्य** क्षणिकस्य नित्यस्य **आत्मा** स्वभावो **यथाभूतः** क्षणिको नित्यो वा **सोऽर्थस(र्थः त)**मात्मानं **सदैव लभते** कदाचिन्नेति नायं विभागः अन्यथा सर्वत्र ५ सर्वदा क्षणिकम् आत्मादिकं वा नित्यं तस्या (न स्यात्) । तथा तया (तदा) त्मकोऽप्यर्थः **'तं सदैव लभते'** इति भावः ।

स्यादेतदेवम् यात्म (यदात्म) कोऽर्थः स्यात् करणवमेत् (कारणवशात्) कदाचित् प्राप्तेः इति चेत् ; अत्राह–**नचेत्यात्म्य' (न च** इत्यादि । [1]**त्र्यात्म्य'**) त्र्यात्मकत्वं तस्य **व्यतिरेको**ऽभावः तेन **उत्पत्तिः** नहि । उत्पत्तिस्वभावरहितं खरविषाणादि कारणाभावादनुत्पत्तिमत् न घटादिर्विप- १० र्ययादिति चेत ; उक्तमत्र ।

किं च, सदधि (सदपि) कारणम् अनुत्पित्सुस्वभावं नोत्पादयति, अन्यथा [3]अविनश्वर (रं) विनाशयेत् । न कस्यचिदुत्पत्तिरिति चेत् ; उक्तमत्र चक्रादिवैफल्यम् इति । तथा [4]तद्व्यतिरेकेण **न स्थितिः** । न खलु स्थितिस्वभावरहितं [5] कुतश्चित स्थाय न (कुतश्चित् स्थापन) मर्हति । नहि [6]कर्म दत्तफलम् [४३५ क] ईश्वरेणापि स्थापयितुं शक्यधि (शक्यमिति) *"**कार्यविरोधि**" १५ [वैशे० १।१।१४] [7]इत्यस्य विरोधात् । अथ ईश्वरस्य तत्स्थापनशक्तिः नास्ति; [8]अन्यत्र कथम् ? अन्यथा [8]उभयरूपता ईशस्य । यथा वा [ऽ] शक्तो न स्थापकः तथा स्थितिशक्तिरहितो न कुत- श्चित् तिष्ठति इति समानम् । एतेन स्थापने तद्वा (तद्व्यव) स्थापि निरस्ता ।

ननु न स्थितिस्वभावताप्रयुक्ता स्थितिः, तस्यामपि विनोश्रुत्यय (विनाशप्रत्यय) प्रणि- धाने [9] घटादेर्विनाशदर्शनादिति चेत् ; न ; तस्य [10] विनश्वरस्वभावत्वात् । सर्वदा कुतो न नाशए २० (नाशमे) ति चेत् ? क एवमाह–ने तीति ('न एति' इति) ? केवलं तिरोधाना [द्] नुपलक्षणं [11]सुवर्णे उष्णस्पर्शवत् । कारणभेदात् कदाचित्की श[क्ति]स्तु विनाश (शेऽपि) इति स्थितिस्वभाव एव तिष्ठति ।

तथा तद्व्यतिरेकेण **विपती र्व्य (विपत्तिर्वा)** विनाशो **वा न युज्येत** । नहि तत्स्वभाव- रहितस्य सामान्यधर्मपक्षस्य (धर्मवत् कस्य) चित् कुतश्चित् विनाशः । न विनाश इति चेत् ; कपालादौ [12] घटादिदर्शनप्रसङ्गः । तिरोधानान्नेति चेत् ; तदस्थास्य (तदवस्थस्य) [13]तदयोगाव (त) । २५ एतदेव दर्शयन्नाह–**द्रव्य** इत्यादि । स्वद्रव्यादिन्योनेद्रव्यादुपः (स्वद्रव्यादिभ्योऽन्ये द्रव्यादयः) **तदन्तराणि** तेभ्यो **व्यावृत्तिः लक्षणं** यस्य तस्य भावात् **तत्त्वात्** 'वस्तुनः' इत्यध्याहारः ।

---

(१) त्र्यात्मनो भावः त्र्यात्म्यम्, उत्पादादित्रयात्मकत्वमित्यर्थः । (२) कारणसद्भावात् । (३) नाशस्वभावरहितम् । (४) त्र्यात्मकत्वव्यतिरेकेण । (५) रहितम् इत्यर्थः । (५) अदृष्टं धर्माधर्मादि । (६) 'कार्यविरोधि कर्म'–कर्म स्वकार्येण फलेन विरुध्यते विनाश्यते इत्यर्थः । (७) तन्वाद्युत्पादने । (८) शक्ताशक्तरूपता । (९) सन्निधाने । (१०) घटादेः । (११) तेजोद्रव्यात्मके सुवर्णे उष्णस्पर्शानुद्भवो यथा । (१२) घटविनाशानन्तरसमुद्भूतखर्परादौ । (१३) तिरोधानायोगात् ।

एतदपि कुतः ? इत्याह–स्वेनेत्यादि । **स्वेन स्वभावेन स्थितेः** सर्वभावानाम् , अन्यथा सर्वात्मकम् अनाद्यनन्तं च सर्व(र्वं) स्यात् इति भावः । तदुक्तम्–

*"सदेव सर्वं को नेच्छेत् स्वरूपादिचतुष्टयात् ।
असदेव विपर्यासात् न चेन्न व्यवतिष्ठते ॥"

५ [आप्तमी० श्लो० १५] इति ।

ननु स(स्व)स्वभावस्थितिः[४३५ख] क्षणिकेष्वेव भावेषु । तथा चोक्तम्–*"**सर्वे भावाः स्वभावेन**" [प्र० वा० ३।३५] इत्यादि ; इति चेत् ; अत्राह–**परिणामिन** इत्यादि । पु(च) इत्यवधारणे **परिणामिन** एव **अर्थस्य** त स्थितेः(तत्स्थितेः) **'सदेवं(व)लभते'** इति । कुत एतद् इति चेत् ? अत्राह–**सतो** विद्यमानस्य **पूर्वस्वभावप्रच्युतिरेव** सौगतेन इष्यमाणा **पुनः**
१० पश्चात् **स्वभावान्तरप्राप्तिः** । यदि वा, तत्प्राप्तिरेव तत्प्रच्युतिः न पुनरन्यः प्रध्वंसः । तत्र यदा उत्तरकार्यमनन्तरं भवति तदा भवतु एतत् , यदा काले न भवति वा तदा कथमिति चेत् ? अत्राह–'**परिणामि**' इत्यादि । **परिणामिकारणस्य** उपादानकारणस्य **स्वका[या]त्मनो यो विवर्त्तः** तं **प्रत्य[न्या]नपेक्षणा[त्]** तत्प्रच्युतिरेक(रेव)तत्प्राप्तिः ।

स्यान्मतम्–न तत्प्राप्तिरेव तत्प्रच्युतिः किन्तु भिन्नो[ऽ]भाव इति चेत् ; अत्राह–**पूर्वस्य**
१५ **वैकल्यम्** अभावः **उत्तरस्य कैवल्यम्** पूर्वाकाररहितता परस्य न तस्थः(तत्स्थः)प्रध्वंसः । तददा (तद् यदा) काले न भवति वा तदा कथमिति चेत् ? अत्राह–**परिणामी**त्यादि । **परिणामिकारणस्य** उपादानकारणस्य **स्वका(या)त्मनो यो विवर्तः** तं **प्रत्य[न्या]नपेक्षणात्** तत्प्रच्युतिरिति (तत्प्रच्युतिरिति) । तर्हि पूर्वापराकारविनाशोत्पादमात्रं स्थितिः इति प्रसक्तमिति चेत् ; अत्राह–**न च** इत्यादि ।

२० निगमयन्नाह–**तदुत्पाद** इत्यादि । तद् युक्तं तदात्मकगता(कम् , अतो) नानवस्था परोदिता । अथ मतं यत्र निरन्तरं सप(रूप)त्रयं लभ्यते[त]त्र स्थितिप्रतिपत्तिरस्तु, यत्र मध्यरूपमेव तत्र [४३६क]कथमिति चेत् ? अत्राह–**सत** इत्यादि । **सतो द्रव्यस्य दृश्यं** यत् **मध्यरूपं तत्** पूर्वापरकोट्योरनुपलभ्यम् **सदेव कथञ्चित्** न सर्वात्मना । कुतः ? इत्याह–**अन्यथा** तदसत्त्वप्रकारेण । शेषं स्वगमं(सुगमम्) । कुतः ? इत्यत्राह–**सर्वथा** इत्यादि ।

२५ यदि मतम्–पूर्वं तत सदश्रुतिः(सदस्तु, असतः) कारणोत्पत्तिविरोधात् , पश्चात् कुतः ? [इत्याह] **स्वम्(स्वसन्तान)** इत्यादि । **स्वसन्तानपतिवम्** (पतितम्) **उत्तरपरिणामं** नुपाप्रेक्षण (उपादेयक्षणम्) **प्राप्नुवतः सत[ः]परोपका[रासंभवा]द्** विजातीयकार्यकारणा(करणा) संभवात् । तथा [ऽ]दर्शनात् ; रसाद् रूपानुमानाभावप्रसङ्गात् । मा भूत् तत्राप्युपकारः; इत्यत्राह–**सकल** इत्यादि । कुद(कुत) इदमवगम्यते तत्परिणाममप्राप्नुवतः तदुपकारासंभवः ? इत्याह–**परस्पर**

(१) इतरेतराभावाभावे सर्वात्मकम्, प्रागभावाभावे–उत्पत्त्यभावे अनादि, प्रध्वंसाभावाभावे अनन्तं स्यादिति भावः । (२) बौद्धः । (३) स्वाभावान्तरप्राप्तिरेव । (४) पूर्वस्वभावप्रच्युतिः । (५) तस्मिन् तिष्ठतीति तत्स्थः, पूर्वावस्थाभावी । (६) उपलभ्यते । (७) कारणादुत्पत्तिविरोधात् खरविषाणवत् । (८) सत् । (९) अन्यथा ।

इत्यादि । **परस्परम्** अन्योन्यं **प्रवर्त्तनं** समर्थरूपेण उत्पादनं प्रवृत्तिः असमर्थरूपेण **निवर्त्तनं** निवृत्तिः ताभ्याम **अन्वयः** अनुग्रामो (अनुगमः) **व्यतिरेको** व्यावृत्तिः तावेव **लक्षणं** यस्य तस्य भावात् **तत्त्वात्** । कस्य ? इत्याह–**अन्योऽन्य** इत्यादि । केषाम् ? इत्याह–**द्रव्याणाम्** इति । तथा अन्यदा दर्शनादिति भावः ।

एवं सति यत् सिद्धं तद् दर्शयन्नाह–**तद्** इत्यादि । यत एवमनन्तरं संवृत्तं [तत् त]स्मात् ५ **अन्ते** विसदृशकार्योत्पादकाले कार्यानुत्पादसमये वा **क्षयदर्शनात्** द्रव्याणां पर्व्येपि क्षयंतिप्रि' छन् (**पूर्वमपि क्षयमिच्छन्**) सौगतो **मध्ये स्थितिदर्शनात् पूर्वापरकोट्योः अधि** (अपि) **स्वभावस्थितिं निश्चेतुमर्हति** । अथ अत्र प्रमाणबाधनम तत्पूर्वत्र (न पूर्वत्र) ; इत्याह–**अविशेषादिति** । मध्ये व्यवस्थितिदर्शनमुक्तमिति नेहोच्यते ।

ननु दृश्याद् दृश्यस्वभावयोर्भेदात् [४३६ख] कथमेकं दृश्येतररूपमिति चेत् ? अत्राह– १० **दृश्य** इत्यादि । **आदिशब्देन** चलितेतरादिरूपपरिग्रहः । अत्र निदर्शनमाह–**प्रत्यक्ष** इत्यादि । निरूपितमेतत्–*"वित्तेर्विषयनिर्भासविवेकानुपलम्भतः" [सिद्धिवि० ११२०] इत्यादिना।

वैशेषिकादिकं प्रति निदर्शनमाह–**उद्भूत** इत्यादि । [**उद्भूतानुद्भूतौ**]**रूपस्पर्शौ आदी** येषां गन्धादीनां ते तथोक्तात, दूमू(क्ताः, **उद्भू**) **तानुद्भूता**(त)**रूपस्पर्शादयो** यस्य युगलेत्रा- (**पुद्गलस्य**, अत्रा)न्यपदार्थः,[2] तस्यैव तद्वदिति । तथाहि–पृथिव्यां रूपादयः सर्वेऽपि सामान्येन १५ उद्भूता दृश्याः, विशेषापेक्षया तु उभयथा विभक्ति (भवन्ति) अप्सु गन्धोऽनुद्भूतो नेतरे[3], तेजसि गन्धरसौ[4], वायौ स्पर्श एव उद्भूतः ।

अथ जलादौ गन्धादयः सत्ता (सन्तः इ)ति कुतः प्रतीतिरिति चेत् ? स्पर्शवत्त्वात् पृथि[वी]वत् । अन्यत्र तजा (तज्जा)तीये उद्भूतिः स्यादिति चेत् ; न; पृथिव्यां तद्भावाद् अदो- पात् । कथं तस्याः तज्जातीयत्वम् ? कथं हेमजातीयत्वम् ? हेमजातीयत्वम् अग्नेः तेजोद्रव्य- २० त्वात् ; 'पुद्गलत्वात्' इति समानम् । कथं तत्र ? हात्रि (हेम्नि) कथं तेजस्त्वम ? नहि अपरं तत्र त्साधाहाति (तत्साधकमस्ति) विवादाभावप्राप्तेः । उपदेशसहायादिन्द्रियात् तत्प्रतिपत्तिः पुद्गलत्वेऽपि समान (ना) । भासुररूपदर्शनात्र (नात् तत्र) तंत्रानुमीयते ; अनुमीयतां यदि अस्य अव्यभि- चारः स्यात् । न चैवम् , पीतत्वागन्धनिर्मल (पीतत्वस्य निर्मल) मसृणपाषाणमर्दिते वस्त्रे तद्दर्शनात् । तथा स्पर्शदर्शनात् पुद्गलत्वमनुमीयता[म]विशेषात् । इतश्च पुद्गलद्रव्यविशेषा भूम्या- २५ दयः परिणामपरिग्रहदर्शनात , जलादेः [४३७क] मुक्ताफलादिभावादिव (भावात् । एव) मर्थं च **'पुद्गलवत्'** इत्युक्तम् ।

गुणिना (नो) गुणानां[च]भेदात् न तद्दृश्येतरत्वा स्या (त्वात्मकत्वं) दृश्यते इति चेत् ; न; अस्य पक्षस्य निषेधात् । भेदेऽपि प्रतिभासमानगुणसम्बन्धिनैव (नैव) दृश्या नेतिरेति (नेतरेति) स एव प्रसङ्गः । [10]तस्या अपि दृश्यत्वे सकलगुणग्रहः, [11]तदभावे तत्सम्बन्धिताऽग्रहणात् , अन्यथा दृश्य- ३०

(१) स्थितिपक्षे। (२) बहुव्रीहिसमास इत्यर्थः । (३) रूपरसस्पर्शाः । (४) अनुद्भूतौ । (५) इति चेत् ; । (६) तेजस्त्वम् । (७) सुवर्णे । (८) भासुररूपादेः । (९) गुणगुणिनोर्भेदैकान्तस्य । (१०) इतर- गुणसम्बन्धितायाः । (११) गुणग्रहणाभावे ।

मानगुणग्रहणेऽपि तत्सम्बन्धिताप्रतीतिः[न स्यात् ] । स्यापिकिन्नेवि(सापि अन्यैवेति) चेत ; कथं तस्य ? सम्बन्धान्तरेण ; अन्या तत्सम्बन्धिता पुनरपि अन्या पुनरपि अन्या इत्यनवस्था । ततो दृश्येतरात्मकम् एकं युक्तम् ।

'तत्रैव युक्तं' तत्रैव युक्त्यन्तरमाह-प्रत्यक्ष इत्यादि । प्रत्यक्षः स्वभावो यस्य शब्दादेः
५ तस्यैव, नान्यस्य धर्मिणोऽसिद्धेः अनुमेयतोपपत्तेश्च 'दृश्यादृश्यादि' इत्यादिना सम्बन्धः ।

ननु तत्स्वभावस्य किमनुमेयत्वयेनिवेद(यत्वेनेति चेत ; अ)त्राह-कथञ्चित् शब्दादिरूपेण न क्षणक्षयादिरूपेण तत्स्वभावस्य तदनुमानवैफल्यापत्तेः । अनिश्चितनिश्चया[ऽभावा]-त्तेति चेत , स एव दोषः-उभयरूपता इति । समारोपव्यवच्छेदोऽपि विहितोत्तर[:] ।

ननु दृश्यस्वभावकाले अन्यस्यादर्शने कथं तयोरेकत्वम् श्रुतो(च्युतो)त्पन्नपदार्थान्तरवदिति
१० चेत ? अत्राह-नहि इत्यादि । कुतः ? इत्यत्राह-संवित्ति(त्तेः) इत्यादि । न केवलं वहिन्न शब्दादि(वहिःशब्दादे)रपि तु [संवित्तेरपि]ज्ञानमात्रस्यापि अभावप्रसङ्गात् । क्षणिकत्वोत्तर-कार्यजनकत्वाप्रतिभास(से)सर्वाप्रतिभासनात , सर्वस्य विभ्रममात्रे समवेसात(समावेशात् न) किञ्चित कश्चित शक्तम । एव(एवं)दृश्य[त्वादृश्यत्व]विरुद्धधर्माध्यासेन[४ ३ ७ ख]असत्त्वाद् अन्यस्याप्रतिभासेनासत्त्वात नैकस्य दृश्येतररूपतेति चेत ; अत्राह-तन्मिथ्यैकान्त इत्यादि ।
१५ तत् संवित्तिमात्रमपि मिथ्येति पेयस(योऽयम)एकान्ताभिनिवेशः तत्त्वतः(तद्वन्तः)स्वग(सुग)तादयो गृह्यन्ते । शेषं सुगमम् । किंच इत्यादिना दोषान्तरमाह-तत्रोत्तरं तु(उत्तरत्र)सुगतस्य निपत्स्यमानत्वात् ।

वैशेषिकादि(दिं)निराकुर्वन्नाह-ससं(सत्सं)प्रयोग[ज]त्वेन इत्यादि ।

**[सत्सम्प्रयोगजत्वेन विरुद्धा सकलज्ञता ।**
२० **प्रागसकलज्ञस्य कुतः पश्चान्नित्यस्य साऽन्यतः ॥२१॥**

**आत्मेन्द्रियमनोऽर्थसन्निकर्षात् कथं निरवशेषज्ञानम् ? सत्यपि तपःप्रभावे इन्द्रियाणां सम्प्रयोगानतिक्रमात् नियतविषयत्वात् । अणोर्मनसोऽदृष्टवशात् बहिरर्थसन्निकर्षशैघ्र्यकल्पनायाम् युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गं न भवेत् ।]**

ननु नित्यमपि तस्य ज्ञानमस्ति, तेन किं सा[ऽ]विरुद्धा येन तदत्र दूषयितुं नाशङ्क्यते ?
२५ नो चेत् ; तत्तर्हि तदाशङ्कनीयम् । अथ ईश्वरनिराकरणे तन्निरस्तमिति नाशङ्क्यते ; तर्हि क्षणिकनिरंशवस्तुनिषेधेन अन्यस्यापि निषेधा[त्त]दपि नाशङ्कनीयम् । प्रपञ्चार्थमिति चेत् ; नित्यमपि तथैव इति चेत् ; न ; तदभावात् । सतो हि भावस्य धर्मचिन्ता नासतः । तदभावः

(१) गुणसम्बन्धितापि । (२) 'तत्रैव युक्तं' इति व्यर्थं पुनर्लिखितम् । (३) अन्यथा क्षणक्षयानुमानवैयर्थ्यं स्यादिति भावः । (४) विनष्ट । (५) क्षणिकत्वं च उत्तरकार्यजनकत्वं च तयोरप्रतिभासे । (६) "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ।"-न्यायसू० १।१।१६ । (७) ईश्वरस्य, वैशेषिकस्य वा । (८) सकलज्ञता । (९) विरुद्धा चेत् । (१०) सुगतज्ञानस्यापि । (११) नित्यज्ञानाऽभावात् ।

कथमिति चेत् ? प्रमाणाभावात् । न तत्र प्रत्यक्षम्[1]; अतीन्द्रिये[2] तदप्रवृत्तेः । नानुमानम् ; लिङ्गाभावात् । न ज्ञानत्वं लिङ्गम् ; अस्मदादिज्ञानेन व्यभिचारात् ।

एतेन 'विभुद्रव्यविशेषगुणत्वे सति विभुत्ववत्' इति निरस्तम् । सर्वविषयत्वे सति इति चेत् ; न; इतरयोगिज्ञानेन[3] । 'सर्वदा तद्विषयत्वे सति' इ[ति] चेत् ; यदि तस्यैव तदेव साध्यं तदेव हेतुविशेषणम् इत्यसारं परस्या(स्य) नित्यत्वम् । न चात्र निदर्शनम् । ५

स्यान्मतम्–'ईश्वरज्ञानं नित्यं[सत्त्वे]सति धर्मादिकारणाजन्यत्वात् [न]द् विभुत्ववत्' इति । न चेश्वरस्य धर्मादिरस्ति; तत्कारणाभावात् । न च [4]परधर्मादेः तद्विज्ञानम् ;[४३८ क] आत्मगुणानाम् आत्मान्तरगुणाकारणत्वादिति । किं पुनः ईश्वरज्ञानं न किंचित् करोति ? तथा चेत् ; कुतोऽशेषकार्यजन्म ? महेश्वराच्चेत् ; न ; बुद्धिनिरपेक्षस्य पुंसः कार्यव्यापारे अचेतनकर्मणोऽविशेषः[5] । सत्यपि बुद्धिः अनुपयोगिनी । अथ पदार्थग्रहणे [न]तज्जन्मनि[6]; सर्वस्यापि बुद्धेः तत्रैव[7] व्यापारो न कार्यजन्मनि, इति 'इदं बुद्धिपूर्वम् , इदमथा(मन्यथा) कार्यम्' इति व्यवहारविलोपः । अथ '[8]तत्सहितेन पुंसा कृतम्'इति उपचारेण 'बुद्धिकृतम्' इत्युच्यते ; [9]तयापि तत्करणे को विरोधः ? १०

किं च, यदि नान्यात्मगुणः अन्यात्मगुणनिमित्तं कथं मन्त्रिण(णो)ध्यानाद् अन्ययोषितः तं प्रति प्रत्या(प्रत्याकर्षणम् ?) अन्यमन्त्रोऽपि (मन्त्रेऽपि) आत्मन एव तच्च (तद्धे) तुल्यमिति चेत् ; न; धर्मादेः सर्वत्रानुपयोगापत्तेः, आत्मन एव उपयोगात् । अथ मन्त्रिणो ध्यानं चित्तविकारकारणम् ; ईश्वरज्ञानमपि तथैव स्यात् । भवतु को दोष इति चेत् ; तद्वद् अन्यधर्मादिः [10]तत्कारणम् इति कारणाभावोऽसिद्धः । तन्नानुमानमत्र[11] । १५

ननु यथा भवदीये मते सर्वज्ञः तेन[12] तदन्तरेण[13] वा ज्ञायते, तथा मदीये तदेव ज्ञानम् आत्मनित्यत्वमवैति तदन्तरे स्यात्([14]तदन्तराभावादिति) चेत् ; न; एकत्वसंवेदनतापत्तेः, ईश्वरकल्पनमनर्थकम् , तावतैव[15] तत्प्रयोजनसिद्धेः । [16]यथा ज्ञानत्वाऽविशेषेऽपि तदेव नित्यं तथा गुणत्वाविशेषेऽपि तदेव[17] अनाश्रयम् इति । [18]अन्यत्र अनित्यानित्यत्वा (अनित्यत्वनित्यत्व)[19]दर्शनद्वयम् । एकत्र उक्तो दोषे(षः) अन्यत्र[सत् ]सम्प्रयोगजत्वेन इत्यादिकः ।[४३८ ख]तन्न नित्यं ज्ञानम् इत्यवशिष्यते । २०

तत्र **सता** अर्थेन **सम्प्रयोगः** सन्निकर्षः इन्द्रियाणां तज्जत्वे **न** ज्ञानस्य **विरुद्धा** **सकलज्ञता** कु मा रि लो क्ताऽशेषदोषापरिहारात् इति भावः । दूषणान्तरमाह–**नित्यस्य** आत्मनः **सर्वज्ञता कुतः** कारणात् ? न कुतश्चित् , नित्यत्वविरोधात् । स्वभाविकी सा[20] २५

(१) प्रमाणम् । (२) नित्यज्ञाने । (३) व्यभिचारात् । (४) आत्मान्तर । (५) विशेषाभावः । (६) कार्योत्पादे व्यापारः । (७) पदार्थग्रहणे एव । (८) बुद्धिसहितेन । (९) बुद्ध्यैव । (१०) ईश्वरज्ञानोत्पत्तिकारणम् । (११) प्रमाणम् । (१२) स्वेन । (१३) सर्वज्ञान्तरेण । (१४) ईश्वरज्ञानान्तराभावात् । (१५) ज्ञानमात्रेणैव । (१६) ननु निराश्रयं ज्ञानं कथं स्यादित्याशङ्कायामाह । (१७) ईश्वरज्ञानमेव । (१८) ज्ञानसामान्ये । (१९) द्वौ विकल्पौ इत्यर्थः । (२०) सकलज्ञता ।

इति चेत् ; अत्राह–**कुतः** प्रमाणात् 'अवगम्यते' इत्यध्याहारः । आत्मस्वभावस्य उत्कर्षवतः तथा दर्शनात् ।

ननु कारणेन भिन्न(न्नं)ज्ञान[म]शेषविषयं जन्यते, तत्सम्बन्धात् [1]तस्य [2]सा इति चेत् ; अत्राह–**असकलज्ञस्य** तस्य **प्राक्**, **पश्चात्** ज्ञाने उत्पन्ने [3]**सा** कुतः ? नहि स्वयम् अर्थ-
५ ग्रहणाभिमुख्यरहितस्य **अन्यतः** तद् युक्तम् ।

कारिकां विवरीतुमाह–**स्वस्व**(आत्म) इत्यादि । **आत्मा च इन्द्रियं च मनश्च अर्थश्च** तेषां **सन्निकर्षात्** संयोगादिरूपात् **कथं निरवशेषज्ञानम्** इतर(इति) यावत् । तपःप्रभावात्, निरवशेषविषयं ततोऽपि ज्ञानमिति चेत् ; अत्राह–**तपःप्रभाव** इत्यादि । **तपसः प्रभावः** सामर्थ्या(र्थ्य)विशेषः **तस्मिन् सत्यपि न** केवल[म]सति[**इन्द्रियाणां**]**सम्प्रयोगाननिक्रमाद्**
१० **विज्ञानस्य** । नहि तत्र सति ज्ञानं [4]प्रयोगनिरपेक्षम् ; परमतसिद्धेः । यदि च (वा,)'**इन्द्रियाणाम् तत्प्रयोगानतिक्रमात्**' इति व्याख्येयम् । न खलु तस्मिन् सति इन्द्रियाणि सतसम्बन्ध-(न्ध)मर्थं[न] गृह्णन्ति ; तेषां सन्निकर्षसाधकहेतूनां व्यभिचारप्रसङ्गात् । अथ 'अस्मदादिचक्षुः सम्बन्ध(न्ध)मर्थमवे(वै)ति तत्प्रभावरहितत्वे[४३९ क]सति इन्द्रियत्वात् स्पर्शनवत्' [इति चेत् ;] न ; तद्रहितत्व(त्वाऽ)सिद्धे[:], [5]जन्मान्तरे तदनिषेधात् । 'यस्य यावती मात्रा' विशेषण-
१५ मत्त्वात् हेतोरगमकत्वात् अतिप्रसङ्गात् । अथ [6]तत्प्रभावाद् इन्द्रियाणि तथाविधानि ज्ञायन्ते यानि (जायन्ते येन) सर्वविषयैः अति(गतिः) संपद्यते ; तत्राह–**नियत** इत्यादि । नहि स्पर्शनादिकं तत्प्रभावतः शरीरं विहास(विहाय) प्रतिविषयं भ्रमति, तेन सह भ्रमणे तस्य सर्वगतत्वम् । चक्षुरश्मीनां सर्वत्र गमनेऽपि रूपस्यैव सर्वस्य ग्रहणं स्यात् न रसादेः । तेनैव[7] [8]तस्यापि[ग्रहणे] इतरेन्द्रियवैफल्यम् । तदाह–**नियत** इत्यादि । मानसं योगिनो[ऽशे]षगोचरमध्य(चरमध्यक्षं)
२० न चक्षुरादिजमिति चेत् ; अत्राह–**मनस** इत्यादि । **मनसः अणो[:]**[**सका[शा]द्**] **बहिरर्थ-सन्नि[कर्ष]वैशद्यकल्पनायां** कुतः ? इत्याह–**[अ]दृष्टवशाद्** धर्मादिसहा[या]त् ; केवलस्य तत्संवित्तिवैशद्यकारण(णाऽ)सामर्थ्याद् अतीतादी(दौ) तन्मानससंवित्तिवदे(वदिति) वचनम् ।

ननु स्वप्नादिप्रत्ययानां मनस एव वैशद्यमिति चेत् ; अन्येषामपि स्यात् तदविशेषात् । अपि च, तत एव योगिनोऽशेषार्थज्ञानवैशद्ये सर्वस्य सात्त(स्यात्, त)स्य [9]सम्ब[न्ध]सम्बन्ध-
२५ स्य(चाऽ)भेदात्[10] । न चैवम्, अतोऽदृष्टमेष्टव्यम् । तस्याम् [किम् ?] इत्यत्राह–**युगपत्ज्ञान** इत्यादि । सर्वेन्द्रियविषयसन्निधानेऽपि या **युगपज्ज्ञानानामनुत्पत्तिः** सा **मनसो लिङ्गम् न भवेत्** । तद्वैशद्यवत्[11] [12]तदनुत्पत्तेरपि अदृष्टत ए[व भा]वादिति भावः ।

एतदेव दर्शयन्नाह–['**तद्**' इत्यादि]

---

(१) नित्यस्यात्मनः । (२) सर्वज्ञता । (३) सर्वज्ञता । (४) सन्निकर्षनिरपेक्षम् । (५) जन्मान्तरीयतपसः संभावना वर्तते इति भावः । (६) तपःप्रभावात् । (७) चक्षुषैव । (८) रसादेरपि । (९) आत्मना मनः संयुक्तम्, तेन च सर्वेऽर्थाः इति परम्परासम्बन्धस्य । (१०) भेदाभावात् । (११) अशेषार्थवैशद्यवत् । (१२) युगपज्ज्ञानानुत्पत्तेरपि ।

[तद्वैचित्र्याच्च केषाञ्चित् स्याद्युगपत्संविदन्यथा ।
स्मृतीनां युगपदुत्पत्तिः सत्यपीत्थं प्रसज्यते ॥२२॥
तदात्मसन्निकर्षस्य चाणोस्तेनानपेक्षिणा ।
प्रदेशतद्वद्द्व्यतिरेकात् स्यादवस्तुत्वमित्यतः ॥२३॥
तद्व्यतिरेकवतः कोऽर्थः षट्पदार्थप्रवादिनः । ५
तेषामन्येन मनसा वा संयोगः कुतो यतः ॥२४॥
द्रव्यातिरेकाद्विभागश्च स्मृतिः स्यात्कदाचित् ।
न चात्मत्वं समवेतं प्रदेशेषु तदात्मनः ॥२५॥
भेदप्रसङ्गात्प्रत्यात्मं सन्निकर्षाद्यप्यनात्मनः ।
प्रदेशतद्वतोर्भेदे नार्हन्त्यात्मनि सुखादयः ॥२६॥ १०

आत्ममनोऽक्षार्थसन्निकर्षाद्बहिरर्थज्ञानोत्पत्तौ युगपज्ज्ञानोत्पत्तिः किन्न भवेत् ? मनसामेकत्वे एकैव बुद्धिः स्यात् । प्रत्येकमेकैकात्मसम्बन्धस्य नियमायोगात् । यदि तदर्थ⋯तस्य तादृशस्य क्रमशः क्वचित् ज्ञानसम्बन्धात् सर्वज्ञत्वम् ; किं पुनरसर्वज्ञस्वभावमजहतः इदम् ? प्राक् तज्ज्ञानस्वभावसम्बन्धविकलस्य तत्समवायिकारणत्वमसंभाव्यम् असमवायिकारणत्वं च ।] १५

**तद्** इत्यनेन तद्वैशद्यकारणम् अदृष्टं परामृश्यते, तस्य **वैचित्र्यात्** कारणात [४३५ख]-चक्षिन्तश्च **केषाञ्चिद्** ईश्वरप्रभृतीनां **युगपत् संवित् स्यात्**, तपःप्रभावविकलानाम् **अन्यथा** क्रमेण **इत्थं** व्यवतिष्ठेत ।

ननु अनुमानगम्यस्य एवमभावायोगात् , इतरथा सर्वत्र कार्ये दृष्टस्यापि कारणस्य वैफल्यं भवेत् , अत एव तन्निष्पत्तेरिति चेत् ; न ; तल्लिङ्गस्य क्वचित् तेन प्रतिबन्धादृष्टेः, अदृष्टस्येवापवस्य मा (स्यैवावश्यम)भ्युपगमनीयत्वात । अत एव लिङ्गं न भवेत् ; इत्याह–⋯⋯ । २० दूषणान्तरमाह–**सत्यपि** इत्यादि । न केवलमसति किन्त्व (किन्तु) **सत्यपि** मनसि **स्मृतीनां युगपदुत्पत्तिः प्रसज्येत(ज्यते)** ।

कुत एतत् ? इत्यत्राह–**तदात्म** इत्यादि । **तच्च** मन **आत्मा** पुरुषः तयोः **सन्निकर्षस्य** अपेक्षका(**अपेक्षिणा**)चितो (तो)त्पत्तेः । केन ? इत्याह **[ते]न** इत्यादि । यदि वा, २५ **तदात्मसन्निकर्षस्य च** युगपदुत्पत्तिः स्यादिति च व्याख्येयम् । कुतः ? इत्याह–**[ते] नानपेक्षित्वेन(क्षिणा)** इत्यादि । कस्य ? इत्याह–**अणोः** इत्यादि । स्मृतीनामयौगपद्ये अङ्गीक्रियमाणे किम् ? इहाह–(इत्याह–)**प्रदेश**[इत्यादि ।]

ननु चक्षुरादिबुद्धीनामपि तत एव परेण यौगपद्यं नेष्यते, ततः सामान्येन 'संवित्तीनाम्' इति वक्तव्यम् । न च स्मृतिशब्दः सामान्यवाची तद्विशेषवाचित्वात् , तन्न युक्तम् **'स्मृतीनाम्'** ३० इत्येतदिति चेत् ; चक्षुरादिधियां कदाचिद् यौगपद्यमपि स्यात् , तथा प्रतिभास नानुमाम

(१) अदृष्टादेव । (२) संवित्तिविशेष ।

(नात् न तु) मत्विकल्पानां विपर्ययात् । अस्त (अस्तु) वा, तिष्ठतोद्भावचनमिति (?) **प्रदेशत-द्वतोः** संस्कृतप्रदेशात्मनो[ः]**व्यतिरेकात्** परस्परं भेदो (भेदात् अ)व्यतिरेके अन्यतरदित्येयदेव (त्येक एव)स्यादित्येवं वचनम् , तत्प्रदेशानाम् **अवस्तुत्व(त्वं)स्यात्** । कुतः ? इत्याह–**षट्पदार्थ** इत्यादि । ततोऽन्यस्य पदार्थस्य अनभ्युपगमात् परेण इति भावः ।

५ तद्व्यतिरिक्ता अपि ते सत्य(सन्ति)इत्येके; तत्र (तत्राह–)**कोऽर्थ** इत्यादि । द्रव्यगुण-कर्माणि अर्थाः *"द्रव्यगुणकर्मसु अर्थः" [वैशे० सू० ८।२।३] इति वचनात् । **तेभ्यो व्यतिरेकवर्तः** पदार्थस्य सत्तायाः समवाय समवायासंभवात् *"**त्रिपदार्थसत्करी सत्ता**" इत्यभिधानात् । सामान्याविपत्ते सन्त(स्यादिरूपापत्तेः सन्तः) इति चेत्; अत्राह–[**द्र**]**व्ये**त्यादि । **तेषाम्** आत्मप्रदेशानां **मनस्य(सा** अ)न्येन **वा** शरीरादिना वा **संयोगः**

१० अन्यत[र]कर्मकः (जः) संयोगजाया(जो वा) **कुतः** ? नैव । विभागश्च कुतः ? तस्य संयोग-पूर्वतत्त्व(वकत्वात्) तदभावेऽभावात् ।

कुतो न स्यात् ? इत्याह–**द्रव्यातिरेकात्** द्रव्याद् भेदात् **तेषाम्** इति, द्रव्यस्य च तदन्तरेण[कुतः] संयोगादिःगुणः ? **यतः** संयोगात् । कुतश्चिद् अदृष्टादेः सहकारिणः द्रव्या-नतिरेकैः तेषामिति चेत्; अत्राह–**तवे** ('**न च**'इ)त्यादिना । तात्पर्यमिदमत्र–आत्मनो व्यतिरि-

१५ च्यमानाः तत्प्रदेशाः यदि द्रव्यम् , यथा घटाद् व्यतिरिच्यमाना कपालादयः; तदात्मद्रव्यम् , तदन्तरं वा स्युः ? तत्र आद्ये पक्षे आत्मत्वसमवायाद् आत्मद्रव्यं ते[13] प्रथमात्मवत्; तच्चायु-(युक्तम् ;)युक्तिविरोधात् । तदाह–**न च** नैव **आत्म[त्व]**मवान्तरं सामान्यं प्रदेशेषु **सम-वेतम्** ।

कुतः ? इत्याह–**प्रत्यात्मम्** आत्मानम् आत्मानं प्रति **प्रत्यात्मम् आत्मनं(नो)**

२० **भेदप्रसङ्गाद्** बहुत्वप्राप्तिः । एवं मन्यते–एकत्रात्मनि [11]तद्बहुत्वे [४४०ख] अवयवारब्ध (ब्ध)-त्वादिप्रसङ्गः । किञ्च, तेषाम्[12] असर्वगतत्वे आत्मसर्वगतत्वैकान्तप्रतिज्ञाहानिः । तेषां च मनसा संयोगे अदृष्टसमवायोऽपि तेषामेव तत्संयोगजन्यत्वात् , §तस्य संयोगजन्यत्वात् तस्य संयोगजः§ *"**अदृष्टः आत्ममनःसंयोगजः**"[13] इत्यभिधानात् । न च अन्यसंयोगजः अन्यं समवेति(वैति) सत्त्वान्तरेऽपि तत्प्रसङ्गात् । अदृष्टफलं च [14]तेष्वेवास्तु *"**कर्तृ फलदायी**"[15] इति वचनात् । तेषां

२५ च लोकान्तरगमने क्रियावत्त्वम् , अत्रामने(अगमने) संसारभेदविलोपः । ता(ना)प्यन्यस्या-दृष्टाद् अन्यस्य संसारः; अतिप्रसङ्गात् । [16]द्वितीयपक्षे देशान्तरद्रव्यैः तत्संयोगविरहात् कथं तददृष्टेन तदाकर्षणम् इत्यविचि(इत्यपि) चिन्त्यम् । प्रदेशमनःसंयोगः परमाणुसंयोगवत् सदोष इति न असर्वगतत्व(त्वम् ।) सर्वगतत्वे प्रथमवत् प्रसंघातवस्था(प्रसङ्गात् अनवस्था) च ।

---

(१) अभेदे । (२) वैशेषिकेण । (३) षट्पदार्थभिन्ना अपि । (४) भिन्नस्य । (५) 'समवाय' इति व्यर्थम् । (६) तुलना–"सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ।"–वैशे० सू० १।२।७ । (७) संयोगा-भावे । (८) अभेदः । (९) प्रदेशानाम् । (१०) प्रदेशाः । (११) प्रदेशबहुत्वे । (१२) प्रदेशानाम् । § एतदन्तर्गतः पाठो व्यर्थः । (१३) "आत्ममनसोः संयोगाद्धर्मोत्पत्तिरिति"–प्रश० भा० पृ० १३८ । (१४) आत्मप्रदेशेषु । (१५)"कर्तुः प्रियहितमोक्षहेतुः"–प्रश० भा० पृ० ६३७ । (१६) तदन्तरमितिपक्षे ।

तत्परिकल्पनवैफल्यं वा, प्रथमात्मना(का)न् कार्यनिष्पत्तेः पुनरपि स एव दोषः । पुनरपि तत्परिहाराय तत्प्रदेशकल्पने तदेव आवर्त्तत इति चक्रकम् इति न किञ्चिदेतत् । द्वितीयपक्षे दोषं दर्शयन्नाह–**नाप्यनात्मन** इत्यादि । पक्षान्तरसूत्रापि(सूचने **अपि** शब्दः) **अनात्मनं (नः)** प्रदेशस(स्व)रूपस्य द्रव्यान्तरस्य मनसा यः **सन्निकर्षः तस्मात् न सुखादयः** स्मृतयो भवितुमर्हन्ति । कुतः ? इत्यत्राह–**आत्मन्यादि (आत्म** इत्यादि) । दूषणान्तरमाह– ५ **प्रदेशतद्वतोः** इत्यादि । सुगमम् ।

पुनरपि **महात्म्य**(पुनरपि दूषणमाह– **आत्म**) इत्यादि । **'आत्मा** मनसा युज्यते, **मनः** [४४१क] **अक्षेन(अक्षेण)** इन्द्रियोता(येण अ)**क्षम् अर्थेन'** इति य **आत्ममनोऽक्षार्थसन्निकर्षः** संयोगादिसम्बन्धः **तस्माद् बहिरर्थज्ञानोत्पत्तौ** सत्यां **युगपज्ज्ञानोत्पत्तिः किन्न भवेत्** ?

नन्वेकत्वा[न्म]नसो न तेनं सर्वेन्द्रियाणां [1]तैरर्थानां युगपत् सम्बन्ध इति चेत ; अत्राह– १० **मनसाम्** इत्यादि । **एकत्वे** मनसो **युगपद् एकैव बुद्धिः स्यात्** । न चैवमस्ति, अनभ्युपगमात् । तयैव(तथैव)आत्मान्तरेषु ज्ञानानुदयप्रसङ्गात् । तत एव तदुदये एकत्रापि युगपदेक-(दनेक)ज्ञानोदयोऽनिवार्यः, अनेकत्रोत्पादाय इतिति(यतति) नैकत्र इति किंकृतो विभागः ?

स्योदतन् बहुत्वेऽपि एकेनैव मसाऽतोकः (मनसा आत्मैकः) संयुज्यते ; इत्यत्राह–**प्रत्ये-कम्** इत्यादि । एकम् एकं मनः **प्रत्येकंकस्य आत्मनो** यः **सम्बन्धः** तस्य **नियमेन** अवश्यंभावेन १५ **अयोगात्** आत्मनां व्यापित्वविरोधात् इति भावः । कष्णदृष्टस्य घटनानियाम(कष्टा अदृष्टस्य घटनात् नियम)कल्पना ; उक्तं(क्त)दोषदुष्टत्वात् । अथ अतदे(अप्रदे)शस्य आत्मनः प्रदेशदोष-योजना कीदृशी ? इत्यत्राह–**यदि** इत्यादि । कुतः ? इत्यत्राह–**तदर्थ** इत्यादि । **तस्य** आत्मनः । दूषणान्तरमाह–**तादृश** इत्यादि । **तादृशस्य** कूट[स्थ]स्य **क्रमशः** क्रमेण पुनः पुनः इति **क्वचित्** कस्यांचिद् अवस्थायाम् **ज्ञानसम्बन्धात् सर्वज्ञत्वम् 'असंभ(भा)व्यम्'** इति वक्ष्यमाणेन २० सम्बन्धः । तर्हि(न हि) तस्यं संम्बन्धेऽपि विषयग्रहणोन्मुखता पूर्ववत् ।

युक्त्यन्तरमाह–**किं पुनः** इत्यादि । **पुनः** इति पूर्वदूषणदस्यानिश्चय(णादस्य निश्चय)-सूचकः । **असर्वज्ञस्वभावमजहतः किं सर्वज्ञत्वम् ?** इदम् दमस्त्वेवं पर्यत्र[४४१ख] (इदममस्त्वा एवं पर्यनुयोगः तं)त्सम्बन्धात् पूर्वविषयानभिमुखस्वभावो गगनादिवत् अमाम्नते (अस्त्येव, उत) तदभिमुखस्वभावः[10] ? प्रथमपक्षे पूर्वं वाक्यं (पूर्ववत् वाच्यम्[11] ।) द्वितीयेऽपि २५ सकलविषयाभिमुखः, कतिपयपदार्थाभिमुखो वा अस्य स्वभावः ? तत्र आद्ये विकल्पे [12]जन्मि-मात्रस्य सकलकृत्वाम् (सकलज्ञत्वम ) इति । द्वितीये द्वितीयमिति[13] ।

नत्व चोत्तरज्ञानं सति (ननु च उत्तरज्ञानं प्रति) समवायिकारणत्वमेवास्य विषयाभिमुखं (मुख्यं) नापरम्, सहकारिविशेषात् कदाचित् कीदृक्षज्ञानं प्रति तस्य तद्[14] इति चेत् ? अत्राह–

(१) मनसा । (२) इन्द्रियैः । (३) आत्मान्तरे ज्ञानोदये । (४) कठिना इत्यर्थः । (५) प्रदेश-रहितस्य । (६) आत्मनः कूटस्थस्य । (७) ज्ञानसम्बन्धेऽपि । (८) नित्यत्वात् पूर्वावस्थावत् । (९) ज्ञानसम्बन्धात् । (१०) उत्पद्यते इति शेषः । (११) 'न हि तत्सम्बन्धेऽपि विषयग्रहणोन्मुखता पूर्ववत्' इति दूषणं वक्तव्यम् । (१२) प्राणिमात्रस्य । (१३) सर्वज्ञत्वमसंभाव्यमिति । (१४)समवायिकारणत्वम् ।

**प्राग्** इत्यादि । **प्रागिव**(प्राग् अव)स्थितज्ञानोत्पत्तेः पूर्वं न ज्ञान (तज्ज्ञान)**स्वभावसम्बन्धः-विकस्य**(**न्धविकलस्य**) तज्ज्ञानमेव स्वभावः स एव सम्बन्धः तेन विकलस्य(लस्य)अचेतनस्य[1] इत्यर्थः, **तत्समवायिकारणत्वं** ज्ञानसमवायिहेतुत्वम् **असंभाव्यम्** । तथाहि त्स(यत् )ज्ञानस्वभावं (भाव)सम्बन्धविकलं त(लं न तत् )ज्ञानसमवायिकारणम् यथा पृथिव्यादि, तथा च परस्य आत्मा
५ तद्विकलः; इतरथा पृथिव्यादिरपि तत्कारणं भवेत् ।

ननु कार्यस्य पृथिव्यादेः तत्कारणत्वे प्रत्यभिज्ञाविलोपः, शरीरादेरनित्यत्वादिति चेत् ; परमाणूनां स्यात् । तेषामदर्शनात् नेति चेत् ; किं पुनः परपरिकल्पितात्मना(त्मनः) दर्शनमस्ति ? तथा चेत् ; परमाणूनामस्तु । ज्ञानस्य गुणत्वाद्[2] आधारमात्रं सिध्येत् तु ज्ञा(त , तच्चा)त्मा परमाणवो वा इति न निश्चयः । [3]तेषां तत्कारणत्वे तद्रूपादिवद् बुद्धेः अस्मदादिभिरग्रहणमिति
१० चेत् ; आत्मनोऽपि तत्कारणत्वे तद्विभुत्ववत् तदग्रहणं किन्न स्यात् ? अत्र गुणवैचित्र्यं न परत्रे-[ति] न[४४२क] विभागहेतुः[4] ।

अथ परमाणूनां बुद्धिगुणत्वे व्यापित्वं व्योमवत् स्यात् । तथाहि–'परमाणवो विभवः नित्यत्वे सति अस्मदादिप्रत्यक्षगुणाधारत्वाद् व्योमवत्' इति चेत् ; न ; घटादिना व्यभिचारात् । एकान्तिकनित्यत्वस्य सर्वत्र निषेधात् । ततो यथा तत्सम्बन्धविकलत्वात् न परमाणवः
१५ तत्समवायिकारणं तथा आत्मापि मा भूत् । असमवायिकारणत्वं स्यादिति चेत् ; अत्राह–**असमवायिकारणत्वं च इति** सर्वमसंभाव्यम् ।

ननु किमिदम् असमवायिकारणम् ? समवायिकारणाद् अन्यदिति चेत् ; निमित्तकारण-मपि ततोऽन्यद् भवति, तथा च चक्षुरा[दिवत् त]द्विकलमपि[10] [11]तत्कारणम् इति निषेधानुपपत्तिः । अथ स्वकारणसमवायि[12] च उत्तरशब्दस्य पूर्वशब्दः, स्वकारणकारणसमवायि[13] यथा पटः(पटरूपं
२० प्रति तन्तुरूपम्), कारणकारणसमवयिवापि वा(समवायि[14] वा) यथा ज्ञानस्य आत्ममनः-संयोगः, असमवायिकारणमुच्यते ; तदयुक्तम् ; आत्मनः क्वचित् काये(कार्ये) तदनभ्युपगमात् । अभ्युपगमाच्च पृ(मात्र इ)ष्यन्त इति चेत् ; उच्यते–स्मरणज्ञानोत्पत्तौ संस्कारस्य, तस्य[15] [16]तदुत्पत्तौ ज्ञानस्य *"**ज्ञानजो ज्ञानहेतुश्च संस्कारः**" [17]इति वचनात् असमवायिकारणत्व-मिष्यते परेण, स्वकारणसमवेतत्वस्य[18] भावात् ; तदपि तद्विकलस्य[19] असंभाव्यम् । यथैव हि
२५ चेतनस्य चातन(नाऽचेतन)मुपादानम् , तथा तत्समवेतं चेतनं युक्तम् ।

(१) अनित्यस्वभावस्य । (२) ज्ञानसमवायिकारणत्वे । (३) हेतोः । (४) आधारमात्रम् । (५) पृथिव्यादिपरमाणूनाम् । (६)ज्ञानकारणत्वे । (७) विद्यते इति शेषः । (८) ज्ञानसम्बन्ध । (९) समवायिकारणाद्भिन्नम् । (१०) ज्ञानस्वभावसम्बन्धविकलमपि । (११) ज्ञानसमवायिकारणम् । (१२) उत्तर-शब्दस्य कारणम् आकाशः तत्र समवायि । (१३)पटरूपस्य कारणं पटः, तस्य कारणं तन्तवः, तेषु समवायि समवायसम्बन्धेन वर्तमानं तन्तुरूपम् । (१४) ज्ञानस्य एकं कारणम् आत्मा, अपरञ्च कारणं मनः, उभयत्र समवायसम्बन्धेन वर्तमानः आत्ममनःसंयोग इति । (१५) 'तस्य' इति व्यर्थम् । (१६) संस्कारोत्पत्तौ । (१७) तुलना–"ज्ञानजो···" प्र० वार्तिकाल० ३।५२७ । (१८) स्मरणस्य कारणम् आत्मा तत्र समवेतः संस्कारः इति । (१९) ज्ञानस्वभावविकलस्य आत्मनः ।

भवतु आत्मनः प्रदेशाः, ते च(न)ततः कथञ्चिद्भिन्ना इति चेत् ; अत्राह–यदि पुनः इत्यादि ।

[यदि पुनः

**प्रदेशतद्वदैक्यं चेत् प्रतिपत्ताऽयं न लक्षयेत् ।**

**स्याद्द्रव्यपर्यययोस्तत्त्वं जयेद् धाष्ट्र्येन सौगतान् ॥२७॥**　५

आत्मादीनां प्रदेशतद्वतोः भेदेऽपि स्वभावत एव कथञ्चित्तादात्म्यं सम्बन्धान्तराभावात् । गुणगुणिनोः सहभूतयोः जातितद्वतोश्च न कथञ्चित्तादात्म्यमिति स्वमनीषिकया तत्त्वमिदन्तया प्रतिष्ठापयितुकामः वैयात्येन कुतर्कविभ्रमात् स्वार्थाकारयोः तादात्म्यपरिणामं प्रतिक्षिपतः शौद्धोदनिशिष्यकान् विजयते । नहि प्रदेशतद्वतां घटपटवत् स्वातन्त्र्यं समवायासंभवादन्यत्र तादात्म्यात् । ]　१०

प्रदेश-आत्मनोः कथञ्चित्तादात्म्येऽपि अत्र तत्त्वं नेति (अन्यत्वं नेति) चेत् , अत्राह–[४४२ख] तद्वदेस(प्रदेश)तद्वदैक्यं चेत् इत्यादि । प्रदेशतद्वतोः ऐक्यं प्रपत्त(प्रति)पन्नः (प्रतिपत्ता) प्रतिपन्नवानयं नैयायिको न लक्षयेचित(लक्षयेत् चेत) स्यात् कथञ्चिद् द्रव्यपर्या(र्य)ययोः[तत्त्वम् ] एकतानात्व(नानात्व)मेव लक्षयेद् इत्यर्थः । जयेद्धाष्ट्र्येन सौगतान् द्रव्यपर्याययोः ऐक्यम् अलक्षयतः ।　१५

कारिकां विवृण्वन्नाह–आत्मादीनाम् आदिशब्देन गम(गग)नादिर्गृह्यते, प्रदेशतद्वतोः भेदेऽपि कथंचित्तादात्म्यं स्वभावत एव । कुतः ? इत्याह–'सम्बन्धा' इत्यादि । तादात्म्यसम्बन्धादन्यस्य सम्बन्धस्य अभावात् । न तावत्तयोः[1] संयोगः ; सतःसंयोगवत प्रसङ्गात । न चैवम् आत्मादीनाम् तेषु तेया(ते वा प्रदेशाः)स्युः, इतरथा घटादयोऽपि[2] संयोगाऽविशेषात् । घटादीनामपि स्वप्रदेशैः संयोग एव स्यात् । अयुतसिद्धत्वमन्यत्रा प्रकृतेऽपि समानम् । नापि　२० समवायः ; तेषां[3] तदारब्धत्वप्रसङ्गात् , तथा च घटादिवदनित्यत्वम् , स्वारम्भकावयवसन्निवेशविशिष्टत्वेन ईश्वरस्याप्यन्येश्वरपूर्वकत्वम्[4] । तत एव संयुक्तसमवायादयो दूरोत्सारिता एव । न गुणगुणिनोः कथञ्चित्तादात्म्यम् , अपि तु भेद एव । किंभूतयोः ? इत्याह–सह इत्यादि । पुनरपि कयोः ? इत्याह–जातीत्यादि । चेति समुच्चये । इत्येवं स्वमनीषिकया तत्त्वम् इदन्तया भेदैकान्तरूपतया च नानेकान्तक्षणिकादिरूपतया प्रतिष्ठापयितुकामः शौद्धोदनिशिष्यकान्　२५ च वैयात्येन विजयते । किंकुर्वतः ? इत्याह–तादात्म्यपरिणामं प्रत्यक्षं प्रतिक्षिपतः कुतर्कविभ्रमात् । [४४३क] कथं तं प्रतिक्षिपतः ? इत्याह–स्वार्थाकार इत्यादि । प्रपञ्चेन चर्चितमेतत् । प्रदेशतद्वतोरपि तादात्म्यं नेति चेत् ; अत्राह–नहि प्रदेशतद्वतां घटपटवत् स्वातन्त्र्य (न्त्र्यं)भवेद् इति भावः । समवायादेर्भावात् नैवं[5] चेत् ; अत्राह–समवाय इत्यादि । किं सर्वथा तदसंभवः ?, इत्याह–अन्यत्र इत्यादि । तादात्म्याद् अन्यस्मिन् सम्बन्धत्वे इष्यमाणे तद-　३० संभवः, तादात्म्ये तु संभव एव ।

(१) प्रदेशतद्वतोः । (२) आत्मादीनाम् स्युः । (३) प्रदेशानाम् । (४) स्यादिति । (५) न स्वातन्त्र्यम् । (६) समवायासंभवः ।

एतदेव दर्शयन्नाह–**संयोग** इत्यादि ।

**[संयोगसमवायाभ्यामन्यत्र विभुद्रव्यवत् ।**
**स्वतः स्वभावतादात्म्यादृते न व्यवतिष्ठते ॥२८॥**

सर्वत्र तथापरिणामं मुक्त्वा नापरः संयोगः समवायो वा सम्बन्धः परिकल्प्यः।
५ तदभावे सर्वगतानां स्वप्रदेशवृत्तेरप्रतिबन्धात्। तद्भेदैकान्ते समवायवृत्तेः···समवायस्य विशेषणीभावोऽत्र सम्बन्धश्चेत् ; सर्वत्र अयमेवास्तु । ननु तत्···]

**स्वतः स्वभावतादात्म्याद् ऋते** विना **अन्यत्र** अन्येषु परस्परं भिन्नेषु **कुतः सम्बन्धो व्यवतिष्ठेत(ष्ठते)?** दृष्टान्तमाह–**विभुद्रव्यवद्** इति । संयोगाते(दि)र्व्यवतिष्ठेत इति [चे]त ; अत्राह–**संयोगसमवायाभ्यां न व्यवतिष्ठते** इति ।

१० कारिकार्थ[मा]ह–**सर्वत्र** इत्यादि । **न्यथा(तथा)परिणामम्** अविनिर्भागपरिणतिं **मुक्त्वा नापरः** पुरुषदण्डयोः **सम्बन्धः परिकल्प्यः** । कोऽसौ ? इत्याह–**संयोगः**,किन्तु तथा परिकल्प्यः । यदि पुनर्द्वयोः कथञ्चित्तादात्म्येन वर्तमानः संयोगः स्यात् , तस्य पुरुषदण्डाववयवौ सं च अवयवी इति प्रसक्तम् कपालघटवदिति तथा च एकाकर्षणात नियमेन सर्वाकर्षणम् । आत्मशरीरयोरपि अन्योऽवयवी[२], न चैवम् इति । तथा गुण्यादीनां **तथा परिणामं** तादात्म्य-
१५ परिणाम(मं)**मुक्त्वा नापरः सम्बन्धः परिकल्प(ल्प्यः)** । कः ? इत्याह **समवाय** इति । कुतः ? इत्यत्राह–**तदभावे** तथा परिणामाभावे **सर्वगतानाम्** आत्मादीनाम् **स्वप्रदेशेषु वृत्तेरप्रतिबन्धभावात् (न्धात्)** सम्बन्धाभावात् तथापरिणामः परिकल्पः(ल्प्यः) । [४४३ब] कस्मिन् ? इत्याह–**तद्भेदैकान्ते** तत्प्रदेशतद्वतोः नानात्वैकान्त इति । समवायः प्रतिबन्ध इति चेत् ; अत्राह–**समवायवृत्तेः** इत्यादि । समवायस्य स्वत एव वृत्तिः इति चेत् ; अत्राह–**समवायस्य**
२० इत्यादि ।

असम्बन्धः समवाय इत्येके ; तेषां गुणो गुणी समवाय इहेति प्रत्ययजननात् तत्सम्बन्ध उच्यते; नासकस्ये(न; अशक्तस्य) पदार्थान्तरवत् तज्जननविरोधात । शक्तश्चेत् ; तर्हि शक्तियोगात्तथा[यथा] शुक्लगुणयोगात् शुक्लः । शक्तेश्च ततो भेदे सम्बन्धासिद्धिः । पुनः समवायकल्पने नैवनेवस्था(ल्पने अनवस्था ।) **विशेषणीभावात्र(वोऽत्र)सम्बन्धश्च(श्चेत् ) सत्रं च**
२५ **(सर्वत्राऽ)यमेवास्तु** किं समवायेन ? नहि गुणादयो द्रव्यस्य न विशेषणम् । गुणानुरक्तप्रतीति[:] एव(वं) स्यात् न इहप्रतीतिः इति चेत् ; कथं 'समवाये शक्तिः' इति प्रतीतिः ? सोऽयं विशेषणीभावः इहे इहेतिप्रत्ययहेतुः नान्यत्र[सत्य]मीश्वरविलसितम् ! तत्सम्बन्धेति(न्धेऽपि) तदन्तरकल्पने अन्याऽनवस्था । विशेषणीभावोऽपि भावस्य किं कुर्वाणः स्यात् ? अकिञ्चित्करस्य वस्तुत्वाऽयोगात् । किञ्चित्करत्वे सर्वं तदवस्थम् । शक्तिः ततोऽभिन्नेति चेत्; तथा गुणादयोऽपि

(१) संयोगः । (२) स्यात् , तयोः संयोगात्मकः । (३) सम्बन्धः । (४) अन्यः सम्बन्धो न विद्यतेऽस्येति असम्बन्धः । (५) समवायात् । (६) समवाये । (७) द्रव्यादौ । (८) सम्बन्धान्तरकल्पने । (९) समवायात् ।

तद्वतो न व्यतिरिच्यन्ते । 'घटस्य रूपादयः' इति न स्यादिति चेत् ; 'तद्वतः शक्तिः' इति कथम् ? गुणगुणिनोरभेदे एकग्रहणे सर्वग्रहणमिति चेत् ; किं पुनर्द्रव्यादिग्रहणे सन्नि (शक्ति)-ग्रहणम्[2] ? तथा चेत् ; मन्त्रादौ संशयादिः कुतः ? इति यत्किञ्चिदेतत् । [३४४क] परमतम् आशङ्कते नन्वे इत्यादि । तच्छब्देन आत्मानि (दि) परिग्रहः ।

तत्र दूषणमाह-**निरंश** इत्यादि । ५

**[निरंशात्माणुसंयोगात् स्मृतिर्नित्यं प्रसज्यते ।**
**परमाणुवदिष्टं चेत् स्मृतिषट्कं सहेक्ष्यताम् ॥२९॥**

**आत्ममनसोः निरंशत्वैकान्ते सन्निकर्षासंभवात् अकादाचित्कत्वात्मविभुत्ववद्यावद्द्रव्यभावित्वात् कथं तत्प्रभवगुणविशेषस्य अन्यानपेक्षिणः कादाचित्कत्वं यतः कदाचित् स्मृतिः । अदृष्टकारणत्वे मनोऽहेतुकं स्यात् । सत्यपि अणौ मनसि आत्मनः स्मृतीनां** १० **षण्णां सप्तानां वा सहैवोत्पत्तिः स्यात् परमाणुवत्··· । तदेतत् तदागमपठितं करणमात्मान्तरं द्रव्यान्तरं सदपि विचार्यमाणं अन्तर्बहिश्चाकिञ्चित्करम् ।]**

**अणु**रिति मनसोऽभिधान (नम्) **निरंशौ** यौ **आत्माणू** तयोः **संयोगाद्** हेतेः (हेतोः) **स्मृतिः नित्यं** सदा, उपलक्षणमेतदिति सर्वत्र च **प्रसज्यते** । न खलु समर्थस्य कारणस्य सर्वत्र सर्वदा भावे कार्यकादाचित्कत्वम् ; अतत्त्वार्थत्वप्रसङ्गात् । १५

ननु संयोगस्य द्रव्ये सर्वत्राऽवृत्तेः नायं दोषः, नहि परमाणूनां संयोगाः (गः) तावद्व्याप्य वर्त्तते ।-तदाह-**परमाणुवद् इष्टं चेत्** इति । यथा परमाणुषु संयोगो वर्त्तमानो न सर्वदा तदात्मनि वर्त्तते अयावद्द्रव्यभावित्वादस्य तथा आत्ममनसोरप्य (रप्ये) **तदिष्टं चेत्** ; अत्रोत्तरमाह-**स्मृतिषट्कं सह** युगपद् **ईक्ष्यताम्** ।

एवं मन्यते-आत्मनो व्यापिनो मध्ये वर्त्तमानस्य अणुमनसोऽयावद्द्रव्यभाविनोऽवश्यं २० घट (षट्) संयोगाः आत्मन[:], स्वात्मना तस्य षड्भिः दिग्भिः सम्बन्धात् , तथा च तयोः तदेव सावयवत्वम् , अन्यथा कुतोऽस्य प्रदेशवृत्तित्वमिति ? अथ यथा जैनस्य परमाणूनां नैरन्तर्येण अवस्थानं संयोगः तथा ममापि आत्ममनसोः इति ; युक्तमेतत् , किन्तु न संयोगो गुणः सर्वगतत्वं (तः) मनोदेशपरिहारा[त्]। भवन्तु तस्य युगपत् षट्संयोगाः, तेभ्यस्तु स्मृतिः एकैव वज्जा (तज्जा) तन्तुभ्य एकपटवत् तत्संयोगेभ्यो वा इति चेत् ; न ; अन्यथाऽभिप्रायात् । तथाहि- २५ यथा एकत्वेऽपि मनसः ततः सहात्मनि समवेताः संयोगाः षट् तथा स्मृति (त) योऽपीति [४४४ख] न तदेकत्वं स्मृत्येकत्वं (त्व) निबन्धनमिति ।

कारिकां विवृण्वन्नाह-**आत्म** इत्यादि । **आत्ममनसोः निरंशत्वैकान्ते** अङ्गीक्रियमाणे **सन्निकर्षस्य** आत्ममनसोः संयोगस्य तयोरन्यस्य सम्बन्धस्य **असंभवात् अकादाचित्कत्वात्मविभुत्ववद्यावद्द्रव्यभावित्वात्** कारणात् **कथं तस्य तत्प्रभवगुणविशेषस्य तस्मात्** सन्नि- ३० कर्षात् **प्रभव** उत्पत्तिः यस्य स चासौ **गुणविशेषश्च** बुद्ध्यादिः **तस्य** । न[नु]तदपेक्ष (क्ष्य) स्य

(१) गुण्यादेः । (२) अस्ति ? (३) संयोगस्य । (४) भवति ।

सहकारिणः कादाचित्कत्वात् **कादाचित्त्वम्** इति चेत् ; अत्राह–**अन्यान्यपेक्षिण** इति । चर्चित-मेतत् । **यतः** तत्कादाचि[त्क]त्वात् **स्मृतिः कदाचित्** 'स्यात्' इत्यध्याहारः । ततो यदुक्तम्–***"सुखादिस्वसंवेदनादिज्ञानानि इन्द्रियजनितानि, तत्त्वात्, चक्षुरादिजनितरूपादिज्ञानवत्, यत् तद् इन्द्रियं तत् मनः"** इति[2] ; तन्निरस्तम् । ततः तद्भावे[3] क(का)दाचित्कत्वमयुक्तमिति

५ मन्यते । अदृष्टस्य कादाचित्कत्वमभ्युपगम्य तस्यपि (तस्यापि) तत्कारणत्वे दोषं दर्शयन्नाह–**अदृष्ट** इत्यादि । **अहेतुकम्** अविद्यमानलिङ्गं **मनः स्यात्** ।

ननु चक्षुरादिज्ञानम् अदृष्टादुपजायते इति; तत एव तन्निष्पत्तेश्चक्षुरादिकम् अनर्थकं भवे[त् ।] तत्प्रतीतेर्नेति चेत् ; मनोऽपि तत एव नाऽनर्थकम् अनन्तरानुमाना[त् ] तत्प्रतीतेः इति चेत् ; न ; स्वसंवेदनव्यभिचारात् , तस्य च साधनात् । अधुना मनोऽभ्युपगम्य दूषण-

१० माह–**सत्यपि** इत्यादि । सत्यपि न केवलमसति **अणौ** सूक्ष्मे **मनसि** प्रदेशवत्त्वे सत्त्वत्य (त्वेऽसत्य) प्यात्मनः **स्मृतीनां षण्णां समानां** [४४५क] वा···म स्यनाप्या(वा **मनसो**ऽप्या)त्मनः **सम्बन्धा[त्]सहैवोत्पत्तिः स्यात्** । कुतः ? इत्यत्राह–**परमाणुवदि**[त्यादि]

स्यान्मत(तं) त्वम(त्वन्म)तेऽपि मनोऽस्ति, तदप्येवमहेतुकं स्यात् । आगमगम्यत्वान्नैवं चेत् ; मदीयं तथास्तु । तत्प्रयोजनस्य अदृष्टतः सिद्धेर्नैवं चेत् ; त्वदीयेऽपि समानम् । उभय-

१५ कल्पनम् उभयत्रेति ; अत्राह–**तदेतदात्म्य(दागम**[7]**)** इत्यादि । **तदागमयति(मपठि)तमेतद् विचार्यमाणम्** अतोऽ[**किञ्चित्करम्** ] किञ्चिदपि कर्तुं न समर्थ(र्थम्) । किंभूतम् ? **सदपि** आगमपाठमात्रेण विद्य[मानमपि । ननु अन्यार्थक्रियाकरणात्तद्]**किञ्चित्करं** कथं सप[स्या]दिति चेत् ? त[द्]न्यस्य(स्व)कार्यकरणेऽपि सुखादिवेदनादौ विकलेन्द्रियादिवद् अनुपयोगाद् एवमभि-धानात् । पुनरपि किंभूतम् ? **करणमिति** । केन रूपेण तत्तत् ? इत्याह–**आत्म** इत्यादि । तद-

२० र्थान्त[र]त्वेन । पुनरपि किंभूतम् ? इत्याह–**द्रव्यान्तरम्** , प्रतीयमानात् चक्षुरादिद्रव्याद[न्यद् द्रव्यं **द्रव्या]न्तरम्** इति । क्व अकिञ्चित्करम् ? इत्याह–**अन्तर्बहिश्च** । **अन्तः** सुखादिस्ववेदने, नहि सुखादिस्वसंवेदन न शेषमिन्द्रियवत्र न तस्के(स्वसंवेदने शेषमिन्द्रियम् , अमनस्के) अन्यथा विभागोपगमात् (?) **बहिस्त** (बहिश्च) घटादौ । तत्र कस्यविज्ञानस्य(स्वविज्ञानस्य) चक्षुरादेरपरस्यानुभवादे 'स्परस्य अनुभवादे'[9]र्भावात् । सिक्षायदि(शिक्षालापादि)ग्रहणाग्रहणे

२५ संस्कारदृढत्वेतरकृते, मनुष्यस्य व्याकरणप्रक्रियाग्रहणेतरवत् । तदूदृढतरत्वेनरे आवरणक्षयोपश-मविशेषात् । **'सत्यपि'** इत्यनेन आगमगम्यत्वम् , **'अकिञ्चित्करम्'** इत्यनेन तदसाधार णकार्योऽभावाद् अननुमेयत्वं दर्शयतिस्म ।

ननु (ननु) [10]आत्मप्रदेशावरणक्षयोपशमरूपस्य भावेन्द्रियस्य द्रव्यकरणापेक्षत्वात् [४४५ ख]

(१) सहकारि । (२) तुलना–"सुखादयो वा करणपरिच्छेद्याः ग्राह्यत्वाद् रूपादिवत् ।"–प्रश० व्यो० पृ० ४२५। "सुखादिप्रतीतिरिन्द्रियजा अपरोक्षप्रतीतित्वात् ।···स्मृतिः इन्द्रियजा ज्ञानत्वात् ।"–प्रश० क० पृ० ९०। (३) मनसः सकाशात् उत्पादे ।(४) अदृष्टादेव । (५) रूपादिज्ञानोत्पत्तेः । (६) जैनमतेऽपि । (७) 'तदेतदागम' इति वक्ष्यमाणायाः वृत्तेः प्रतीकम् । (८) 'अकिञ्चित्करम्' इति । (९) 'स्परस्यानुभवादे' इति द्विर्लिखितम् । (१०) आत्मप्रदेशेषु यः अवारणक्षयोपशमः तद्रूपस्य ।

[तन्] सिद्धिरिति चेत्; कु(क्व) तस्यै तदा(द)पेक्षा? रूपादौ इति चेत्; तत्र चक्षुरादिलिङ्गादेर्भावा[त्] सिद्धसाधनम्। तत्र ततोऽप्यन्यस्य साधने; साङ्ख्यमतवद्[3] अनवस्था।

किंच, सर्वस्य तत्रूपे वे समस्य(तत्क्षयोपशमस्य) प्रमेये प्रवृत्तावधि(वपि) ज्ञानं पराश्रयम् इति प्रत्यक्षत(क्षं न) स्यात्। कु (क्व)? भाविनि सुखादाविति चेत्; न; उक्तमत्र [अ]मनस्कसुखादिना व्यभिचारादिति। ५

किं च, एवं वादिनः सर्वमध्य[क्ष]म् इन्द्रियजं तत्त्वात्[8] कुतो न सिध्यति? अन्यथानुपपत्तिर्वैकल्यात्; इतरत्र समानमिति स्थीयतामविवादेन।

भवतु वा परपक्षि(परि)कल्पितं मनः ततो ज्ञानं वा, तथापि यौगमते 'न सर्वज्ञानं वा तथापि यौगमते' न सर्वज्ञः इति दर्शयन्नाह–**स्वत** इत्यादि।

**[स्वतोऽसत्यः पुनः संवित्प्रकाशासंभवात्ततः।** १०

**अत्यन्तमात्मनि परतः अनवस्थानतः कुतः ॥३०॥**

सत्यपि सर्वार्थसन्निकर्षे असर्वज्ञत्वं सदसदात्मकत्वात् वस्तुनः। यतोऽयं योगनिर्मितेन्द्रियशरीरः ऋद्धौ सर्वान् अनेकधा पश्येदनुस्मरेद्वा।]

**स्वतः** स्वरूपेण **अत्यन्तम्** एकान्तेन **आत्मनि** स्वरूपेऽ**सत्या(त्यः)**तत्राऽव्या[प्रियमा]णायाः **संविदो** ज्ञानस्य **प्रकाशासंभवात्** तस्याः प्रतिभा[साभा]वात् कुतः पुनः १५ सर्वज्ञत्वम् स्वबुद्धेरप्यग्रहणात्। तत्र युक्तम्–*"**सदसद्वर्गः कस्यचिद् एकज्ञानालम्बनमेकत्वात्(त्वम् अनेकत्वात्) पंचाद्गुणवत् (पञ्चाङ्गुलवत्)**।" इति; तत्संविदा व्यभिचारात्। ज्ञानान्तरात् तस्याः प्रकाशः; इत्यत्राह–**परतः** अन्यतो ज्ञानात् तस्याः '**प्रकाशासंभवात्**' इति सम्बन्धः, **अनवस्थानतो(स्थानतोऽ)**र्थमात्रस्यापि ग्रहणाभावात्।

यद् यस्मात् [सन्निकर्ष]सत्वा(सत्त्वा)दयं परीक्षमाण आत्मा **सर्वान्** अर्थान् **पश्येत्**। २० किंभूतः? इत्याह–**योग** इत्यादि। कस्मिन् सति? इत्याह–**सिद्धा(ऋद्धा)** वित्यादि। कथं किंच? इत्याह–**अनेकवा(धा)** इत्यादि। तथा **अनुस्मरेद् वा**। '**यतः**' इति वा आक्षेपे [४४६क] नैव[अनुस्मरेत्]।

अथ संविद् आत्मनि सत्त्वेऽपि सन्निकर्षवादिनः प्रकारान्तरेण सर्वज्ञत्वाभाव(वं) दर्शयन्नाह–'**सत्यपि**' इत्यादि। संभवनायाम् **अपि** शब्दः। **योगनिर्मितेन्द्रियशरीरस्यापि** योगिनः २५ **मनसः** चक्षुरादेर्वा **अर्थैः** सन्निकर्षस्य भावतो[ऽ]भावात्रिद्धि(वात्। ऋद्धि)प्रादुर्भावात् पूर्वम् उत्पद्य विनष्टैः सद्धि(तैद्)व्युपरमात्, [10]ऊर्ध्वं उत्पत्स्यमानैः सन्निकर्षाभावात्। तथापि उच्यते–**सत्यपि** सर्वतः **सर्वार्थैः सन्निकर्षे** अस्य '**अयम्**' इत्यनेन जातविभक्तिपरिणामेन सम्बन्धात्। किम्? **असर्वज्ञत्वम्**। कुतः? इत्यत्राह–**सदात्मकत्वा सदा(सदसदा)त्मकत्वात्** सदात्म[कत्वादसदात्म]कत्वाच्च। कस्य? **वस्तु[नः]इति**। द्रव्यादीनां[नां सदात्मकत्वम् अ]सदात्मकत्वं ३०

---

(१) भावेन्द्रियस्य। (२) द्रव्येन्द्रियापेक्षा। (३) तेन एकादशेन्द्रियस्वीकारात्। (४) अध्यक्षत्वात्। (५) इति चेत्;। (६) 'न सर्वज्ञानं वा तथापि यौगमते' इति द्विर्लिखितम्। (७) स्यात्। (८) परमार्थतः। (९) सन्निकर्षस्य नष्टत्वात्। (१०) आगामिकाले। ऋद्धिप्रादुर्भावानन्तरम्।

प्रागभावादीनामिति । अपरापेक्षया इदमुच्यते। अयमभिप्रायः–येषामर्थानामिन्द्रियसन्निकर्षः सदात्मनाम् तेषां तेन ग्रहणमस्तु, असदात्मनानुमा(नां तु सत्ता)नास्तीति कथं तेन ग्रहणम् ? घटादिप्रागभावादिः[न]इन्द्रियेण संयुक्तः अद्रव्यत्वात्[1]। नापि तत्र समवेतः; तत्त्वस्त (तत्त्वतस्त)-त्प्रत्ययप्रसङ्गात् । अत एव सम्बन्धसम्बन्धोऽपि[2] दुर्घटः ।

५ स्यान्मतम्–इन्द्रियेण घटादिक(कं) सन्निकृष्टं तेन च प्रागभावादिः[3], ततो रूपादिवद् अस्य ग्रहणमिति ; तदस त्य(सत् ; य)तः अभावस्य अद्रव्यत्वात् न तेन[4] घटस्य संयोगः । न च समवायः ; अभावकाले तदभावात् । अत एव नान्योऽपि सम्बन्धः ।

अथ मतम्–घटसंयुक्तेन्द्रियस्य घट (टा) भावेन संयुक्तविशेषणीभावसम्बन्धः, रूपाद्यभावेन संयुक्तसमवेतसमवेत[6]विशेषणीभावसम्बन्धः, रूपा (पत्वा) द्यभावेन संयुक्तसमवेतसमवेतसमवेत-

१० विशेषणीभावः, [४४६ख] एवं कर्मादावपि वक्तव्यमिति ; तदप्यसत् ; सु(स्व)समया(य)-व्याघातात् । यद(यो)हि घटस्य प्रा[गभावप्र]ध्वंसाभावाभ्या(भ्यां) साक्षात् सम्बन्धः सैव (स एव) अनित्यता इति । *"उभयान्त्यधि(न्तव्यवधि)सत्ताऽनित्यता" [न्यायवा० पृ०२८४] इति[8] किमनेन ?

किंच, विशेषणीभावसम्बन्धाप्रतिपत्तौ 'इदमस्य विशेषणम्' इति कुतः प्रतिपत्तिः ? न

१५ हि संयोगाप्रतिपत्तौ 'इदमप्यस्य संयोगि' इति संवित्तिर्युक्ता ।

ननु यथा समवायाग्रहणेपा(णेऽपि 'इ)दमत्र समवेतम्' इति प्रतीतिः, तथा अत्रापीति चेत् ; न ; साध्यसमत्वात् निदर्शनस्य । 'समवेतम्' इति हि समवायापेक्षिणी प्रतीतिः, यथा 'संयुक्तः' इति संयोगातप(गापे)क्षिणी । न च तदप्रतीतौ सा[10] युक्ता, अन्यथा शुक्लताऽप्रतीतौ शुक्ल इति संवित्तिः स्यात् । न चैवम् इति । प्रतीयते सोऽपीति चेत् ; [11]तस्य इन्द्रियेण कः सम्बन्धः ?

२० विशेषणीभाव इति चेत् ; अनवस्था । अपि च, इन्द्रियघटसंयोगकाले न प्रागभावः प्रध्वंसो वा,[त]त् कथम् इन्द्रियस्य तेन पारम्पर्यसम्बन्धः । न हि असता सतः सम्बन्धः खरविषाणे-नेव । प्राक्पश्चाततस्थोर्भाव (श्चात्स्थो[12]ऽभावः) इति चेत् ; तदा न घटः नापि इन्द्रियसंयोगः । न च अभावोऽप्रतिपन्नो विशेषणम् , दण्डवत् । प्रतिपन्नश्चेत् ; न तावेत् (तावत्) सह घटेन, [13]तत्काले [14]तदभावात् । नापि केवलः; तद्ग्रहणोपायाभावात् । अत एव स्मर्यमाणोऽप्यसौ[15] न

२५ विशेषणम् ।

---

(१) द्रव्यद्रव्ययोः संयोगात् । (२) संयुक्तसमवायः समवेतसमवायादिको वा, विशेषण-विशेष्यभावो वा, न संभाव्यः, सम्बद्धयोरेव तद्भावात् । (३) सम्बद्धः । (४) अभावेन । (५) घटस्या-सद्भावात् । (६) एकः 'समवेत' शब्दोऽधिकः । इन्द्रियसंयुक्ते घटे रूपं समवेतं तद्विशेषणमभावः । (७) एकः 'समवेत' शब्दोऽधिकः । इन्द्रियसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वं समवेतं तद्विशेषणमभावः । (८) तुलना–"यस्योभयान्तव्यवधिसत्तासम्बन्धवाचिनी । अनित्यताश्रुतिः = यस्य नैयायिकादेः उभयस्य प्राक् पश्चाद् भावस्य अन्तस्य व्यवधायकः सत्तासम्बन्धः तद्वाचिनी अनित्यताश्रुतिरिष्टा"–प्र० वा० मनोरथ० २।१११। "या उभयान्तपरिच्छिन्नवस्तुसत्ता सा अनित्यता"–न्यायवा० । (९) संयोगसमवाया-प्रतीतौ । (१०) संयुक्त इति समवेत इति वा प्रतीतिः । (११) संयोगस्य समवायस्य वा । (१२) प्राक्पश्चाच्च तिष्ठतीति प्राक्पश्चात्स्थः । (१३) घटकाले । (१४) अभावस्य असद्भावात् । (१५) अभावः ।

परः प्राह–इन्द्रियसंयुक्ते घटे सत्ता समवेता तद्विशेषणं प्रागभावादिः, ततः संयुक्तसमवेतविशेषणीभाव इति ; तदप्यसारम् ; नित्यायाः तस्याः [४४७क] तद्विशेषणायोगात् आत्मादिवत् ।

किंच, प्रागभावो घटकाले विनश्यति तदा तस्यापि प्रध्वंसोऽस्ति, तथा प्रध्वंसस्य प्रागसतो भावे प्रागभावः, न च तत्रेयं ग्रहणप्रद्विया(प्रक्रिया) ; सत्तासमवायाऽभावादभावस्य । न च तस्यानित्यताव्यपदेशः ; उभयान्तव्यवधिसत्तासम्बन्धाभावात् । नास्तीति चेत् ; पेदादो(पटादौ) कः समाश्वासः ? उपचारात् स तत्रेति चेत् ; अन्यत्रापि ततः स्यादविशेषात् । विशेषणीभावो परतो व्यमानोऽवधानात (भावोऽपरतः सम्बध्यमानश्चेत् ) तस्यापि तेन कः सम्बन्धो येन ग्रहणं भवेत् ? विशेषणीभाव इति चेत् ; किं पुनरसाधनेकः(सो अनेकः ?) तथा चेत् ; समवायोऽपि स्यात् । समवेतबुद्धेरभेदान्नैवं चेत् ; तन्निबन्धनापि बुद्धिर्न भिद्यत इति समानम् । तन्न असदात्मना इन्द्रियसन्निकर्ष इति न तस्य ग्रहणम् इति[न]सर्वज्ञत्वं सन्निकर्षवादिनः इति स्थितम् ।

तथापि सर्वज्ञत्वोपगमे नैयायिकवत् सौगतस्यापि किञ्चित् स्वाभ्युपेतं नश्य(नश्य)तीति दर्शयन्नाह–**प्रत्यक्षम्** इत्यादि ।

**[प्रत्यक्षं सर्वविषयं भिन्नकालमनागतम् ।**
**वेत्ति चेदर्थसारूप्यात् प्रामाण्यं संविदां न वै ॥३१॥**

**कुतश्चिदर्थादुत्पन्नं ज्ञानं यदि तदतिक्रान्तावेव योग्यतया प्रत्यक्षम् ; अनागतेऽपि किन्न स्यात् ? तत्सारूप्यातिशयसंभवात् तदुत्पत्तेश्च तत्प्रत्यक्षत्वकल्पनायामतिप्रसङ्गात् । यस्य दर्शनयोः''' अलम् असद्ग्रहकल्पनया अतिप्रसङ्गात् । यथैव हि कारणाभावलक्षणे भवतः स्वतन्त्रस्य कार्यत्वमत्यन्तमयुक्तं तथैव स्वकार्यकारणस्वलक्षणसंवेदनं च । यदि कुतश्चित् संवित्तेः परिच्छेदसामर्थ्यम् ; प्रमेयकाले एव स्यात् । दृश्यदर्शनयोरुपकार्योपकारभावस्य सर्वदा भावात् । तदेतद् द्रव्यं स्वत एव यथा परिणामलक्षणं तथैव जीवात्मकमेतत् स्वत एव ज्ञानस्वभावकं प्रत्येयम् । कारकज्ञापकशक्तेः स्वतः सद्भाविन्या एव परतः परिणामात्मोपकार्यविशेषप्रतिलम्भोपपत्तेः । तन्न कश्चिदज्ञानात्मा ज्ञानसम्बन्धात् ज्ञाता नाम घटादिवत् । स्वत एव सकलग्रहणप्रकाशोऽपि । तदयमात्मैव स्वतः संविदात्मा सुखादिरूपेण, दोषावरणविमुक्तः स्वलक्षणमनन्तज्ञानादि केवलं प्रतिपद्येत ।]**

**प्रत्यक्षं** तत् **सर्वविषयम्** , किंभूतम् ? **अनागतं** भावि, उपलक्षणमेतत् तेन भूतमपि गृह्यते । तत् किं करोति ? इत्याह–**भिन्नकालार्थो(कालम् अर्थं) वेत्ति चेद्** यदि भूतं भाविनो भावि भूतानिशे(न्निःशे)षानिति **प्रामाण्यं संविदा(दां) नवै** नैव **अर्थसारूप्यात्** किन्तु अन्यतः कुतश्चिद् अतिशयाद् भवेत् । नहि भाविनो योगिनोऽपि ज्ञानं जायते, यतः

(१) सत्तायाः । (२) प्रागभावस्यापि ।(३) प्रागभावप्रध्वंसाभावमध्यवर्तिन्याः सत्तायाः सम्बन्धाऽभावादित्यर्थः । अर्थात् यः उत्पद्यते विनश्यति च स एवानित्यः । (४) विशेषणीभावः । (५) भेदाऽभावात् । (६) विशेषणीभावनिबन्धनापि । (६) अर्थात् ।

तदाकारं स्यात् , अन्यथा सर्वभाविभावकार्यकाल एव तेन भवितव्यमिति [४४७ख] न ज्ञायेत नात्र कार्यकाले, कस्य काले तेन भवितव्यम् इति । तथा अनादिसकलार्थकार्यकालेऽपि भवति इदम् । एवं वक्तव्यम् तथा एकस्माद् भिन्नकालं कार्यद्वयम् *"नाक्रमात् क्रमिणो भावाः" [प्र० वा० १।४५] इत्यादिविरोधात् । अथ योगिनः सकलं वर्तमानमेव, न तस्य किञ्चिन
५ कारणं न च कार्यं नापि तज्ज्ञाने स्वाकारसमर्पकम् इति; प्रश(थ)मकार्यका(क)रणे च तज्ज्ञाने सकलं तथैव भवेत् । अथ न ज्ञानम् अनन्कार्यम् अतदाकारं ग्राहकम् ; सकलं तथास्तु, *"यस्य यावती मात्रा" इति न सर्वाविशेषः । एतत् सौगतं प्रति । तथा संविदा(दां) तत् तस्माद् अर्थात् जन्म न वै । नहि विवक्षितज्ञानं प्रति सर्वे भाविनो भूता वा अर्थाः कारणम् । कार्यकाले सन्निहितस्यैव योगेः(योगिः) कार[ण]त्वोपगमात् , इतरथा अर्थदेशे असन्निहितं तत्र चक्षुर्ज्ञानमुपजनयेत् ,
१० अदृष्टो वा अग्न्यादिदेशे[असन्निहितः] तस्य ऊर्ध्वज्वल(ज्वलननिमित्त)मिति नात्मसर्वगत्वम् । एतद् उभयं प्रति ।

कारिकार्थमाह-**कुतश्चिद्** इत्यादिना । **कुतश्चिद्** अनन्तरादतीताद् भाविनो वा विज्ञान-समानकालाद्वा **अर्थात् उत्पन्नं ज्ञानं यदि प्रत्यक्षम्** अर्थसाक्षात्कारि । कस्मिन् सति ? इत्याह-**तदतिक्रान्तावे[व]**तस्य अर्थादुत्पन्नार्थस्य अतिक्रान्तिः अतिक्रमः तस्यामेव **योग्यतया**
१५ तत्त्व[स्य]प्रमेय तत्प्र(यस्य प्र)त्यक्षं तदुत्पन्नत्वादिति भावः। **अनागतेऽपि** अपिशब्दाद् वर्तमानेऽपि **किन्न स्यात्** ? **'प्रत्यक्षम्'** इत्यनुवर्तते, तत्र च उक्तो दोषः [४४८क] । विपक्षे बाधां दर्शयन्नाह-**तद्** इत्यादि । तेन प्रमेयेण **सारूप्यातिशयो** यः तस्य **संभवात् ततः** प्रमेयादुत्पत्तेश्च तं **प्रत्य(तत्प्रत्यक्ष)त्वकल्पनायाम् अतिप्रसङ्गात्** । तत्र सारूप्यातिशयात्तत्कल्पनायाम् अतिप्रसङ्गं दर्शयन्नाह-**यस्य दर्शनयोः** इत्यादि । सुगमम् ।

२० अत्रैव दूषणान्तरं दर्शयन्नाह-**अलम्** इत्यादि । तात्पर्यमत्र-यदा ग्राह्यतहे[तु]-त्वमेव तदाकार(कारार्पण)क्षमम् उच्यते तदा 'अमुत एव ग्राह्यता' इत्युक्तं स्याद् **अलं** पर्याप्तं **असतो ग्रहकल्पनया** । कुतः ? इत्याह-**अतिप्रसङ्गात्** । तत उत्पत्तेश्च तत्कल्पनायाम अतिप्रसङ्गं दर्शयन्नाह-**यथैव हि** इत्यादि । येनैव हि प्रकारेण **कारणाभावलक्षणे** भावलक्षणे **भवतः** जायमानस्य । किंभूतस्य भवतः ? **स्वतन्त्रस्य कार्यत्वम् अत्यन्तमयुक्तम्** ।
२५ एतच्च नैयायिकेनापि उक्तं सौगतं प्रति । **तथैव स्वस्य** स्वस्य **कार्यस्य** यत् **कारणस्वलक्षण-(णं)**ज्ञानकालेऽविद्यमानं तस्य **संवेदनं च** अत्यन्तमयुक्तम् । एवं मन्यते-यथा सौगतस्य[य]दि नष्टं कारणं न कार्यजन्मनि व्याप्रियते कार्यं वा न 'तस्य' इति व्यपदिश्यते, तथा संवेदनकाले अविद्यमानं न तद्ग्राह्यशक्तिसमन्वितम्, संवेदनं वा ग्रहणसामर्थ्यसहितम्, अन्यथा हेतुफल-भावो भिन्नकालयोः ग्राह्यग्राहकवद् भवेदविशेषात् । अथवा, संवेदनस्य **कारणं स्वलक्षणं** तस्य
३० [४४८ख] **संवेदनमत्यन्तमयुक्तम्** कार्यविशेषत्वादस्य । कारणात्यये च जायमानं न 'तस्य'

(१) अग्नेः । (२) "भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञास्तदाकारार्पणक्षमम् ॥"-प्र० वा० । (३) तत्प्रत्यक्षत्वकल्पनायाम् । (४) 'भावलक्षणे' इति व्यर्थम् ।

इति व्यपदिश्यते विरत(चिरतरातीत)वत्। तर्हि यथा कारणं कार्यकाले सदेव तदुत्पादयति तथा संवेदनं प्रमेयसमये सदेव तद् गृह्णाति, तत्फलत्वाद् इति नैयायिकः; तत्राह-**यदि कुतश्चित् सम्बन्धात्** तदुत्पत्तिलक्षणात् **संवित्तेः परिच्छेदसामर्थ्यम्;** अत्र दूषणम्-**प्रत्येयंक**(प्रमेय)**ज्ञानकाल एव वस्तुनि स्यात् परिच्छेदसामर्थ्यम्** न अतीते न भाविनि इति कथं कस्यचित् सर्वज्ञत्वमिति भावः। अतीतानागतं वा ज्ञानस्य कारणम् इति तत्रैव तत्सामर्थ्यम् इति। नहि ५ अतीताऽनागतमादृश्यमपि दर्शनस्य मिथ्याबुद्ध्यवसायादन्यतः परस्य नि(इति) मन्यते।

संप्रति दर्शनस्य न सम्बन्धः उपकाराभावादिति चेत्; अत्राह-**उपकार्योपकारकभावस्य दृश्यदर्शनयोः सर्वदा** कालत्रयेऽपि **भावात्** मिथ्याविकल्पबुद्धेः सकाशाद् इति।

ननु *"ग्राह्यं न तस्य ग्रहणं न तेन" इत्यादिवचनात् 'स्वरूपे(प)वेदनमेव सर्वज्ञत्वम् न सर्ववेदनम् इत्यपरः; तत्राह-**तदेतद् द्रव्यम्** इत्यादि। **तत्** तस्माद् उक्तान्न्यायात् **एतत्** १० प्रतीयमानं **द्रव्यं स्वत एव**[न]भिन्नपरिणामाद् **यथा परिणामलक्षणं** परिणामो लक्षणं यस्य इति **तथैव जीवात्मकं** भेतनत(एतत्) **स्वत एव** नान्यतो **ज्ञानस्वभावकं** स्वपरग्रहणपर्यायात्मकम् **प्रत्येयं** चित्रैकरूपस्य स्वपरग्रहणस्वभावाविरोधात्। चक्षुरादि[४४९क] व्यापार[रेणैव स्वयं त]-स्य तत्स्वभावकुत्वे(वक्त्त्वं) स्यादिति चेत्; अत्राह-**कारक** इत्यादि। **कारकं** कर्त्रादि, जानातीति **ज्ञापक** आत्मा **तयोः शक्तेः स्वतः सद्भाविन्या एव परतः** चक्षुरादेरपि **परि-** १५ **णामात्मोपकार्यविशेषप्रतिलम्भोपपत्तेः।**

ननु च ज्ञातृविचारे किमर्थम् अप्रस्तुतस्य कारकस्य ग्रहणमिति चेदह(चेत् ? दृष्टा)न्तार्थम्। यथैव कारकस्य शक्तिः स्वतः सती शालिबीजादेः, परतोऽपि परिणामात्मोपकार्यविशेषप्रतिलम्भः तथा ज्ञातुरपि। नहि किश्या(कृष्या)दिना यवबीजस्य शाल्यङ्कुरजातिका(जनिका) शक्तिः आधीयते। २०

निगमयन्नाह-**तन्न** इत्यादि। य [त एवं]तत्तस्मात् **कचिद्** आत्मा अन्यो वा **अज्ञानात्मा** ज्ञानस्वभावरहितो **ज्ञानसम्बन्धात् न ज्ञाता नाम घटादिवद्** इति।

ननु घटादेः तत्सम्बन्धोऽपि नास्ति तत्कथं निदर्शनमिति चेत्; न; समवायस्य व्यापकस्य सर्वत्राविशेषा[त्] निषेधाच्च। स्वत एव ज्ञानस्वभावत्वे सर्वस्य सर्वदर्शित्वमिति चेत्; अत्राह-**स्वत एव** इत्यादि। तदन्ययेर्थान्तरसम्बन्धा व्यापप्रबोधश्च (तदन्यया अर्थान्तरसम्बन्धिन्या २५ वा स्वापप्रबोधश्चेत् आत्मनः)**सकलग्रहणप्रकाशोऽपि**। यत एवं **तत्** तस्माद् **अयं** स्वसंवेदनाध्यक्ष **आत्मैव स्वतः संविदात्मा** नादा(न तु आ)त्मसंविदोर्भेद इत्यर्थः। स च किंभूतः ? इत्याह-**सुखादिरूपेण** इत्यादि। **दोषावरणविमुक्तो** दोषावरणवैकल्यात् **स्वलक्षणं** स्वस्वरूपम् **अनन्तज्ञानादि केवलम्** असहायं **प्रतिपद्येत** यतः स्वभावविभुत्वम् इति।

भवन्तु तर्हि आत्मनः स्वभावभूताः [४४९ख] प्रदेशाः; इत्यत्राह-**यथा** इत्यादि। ३०

---

(१) कार्यम्। (२) प्रमेयम्। (३) द्रष्टव्यम्-पृ० ४१९। (४) ज्ञानस्वभावकत्वम्। (५) ज्ञानसमवायोऽपि।

[यथात्मा सम्यग्येनानन्तप्रदेशैः स्वतः ।
तथार्थोऽनन्तपर्यायैः तन्नार्थाः समवायिनः ॥३२॥

कथञ्चित्...]

यथा अनन्तप्रदेशैः सम्यग्येन विस्तरात्मादि(?)स्वतः न समवायादिवशात्
५ तथा अर्थः-प्रमेयो घटादिः अनन्तपर्यायैः तत्तन्मा(ततस्मात)न्नार्थाः समवायिनः समवायवन्तः ।

कारिकां व्याख्यातुमाह-कथञ्चित् इत्यादि । सर्वं[सुगमम्] ।

आत्मप्रदेशाभावे पुनरपि दोषमाह-तद् इत्यादि ।

[तत्प्रदेशोपचारेऽपि युगपज्ज्ञानसम्भवः ।
१० दूराच्छब्दश्रुतिरस्ति यथैकान्तवादिनाम् ॥३३॥

परमार्थतः प्रदेशनानात्वाभावे आकाशस्य प्रत्येकं रूपादिज्ञानं प्रसज्येत । आकाशस्य कर्ण···कथं स्युः । कार्यव्यतिरेकोपलक्षणाच्च कारणभेदस्य । न हि अग्निरारोपितोऽपि दहति, मुख्यार्थाभावप्रसङ्गात् । कुतश्चित् प्रदेशनियमाभ्युपगमे तद्दोषोऽवश्यम्भावी । विप्रकृष्टदेशानामपि शब्दानां श्रुतिः स्यात् संयुक्तसमवेतत्वस्य ग्रहणकारणस्य भावात् आत्माकाशयोः
१५ सर्वगतत्वात् मनसश्च सक्रियत्वात् । अदृष्टनियमं मनः अतिरिच्यताम् ।]

तस्य आत्मनः प्रदेशोपचारेऽपि वस्तुतोऽप्रदेशस्य[1] उपचरित[प्र]देशोपगमेऽपि युगपज्ज्ञानसंभवः । दूषणान्तरमाह-दूरात् शब्दश्रुतिरस्ति एकान्तवादिनां नैयायिकानाम् ।

कारिकार्थं दर्शयन्नाह-परमार्थतः अनुपचारतः प्रदेशनानात्वाभावे स्वाकाशस्य(आका-
२० शस्य)प्रत्येकं रूपादिज्ञानं प्रसज्येत । यदेव हि चक्षुरादीनामन्यतमेन मनः संयुज्यते तदेव आकाशेन, ततः संयुक्तसमवायाद् रूपादिग्रहणकाले गगनसमवेतसर्वशब्दग्रहणमिति । यदि पुनः आकाशेन संयोगेऽपि[2] न श्रोत्रेण इत्युच्यते; अत्राह-आकाशस्य इत्यादि । कर्ण आदि(त्यादि) परमतम् आशङ्कते दूषयितुम् । अत्र दूषणं कथम् इत्यादि । स्युरेव । कुतः ? इत्याह-कार्य इत्यादि । कार्यं शब्दः तज्ज्ञानं च आकाशस्य, तस्य व्यतिरेकः सर्वत्राभावः तेन उपलक्षणाच्च
२५ कारणभेदस्य [ग]गनप्रदेशनानात्वस्य । उपचारितः(चारतः) तस्य प्रदेशभेदः ततः श्रुतिभेदः इति चेत्; अत्राह-नहि अग्निरित्यादि, कुतो न दहत्येव ? इत्यत्राह-[आरोपितोऽ]पीत्यादि । माणवकाद् अन्यस्मिन्नपि जलादौ न दहति[४५०क] अयमिति यन्मुखोस्यः(यन्मुख्योऽर्थः) तस्य अभावप्रसङ्गात् । उपचारस्य सर्वत्र कर्तुं[शक्यत्वात्] सम्बन्धाद्[3] उष्णस्पर्शाभावस्य च अविशेषादिति भावः ।

(१) प्रदेशरहितस्य । (२) संयोगः । (३) यतोऽग्निरपि स्वतः उष्णस्पर्शरहितः, उष्णसम्बन्धादेव उष्णो भवति इत्यर्थः ।

सन्तु तत्त्वतः तत्प्रदेशा इति चेत्; अत्राह–**कुतश्चित्** तदविनाभाविकार्यात् **प्रदेशनियमाभ्युपगमे** 'कर्णशष्कुल्यवरुद्धः अन्यः तद्विपरीतः अन्यः प्रदेशः इति' नियमस्य अङ्गीकरणे **तस्य** आकाशस्य **भेदा(दो)ऽवश्यंभावी** । तथा च एकत्वं गगनस्य दुर्लभम्, आत्मप्रदेशवत् प्रसङ्गश्च चिन्त्यः । निष्प्रदेशत्वे तस्य पुनरपि दूषणमाह–**विप्रकृष्ट** इत्यादि । यत्र न[भ]सि समवेताः सर्वशब्दाः तत्र संयुक्तं मनः ततः **संयुक्तसमवेतत्वस्य ग्रहणकारणस्य भावात्** तं ५ च वरणमिति (तत्श्रवणमिति) तर्हि आमन्नेऽपि एतदेव श्रवणकारणम् । स्यान्मतम्–मनःसंयुक्तात्मप्रदेशसंप्राप्तः शब्दो मनसा गृह्यते, 'विभुद्रव्यविशेषगुणत्वे सति अस्मदाद्युपलभ्यमानत्वात्, सुखादिवत्, ततोऽयमदोष इति; तत्राह–**आत्माकाशयोः सर्वगतत्वात् मनसश्च [स]क्रियत्वात् विप्रकृष्टदेशानामपि शब्दानां श्रुतिः स्यादिति** ।

एवं मन्यते–क्रियावत् मनः शब्दोऽक्रियः, ततः शब्ददेशं प्राप्य तत् प्रकाशकं चक्षुरश्मिवत् । एवं च दूरादिप्रतीतिः सौगतकल्पिता न विरुध्यते । वीचीतरङ्गन्यायेन अक्रियस्य शब्दस्य आगमनप्रयासपरिहारश्च । अध्व (अथ) दूरदेशानां श्रवणे कथं निकटा प्रतीतिः ? कथं सखो- (शाखा) प्रदेशे चन्द्रमसः प्रतीतिः ? [४५०ख] इन्द्रियस्याऽऽशुवृत्तेः; अत्रापि मनसः शब्दग्रहणे तथैव आशुवृत्तिः । अथ मनः शरीरं विहाय नान्यत्र याति; कथं चक्षुर्याति ? गमनादर्शनम् उभयत्र ।

स्यान्मतम्– चक्षुः अर्थदेशं गत्वा तं प्रकाशयति तैजसत्वात् प्रदीपवत्; मनोऽपि इन्द्रियत्वात् नयनवत् इति समानम् । अथ ये श्रूयन्ते शब्दाः तद्देशे तद्गमनम् नान्यत्र देशे; केन कृतमेतत् ? अदृष्टेन इति चेत्; अत्राह– **अदृष्ट** इत्यादि । **अदृष्टेन नियमे मनः अतिरिच्यताम्**[3] अदृष्टत एव तदर्थसिद्धेः त[द्]नर्थकमिति ययुक्तं (यदुक्तं) परेण गन्थेकस्य (ग्रन्थे, *"एकस्य) **सर्वैः [मूर्ति]मद्भिः युगपत् संयोगः सर्वगतत्वम्, आत्मा**र(त्मादेः") इति; २० तं निरसत्वे (तन्निरंशत्वे) अनुपपन्नम् इति ।

यद् (तद् दूषय)न्नाह– **प्रदेशा** इत्यादि ।

**[प्रदेशाः सन्तु मा वा सम्बध्येद् युगपद्विभुः ।**
**अनन्तैरपि पर्यायैः तथात्माप्यसकृत्स्वतः ॥३४॥**

**विभोरात्मनः अन्यस्य वा यावद्भिः परस्परव्यावृत्तमूर्तिमद्भिः संयोगाः तावन्तस्ते परस्परव्यावृत्तात्मानः संयोगिनः तावतः स्वभावभेदान् अन्यथानुपपत्त्या साधयन्ति । ते पुनः प्रदेशव्यापदेशभाजो भवन्तु मा वा, भावस्तादात्म्यात्तैः स्वत एव सम्बध्येत । एतेन···पर्याय···। संयोगभेदाभावे तदन्यतमविभागे सर्वेषां सह विभागप्रसङ्गात् । तथा च कस्यचिच्चलने सर्वकार्यद्रव्यं सकृदेव चलेत् सर्वत्र संयोगैकत्वोपपत्तेः । तथा विभुद्रव्यवत् परमाणोः स्वत एवानन्तपर्यायसिद्धिः ।]** ३०

**प्रदेशा** भागाः **सन्तु मा** व (वा) भूवन् प्रदेशा गगनादेः तथापि **सम्बध्येत् विभुः**

(१) आकाशस्य । (२) विभुद्रव्यम् शब्दे आकाशः । (३) त्यज्यताम् इत्यर्थः ।

सर्वगतः पदार्थात्मा(पदार्थ आत्माकाशादिः) **युगपत्** 'सर्वमूर्तैः' इतीपेक्षम(इतीदमत्रापेक्ष्यम्)। ततः किं जातम् ? इत्याह–**अनन्तैः पर्यायैः आत्म**सम्बाध्येत(**आत्मा संबध्येत**)**स्वत** आत्मने(आत्मना) **असकृत्** क्रमशोऽपि **तथा** ।]

कारिकां विवृणोति– **विभोः** सर्वगतस्य **आत्मनोऽन्यस्य वा** गगनादेः **यावद्भिः सह संयोगाः** । कैः ? इत्याह–**मूर्तिमद्भिः** असर्वगतद्रव्यपरिमाणं मूर्तिः, तद्वद्भिः । किंभूतैः ? इत्याह–**परस्यादि**(परस्परेत्यादि) । किंभूतास्ते ? इत्याह– **परस्परव्यावृत्तात्मानः ते संयोगाः तावन्त एव संयोगिन** आत्मादेः **तावतः स्वभावभेदान् साधयन्त्येव** । केन हेतुना ? इत्याह– **अन्यथानुपपत्त्या** [४५५क] **[अन्यथा]** अन्येन तावतां स्वभावभेदानामभावप्रकारेण तेषां याऽनुपपत्तिः तया । तदि (तथाहि–) येन स्वभावेन नभोऽभिसम्बद्ध्यते एकेन परमाणुना, तेनैव सर्वद्रव्यैः ; तत्परमाणुसंयुक्तस्वभावे सर्वस्य प्रवेश[प्र]सङ्गा[त्] । न वैव(चैव)मिति । **ते** स्वभावभेदाः, **पुन**रेतद् वितर्के **प्रदेशव्यपदेशभाजो भवन्तु मा वा भूवन्, भावो** गगनादिः **तैः** स्वभावभेदैः **स्वत एव** संयोगादिति न पेक्ष्य (दिनिरपेक्ष) एव **सम्बध्येत** । **कुतः** ? इत्यत्राह– **तादात्म्यादि**ति ।

नन्वेकः परमाणुः षड्भिः[1] संयुज्यते, न च तस्य तावन्तः स्वभावभेदाः ततो व्यभिचार इति चेत् , अत्राह– **एतेन** इत्यादि । कुतः ? इत्यत्राह– **पर्याय** इत्यादि । तदनुपपत्त्यो(त्त्या) किं स्यादिति चेत् ; अत्राह– **संयोगभेदाभावे** सर्वावयवानां संयोगैकत्वे तदन्य[2] **तदन्यतम-विभागे तेषां** कार्यद्रव्यारम्भक-परमाणूनामन्यतमस्य परमाणोः **विभागे** संयोगाभावे सति **सह** युगपत् **सर्वेषामणूनां विभागप्रसङ्गात्** । तथा किं स्यात् ? इत्यत्राह– **तथा च** सर्वेषां विभाग-प्रकारेण पक्षविन(पक्षिवत्) पटादौ **कस्यचित्** परमाणो तेचने(गोश्चलने) **सर्वकार्यद्रव्यं सकृदेव चलेत्** नास्यतु(नास्थात्) । कुतः ? इत्यत्राह–**सर्वत्र** इत्यादि । सर्वपरमाणुषु **संयोगे-(गै)कत्वोपपत्तेः** कारणात् **कस्यचित्** परमाणोः **चलने सर्वकार्यद्रव्यं सकृदेव चलेत्** ।

आह परः–क्रियातो विभागः, तत एकस्मिन् परमाणौ क्रियायां तत्रैव स युक्तो नान्यत्र । नहि देवदत्ता[द्] दण्डस्य विभागो(गे) [४५५ख] सर्वतः सर्वस्य भवितुमर्हति तत्कथमुच्यते– **'तदन्यत[म]विभागेसह(भागे सह)सर्वेषां विभागप्रसङ्गात्'** इति ? तन्न ; संयोगविनाशस्य विभागत्वात् , संयोगस्याधकत्वे(स्यैकत्वे) तस्याप्येकत्वात् । न हि एकस्य घटस्य बहवः प्रध्वंसाः । अथ विभागात् संयोगविनाशो न पुनः स एव स इति चेत् ; न ; तथाऽप्रतीतेः । नवै खलु संयोगप्रतीति (संयोगविनाशात् पृथक् विभागप्रतीति) रस्ति, यतः सः सन् तस्य विनाशक(कः) स्यात् । [तथा] प्रतीतिसद्भावे या(च) सकृदेव संयुक्तं विभक्तो (संयुक्तविभक्तौ) पुरुदंडादिति (पुरुषदण्डाविति) प्रतीतिः स्यात् । न चैवम् , विरोधात् । नहि यदैव दण्डी तदेकदण्डी (तदैवाऽदण्डी) पुरुषो भवति । अथ संयोगस्य विनश्यदवस्थायाः विभागः[10] तेनायमदोषः; [11]तदवस्था संयोग एव चेत् ;

(१) पूर्वादिदिग्वर्तिभिः परमाणुभिः । (२) 'तदन्य' इति निरर्थकं पुनर्लिखितम् । (३) विभागः । (४) तद्विनाशरूपस्य विभागस्य । (५) भवति । (६) संयोगनाशः । (७) विभागः । (८) विभागः । (९) संयोगस्य । (१०) जायते । (११) संयोगस्य विनश्यदवस्था ।

स एव दोषः । अन्या चेत् ; यदि तत्कालभाविनी ; युगपत् त्रयप्रतीतिः–'संयोगः, तदवस्था, विभागश्च' इति । अथ तदुत्तरकालभाविनी ; तदा न तर्हि संयोगः । तथा चेत् ; न नहि (न तर्हि) विभागात् संयोगनाशः । पूर्वं तस्य नाशात् तदंत (तत) श्चेत् ; अन्योऽन्यसंश्रयः–संयोगनाशाद् विभागतः (गः, ततः) तन्नाश इति ।

पर आह–विनाशसक (शक) कारणसमग्रता विनश्यदवस्थेति ; तत्काले संयोगस्य भावे ५ स एव दोषः–संयोगविभागयोः सहप्रतीतिरिति, विभागस्यैव तद्विनाशककारणत्वात् । अथ विभागजेन विनाशेन तिरस्कारात् न तत्काले[1] तत्प्रतीतिः[2] ; तदसत् ; ताभ्यामुत्तरकालभावी विनाशः कथं पूर्वसंयोगतिरस्कारकारी । नहि रात्राद् (व) विन्नमानो [४५२क] दिवाकरप्रतानः तदाकारा (तारा)-निकरतिरस्कारकारी ।

स्यान्मतम्–विभागसंयोगस्यव (गवि) नाशयोराशुवृत्तेरेककालताध्यवसायः, ततो विभाग १० कालेऽपि अध्यारोपेण तद्विनाशस्य भावात् तेन तत्तिरस्कारः[3] ; तदपि न सुन्दरम् ; यतः अध्यारोपितस्य अर्थक्रियासामर्थ्यनिषेधात् ।

किं च, भावपक्षस्य बलीयस्त्वात् भावेन सता संयोगेन विनाशस्य तिरस्कारो युक्तः, इतरथा ज्ञानज्ञानव्यवाये विच्छिन्ना व्यवाये विच्छिन्ना (ज्ञानव्यवाये 'विच्छिन्ना) वंशादिस्वर-धारा'[4] प्रतिपत्तिर्न स्यात् । १५

अपि च, कोऽयं तेन[5] तस्य तिरस्कारः ? विनाशकरणं चेत् ; तर्हि [न] विभागात् संयोगवि-नाशः, ततः संयोगस्य[6] [अ]भावतो विनाशो न विभागादिति प्राप्तम् । अथ सातस्थगतं (अथ तत्स्थं तत) तदपि[8] ; दृश्यसा (स्य) स्वरूपाखण्डने युक्तम् । तत्र संयोगकाल (ले) विभागः । पुनः स्यादिति चेत् ; तद्विनाशसमये स्यादिति न विभागप्रयुक्तः तद्विनाशः, सहभावात् । कुतस्तर्हि विनाशः ? कुतो विभागः ? क्रियत (क्रियातः) इति चेत् ; अत एव विनाशः, तथादर्शनात् । २० न च तद्विनाशास्त (श-त) त्कालेऽपि विभागः प्रतीतिभाक् । ततः स्थितम्–'संयोगविनाशो विभागः, तस्य चैकत्वे विभागैकत्वम्' इति । एवमनैकान्तिकत्वे परिहृते यत्प्राप्त (प्तं तत) दर्शयन्नाह–

**तथेत्यादि** । तथा तेन प्रकारेण सति तत्परिहारे **विभुद्रव्यवत् परमाणोः अनन्तपर्यायसिद्धिः स्वत एव** ।

निगमनमाह–**तत** इत्यादि । [४५२ख] २५

[ततः

**क्रमेणानुभवत्तत्त्वं चेतनाचेतनात्मकम् ।**
**चैतन्यं संसारेतरव्यवस्थाप्रत्यनीकतः ॥३५॥**
**नान्यदेव ततो ज्ञानं सामान्यात्तदात्मनः ।**
**स्वतस्तादात्म्यपरिणामात् सम्बन्धादनवस्थितेः ॥३६॥]** ३०

---

(१) विभागकाले । (२) संयोगप्रतीतिः । (३) संयोगतिरस्कारः । (४) इति । (५) विनाशेन । (६) विनाशात् । (७) तस्मिन् तिष्ठतीति तत्स्थम् । (८) उच्यते उपचारात् । (९) एतत् उच्यमानम् । (१०) तद्विनाशकाले तत्काले वा ।

क्रमेण तत्त्वमेकत्वम् अनुभवत् 'द्रव्यं भवति' इत्याध्याहारः। किंभूतम् ? इत्याह–चेतनेत्यादि (त्यादि)। कीच (जीव) द्रव्यं चेतनात्मकम् [चेतनात्मक]न्यदिति। कुतः चेतनात्मकमिति चेत् ? अत्राह–चैतन्यमित्यादि। कथं संसारेतरव्यवस्था इति चेत् ? अत्राह–प्रत्यनीक इत्यादि। यत एवं ततो नान्यदेव ज्ञानम् आत्मनः। कुतः ? इत्याह–सामान्येत्यादि।
५ सोऽपि कुतः ? इत्याह तादात्म्यपरिणामात्। एतदपि कुतः ? इत्याह–[सम्बन्धादनवस्थितेः] सम्बन्धान्तरकल्पनायामनवस्था[ऽ]निवृत्तेः। कुतस्तन्निवृत्तरि (त्तिः ? इ) त्याह–स्वत इत्यादि। तादात्म्यसम्बन्धादेव नान्यतः।

प्रकृतमुपसंहरन्नाह–तदयम् इत्यादि।

[तदयं चेतनो ज्ञाता संवेदनात्मा प्रतिक्षणम्।
१० तत्प्रतिबन्धविश्लेषे सर्वज्ञः सर्वार्थदृक् ॥३७॥
अन्यथाऽप्राप्यकारित्वात् कुतो व्याप्तिग्रहो यतः ॥३ ॥

यत एवं तत् तस्मादयं (दयं) प्रत्यक्षवेद्यः। किं घटादिः ? नेत्याह–चेतनः। चेतनासम्बन्धात् सः इति चेत्; अत्राह–संवेदनमेव आत्मा स्वभावो यस्य स संवेदनात्मा। [अ]भावमात्रात्मकः इति चेत्; नेत्याह–ज्ञाता स्वं परं च जानातीत्यर्थः। स किम् ? इत्याह–
१५ सर्वज्ञः। कस्मिन् सति ? इत्याह–[तत्]प्रतिबन्धविश्लेषे। कुतः ? इत्याह–सर्वार्थ इत्यादि। कदाचित् सर्वज्ञः पुनरितरः स्यादिति चेत्; नेत्याह–प्रतिक्षणं पुनः प्रतिबन्धकारणाभावादिति भावः। सन्निहितमेव जानाति नेतरतन्नेदमिति (नेतरदिति) चेत्; अत्राह–अप्राप्यकारित्वाच्चे (च्चे) तनस्येति। कुतोऽन्यथा व्याप्तिग्रहः ? यतोऽनुमानं वेदार्थपरिज्ञानं वा ?

२० विपक्षे बाधकं दर्शयन्नाह–सर्वज्ञ इत्यादि।

[सर्वज्ञः करणपर्यायव्यवधानातिवर्तिधीः।
परिक्षीणदोषावरणो नो चेत् भासयते हि कः ॥३८॥

तत्रापरतः कस्यचित् सर्वज्ञत्वं सत्···इति सुभाषितम्।]

करणानि इन्द्रियाणि, पर्यायः परिपादिः (टिः) क्रम इति यावत्, व्यवधानं देशा-
२५ दिभिर्वि (ति) रोधानम्, त्य (तान्य) तिवर्त्तति (ते) इत्येवं शीला धीर्यस्य स तथोक्तः सर्वज्ञः। कुतः ? इत्याह–[४५३क] परिक्षीणदोषावरणभासयतो (णो भासयते) नो चेत् इत्थम्भूतः सर्वज्ञे (ज्ञो) न यदि, कः सर्वज्ञः ? न कश्चित्।

(१) चेतनः। (२) प्रतिभासमात्रत्वात् शून्यः स्यादिति शङ्काकर्तुरभिप्रायः। (३) तुलना–"यदाह अकलङ्कः–यदि सूक्ष्मे व्यवहिते वा वस्तुनि बुद्धिरत्यन्तपरोक्षे न स्यात् कथं तर्हि ज्योतिर्ज्ञानाविसंवादः ? ज्योतिर्ज्ञानमपि हि सर्वज्ञप्रवर्तितमेव, एतस्मादविसंवादिनो ज्योतिर्ज्ञानात् सर्वज्ञसिद्धिः। तदुक्तम्–धीरत्यन्तपरोक्षेऽर्थे न चेत्पुंसां कुतः पुनः। ज्योतिर्ज्ञानाविसंवादः श्रुताच्चेत्साधनान्तरम् ॥ इति।"–धर्मो० प्र० पृ० २४६। (४) आदिशब्देन काल-स्वभावपरिग्रहः।

कारिकातात्पर्यं दर्शयन्नाह–तन्न इत्यादि । यत एवं तत् तस्मात् नापरतः भिन्नज्ञानात् चक्षुरादेर्वा कस्यचिद् ईश्वरादेः सर्वज्ञत्वम् । कुतः ? इत्यत्राह–सत् इत्यादि । इत्येवं सुभाषितं 'मम' इत्याध्याहारः ।

एवं यौगसौगतसायने (शासने) अशेषज्ञो (ज्ञानं) निराकृत्य साङ्ख्यमते तन्निराकर्तुकामः तन्मतमुपन्यस्यव्यवका (न्यस्यति, अहङ्का) रेत्यादि– ५

**[अहङ्कारमनोबुद्धिचैतन्यादिविभागतः ।**
**उपयोगमात्मनोऽज्ञस्य साङ्ख्याः संचक्षतेऽचितः ॥३९॥**

**चैतन्यवृत्तिमचेतनस्य 'स्वार्थमिन्द्रियाणि आलोचयन्ति मनः सङ्कल्पयति अहङ्कारोऽभिमन्यते बुद्धिरध्यवस्यति इति' विनियोजयन्तः कापिलाः केवलं···। बुद्ध्यध्यवसितमेवार्थं पुरुषश्चेतयते इत्येकान्ते न कश्चित् सर्वदर्शी स्यात् चक्षुरादिनिवृत्तेर्बुद्धेर्दर्शनात् । यदि पुनः स्यात् तथैव पुरुषस्य बुद्धिरिति अध्यवस्यत्येव तत्र किमालोचनादिभेदकल्पनया ? अवग्रहादिज्ञानविशेषाभिधानबहुत्वात् परिसङ्ख्या विरुध्येत तदुपयोगविशेषाणां मतिश्रुतादिविषयत्वात् ।]** १०

**अहङ्कारादी**नां कृतद्वन्द्वंजां (द्वन्द्वानाम्) **विभागेन** सह तासः (तसः) तेन ततः, **आत्मनो** जीवस्य **उपयोगं** व्यापारविशेषं आलोचन-मनन-सङ्कल्पनाऽध्यवसायलक्षणसं- (णम् अ)**ज्ञस्य** अचेतनस्य । किं कुतः स न ? इत्याह–**अपित:(अचित:)** चितः पुरुषाद्न्यस्य इत्यर्थः । **साङ्ख्याः संचक्षते** कथयन्ति । तथा च तेषां राद्धान्ते[२] *"**इन्द्रियाण्यर्थमालोचयन्ति, अहङ्कारोऽभिमन्यते, मनः संकल्पयति, बुद्धिरध्यवस्यति, पुरुषश्चेतयते ।**" इति । १५

अनेन चेतनात्मधर्मान् आलोचनादीन् अचेतने प्रधाने अध्यारोपयन्तः कापिला मूढमतयः इति दर्शयति । नहि अन्यधर्ममन्यत्र जानन् स्वस्थः, इतरथा हेम्नो (म्नः) पीततां शुक्ले शङ्खे पश्यन् स्वस्थो भवेत् । कथं ते तद्धर्मा[३] इति चेत ? कथं घटस्य रूपादयः ? तथा दर्शनात्[४] ; अन्यत्र समानम्–[५]चेतनाकप (कव) लितानाम् आलोचनादीनां प्रतीतेः, ज्ञानदर्शनोपलक्षणत्वादात्मनः । अथ तेषु चेतना समारोपिता प्रतिभाति (भाति) न मुख्यतः ; क पुनरियं[६] मुख्यतः ? पुरुषे इति चेत् ; न ; तंत्रैवोप[च]रिताऽस्तु[४५३ख] अन्यत (त्र तु) मुख्या । तदा (न हि आ) लोचनादिव्यतिरिक्ततत:(क्तः) पुरुष (षः) प्रतीतिभाक्, यस्य चेतना स्यात् । अथ परमार्थतः पुरुषस्यैव सा बाधवर्जनात , न तेषां[१०] विपर्ययात् ; किं पुनस्तेषां स्वतन्त्ये (चैतन्ये) बाधकम् ? 'चेतनायाः परिणामित्वापत्तिः' इति चेत् ; किं पुनः साङ्ख्यस्य परिणामित्वमसिद्धम् ? तथेति चेत् ; प्रधानमपरिणामीति न युक्तम्–[११]प्रकृष्ट *"**प्रकृतेर्महान्**" [साङ्ख्यका० २२] इत्यादि । प्रकृतिः परिणामिनी, न चेतना इति किं कृतो विभागः ? २० २५ ३०

(१) तत्पुरुषसमासः इत्यर्थः । (२) सिद्धान्ते । द्रष्टव्यम्–पृ० ९९ टि० ४ । (३) आत्मधर्माः । (४) इति चेत् । (५) चेतनाव्याप्तानाम् । (६) चेतना । (७) पुरुष एव । (८) आलोचनादौ । (९) चेतना । (१०) आलोचनादीनाम् । (११) 'प्रकृष्ट' इति व्यर्थम् ।

स्यान्मतम्–प्रकृतेः परिणामित्वेऽपि न पुंसस्तत गोत्र(चित्र)त्वात भावस्वभावानाम्, अन्यथा दहनवत जलमपि वा(दा)हकं स्यादिति । स्यादेतदेवं यदि प्रधानपरिहारेण पुंस्ये[व] अविकारिरूपं कुतश्चित् प्रतिपन्नं स्यात, जलपरिहारेण पावकस्य उष्णरूपवत । न चैवमिति । आगमात प्रतिपन्नम, यदाह–*"न प्रकृतिर्न विकृतिः पुरुषः" [साङ्ख्यका० २३] इति
५ तन्नैतदुक्तम ; अन्यत्र समत्वात ।

किंच, तस्य(वं: त)थाविधं पुरुषं कः प्रत्येति ? प्रधानमिति चेत ; कथमचेतनम्[4] ? अन्यथा बुद्ध्यध्यवसितमर्थं चेतयमानोऽपि पुरुषः अचेतनः स्यात । पुरुष इति चेत ; आगमेन क्रियमाणा तस्य स्वप्रतिपत्तिः यदि कादाचित्का ; तदेव तत्परिणामित्वमि वे(मिति । न चे)दागम-वैफल्यम । अभिव्यक्तिरपि नित्यस्य निरस्तेति यत्किञ्चिदेतत ।

१० कारिकां व्याख्यातुमाह–**चैतन्यवृत्तिम्** इत्यादि । **चैतन्यस्य वृत्तिम्** आलोचनादिपरिणतिम, **अचेतनस्य** प्रधानस्य **विनियोजयन्तः** [४५४क] तत्सम्बन्धिनीं कुर्वन्तः **क(का)पिलाः**[5] ; केन प्रकारेण ? इत्यत्राह–**स्वार्थम्** इत्यादि । ते किं कुर्वन्ति ? इत्याह–**केवलम्** इत्यादि । दर्पणान्तरमत्रैव दर्शयन्नाह–**बुद्ध्यध्यवसितम्** इत्यादि । बुद्ध्यध्यवसितमनुकृतंतनिश्चितं (नुकृतनिश्चयम) निश्चयस्यापि(धि) गमरूपत्वाद् एवकारेण वाह्यस्य व्यवच्छेद स हा(दमाह)
१५ **अर्थम्** अर्थाकारं **पुरुषश्चेतय[ते]** इत्येवं यत्र **कान्तो**ऽवश्यंभावः[तस्मिन्] **न कश्चित्** कपिलोऽन्यो वा **सर्वदर्शी स्यात्** । कुतः ? इत्यत्राह–**चक्षुरादिति(दिनि)वृत्तेः** चक्षुरादीनां व्यावृत्तेः । कुतः ? इत्यत्राह–**दर्शनाद् बुद्धेः** पुरुषेण साक्षात्करणात ।

स्वरि (सूरि)रेवं मन्यते–यदि बुद्धिं पुरुषो न पश्यति ; कथं तदयवसि (तदध्यवसि)-तमर्थं पश्येत ? नहि दर्पणाऽदृष्टौ तद्गतमुखविम्बदृष्टिरस्ति ।

२० किंच, बुद्धेस्तेनाऽदर्शने कुतस्तस्याः सिद्धिः, अर्थाध्यवसायसिद्धिर्वा ? पुरुषादिति चेत ; 'स तां न पश्यति, [10]तत एव तत्सिद्धिः' इति व्याहतम् अतिप्रसङ्गात । स्वत इति चेत ; सौगत-मतानुप्रवेशः, अर्थाकारस्य स्वसंवेदनस्य सौगतेनोपगमात । अथ करणमन्तरेण अर्थग्रहाऽसिद्धेः [11]तत्सिद्धिः ; न ; चक्षुरादेरेव तथा सिद्धः([12]तत्सिद्धेः) ततोऽप्यन्यकल्पनायामनवस्था–ततोऽप्यपरस्य कल्पनातु(नात) । पश्यतीति चेत ; यदा(यदि आ)लोचनादिप्रक्रमेण अर्थवम त्त-
२५ (वत ; तद) युक्तम ; तत्र अपरचक्षुरादिविरहानवस्थाप्राप्तार(प्राप्तेः । अ)न्यथेति चेत ; अर्थमपि तत्रैव (तथैव[13]) पश्यतीति सूक्तम–'**बुद्ध्यध्यवसितम्**' इत्यादि ! ततः सूक्तम् '**चक्षुरादि-निवृत्तेर्दर्शनात्**' इति ।

अपरे[14] [४५४ख] पठन्ति '**चक्षुरादिवृत्तेर्दर्शनात्**' इति । तत्रास(तत्राय)मर्थः–चक्षुरादिवृत्त्या दर्शनाद् अर्थस्य तस्या[15] एव तेन[16] सम्बन्धात, पुरुषस्तु बुद्धिप्रतिबिम्बमेव पश्यति
३० नार्थ(र्थम्)सुगतवदिति ।

(१) कारणम् । (२) कार्यम् । (३) युष्माकं मते । (४) 'प्रत्येति' इति सम्बन्धः । (५) सांख्याः । (६) आचार्यः । (७) बुद्धेः । (८) पुरुषः । (९) बुद्धिम् । (१०) पुरुषादेव । (११) करणभूतायाः बुद्धेः सिद्धिः । (१२) अर्थग्रहणसिद्धेः । (१३) चक्षुरादिकमन्तरेण । (१४) व्याख्याकाराः । (१५) चक्षुरादिवृत्तेरेव । (१६) अर्थेन ।

परमतमाशङ्कते–**यदि पुनः** इत्यादि । **यदि** इति पराभिप्रायस्य **पुनः** इति पक्षान्तरस्य द्योतने यथा **कश्चित् सर्वदर्शी स्यात् तथैव** तेनैव आलोचनाद्यन्तरमन्तरेण प्रत्यक्षताप्रकारेण **पुरुषस्य(पश्य)बुद्धिः 'स्यात्'** इति गतेन सम्बन्धः । **अध्यवस्यत्येव** निश्चिनोति तथैव 'बुद्धिः अर्थम्' इति सर्वमपेक्षम(क्ष्यम) । एवकारेण कस्यचिदप्यर्थस्य अनध्यवसायो नास्तीति दर्शयति ।　५

एतद् दूषयन्नाह–**'किं तत्र'** इत्यादि । **तत्र** [त]स्मिन्ननन्तरोक्ते परमते **किम् आलोचनादिभेदकल्पनया ? *"स्वार्थमिन्द्रियाण्यालोच्यन्य (लोचयन्ति)"** इत्यादिना **किम्** ? यथैव पुरुषः तद्भेदकल्पनामन्तरेण बुद्धिं पश्यति, बुद्धिर्वा[अर्थम्] इन्द्रियाणि तदालोचनाति(नानि) मनः तत्संकल्पनम, अहङ्कारं तदभिमा[नम] तदपरेन्द्रियादिकल्पनामन्तरेण [अ]ध्यवस्यति, अन्यथा अनवस्था । ततो न कश्चित् सर्वदर्शी स्यात, तथा सोऽर्थं पश्येत् १० इति भावः ।

अधुना 'चैतन्यान्नान्या बुद्धिः' इति दर्शयितुं तदीयहेतोर्व्यभिचारविषयं दर्शयन्नाह–**'अवग्रहादिज्ञान'** इत्यादि । तात्पर्यमिदमत्र-तथा (यथा) चैतन्यं बुद्धिः इत्यभिधानभेदमाद्[य, तथा अ]**वग्रहादिज्ञानविशेषाधात(षाभिधान)बहुत्वात्** कारणात् **परिसंख्या** बुद्धिश्चैतन्यमिति परिगणनं [४५५ क] **विरुध्येत** तत्त्वबहुत्वं स्यादिति ।　१५

स्यान्मतम्–तदभिधानबहुत्वं जैनस्य स्वेच्छाकल्पितमिति; परमपि साङ्ख्यस्येति समानम् । लोकप्रसिद्धिरुभयत्र । स्यादेतत्, अवग्रहादिज्ञानविशेषा बुद्धेरेव भेदाः ततस्तदभिधानबहुत्वं बुद्धेरेव पर्यायशब्दबहुत्वमिति; तत्राह–**सति (मति)** इत्यादि । तस्य आत्मनः उपयोगविशेषाः **तदुपयोगविशेषाः** तेषां **मतिः** अवग्रहाद्यात्मिका **श्रुतं** शाब्दं ज्ञानम् **आदि**(पदेन स्मृत्यादि)–परिग्रहः ते **विषयो** येषां तेषां भावात् तत्त्वात् **परिसङ्ख्या विरुध्येत** । एवं मन्यते–यथा अवग्रहादेर्बुद्धावन्तर्भावः तथा तस्या आत्मनीति ।　२०

भवतु बुद्धिचैतन्ययोरभेदः । तत्र को दोष इति चेत् ? अत्राह–**नास्ति ज्ञत्व**मित्यादि ।

**[नास्ति ज्ञत्वं प्रधानस्य चेतनाऽपरिणामिनः ।**
**पुरुषस्य न वै कश्चित् सर्वज्ञोऽनुभयात्मकः ॥४०॥**

**यथैव हि शरीरयोगात् शरीरी प्राणयोगात् प्राणीति व्यपदेशश्चेतनस्य तथा अर्थान्तरेण अहङ्कारादिना योगाद् अहङ्कारी बोद्धेति यदि व्यपदिश्येत ; दृष्टिश्च पृथक् प्राप्नोति । ततोऽयुक्तम् घटादेरिव अचेतनस्य आलोचनादिकम् । तत्र···अन्यथा । सतोऽपि अज्ञत्वाबुद्धिमत्त्वाभ्यां न स युक्तः । कः सर्वज्ञः ? ]**　२५

[अयं]भावः–**चेतना** परिणामात्मिका बुद्धिर्न **प्रधानस्य पुरुषस्य वाऽपरिणामिनः** इति । **ज्ञत्वं नास्ति प्रधानस्य** अचेतनस्य । **न च** नैव इष्यते । साङ्ख्येन पुंसा ज्ञत्वं परिणामित्वक्रयाकपिलमास्ते (क्रियाकवलितमास्ते) को **न कश्चित् सर्वज्ञोऽनुभयात्मकः**　३०

(१) आलोचनादिभेदमन्तरेण । (२) अवग्रहादिज्ञानविशेषाभिधाननानात्वम् ।

प्रधानपुरुषस्वरूपाद् भिन्नस्वाभ्या (स्वभावस्या) स्यस्यानभ्युपगमात् । अथवा, तत्र **क** आत्मा सर्वज्ञः स्यात् तदुरूप (तदुभय) स्वभावाद् भिन्नस्वभावः ।

कारिकार्थं दर्शयन्नाह–**यथैव हि** इत्यादि । **यथैव हि** स्पष्टं **शरीरयोगाद्धे**तोः जीवः **शरीरी प्राणयोगात् प्राणी** इत्येवं **व्यपदेशः**[1] **चेतनस्य** जैनमते अर्थान्तरमात्मनोऽनात्म (त्मनस्तच्छ)-
५ रीरादि, तद्योगादेवं, न स्वतः, **तथाऽर्थान्तरेण अहङ्कारादिना योगाद् अहङ्कारी बोद्धा** इत्येवं **यदि व्यपदिश्येत** साङ्ख्यैः 'चेतनः' इत्यनुवर्त्तते । [४५५ख] एव (एतद्) दूषयन्नाह–**दृष्टिश्चे**-त्यादि । **दृष्टिरपि** चैतन्यमपि न केवलम् अहङ्कारादि **पृथक्** भिन्नं पुरुषात्[2] **प्राप्नोति** । नैयायि-कस्य न साङ्ख्यस्य (-ति साङ्ख्यस्य[3] न नैयायिकस्य तेन) मनन्या (मनना) दिति भावः । न चैवम् , अतो दृष्टिवद् अहङ्कारादिकं ततोऽभिन्नमभ्युपेयम् । यत एवं **ततोऽयुक्तम्** । कस्य ? इत्याह–
१० **अचेतनस्य** इत्यादि । किम् ? इत्याह–**आलोचने**त्यादि । कस्येव ? इत्याह–**घटादेरिव** । प्रकृत-मुपसंहरन्नाह–**तन्न** इत्यादि । विपक्षे बाधकमाह–**अन्यथा** इत्यादि । पुरुषस्य स स्यादिति चेत्; अत्राह–**सतोऽपि** । साङ्ख्यं पुरयो (साङ्ख्यपुरुषस्य अ) प्रमाणकत्वादसन्नेव । तथाप्युच्यते–**सतोऽपि** पुरुषस्य **न संयुक्तः** (स युक्तः) कुतः ? इत्याह–**अज्ञत्वाऽबुद्धिमत्त्वाभ्याम्** । अन्यः **सर्वज्ञ** इति चेत ; अत्राह–**क** इत्यादि । पूर्ववद् व्याख्यातव्यम् ।

१५ साम्प्रतं पुरुषसाधकं परस्य प्रमाणं दूषयन्नाह–**चेतनाचेतन**मित्यादि ।

**[चेतनाचेतनं सर्वं चेतनं वाऽनुमीयते ।**
**परार्थं सङ्घातत्वात् कर्तृत्वं चक्षुरादिवत् ॥४१॥**

**परार्थाः [ चक्षुरादयः सङ्घातत्वात् शयनाद्यङ्गवत् ] इति चेतनसङ्घातेन चेतनाचेतनसङ्घातेन अपरार्थेनानैकान्तिकत्वादहेतुः । न हि चक्षुरादीनां सङ्घातत्वमन्यदेव ।**
२० **तत्समवस्थानमितरत्रापि विशेषाभावात् व्यामोहाभावात् ।]**

**चेतनं सर्वं चेतनाचेतनं** वा **सर्वम्** इति धर्मिद्वयम् न पुनः 'अचेतनं सर्वम्' इति वक्तव्यम् , परि (परं) प्रति सिद्धसाध्यतापत्तेः, तेन तथाभ्युपगमात् । **परार्थं** परप्रयोजन-**मनुमीयते** अकापिलेन (कापिलेन) । कुतो हेतोः ? इत्याह–**सङ्घातत्वाच्चक्षुरादि[वदि]**ति । चेतनस्य सर्वस्य **कर्तृत्वम्**[5], अन्यथा चक्षुरादेरपि तन्न स्यात् । नहि तस्यापि परोपकरणा-
२५ दन्यत् । तथा च *"अकर्त्ता निर्गुणः"*[6] इत्यादि विरुध्यते । अथ नानुमीयते[4], तर्हि तेनैव पुरुषसाधनस्य व्यभिचारः इति भाः (भावः) । पक्षीकरणान्न [४५६क] तेनम् (तेन) व्यभिचार इत्य दि (पि) चेतनवर्गात् चेतनाचेतनवर्गाद्वा सोऽन्यः स्याद् यदर्थं तन्निमित्तं सकलं जगद् भवेदि[ति] । तन्न कश्चित् साध्यानवस्थितेः तत्राप्यपरापरसाधनात् ।

कारिकां व्याख्यातुं परप्रयोगमाह–**परार्था**[7] एतावन्त (इत्यादि । तद्) दूषयन्नाह–**चेतने**-

(१) व्यपदेशः । (२) पुरुषात् । (३) साङ्ख्यस्य । (४) अनुमीयते । (५) कर्तृत्वम् । (६) द्रष्टव्यम्–पृ० २९९ टि० ६ । (७) 'परार्थाः चक्षुरादयः सङ्घातत्वात् शयनासनाद्यङ्गवत्' इति ।

त्यादि । चेतनसङ्घातेन पुरुषसङ्घातेन चेतनाचेतनसङ्घातेन प्रकृतिपुरुषसङ्घातेन अपरार्थेन अनैकत्वा(कान्तिकत्वा)द्धेतुः सङ्घातत्वादिति धर्मः ।

ननु यथं[1] यादृशं सङ्घातत्वं चक्षुरादीनां न तादृशं विपक्षे, ततो न व्यभिचार इति चेत् ; अत्राह–नहीत्यादि । [हि] यस्मान्न चक्षुरादीनामपि न केवलं प्रकृतस्य सङ्घातत्वमन्यदेव अन्यत्र समवस्थानात् अविनिर्भागवर्तनादपि तु तदेव । भो तु (भवतु) तथापि न तद्विपक्ष इति ५ चेत ; अत्राह–तत्समवस्थानमितरत्रापि प्रकृतविपक्षेऽप्यस्ति । न चक्षुरादीनां सङ्घातत्वम् एकत्वम्, न न(येन) [चेतनानां] चेतनाचेतनानां वा ततो[ऽ]विशेष इति चेत ; अत्राह–विशेषाभावादिति । *"भेदानां परिमाणात्"[2] इत्यादिना [साङ्ख्यका० १५] एकपरिमाणस्य रूपादेभात (रूपादेरभावात) भेदस्य च सर्वत्र साधयितुं [श]क्यत्वात इति भावः ।

यत्पुनरुक्तम्–शयनाद्यङ्गवदिति । तत्रेदं विचार्यते–कस्तत्र परः यदर्थं तत् ? शरीरमिति १० चेत ; न ; तद्धोक्तृत्वापपत्तेः । अत एव न बुद्धिरपि । पुरुष इति चेत ; कः तत्तदर्थं च प्रत्येति ? प्रधानमि[ति] नोत्तरम् ; उक्तत्वात । स एव स्वपरप्रकाशरूपत्वात्तस्येति चेत ; चक्षुरादावपि स्वार्थमिन्द्रियादि स एव अवगच्छतीति किमर्थं तत्रानुमानम् ? व्यामोहव्यवच्छेदार्थं [४५६ख] (र्थं) ; शयनादौ तदर्थं (तदस्ति, यदर्थं) तद[त]स्तत्राह–व्यामोह(हा)भावात् । तथेति चे[त ;] निदर्शनान्तरास(प)त्तिः अ[न]वस्थाकारिणी । चक्षुरादा करणम्(?) अन्योन्यमप्रयमावकति १५ (अन्योऽन्याश्रयमाकर्षति) ।

किञ्च, स्वपरप्रकाशकत्वं पुंसः परिणामाविरोधि, सदेकस्वभावे तदयोगात् ।

ननु रश्वे(ननु स्वे)तरग्रहणवत् कस्यचित् कारणापि (कारणेऽपि) यदि तस्योपयोग[ः] किं विरुध्येत ? न किं[चित्], केवलमकर्तृत्वं न स्यात् ।

अपि च, आत्मग्रहणे यस्य(यदि)आलोचनादिकमपेक्षेत ; अनवस्थानम् । अन्यथा विषये २० स किं[तदपेक्ष]ते ? ताथा(तथा)त्मानं तत्प्रत्येति[3], तदर्थ(र्थं)शयनादिकं न प्रतीयते(येत), उभयप्रतिपत्तिनान्तरीयकत्व तत्परीतेहितिदृशांत(कत्वात्तत्प्रतीतेरिति दृष्टान्ते)सर्वमसिद्धम् ।

एतेन धर्म्यासिद्धिरपि विन्तिता (चिन्तिता) । तन्न कपिलमते कश्चिद्दर्शपवित्, नापि मुक्त इति ।

[तदेवाह–दृश्य-]दर्शनयोरित्यादि । २५

**[दृश्यदर्शनयोर्मुक्तिर्नित्यव्यापकयोः कथम् ।**
**यतस्तापाद् विमुच्येत तदर्थं पुरुषो यतेत ॥४२॥**

**न प्रधानस्यापि परिणामातिक्रमः, चैतन्यस्य वा, अन्यथा अदृश्यस्वभावं प्रधानस्य प्राप्नोति । दृश्य···तथा···। एतेन पुरुषकैवल्यार्था प्रकृतिप्रवृत्तिरिति प्रतिविहितम्,**

(१) 'यथं' इति व्यर्थम् । (२) 'समन्वयात् शक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूपस्य॥' इति शेषः । (३) पुरुष एव । (४) स्वपरप्रकाशकत्वायोगात् । (५) अन्यथा । (६) "तदुक्तमन्यत्र –दृश्यदर्शकयोः···यतस्तापाद्विमुच्येत तदर्थं च तपश्चरेत् ॥"–न्यायवि० वि०प्र० पृ० २३२ । (७)"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥"–सांख्यका० २१ ।

**प्रागपि प्रकृतिनिवृत्तेः पुरुषकैवल्यसिद्धेः । अत एव न कश्चित् ताप[विमुक्तये यतेत] नहि...। दोषदर्शनतदपघाततद्धे तुप्रयत्नस्वभावकपुरुषाभावे क्षणिकत्ववत् हेयोपादेयेषु कुतः प्रवृत्तिरिति ? तन्न......]**

**दृश्यं** प्रधानं **दर्शनरूपः** पुरुषः **तयो[र्मु]क्तिः कथम्** ? किंभूतयोः ? इत्याह–
५ **अनित्ये(नित्ये)**त्यादि । **यतो** यस्यां वक्तुं (यस्मात्) **तापात्ता**पत्रयाद् **विमुच्ये[त] तदर्थं वा** तापविमोक्षार्थं वा **यतेत** । कः ? **पुरुषः** । **यत** इति [वा आ]क्षेपे, नैव विमुच्येत **मतेन (यतेत)** वा ।

कारिकार्थमाह–**प्रधाने**त्यादिना । ननु प्रधानं परिणामि न नित्यम्; इत्याह–**न प्रधानस्ये**त्याद(त्यादि । अ)भ्युपगमसूचको चि(ऽपि)शब्दः, भोक्तस्तत्परिणामाभावः, सर्वत्र
१० आविर्भावतिरोभावोपगमात् । स एव परिणामश्च (मश्चेत्,) सोऽपि स्यादतः(दृ अन्तः)करणसंयोगापाये तस्याभिव्यक्तरूपगमात् । माभूत्तस्य **तदतिक्रमः** पुंसो दर्शनशक्त्यतिक्रमः स्यादिति [४९५क] चेत; अत्राह–**चेतनस्यस्य वा** इत्यादि । कुतः ? इत्यत्राह–**अन्यथे**त्यादि । दृश्यस्वभावं जहाति प्रधानमिति चेत; अत्राह–**अदृश्यस्वभावम्** इत्यादि । **प्रधानस्य प्राप्नोति**[3] स्यात् । दर्शनभाव एव कुतः ? इत्यत्राह–**दृश्ये**त्यादि । तत्र यदि सर्वथा दृश्यस्वभावतत्तज्ज
१५ (वतां नैव ज)हाति, स्यादयं दोषः, अन्यथा उभयरूपे(रूप)रहितस्य वन्ध्यास्तनत्वं (वन्धयवदसत्त्वं) यावता मुक्तात्मानं प्रति [8]तत्स्वभावपरित्यागोऽपि(गेऽपि) परं प्रति विपर्ययः, इतथा (इतरथा) कपिलेन सह सकलं जगन्मुक्तिभाग् भवेदिति चेत; तदसत्; यतः यत्र तदा तद्दृश्यरूपता, तत्र तदा सर्वेषां पुंसां दर्शनस्वभावानां भावानां[10] भावात् । नहि समानदर्शनदृश्यानां समानदेशानां घटादीनामयं विभागो दृष्टः । अथ यथा प्रकृते[:] दृश्यस्वभावस्य
२० परित्यागः,[11] तथा [12]पुंसो दर्शनस्वभावस्येति चेत; अत्राह–**तथे**त्यादि ।

दूषणमेतदन्यत्र अतिदिशन्नाह तेऽत्पाद(न्नाह–ए)**तेन** इत्यादि । ए)**तेन 'दृश्यदर्शनयोः मुक्तिः नित्यव्यापकयोः कथम्'** इत्यादिना, **पुरुषकैवल्यार्था** पुरुषस्य कैवल्यं मुक्तिः तदर्था, **प्रकृतेः प्रवृत्तिः** इत्येतत् **प्रतिविद्धि(विहि)तं** निरस्त(स्तम्) । न ह्युभयो[13][:]र्व्यापिनित्यत्वे कस्यचित् प्रवृत्तिर्युक्ता । नहि गगनं(गगनं) [14]तथाविधं कचित् प्रवर्तते निवर्तते वा
२५ कुतश्चित् , व्यापिताहानेः ।

किं च, का तस्याः[15] [16]तदर्था प्रवृत्तिः ? तेन संयोगस्य करणम्; न, तस्य सर्वदा भावात्, कृतस्य कारणाभावात् । तत्संयोगश्च आत्मनः संयोगेन सदृशः एवेन दर्शितं चितं मथ(एतेन दर्शितं चित्तम् । अथ)कादाचित्का[४९५ख]तत्प्रवृत्तिरिष्यते; तत्राह–**प्रागपि** पूर्वमपि **तत्प्रवृत्तेः**

(१) परमार्थतः । (२) परिणामातिक्रमः । (३) इति । (४) प्रधानम् । (५) यदि सर्वथा जह्यात् । (६) वन्ध्यापुत्रवदभावः । (७) दृश्यस्वभाव । (८) संसार्यात्मानं प्रति । (९) यदि संसार्यात्मानं प्रत्यपि दृश्यस्वभावतापरित्यागः । (१०) मुक्तात्मनामपि प्रति । (११) संसारिणं प्रति । (१२) मुक्तस्य । (१३) प्रकृतिपुरुषयोः । (१४) व्यापि नित्यं च । (१५) प्रकृतेः । (१६) पुरुषविमोक्षार्था ।

**प्रकृति[नि]वृत्तेः पुरुषकैवल्यासिद्धेः**(ल्यसिद्धेः) प्रतिविहितम् । नहि मुक्तस्य संसारो नाम, अतिप्रसङ्गात् ।

दोषान्तरमाह–**अत एव** पूर्व(र्वं) केवल्यसिद्धेरेव । किम् ? इत्याह–**न कश्चित्** इत्यादि । कुतः ? इत्याह–**ताप**त्यादि । एतदेव भावयन्नाह–**नही**त्यादि । सुगमं (गमम्) । पुरुषस्तर्हि य[ते]त इति चेत ; अत्राह–**दोषदर्शन** इत्यादि । **दोषाणां** रागादीनां च **दर्शनं तेषां** दोषाणा- ५ **मपघातो** विनाश[ः]**तद्धेतुश्च** सम्यग्दर्शनादिः **प्रयतश्च**(त्नश्च) ते एव **स्वभावो** यास्यस्ववासा-वेक(यस्य स चासौ एक) **पुरुषश्च तदभावे क्षणिकत्ववत् कुतः प्रवृत्तिः । क्व** ? इत्याह–**हेयोपादेयेष्विति ।**

निगमनमाह–**तन्ने**त्यादि ।

स्वरूपपात्रवेदी सर्वज्ञ इत्येके । तत्राह–[ **सर्वज्ञ** इत्यादि] १०

**[सर्वज्ञः सकलार्थ··· अशेषदोषावृतिच्छेदतः,**
**स्यात् करण······················पुनरत्ययात् ।**
**ईहानन्तरभाविनां[नु वचसां]·········गतिः,**
**विज्ञेयान्यविलक्षणा च महतां ज्योतिर्गणानामिव ॥४३॥]**

**सर्वज्ञः स्याद्** भवेत् । किंभूतः ? इत्याह–**सकले**त्यादि । स्वरूपमात्रवेदनस्य १५ सर्वत्राविशेषात्[१] न तावता[अ]शेषज्ञ इति भावः । स्वभावतः स भवेदिति चेत् ; अत्राह–**अशेष-दोषावृतिच्छेदानिति (दतः** इति) । कया ? इत्याह–**करणे**त्यादि । कादे (?) स्यादिति चेत ; अत्राह–**अपुनत्तृत्ययादिति** (?) ननु यद्वसौ वति(वाग्)विवक्षावान्त(वान्भ) वेदिति न[स]कलदोषविच्छेदः । अथ न ; किं तेनाऽनुपकारिणा इदिचे(इति चेत ? अ)त्राह–**ईहान-न्तरभाविना**मित्यादि । स्वापादावन्यथा[२] भावादिति भावः । ननु वक्ता सर्वोऽपि रथ्यो(रथ्या)- २० पुरुषवत् सदोष इति चेत ; अत्राह–**विज्ञेये**त्यादि । [४५८क] **महताम्** अशेषविदां **गतिः अन्यविलक्षणा** प्राक्तनपुरुषविलक्षणा ज्ञातव्या **ज्योतिर्गण(णा)नामिव** ॥ छ ॥

इति र वि भ द्र पादोपजीव्य न न्त वी र्य विरचितायां सि द्धि वि नि श्च य-
टी का यां सर्वज्ञसिद्धिरष्टमः प्रस्तावः ॥ छ ॥

---

(१) मिथ्याज्ञानेऽपि । (२) विवक्षाभावेऽपि ।

# [ नवमः प्रस्तावः ]

## [ ९. शब्दसिद्धिः ]

ननु यदीहानन्तरभाविनां वाग्वृत्तिर्व्यभिचरति ; वाचः तर्हि का वार्त्ता इत्यत्राह–**संसर्गादि**त्यादि ।

**[संसर्गात् परमाणवः परिणता भावाः श्रुतेः गोचराः,**
**तद्भेदः प्रतिलब्धवर्णपदवाक्यात्माऽभिलापः स्वनः ।**
५ **सिद्धार्थो यमुपेत्य वक्ति किमयमाहेत्यसङ्कीर्तितः,**
**स्वार्थेऽक्षादिव भेदकाङ्क्षणमना सामान्यवेदी जनः ॥१॥**

**निःश्रेयसाधिगतेः··· ]**

**श्रुतेः** श्रवणेन्द्रियस्य **गोचरा** विषया **भावाः** शब्दा न सर्वे घटादयः । शब्दाः ते मा भूवन् तत्परिणामाः स्युः । तदुक्तम्–

१० *''अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥'' [वाक्यप० १।१]

इति चेत् ; न ; तेषां तदात्मकत्वेन प्रतीति[प्र]सङ्गात् गृहात्म(मृदात्म)कत्वेन् घटादिप्रतीतिवत् । नहि मृदः ते परिणामा घटादयोऽतदात्मकाः प्रतीयन्ते किन्तु तदात्मकाः । इतरथा नालिकेरद्वीपायातस्य दहन[वत्]दभिधानाप्रतीतिः स्यादिति सर्वत्र सङ्केतानर्थक्यम् ।

१५ अथ मतम्–यथा भवतः शब्दे रूपादयो नहि(योऽनभि)व्यक्ताः सन्ति तथा ममापि शब्दो घटादौ इति ; तदसारम् ; यतः तत्र तेषामनभिव्यक्तानामनुमानतो व्यक्तिदर्शनादिति प्रतिपादयिष्यते अनन्तरकारिकया । न च तथा घटादौ शब्दास्तित्वे अनुमानाद्य(नमस्ति । अथ) सङ्केतात्तत्र तत्प्रतीतेः, पूर्वमपि से[10] तत्रेति मतिः ; सापि न युक्ता ; [11]ततोऽपि तत्र[12] [13]तदप्रतीतेः । वक्तरि शब्दस्य, भूमावपं(मौ अर्थ)स्य प्रतीतेः । नापि देशभेदेन प्रतीयमानयोः[14] परिणा-
२० मिभावः, सहचरघटपटयोरपि तत्प्रसङ्गात् । भ्रान्तेस्तत्प्रतिभासो द्विचन्द्रवत् जलेतरचन्द्रवद्वा इति चेत् ; तर्हि स्वप्नादिवत् [15]शब्दघटप्रतिभासोऽपि भ्रान्त इति कः कस्य परिणामः ? बाधकाभावोऽन्यत्रापि ।

तत्त्व (ननु) तयोर्देशभेदे कथं घट[पट]वत् सामानाधिकरण्यम् ? अस्ति च, गौरयमिति

(१) विवक्षाप्रभवताम् । (२) ते घटादयः, शब्दाः शब्दस्वरूपाः । (३) शब्दब्रह्मपर्यायाः । (४) शब्दात्मकत्वेन । (५) 'न' इति निरर्थकमत्र । (६) मृदात्मकाः । (७) यदि शब्दात्मकाः स्युर्घटादयः । (८) यथा नालिकेरद्वीपायातस्य दहनं न प्रतीयते तद्वत् अभिधानस्य प्रतीतिः न स्यात् इति व्यतिरेक्युदाहरणमिदम् । (९) शब्दे । (१०) शब्दः । (११) सङ्केततोऽपि । (१२) अर्थे । (१३) शब्दाप्रतीतेः । (१४) शब्दार्थयोः । (१५) शब्दात्मकस्य घटस्य प्रतिभासोऽपि ।

[प्रतीतेः इति] चेत् ; एवं सति 'स्थूलोऽहम्' इति प्रतीतेः नात्मा शरीराद्भिन्नः स्यात्, कुन्तेभ्यो वा पुरुषाः[1] 'कुन्ताः प्रविशन्ति' इति प्रतीतेः । सहचरणाद् अत्राऽभेदोपचारश्चेत् ; अन्यत्रै बाधकाभावादिति समानम् । हेतुफलयोस्तत्त्वादेव [४५९क] परस्परमभेदोपचारो भवति 'चक्षुषा पश्यति', 'अन्नं वै प्राणाः' इति, किमङ्ग पुनः वाच्यवाचकयोः न भवति ?

किं च, भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नधिकरणे प्रवृत्तिः सामानाधिकरण्यात्त्चार्थं (ण्यम्, ५ तच्च[3] अयं[4])गोशब्दयोरस्तीति तयोरेव[5] ऐक्यं युक्तं न गोशब्दार्थयोः[6] तदभावात् । न हि तयोरेकत्वार्थे (त्वार्थे) प्रवृत्तिः, तदपरस्याऽभावात् । एकविभक्तिकत्वं तदिति चेत् ; घटपटयोः स्यात् घटपटा (घटः पटः) इति प्रतीतेः । तादात्म्यं तदिति चेत् ; तदसिद्धं तयोः, तदेव च साध्यं साधनं चं । तस्मादभेदोपचारेण अयं तत्र शब्द[ः] प्रवर्त्तते–अयं मांसपिण्डो गोसंज्ञः, तथा भेदेन च अस्य मांसपिण्डस्य गौरिति संज्ञा । १०

अपरेषां तु परिहारः–'गौः शब्दो यस्य स गोशब्दः' इत्यस्य पदसमुदायस्य लुप्तो (प्रा) ऽन्तरावयवस्य प्रयोगः 'गौः' इति, यथा भीमसेनं[8] इति ; तेषां स न युक्तः । सर्वत्र संज्ञाशब्देषु तथा कल्पनेन 'भीमसेनः' इत्यादावपि न स्यात् अपि तु 'भीमसेनशब्दः' इत्यादि स्यात् । न चैवम्, तथा शाब्दिकानां व्यवहारादर्शनात् । केवलानां पदार्थानां संज्ञिषु[10] योजनप्रतीतेः, अन्यथा 'गौः शब्दो यस्य' इत्यन्यपदार्थोऽपि न स्यात्, पृथक् पृथक् केवलयोः सिद्धयोरेव[11] तद्दर्शनात् चित्रगुः १५ इत्यादिवत् । तन्न शब्दात्मका घटादय इति स्थितम् ।

भवतु (न्तु) श्रुतेः गोचरा भावाः शब्दाः, न तु नित्याः स्युरिति मीमांसकाः[12] ; तत्राह–**परिणता** इति । श्रुत्यगोचररूपपरिहारेण तद्गोचराकारेण गताः परिणता निरुच्यन्ते [४५९ख] अन्यथा पूर्ववत् पश्चादपि कुतस्तेषां श्रवणम् ? तदगोचरस्वभावत्वे ताल्वादिव्यापारात् पूर्वमपि चा (पूर्वमिव पश्चादपि अ)श्रवणम् । तद्गोचरस्वभावत्वे सेन्द्रियस्य प्रणिहितमनसः[13] पूर्वम[पि]श्रव- २० णम् । व्यञ्जकाभावादिति चेत् ; आस्तां तावदेतत्, अन्यत्र विचारणात्, अत्रापि लेशतो विचारयिष्यमाणत्वात् **'तदिमे परमाणवः'** इत्यादिना ।

[ग]गनगुणाः शब्दाः इत्यपरे[14] । तत्राह–**परमाणवः** इति । रूपरसगन्धस्पर्शवन्तोऽतिसूक्ष्माः पुद्गलाः **परमाणवः** ते श्रुतिगोचरत्वेन परिणताः शब्दाः ।

---

(१) न भिन्नाः स्युः । (२) शब्दे । (३) शब्दसामानाधिकरण्यम् । (४) अयं शब्द-गोशब्दयोः । (५) शब्दयोरेव । (६) गोशब्दगवार्थयोः । (७) स्यात् । (८) शब्दाख्यस्य । (९) भीमसेनः शब्दः संज्ञा यस्य स भीमसेन इत्यत्र 'शब्द' इति शब्दः लुप्यते तथा 'गौः' इत्यत्रापि 'गौः शब्दो यस्य' इति शब्दशब्दस्य लोपो द्रष्टव्यः । (१०) संज्ञावाचकेषु शब्देषु । (११) अन्यपदार्थप्रधानबहुव्रीहिदर्शनात् । (१२) "नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् । नित्यः शब्दो भवितुमर्हति । कुतः दर्शनस्य परार्थत्वात् । दर्शनमुच्चारणं तत्परार्थं परमर्थं प्रत्याययितुम् । उच्चरितमात्रे हि विनष्टे शब्दे न चान्योऽन्यान् अर्थं प्रत्याययितुं शक्नुयात्, अतो न परार्थमुच्चार्येत । अथ न विनष्टस्ततो बहुश उपलब्धत्वात् अर्थावगम इति युक्तम् ।"–जैमिनिसू०, शाबरभा० १।१।१८। शास्त्रदी० पृ० ५४०, ५५९, ५६८ । नयवि० पृ० २४२। मी० श्लो० शब्दनि० । भाट्टचि० पृ० २६ । तन्त्ररह० पृ० २६ ।.बृह० १।१।१८। (१३) ताल्वादिव्यापारात्पूर्वमपि । (१४) "शब्दोऽम्बरगुणः श्रोत्रग्राह्यः ।"–प्रश० भा० पृ० १४४। "आकाशश्च शब्दवानिति, स एव श्रोत्रं तद्गुणश्च शब्दः ।"–प्रक० प० न्यायसू० ।

ननु परमाणु-गगनयोः अत्यन्तपरोक्षत्वाऽविशेषे कथं गगनपरिहारेण परमाणुकारणः शब्दं(ब्दः) सिध्यतीति चेत ; उत्तरमत्र–'**नत्वाकारणगुणाः**' इत्यादि भविष्यति । माभूदाकाशं तत्कारणम्, तथापि 'परमाणवः तत्कारणम्' इति कुतः सिध्यति ? न तावत प्रत्यक्षतः ; तेन तदग्रहणात । तेन गृहीतेषु प्रत्यक्षत इदं भवति–अस्मादिदं जातम्, अग्नेर्धूमवदिति । नाप्य-
५ नुमानतः ; तल्लिङ्गाभावात । अथ पटवत स्थूलस्य शब्दस्य ततोऽल्पपरिमाणेन उपादानेन भाव्य-मिति तत्सिद्धिरिष्यते ; साऽपि न युक्ता ; स्थूलादपि मृत्पिण्डात तथाविधघटोत्पत्तिदर्शनात । कदाचित स्थूलादपि सूक्ष्मसंभव(वाऽ)विरोधः, जीर्णहेमसूतकवत[२] ।

स्यान्मतम्–यथा यत्र यद् दृश्यते तथा तत्र तद् भवति, यत्र स्थूलं दृश्यते तत्र तत, यत्रे-तरः तत्र इतरदुपादानम् । न च शब्दस्य द्वयोरन्यतरदुपादानमीक्ष्यते । [४६०क] न चाऽनु-
१० पादानं कार्यमिति अदृश्यकारणसिद्ध्या तत्सिद्धिः ; न ; अदृश्यस्यापि स्थूलत्वाऽविरोधात, तदुत्तरपरिणाम[रूपत्वेऽपि] तत एव अल्पं कारणमिष्यते । तस्य तत्त्वेऽल्पे यावत परमाणुरिति ; न ; स्थूलादपि तत्प्रतिपादनात । निरंशपरमाण्वस्थाप्राप्तौ तु किञ्चिद् भवस्य जंवितीति (भवतीति)न प्रमाणमस्ति ।

किंच, महतकारा (संहतकरा[३])स्यामेव शब्दोदयदर्शनात तदुपादानः स इति युक्तम् ।
१५ स्यादेतत–उपादानोपमर्दनेनो(नेन उ)पादेयसिद्धिरिति शब्दोत्पाद[क]करादर्शनं घटोत्पा-त्तौ(त्पत्तौ) मृत्पिण्डादृष्टिवदिति ; तदपि न सारम् ; चन्द्रकान्तेन व्यभिचारा[त] चन्द्रकरसंयो-गात्तस्य जलपरिणामेऽपि तावत (त) एव दर्शनात ।

अन्ये पुनरेतद् इत्थं परिहरन्ति–न तत्संयोगा तु (गात च)न्द्रकान्तच्युतिः अपि तु विधकरा (विधुकरा[४]) द्रवन्तीति ; तेषां प्रतिक्षणं कर्पूरादिद्रव्यं स्वल(न तत )परिमाणात न्यून-
२० परिमाणं स्यात । सर्वदिक्षु तद्रूपादिगमनात तत्राऽपरप्रवेशो(शे) अन्यत्रापि स एवाऽस्तु । तन्न परमाणवः शब्दाः[५] ।

यदि वा, वायवीयाः ते ; तथाहि–नाभिप्रदेशाद् ऊर्ध्वमाक्रामन् वायुः कण्ठादिभिरभिहतः शब्दः इति ।

अत्र प्रतिविधीयते । यत्तावदुक्तम्–नाप्यनुमानतस्तत्प्रतिपत्तिः लिङ्गाभावादिति ; तन्न ;
२५ चेतनाऽचेतनयोः परिमाणा[प]कर्षस्याऽतिशयाः क्वचिद् व्यवस्थितात सा(स्थिताः) तत्त्वा[त] तदुत्कर्षस्य अतिशयवत । यत्र अचेतने सैं व्यवस्थितात्मा स नः परमाणुरिति । न च तस्याऽ-दर्शनादभावः ; अनुमेये तदयोगाद् अतिप्रसङ्गात । न च साध्यविकलता निदर्शनस्य; [४६०ख] प्रसाधनात् सर्वज्ञस्य । भवन्तु परमाणवः, ते तत्तत्कारणमिति कुतः ? किं तर्हि शब्दस्य उपा-दानकारणं मूर्त्तस्य ? न चानुपादानं कार्यम् ; अतिप्रसङ्गात् । दण्डभेर्यादिकमिति चेत् ; किं

(१) स्थूल । (२) सुवर्णात् पारदाच्च भस्म सूक्ष्मं भवति । (३) परस्परसंघट्टितहस्ताभ्याम् । (४) चन्द्रकिरणानि । (५) शब्दाः । इति शिक्षाकारा मीमांसकाः । (६) अतिशयत्वात् । (७) अपकर्षातिशयः । (८) अदर्शनमात्राद् अभावायोगात् । (९) ज्ञानोत्कर्षातिशयवतः ।

सहकारिकारणम् ? तदभावे च कार्यं न दृष्टमिष्टं वा कस्यचित् । अदृष्टं सहकारिकारणं नोपादानमिति किंकृतो विभागः ?

किंच, ताल्वादीनां तदुपादानत्वे तदुपमर्दः तदूभावे, उपादेयाकारगमनलक्षणत्वाद् उपादानस्य । अथ तद्भागाः केचन अदृश्याः तद्रूपतया परिणमन्ते, अपरे च तथाविधास्तत्र प्रविशन्ति, ततो न ततापितस्य(?)शब्दानां सर्वदिक्कं विसर्प[णमि]ति मतिः ; सिद्धं तर्हि नः समीहितम् ५ तद्भागानामेव परमाणुपदे(णुत्वपदे)शात् । कथमेवं[य]वा यदि नाम[अ]दृष्टबीजाः शाल्यङ्कुरः कि स्यादि उ(रे किं स्यात् येन स तदु)पादानो न स्यात् ? अन्यत्र बीजादर्शनादिति चेत् ; पूर्वमदृष्टस्थूलकारणस्य तद्विपरीतहेतुपूर्वकत्वाऽदर्शनात् अन्यत्र समानम् ।

योऽपि मन्यन्ते(ते)—वायवीयः शब्दः इति ; सोऽनुकूलमाचरति, पुद्गलपर्यायाऽनतिक्रमात्, वायोस्तत्परिणामत्वात् । निर्वाते च भूमिगृहादौ करताडनात् कुतः शब्दः ? स्तिमितात्ततः इति १० चेत् ; एतदप्यनुकूलमेव । जातिमूकस्य च प्रमाण वाय(प्राणवायु)सद्भावेऽपि न शब्दः । तद्विशेषकल्पनायां चरं(वरं)परमाणुकल्पनमस्तु दृष्टकल्पनाऽविशेषात् इति ।

प्रत्येकं परिणताः प्रायेण स्युः इति चेत् ; अत्राह–**संसर्गा**दिति । सन्तु ध्वनयः परस्परसंसृष्टपरमाणुपरिणामविशेषाः, [४६१क] वर्णादिस्फोटः तद्व्यङ्ग्यो नित्यो व्यापकोऽमूर्त्तः स्यादिति चेत् ; अत्राह–**तद्भेद** इत्यादि । **तेषां** श्रुतिगोचरत्वेन परिणतानामणूनां **भेदो** विशेषः । १५ किंभूतः ? इत्याह–**[प्रतिलब्ध** इत्यादि] **प्रतिलब्धो वर्णपदवाक्यात्मा** येन स तथोक्तः । एवं मन्यते न श्रवणेन्द्रियग्राह्याकारादिव्यतिरेकेण ध्वनिः तद्ग्राह्यो वा वर्णस्फोटः प्रतीतिभाक् । एवं पदवाक्ययोर्वाच्यम् ।

ननु न श्रोत्रेन्द्रियाध्यक्षगम्योऽसौ अपि तु अर्थप्रतिपत्त्यन्यथानुपपत्त्या अर्थापत्तिगम्यः इति चेत् ; अत्राह–**अभिलाप** इति । अभिलप्यते अनेन **इत्यभिलापः** वाचकः, **तद्भेदो** २० वर्णाद्यात्मा, तत एव अर्थप्रतीतिदर्शनात् । तथापि अन्यतः तत्कल्पने अनवस्था, ततोऽप्यन्यतः कल्पनासंभवात् ।

अथ एकपदार्थः बहुभिरयुगपद्भाविभिरस्थिरैर्घकारटकारविसर्जनीयैः प्रतिपादयितुमशक्य

(१) अप्रत्यक्षीभूतम् । (२) ताल्वादिभागाः । (३) अदृश्याः । (४) "तथा च शिक्षाकाराः आहुः वायुरापद्यते शब्दतामिति"–शाबरभा० १।१।२२ । (५) वायोः । (६) जन्मजातमूकस्य । (७) "नानेकावयवं वाक्यं पदं वा स्फोटवादिनाम् । निरस्तभेदं पदतत्त्वमेतत्..."–स्फोटसि० श्लो० २९-३६ । स्फोटभा० पृ० १। स्फोट० न्या० पृ० १। "तस्यतस्तु वाक्यमेवाखण्डमयूराण्डकललवदविभागं भिन्नार्थप्रतीतिहेतुभूतं स्फोटाख्यमभ्युपगन्तव्यम् ।"–स्फोटप्र० । "इत्यनवयवः प्रत्यस्तमितवर्णपदविभागो वाक्यस्फोट एव श्रेयान् ।"–स्फोटत० । स्फोटच० । "वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोट इति तद्विदो वदन्ति । अत एव स्फुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्यः स्फुटति स्फुटीभवत्यस्मादर्थ इति स्फोटोऽर्थप्रत्यायकः इति स्फोटशब्दार्थमुभयथा निराहुः ।"–सर्वद० पृ० ३००। वैयाकरणभू० पृ० २९४। परमलघु० पृ० २। (८) स्फोटः । "प्रत्येकमप्रत्यायकत्वात् साहित्याभावात् नियतक्रमभववर्तिनामयौगपद्येन संभूयकारित्वानुपपत्तेः नानावक्तृप्रयुक्तेभ्यश्च प्रत्ययादर्शनात् क्रमविपर्यये यौगपद्ये च । तस्माद् वर्णव्यतिरेकी वर्णेभ्योऽसंभवन्नर्थप्रत्ययः स्वनिमित्तमुपकल्पयति ।"–स्फोटसि०पृ०२८।

इत्येतेन (मशक्य इति एकेन)भाव्यमिति[1] ; तदपि न युक्तम् ; यतस्तदपि एकमनभिव्यक्तं चेदत्र प्रतीतिहेतुः ; सर्वदा स्यात् इति घकाराद्युच्चारणमनर्थकम् । अभिव्यक्तं चेत् ; यद्यन्येन स; एव दोषः घकारादिवैफल्यमिति । घकारादिभिरिति चेत् ; तर्हि यथा प्रत्यासत्त्या एकंप्रकां(एकं[3]) प्रकाशयन्ति वाचकम् , तथा अर्थम् इति किमपरेण ? न च नित्यस्य कस्यचिद्वस्तुत्वमिति निरूप-
५ यिष्यतेऽनन्तरम् ।

किंच, एवं परम्परापरिश्रमश्च घकारादिभ्यो वाचकस्याभिव्यक्तिः, ततोऽर्थप्रतिपत्तिः तेभ्योऽर्थगतौ न स्यात् । अनेकप्रतीतिप्रसङ्गश्च–पूर्वं व्यञ्जकस्यं पुनर्व्यङ्ग्यस्य [४६१ख] पुनरर्थस्य । न चैवं व्यवहारः, तथापि तत्कल्पने धूमादग्न्यैः प्रतीयते ततोऽग्निरिति स्यात् । एवं प्रत्यक्षेऽपि वाच्यम् । ततः **तद्भेदोऽभिलापः स्वनः ।** तदाह–**स्वनः** अव्यवधानेन ।

१० ननु तद्भेदेन किञ्चिदभिलप्यते ? न तावत् सामान्यम् , तदभावात् , प्रयोजनाभावाच्च । नहि सामान्यं वाह(द)दोहादावुपयुज्यते, विशेषाणामेव तत्रोपयोगात् 'लक्षितलक्षणया[10] प्रवृत्तिः' इति न युक्तम् , तया(तथा)सामान्यप्रतीतौ स एव प्रसङ्गः[11] । विशेषगतौ, सा तद्व्यतिरस्तु(सा तैरस्तु), न चैवम् , अक्षसंहतेवैफल्यप्रसङ्गात् । ततः तद्भेदोऽनर्थक इति चेत् ; अत्राह–**सिद्धार्थ मति** (इति) । सिद्धोऽर्थो यस्य स तथोक्तः **तद्भेदः ।** तथाहि–यथा चक्षुरादिव्यापारात्
१५ अथ(र्थ)प्रतिपत्तिः प्रवृत्तिः प्राप्तिश्च, तथा शब्दादपि इति, निरूपयिष्यते शेषमत्रैव ।

अथ मतम्–प्रतिबन्धाऽभावात् कथमसौ अभिलापः[12] ? तथाहि–न शब्दार्थयोः देशभेदात् तादात्म्यरूपः प्रतिबन्धः । अर्थाभावेऽपि भावात् न तदुत्पत्तिः । न च [13]तदन्तरमस्ति इति ; तत्राह–**स्वनः सिद्धार्थ** इति । **स्वनः** स्वयोग्यतातः **सिद्धार्थो** नान्यतः । कुतः ? इत्यत्राह– **यमुपेत्य** इत्यादि । **यं** तद्भेदम**ुपेत्य** श्रवणविषयतां नीत्वा **वक्ति** ब्रूते । कः ? इत्याह–
२० जनकभूता(**जनः ।** किम्भूतः ?) **असङ्कीर्त्तितः** सङ्केतरहितः । पुनरपि किम्भूतः ? **सामान्य-वेदी 'यमुपेत्य'** इत्येतदत्राप्यपेक्ष्यम् , शब्दं श्रुत्वा तद्वेदी इत्यर्थः । सामान्याभावात् नैव(वं) चेत ; न ; वस्तुषु[४६२क]समानपरिणामव्यवस्थापनात् । किं वक्ति ? इत्याह । **किमयमाह** इति । **अयं** वक्ता **'किमाह'** इत्येवम् । यदि प्रथमं शब्दश्रवणात् सामान्यं तेन विदितं किमर्थमेवं ब्रूते ? नहि नीले स्वरूपेण ज्ञाते 'किमेतत्' इति तद्रूपे प्रश्नो युक्तः इति चेत् ; अत्राह–**भेद**
२५ इत्यादि । तस्य सामान्यस्य **भेदो**ऽवान्तरविशेषः तस्य **काङ्क्षया** ग्रहीतुमीहा तत्र **मनो** यस्य इति ।

(१) स्फोटेन । (२)"वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात् । आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात् । अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावात् । एकस्मृत्युपारूढानां वाचकत्वे सरो रस इत्यादौ अर्थप्रतिपत्त्यविशेषप्रसङ्गात्, तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यो वाचकः ।"–पा० महाभा० प्र० पृ० १६ । स्फोट० न्या० पृ० २। सर्वद० पृ० २९९। (३) अभिव्यक्तं भवति तथा । (४) स्फोटम् । (५) स्फोटस्य । (६) घकारादिभ्यः । (७) ध्वनेः ।(८) स्फोटस्य । (९) कश्चित् अग्निस्फोटः ।(१०) शब्देन लक्षितं सामान्यम्, तेन लक्ष्यते विशेष इति लक्षितलक्षणा । (११) प्रयोजनाभावादिरूपः । (१२) वाचकः । (१३) सम्बन्धान्तरम् ।

ननु सामान्यवेदने भेदवेदनम्, अन्यथा सामान्यस्यापि कुतोऽतादात्म्येन, उभयात्मकं तत्त्वमिति, न तत्र काङ्क्षणम्। तादात्म्योऽपि प्रथमं सामान्यस्यैव कुत इव (एव) शब्दात्[3] स्यात् इति चेत्; अत्राह–**अक्षादिव**। क? **स्वार्थे** रूपादौ। यथैव हि दूरे अक्षात् मनुष्यत्वादिसामान्यप्रतीतिः, पुनः तद्भिदा[4]काङ्क्षणम्, पुनरपि देशनैकट्यादिसामग्रीवशात् तद्भेदावायः। तदुक्तमत्रैव *"**समदृष्टेर्विशेषेहा**" [सिद्धिवि० २।९] इत्यादिना। तथा शब्दातु(त्) प्रथमं सामान्यप्रतीतिः पुनः तद्भेदाकाङ्क्षणम् ततोऽपि सङ्केतसामग्रीतो भेदनिश्चयौ (यो) नैतावता शब्दः स्वतोऽशक्तः; अक्षेऽपि प्रसङ्गात्। यथा च शब्दात् स्वार्थसन्देहः तथा अक्षादपि। कारणस्य रूपवत् सामर्थ्यप्रतिपत्तावपि तत्र सन्देहदर्शनात्। अथ तत्र ज्ञानान्तरं सन्देहरूपम्, अन्यत्रापि तदेव। नहि घटाभिधानादेव घटो(घटोऽस्ति) नास्तीति वा सन्देहो जायमानो जनेन विभाव्यते, ततोऽप्रवृत्तिप्रसङ्गात्। अथ शब्दादर्थप्रतीता वन सुतोपि (तीतौ तत एव) कुतः सन्देहः? स्वसंवेदनात् दानादिचेतसां स्वर्गप्रापणसामर्थ्यप्रतीतौ ततोऽपि [४६२ख] स कुतः। अथ तद्भावाभावयोः तत्प्रतीते[:] साधारणत्वात् स इति मतिरि तत्र(तिः; इतरत्र) समानम्। तथा सति कथं शब्दोऽर्थविषयः' इति अनेन निरस्तम्। निर्विकल्पिका तत्प्रतीतिस्ततोऽयमदोषः[9]; चेतनत्वादपि(त्वादावपि) स्यात्।[10]तत्र निर्णयोत्पत्तेर्नेति चेत्; [11]यस्य रूपसुखादौ निर्णयरूपं मानसमध्यक्षं तस्य तत्सामर्थ्येऽपि दुर्लभः संशयः। इतरथा शब्दार्थेऽपि स तथा न भवेत्। [12]यस्यापि मानसो[ऽ] विकल्पो[ऽ]निश्चयः, तेन तस्य स्वलक्षणग्रहणात्, अविकल्पेन गृहीतस्य अगृहीतकल्पत्वात् [13]तथा। यथा शब्दा(ब्दोऽ)वस्तुविषयः सन्देहहेतुत्वात्, तथा प्रत्यक्षमपि [14]परस्य। ततोऽक्षात् सामान्यग्रहणात् विशेषाकाङ्क्षणे विशेषाऽवायकारणाभावे यथा संशीतिः तथा शब्दादपि इति स्थितम्।

स्यादेतत्–भाषान्तरे संकीर्त्तित (सङ्केतित[15]) एव शब्दात् सामान्यं प्रतिपद्यते[न] अकृतसङ्केतात्, ततः सङ्केत एव पारम्पर्येण तद्धेतुरिति; तर्हि इन्द्रियादपि पूर्वं प्रतिपन्नसामान्य एव[16]–ततः पुनः सामान्यं प्रत्येति इति। तदेवेन्द्रियमन्यदापि तद्ग्रहणकारणम्। अत्य(अन्य)त्वमन्यत्रापि इति यत्किञ्चिदेतत्।

नमु(ननु) निःप्रयोजनशब्दस्वरूपपरीक्षणेन किम्? लोकत एक(एव) तत्स्वरूपसिद्धेः; इत्यत्राह–**निःश्रेयसाधिगतेः** इत्यादि।

किमाह इति चेत्? अत्राह–**शब्द** [४६३क] इत्यादि। २५

**[[17]शब्दः पुद्गलपर्यायः स्कन्धः छायातपादिवत्।**
**बुद्धिकार्यो विशेषात्माभिलापः स्वार्थगोचरे ॥२॥**

---

(१) वेदनमिति। (२) विशेषे। (३) वेदनम्। (४) भित् भिदा भेद इति यावत्। (५) सामर्थ्यज्ञापकं ज्ञानम्। (६) शब्दान्तरं यत् सन्देहं करोति। (७) सन्देहः। (८) मतम्। (९) सन्देहाभावलक्षणो न दोषः। (१०) चेतनत्वादौ। (११) मीमांसकस्य। (१२) बौद्धस्य। (१३) सन्देहाभावः स्यात्। (१४) बौद्धस्य। (१५) सङ्केतितात् इत्यर्थः। (१६) पुरुषः। (१७) "तथा चाहुर कलङ्कदेवाः–शब्दः पुद्गलपर्यायः स्कन्धः छायातपादिवत्।"–त० श्लो० पृ० ४२४।

अणवः पुद्गलपरिणामविशेषात् भेदसंसर्गप्रतीतेः । कथम् ? कथं च न स्यात् ? सर्वथा निरंशानां दिग्भागभेदेन प्रत्येकं षडंशतापत्तेः कथं संसर्गः ? किं पुनरसंसर्गिण एव पृथक् स्युः ? कथं तेषां व्यवधानम् प्रकृतविकल्पानतिवृत्तेः ? स्वकार्यकारणक्षणाभ्यां स्वत एव नैरन्तर्यमनुभवतः कालप्रचयभेदोपलक्षणात् न वै क्षणवत् कस्यचित् कैश्चिन्नैर-
५ न्तर्येऽपि सांशत्वम्, व्यवधानाभावस्यैव तत्संयोगात्मकत्वात् । अन्यथा कार्यकारणव्यवस्थैव मा भूत् । वस्तुस्वभावतः तद्व्यवस्थायां कुतः संयोगप्रबन्धः ? तत्संयुक्तानामविशेषप्रसङ्गात् । स्वत एव प्रदेशमात्रस्य व्यवधायकतोपपत्तेः; अनंशस्यापि स्वभावभेदात् ग्राह्य[ग्राहकाकारसंवेदनवत्] तदिमे...... नहि... प्रतिषिद्धं च । तथापरिणामस्यैव तद्गुणत्वसंभवात् । कथञ्च अत्यन्तपरोक्षस्य गुणः प्रत्यक्षः ? परिमण्डलानां तादा-
१० त्म्यपरिणामोपपत्तेः । वायोरपि [प्रत्यक्षत्वात्] असमानम् । तदिमे चैतन्यविशेष [कार्याः] वर्ण[पदादिरूपाः] कथञ्चित् अर्थसंसर्गयोग्यतां प्रतिपद्य व्यवहारपदवीमुपनीयन्ते नान्यथा शब्दान्तरवत् ।]

**शब्दः** श्रवणेन्द्रियगोचरो भावः । सत्तापि स्यादिति चेत्; किं पुनः सा ततो भिन्ना येन एवं न स्यात् ? तथा चेत्; असत् शब्दः । तत्सम्बन्धात् सत् इति चेत्; उक्तमत्र । तस्य ततोऽभेदे
१५ स एव सद्( सत् भ)वेत् इति चेत्; अत्राप्युक्तम् । कथञ्चित् तत्समानपरिणामस्य अन्यत्रापि भावात् । एतेन गुणत्व(त्वं) चिन्तितम् । न च गुणः शब्दः । स किम् ? इत्याह-**पुद्गलपर्यायः** । रूपादिमन्तः पुनः **पुद्गलाः**, तेषां **पर्यायो** विकारः, न तत्पर्यायाः पुद्गलाः इतरथा शब्दानुगतस्य चक्षुरादिना घटादिग्रहणं भवेत्, सद्रूपानुगतस्य इव ।

ननु यदि परमाणुरूपपुद्गलपर्यायः; तद्गतश्यामत्वादिवत् तर्हि तस्य अस्मदादीन्द्रियेण
२० अग्रहणं स्यादिति चेत्; अत्राह-**स्कन्ध** इति । **स्कन्धः** अवयविद्रव्यम् । स्कन्धः शब्दः मूर्तत्वे अस्मदादिप्रत्यक्षत्वे सति सावयवत्वात् पटादिवत् । सः मूर्तः स्पर्शवत्त्वात् तद्वत् । स्पर्शवत्त्वं चास्य मृदुखरादिप्रत्ययग्राह्यत्वात्तद्वदेव । न चैतदसिद्धम्; सर्वलोकप्रसिद्धेः । तथाहि-वीणादिशब्दात् जयघण्टादिशब्दं खरं निगदन्ति जनाः । तथापि तदसिद्धौ न किञ्चित् सिद्धं स्यात् । कर्णाभिघातदृष्टेश्च तत्सिद्धिः ।

(१) सत्ता । (२) शब्दात् । (३) समवायस्य सर्वत्राविशेषात् इत्यादि । (४) शब्दस्य पर्यायाः पुद्गलाः । (५) शब्दग्रहणवादिवत् पुद्गलस्य शब्दपर्यायत्वे । (६) शब्दस्य । (७) तुलना-"सद्दो खंदप्पभवो खंदो परमाणुसंघसंघादो । पुट्ठेसु तेसु जायदि सद्दो उप्पादगो णियदो ॥"-पञ्चास्ति० गा० ७९ । "पुद्गलस्कन्धस्यैकद्रव्यस्य शब्दाश्रयत्वोपपत्तेः सिद्धसाधनत्वात् ।"-त० श्लो० पृ० ४२२ । न्यायकुमु० पृ० २४२ । सन्मति० टी० पृ० ६७० । "पौद्गलिकः शब्दः अस्मदादिप्रत्यक्षत्वे अचेतनत्वे च सति क्रियावत्वात् बाणादिवत् ।"-प्रमेयक० पृ० ५६३ । (८) तुलना-"द्रव्यं शब्दः स्पर्शाल्पत्वमहत्त्वपरिमाणसंख्यासंयोगगुणाश्रयत्वात् ।"-प्रमेयक० पृ० ५५० । न्यायकुमु० पृ० २४३ । (९) शब्दस्य । तुलना-"कर्णशष्कुल्यां कटकटायमानस्य प्रायशः प्रतिघातहेतोर्भवनमात्रुपघातिनः शब्दस्य प्रसिद्धिरस्पर्शत्वकल्पनामस्तं गमयति ।" -अष्टश०-अष्टस० पृ० १०७ । "स्पर्शवान् शब्दः स्वसम्बद्धार्थान्तराभिघातहेतुत्वात् मुद्गरादिवत् । सुप्रतीतो हि कंसपात्र्यादिध्वानाभिसम्बन्धेन श्रोत्राद्यभिघातः ।"-प्रमेयक० पृ० ५५० । न्यायकुमु० पृ० २४३ । (१०) स्पर्शवत्त्व सिद्धिः ।

अपर आह–तीव्रत्वमन्दत्वजातिसम्बन्धात् तत्प्रत्ययविषयत्वंते(यते)ति[1]; सर्वत्र तथा प्रसङ्गेन स्पर्शाभावप्रसङ्गात्।

शब्दसहचरितस्य वायोः तद्विषयता[2] इत्येके; तेषामपि वाग(वायव)सहचरितस्य[3] अन्यस्य[4] तद्विषयता इत्येवमनवस्था[४६३ख]।

स्यान्मतम्–असर्वगतद्रव्यपरिमाणं मूर्त्तिः[5] न स्पर्शवत्त्वम्, अन्यथा मनसोऽमूर्त्तत्वं स्यात् ५ तदभावादिति; तन्न; शब्देऽप्यस्य भावा[न्] स्पर्शवत्त्वा[न्]द्रव्यत्वमसर्वगतत्वं केचास्य(त्वं च केनास्य) वार्यते? परिमाणं दीर्घादिप्रतीतिविषयत्वात् सुप्रसिद्धमेव।

किंच, तल्लक्षणम्[6] अतिप्रसङ्गि; तस्य आत्मन्यपि भावात् सर्वगतत्वनिषेधात्तत्र। ततः सिद्धम् मूर्त्तत्वम्। अस्मदादिप्रत्यक्षत्वम् अविप्रतिपत्तिविषयम्।

नापि 'साव[यव]त्वात्' इत्यसिद्धम्; सावयवो ध्वनिः अल्पमहत्त्वग्रहणग्राह्यत्वात्[7] १० स्तम्भादिवत्। अथ व्यङ्ग्ये व्यञ्जकधर्मारोपात् तद्ग्रहणग्राह्यता न स्वतः, मुखस्येव दर्पणादौ इति चेत्; स्यादेतदेवम्–यदि एकरूपः सर्वदा शब्दः कुतश्चित् स्यात्। न च दृष्टान्तमात्रात् साध्यं सिध्यति, अतिप्रसङ्गात्। अतः स्कन्धः शब्दः।

नन्वेवं लोष्टादिनेव शरीरावयवादिघातैः(घातः)तेन[9], तद्वत्तस्य[10] नियतदेशगमनम्, एकत्र कर्ण(र्णे)प्रविष्टस्य [11]तदन्तराऽगमनम्, वायुनाभिहतस्य लोकान्तप्रसर्पणम्, इन्द्रियान्तरेण च १५ दर्शनम्[12] इति[13] चेत्; अत्राह–**छाया** इत्यादि। **आदि**शब्देन अन्धकारादिपरिग्रहः, तेन तुल्यं वर्त्तते इति तद्वत् इति। यथा अत्र[14] न ते दोषाः तथा शब्देऽपि इति दृष्टान्तार्थः। नहि अन्धकारस्य स्कन्धेऽपि स्पर्शादिना ग्रहणम्।

अपौरुषेयः शब्दो गकारादिः इत्येके[15]। तत्राह–**बुद्धि** इत्यादि। **बुद्धेः कार्यं** तदन्वयव्यतिरेकानुविधानात्। न हि यद् यस्य अन्वयव्यतिरेकावनुविधत्ते [४६४] तद् अन्यहेतुक- २० महेतुकं वा युक्तमतिप्रसङ्गात्। तदभिव्यक्तिः तावनुविधत्ते इति चेत्; न; अनवस्थाप्रसङ्गात्, तत्रान्यस्य तदनुविधानकल्पनात्। कृतप्रतिक्रियश्चायं[16] पक्षः अन्यत्र। **स एव**

(१) "अनित्यः शब्दः तीव्रमन्दविषयत्वात् सुखदुःखवदिति।"–न्यायवा० पृ० २९०। (२) तीव्रादिप्रत्ययविषयता। तुलना–"नादवृद्धिः परा। १७। यच्चैवं बहुभिर्भेरीमाध्नद्भिः गोशब्दमुच्चारयद्भिः महान् शब्द उपलभ्यते, तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते; नैवम्; निरवयवो हि शब्दः अवयवभेदानवगमात्। निरवयवत्वाच्च महत्त्वानुपपत्तिः। अतो न वर्धते।...तेन नादस्यैषा वृद्धिः न शब्दस्येति।"–जैमिनिसू० शाबरभा० १।१।१७। (३) शब्दस्य। (४) कस्यचित् अदृष्टस्य। (५) "असर्वगतद्रव्यपरिमाणं मूर्तिरिति हि पदार्थविदः।"–तत्त्वबि० पृ० १५८। (६) मूर्तत्वलक्षणम्। (७) अल्पत्वमहत्त्वग्रहण। (८) "न च स्थूलत्वसूक्ष्मत्वे लक्ष्येते शब्दवृत्तिनी। बुद्धितीव्रत्वमन्दत्वे महत्त्वाल्पत्वकल्पना। सा च पट्वी भवत्येव महातेजःप्रकाशिते। मन्दप्रकाशिते मन्दा घटादावपि सर्वदा। एवं दीर्घादयः सर्वे ध्वनिधर्मा इति स्थितम्।"–मी० श्लो०, शब्दनि० पृ० ७८५। (९) शब्देन। (१०) शब्दस्य। (११) कर्णान्तर। (१२) स्यात्। (१३) तुलना–"पुद्गलस्वभावत्वे दर्शनविस्तारविक्षेपप्रतिघातकर्णपूरणैकश्रोत्रप्रवेशाद्युपालम्भो गन्धपरमाणुकृतप्रतिविधानतयोपेक्षामर्हति।"–अष्टश०, अष्टस० पृ० १०६। (१४) छायायाः पुद्गलरूपत्वेऽपि। (१५) मीमांसकाः। (१६) शब्दाभिव्यक्तिवादपक्षः।

**विशेष(षो)**वर्णादिभेद **आत्मा** यस्य स तथोक्तः । अनेन तद्व्यतिरिक्तः स्फोटात्मा निरस्तः । कुतः ? इत्याह-**अभिलापः** स एव यतोऽभिलप्यतेऽनेन इति । क ? इत्याह-**स्वार्थगोचरे** सामान्यविशेषात्मके वस्तुनि व्यञ्जनपर्याये वा ।

'शब्दः पुद्गलपर्यायः' इत्यत्र साध्य(ध्ये) सूरेर्मनसि 'मूर्त्तित्वात्' इति हेतुर्वर्त्तते । निदर्शन-५ मुक्तमेव । तस्य परमाणुभिर्व्यभिचारः, न हि ते[1] मूर्त्तित्वेऽपि तत्पर्यायाः ततः परस्य सूक्ष्मस्य तस्यै अभावादिति । तं परिहरन्नाह-**अणवः** इत्यादि । कुतः ? इत्यत्राह-**[पुद्गल]परिणाम-विशेषात्** । **पुद्गलस्य परिणामो**ऽन्यथाभावः, स एव **विशेषः** स्थूलैकस्य सूक्ष्मनानारूपभेदः, सूक्ष्मनानारूपस्य वा स्थूलैकरूपभेदश्च तस्मात् । तदपि कुतः ? इत्याह-**भेद** इत्यादि । **भेदो** नानात्वम् **संसर्गः** एकत्वपरिणामः तयोः **प्रतीतेः** । एतदुक्तं भवति-यथा अनेकस्मात् अल्प-१० परिमाणात् संसृष्टाद् एक(कं) महत्त्वोपेतं जायमानं प्रागस[त्] दृष्टमिति तत्कार्यम्, तथा एकस्मात् महत्त्वोपेतात् तद्विपरीतं प्रागसत् कपालादि दृष्टम् तत्कार्यमस्तु अविशेषात् । अथ कपालादीनां प्रागपि भावात् न तत्कार्यता; साङ्ख्यदर्शनमायातम्, घटादेरपि तथा भावप्रसङ्गात् । अदर्शनान्नैवं चेत्; तदन्यत्र समानम् । तन्तवः [४६४ख] पटे दृश्यन्ते इति चेत्; न; तदा पटस्यैव(वाऽ) भावात्, अन्यथा(थाऽसौ[2] गतः) सौगतशासनम् । ततोऽन्य इति चेत्; न; १५ अस्यै पक्षस्य निषेधात् ।

किञ्च, यदि घटकाले ततो भिन्नानि कपालानि सन्ति, तेषां तेन सह उत्पत्तेर्न समवायि-कारणत्वम् अन्योऽन्यमिव । तेषां प्रागपि भावान्नेति चेत्; तथा घटस्यापि प्राग(ग्) भावोऽस्तु । प्रमाणबाधकमु(नम् उ)भयत्र । अनुमानात् तत्साधनान्न तद्बाधनम्; पटोऽपि महाकारणपूर्वकः घटवदिति कल्प्यते ? तत्र स्थूलस्य अत्र सूक्ष्मस्यादर्शनम् । तन्तूनां वैयर्थ्यं स्यादिति चेत्; अत्र २० मृत्पिण्डस्य इति समानम् ।

ननु मृत्पिण्डस्य घटकारणत्वे तत्र स्थितस्य घटस्य उपलब्धिः तन्तुस्थितपटवत्[10] इति चेत्; न; कार्याकारण(कारेण) परिणतस्य उपादानत्वोपगमात् । तन्तवोऽपि पटीभवन्ति । ततो यथा बहूनां संसर्गादेकं[11] तथा तस्य विश्लेषादनेकमिति कथन्न परमाणवः तत्पर्यायाः ?

अत्राह सौगतः-**कथमित्यादि** ? तमाचार्यः पृच्छति-**कं(कथं) च न स्यात्** इति । स २५ उत्तरमाह-**सर्वथा** इत्यादि । अन्य न(अन्येन) कथञ्चित् सम्बन्धस्य प्रकारेण **निरंशानां परमा-णूनां दिग्भागभेदेन प्रत्येकं षडंशतापत्तेः**[12] **कथं संसर्गः?** परिहारोऽत्र-**किं पुनः असंसर्गिण एव** इत्यभिप्रायः । एवं संसर्गं दूषयताऽपि तेन बहिरर्थमभ्युपगच्छता बहीरूपादिपरमाणवोऽभ्यु-पगता एव-

(१) तद्विशेषात्मा । (२) परमाणवः । (३) पुद्गलस्याभावात् यस्य ते पर्यायाः स्युः । (४) अनेकमल्पपरिमाणोपेतञ्च । (५) इति चेत्; । (६) वादी । (७) अवयवावयविभेदपक्षस्य । (८) पटे । (९) घटे । (१०) स्यात् । (११) जायते । (१२) "षट्केन युगपद्योगात् परमाणोः षडंशता । षण्णां समान-देशत्वात् पिण्डः स्यादणुमात्रकः ॥"-विंश० विंशिका पृ० ७। चतुःशत० पृ० ४८। तत्त्वसं० पृ० २०३।

*"अर्थान्तराभिसम्बन्धाज्जायन्ते येऽणवोऽपरे ।
उक्तास्ते सञ्चिताः ते हि निमित्तं ज्ञानजन्मनः ॥
अणूनां स विशेषत्वा(षश्च)नान्तरेण(णाऽ)परानणून् ।"

[प्र० वा० २।१९५-९६] इत्यभिधानात् । [४६५क]

**ते चासंसर्गिणः** संसर्गरहिता एव । **किं पुनर्नैव पृथक् ? पृथका(पृथग् व्य)वस्थिताः**– तद्रहिताः, सञ्चितास्तु संसर्गिणः ; अन्यथा स्तम्भादौ अधो मध्योर्ध्वतिर्यग्भागादिषु अविच्छिन्ना प्रतिपत्तिरिति नैयायिकं प्रति एतद् दूषणमसङ्गतम्–*"**अविच्छिन्ना न भासेत ततस्तत्संवि(त्संवि)त्तिः क्रमग्रहे ।**" [प्र० वा० २।२५६] इति तत्संवित्तिः ।

ननु च रूपादिग्रहणे सहैव सुखादिग्रहणमुपलभ्यते इति चेत ; स्तम्भादौ भागप्रतिपत्तिरविच्छिन्ना तथैव उपलभ्यते इति समानम् । १०

अपरः प्राह–नाविच्छेदप्रतिभासनात्तेषाम् अविच्छेद[स्य]सिद्धिः, तदभावेऽपि दूरस्थितविरलकेशादौ[3] तत्प्रतिभासनादिति ; तस्यापि [4]तेषां[तथा]प्रतिभासने यदवभासते अविच्छिन्नं रूपं न तत्तेषाम्, यन्नावभासते विच्छिन्नं तत्तेषामिति प्राप्तम् । तथा च संवेदनं प्रतिभासमानं स्ववेदनं तद्रूपं न भवेत् । तदभावे तदभावे इति चेत् ; कुत एतत् ? तद्रूपत्वात्तस्य इति चेत् ; तदपि कुतः ? तथावभासनात ; अन्यत्र समानम् , अबाधनं च । न चैकत्र तदभावेऽपि तत्प्रतिभासदर्शनात सर्वत्र तथा कल्पनम् ; अतिप्रसङ्गात । परमाणवो नावभासन्ते इति चेत् ; कुतो ग्राह्याः ? ज्ञानकारणत्वात्[6] ; चक्षुरादौ प्रसङ्गः । स्वाकारसमर्पणात्[7] ; ज्ञानात्मनि तदाकारोऽन्योऽन्यविच्छिन्नः, तस्यैव समर्पणमिति स एव दोषः । [8]नीलतादिमात्रसमर्पणे ; सांशता इति न पूर्वपक्षाद्विशेषः । १५

किंच, तेषामप्रतिभासने [४६५ख] किं कल्पनेन ? नीलादिज्ञानं तु अन्यत एव रूपादिरूपाद्ग्राह्यतः स्यात् । ते[9] स्वयमविच्छेदविकलाः अविच्छिन्नं ज्ञानं जनयन्ति नान्यद् अरूपादिस्वभावं रूपाद्याकारं ज्ञानमिति किं कृतमेतत् ? तस्मात् परमाणूनामभ्युपगमे तत्प्रतिभासोऽभ्युपगन्तव्यः । स च अविच्छिन्न इति तेऽपि तथेति साधूक्तम्–'**किंपुनरसंसर्गिण एव**' इति । २०

दूषणान्तरमभिधातुं पूर्वपक्षमुत्थापयति–**स्युरिति** भवेयुः '**असंसर्गिणः**' इत्यत्र वर्त्तते । उत्तरम्–**कथम्** इत्यादि । **तेषां** सञ्चितपरमाणूनां **व्यवधानं** विजातीयावस्थानम(याव्यवधानम् अ)न्तरालेऽतस्याऽभावात् । एतदपि कुतः ? इत्याह–**प्रकृत** इत्यादि । **प्रकृतो विकल्पो** व्यवधायकव्यवधीयमानयोः संसर्गोऽसंसर्गो वा तस्याऽ**नतिवृत्तिः(त्तेः)** [10]एकत्र प्रतिज्ञाहानिः, [11]अन्यत्र अनवस्था–पुनरपि अपरापर व्यवधानकल्पनात् । यदि वा, **प्रकृतो विकल्पः** 'सर्वथा अन्यथा' इति **तस्यानतिवृत्तेः** व्यवधानेऽपि । भवतु तेषां व्यवधानाभावः, ननु प्रसङ्गः षडंशतापत्तेरिति २५

(१) बौद्धेनोक्तम् । (२) अविच्छेदाभावेऽपि । (३) "यथा विरलदेशस्था अपि केशमशकमक्षिकादयः एकघनाकारं प्रत्ययमुपजनयन्ति ।"–प्र० वार्तिकाल० पृ० ९४। (४) परमाणूनाम् । (५) संवेदनाभावः । (६) इति चेत् ; । (७) इति चेत् ; । (८) यद्यपि नीलता जडता च स्तः, तथापि केवलं नीलताया ज्ञाने समर्पणम् । (९) परमाणवः । (१०) संसर्गस्वीकारे । (११) असंसर्गपक्षे ।

चेत् ; अत्राह–**न वै कस्यचित्** इत्यादि । **[न वै] कस्यचित्** मध्यवर्तिनः परमाणोः(णोः) **कैश्चित्** दिग्भागव्यवस्थितैः परमाणुभिः **नैरन्तर्येऽपि सांशत्वम्** । कुतः ? इत्याह–**व्यवधानाभावस्यैव तत्संयोगात्मकत्वात्** । तच्छब्देन परमाणुपरामर्शः । एतदपि कुतः ? इत्याह–**पारिमण्डल्यम्** इत्यादि ।

५ ननु सर्वस्याभावस्य अगुणात्मकत्वात् संयोगस्य च गुणात्मकत्वात् [४६६क] कथमुच्यते '**व्यवधानाभावस्यैव संयोगात्मकत्वात्**' इति चेत् ; न; अव्यवहिताङ्गुलिद्वयव्यतिरेकेण तेदप्रतीतेः, व्यवधानाभावे एव संयोग इत्यभिधानप्रवर्त्तनात् ।

किंच, अवयवेभ्योऽवयविन इव संयोगिभ्योऽस्याऽभेदे एकाकर्षणे पादाद्याकर्षणवत्(णं स्यात्) । एवं सति अवयविनो वैयर्थ्यम्, तत्प्रयोजनस्य अत एव सिद्धेरिति चेत् ; अयमपरोऽस्य
१० दोषोऽस्तु । तस्यापि प्रतिभाससत्त्वात् नैवं चेत् ; न ; घटाद्यवयवेष्वभिन्नपदार्थद्वय[प्र]तिभासविरहात् । एको हि अवयवरूपाद्यात्मकः प्रतीयते, स संयोगः अवयवी वा भवतु । संयोगस्य अवयवित्वे अनेकमस्त्राणि(मणि)समूहोऽवयवी भवेत् इति, निरन्तरब्राह्मणचाण्डालसमूहो वा इति चेत् ; अयमपि तस्यैव दोषोऽस्तु येन तेभ्योऽभिन्न एकः संयोग इष्यते नाऽस्माकं तेषां व्यवधानाभावं संयोगमिच्छताम् । तन्न एतेभ्योऽभिन्नः स इति चेत् ; उक्तमत्र समवायनिषे-
१५ धात्, सम्बन्धाऽसिद्धिरिति ।

तेभ्य उत्पत्तेः स तेषामिति चेत् ; अत्रेदं विचार्यते–निरन्तराः सन्तः ते तं जनयन्ति, अन्यथा वा ? प्रथमपक्षे अवयविनमेव ते जनयन्तु किं संयोगजननेन परम्परापरिश्रमकारणात् । तथा दृष्टेरदोषश्चेत् ; स्याददोषः यदि तथादर्शनं न भवेत्, न चैवम्, नहि ते पूर्वं संयोगं पुनः अवयविनं जनयन्तः प्रतीयन्ते । आशुवृत्तेस्तथाप्रतीतिरिति चेत् ; युगपद् द्वयप्रतीतौ इदमुत्तरं
२० स्यात्, न चास्ति, अन्यथा संयोगमपि परं तमुत्पाद्य जनयन्तीति प्राप्तम् । [४६६ख] द्वितीयेऽपि दूरस्थिताः तमुपजनयन्तु तत्रापि तन्निमित्तक्रियाभावात् । तत[ः]स्थितम्–**व्यवधानस्यैव** इत्यादि ।

अपरे आहुः–नास्माभिः ज्ञानस्य अन्यस्य वा परमाणवः कारणमिष्यन्ते स्वयं तन्निषेधात्, तन्नि(तन्न)युक्तम्–'**किं पुनः**' इत्यादि ; तत्राह–**क्षणवदित्यादि** । **क्षणवत्** इति सामान्ये-
२५ न वचनेऽपि ज्ञानक्षण [ए]व इह गृह्यते, तस्यैव परेण परमार्थेनाभ्युपगमात् क्षणस्य इव तद्वत्, **न वै कस्यचित् कैश्चित् नैरन्तर्येऽपि सांशत्वम्** । किं कुर्वतः क्षणस्य ? इत्याह–**अनुभवतः** । किम् ? इत्याह–**नैरन्तर्यम्** । केन ? इत्याह–**स्वकार्यकारणक्षणाभ्याम्** । **स्व**शब्देन दृष्टान्तीकृतो मध्यक्षणो गृह्यते, तस्य कार्यक्षण उत्तर उपादेयक्षणः कारणक्षणः उपादानक्षणः, ताभ्याम् । कुतः तदनुभवतः ? इत्याह–**स्वत एव** न संयोगादेः इत्यर्थः । एतदपि कुतः ? इत्यत्राह–**काल**
३० इत्यादि । **कालप्रचयभेदः** ज्ञानसन्ताननानात्वम् तस्य **उपलक्षणात्** । अस्यानभ्युपगमे दूषण-

(१) गुणरहितत्वात् । (२) संयोगस्याप्रतीतेः । (३) संयोगस्य । (४) एकाङ्गुल्याकर्षणे । (५) अवयविनोऽपि । (६) परमाणवः । (७) संयोगम् । (८) 'न' इति निरर्थकम् ।

माह–**अन्यथा** इत्यादि । नैरन्तर्याभावप्रकारेण **अन्यथा कार्यकारणव्यवस्था** उपादानोपादेययोः सङ्करादि[1]परिहारेण स्थितिरेव **मा भूत्** ।

भवेन्मतम्–'जाग्रत्प्रबोधज्ञानवत् वस्तुस्वभावत एव अन्यत्रापि नैरन्तर्याभावेऽपि तद्व्यवस्था[2]' इति; अत्रोक्तमुत्तरम् । तदन्तरं[3] वक्तुमाह–**वस्तुस्वभावतः** इत्यादि । **वस्तु** कार्यकारणे तयोः **स्वभावो** योग्यता **ततः तद्व्यवस्थायां** कार्यकारण[४७७क]व्यवस्थायाम् । **कुतः** ५ कारणात् **संयोगप्रबन्धः** । किमेकदेशेन सर्वात्मना वा संयोगः ? इत्याह–**तत्संयुक्ता[:]स्वपरमाणवः तेषां** पराभ्युपगमादेवमुक्तम्, परमाणवोऽपि क्षणवस्तुस्वभावत एव संसर्गरहिताः स्थूलमेकं परिणाम(मं) विभ्रति इति मन्यते । सर्वेषां तत्प्रसङ्ग इति चेत्; क्षणानामपि समानम् । शक्यं हि वक्तुम्–भिन्नकालं यावत् प्रबोधस्य जाग्रद्विज्ञानं कारणं तावत् अतीतजन्मान्तरज्ञानं कुतो न भवति ? अन्यत्[4]; उभयत्र समानम् । तन्तवस्तर्हि पृथगवस्थिताः कुतो न पटकारणम् १० इति चेत् ? जाग्रद्विज्ञानवत् कस्मान्न अग्निः धूमस्य कालव्यवहितः कारणम् ? तथा[ऽ]दर्शनम् अन्यत्राप्युत्तरम् । एतदेवाह–**अविशेषप्रसङ्गात्** तद्व्यवस्थायाः स्वपरपक्षयोरिति ।

इदमपरं व्याख्यानम्–यद्यपि ततः क्वचिद् व्यवधानेऽपि तद्व्यवस्था, तथापि **तत्संयुक्तानां** तेन मध्यक्षणेन संयुक्तानाम् अव्यवधानेन व्यवस्थितानां पूर्वापरक्षणानां धारावाहिनां **कुतः संयोगः(ग)प्रबन्धः ?** संयोगेन व्यवधानाभावे प्रबन्धः प्रवाहः कुतो न स्यात् ? इत्याह– १५ **अविशेषप्रसङ्गात्** अविशेषेण प्रसङ्गाद्दोषात् देशप्रचयवत् कालप्रचयेऽपि दोषादित्यर्थः ।

अथवा, यदुक्तं परेण–*"**किं स्यात् सा चित्रतैकस्याम्**" [प्र० वा० २।२१०] इत्यादि; तत्राह–**कुतः** इत्यादि । **तेन** विवक्षितनीलज्ञानपरमाणूनां **संयुक्तानामपि** न(मवि)-निर्भागवृत्तिभाजाम् अन्येषां नीलज्ञानपरमाणूनां **कुतः**[४६७ख]**संयोगेनाविनिर्भागेन प्रबन्धः** प्रकृष्टो विच्छेदरहितो **बन्धः** सहवर्त्तनं कुतो न स्यात् ? इत्याह–**अविशेष** इत्यादि । २०

स्यान्मतम् सौगतमते न क्वापि केनचित् किञ्चित्संयुक्तम्; इत्यत्राह–**स्वतः** इत्याद्य(दि । अयम)भिप्रायः–नैरन्तर्याभावे सान्तरत्वं प्रसक्तम्, तच्च व्यवधायके सति नान्यथा, तस्य **स्वत एव** अन्यनिरपेक्षस्य **प्रदेशमात्रस्य** निरंशस्य **व्यवधायकताया उपपत्तेः ननु कस्यचित् कैश्चिन्नैरन्तर्येऽपि सांशत्वमिति** उपपत्तेः इति । अनेन तदनभ्युपगमे अनवस्था स्यादिति दर्शयति ।

मा भूत् कार्यकारणव्यवस्था तथापि न दोषः, प्रतिभासाद्वैतवादिना तदभ्युपगमादिति- २५ चेत्; अत्राह–**अनं संख्यादि(शस्यापि)** इत्यादि । न केवलं सांशस्य अपि तु **अनंशस्यापि स्वभावभेदात् 'ननु'** इत्यादि सङ्गतिः । निदर्शनमत्र **ग्राह्य** इत्यादि ।

निगमनमाह–**तदिमे** इत्यादि । कुतः ? इत्याह–**नहि** इत्यादि । तदपि कुतः ? इत्यत्राह–**प्रतिपिद्धं च** इत्यादि ।

वैशेषिकः प्राह[5]–गुणः शब्दः निषिध्यमानद्रव्य कर्मत्वे सति सत्तासम्बन्धित्वात् रूपादिवत्[6] । ३०

---

(१) आदिपदेन व्यतिकरः । (२) कार्यकारणव्यवस्था । (३) परिहारान्तरम् । (४) अन्यत्वमित्यस्मिन्नर्थे 'अन्यत्' इति । (५) द्रष्टव्यम्–पृ० ६० टि० १० । (६) "शब्दः क्वचिदाश्रितः गुणत्वात्…"–प्रश० व्यो० पृ० ३२२। "न द्रव्यकर्मजातीयः शब्दः श्रोत्रग्रहणयोग्यत्वात् शब्दत्वादिवत् । गुणः शब्दः द्रव्यकर्मान्यत्वे सति सत्तासम्बन्धित्वात् रूपादिवत् ।" –प्रश० व्यो० पृ० ६४९ ।

गुणत्वादेव द्रव्याश्रितत्वम् । तदाधारो द्रव्यं विभु नित्यत्वे सति अस्मदादिप्रत्यक्षगुणत्वात् आत्मवत् । यश्च तथाविधः तदाधारः तदाकाशमिति चेत् ; अत्राह-**तथा शब्दप्रकारेण परिणामो** यस्य तस्यैव **तद्गुणत्वस्य** शब्दगुणत्वस्य **संभवात्** । न चैवम् आकाशं नित्यत्वेनोपगतं रूपादिरूपम् ; [रूप] परिणामस्यैव [४६८क] [परेणापि] रूपादिगुणत्वोपवर्णनात् ।

५ दूषणान्तरमाह-**कथं च** इत्यादि । **कथं च न** । कथञ्चिद् **अत्यन्तपरोक्षस्य** [गगनस्य] **गुणः** शब्दः **प्रत्यक्षः** अस्मदादीन्द्रियग्राह्यः ? तथाहि[3]-योऽत्यन्तपरोक्षगुणः नासौ अस्मदादिप्रत्यक्षः यथा परमाणुरूपादिः, अत्यन्तपरोक्षगुणश्च परस्य शब्द इति ।

ननु च अत्यन्तपरोक्षगुणत्वं स्यात् प्रत्यक्षश्च इति सन्दिग्धविपक्षव्यावृत्तिको हेतुः इति चेत् ; अत्राह-**परिमण्डलानां** परमाणूनां स शब्द आत्मा स्वभावभूतो गुणो येषां तेषां भावः

१० **तादात्म्यं** स एव **परिणामः** तस्य **उपपत्तेः** । यथा [अ]द्रव्यस्याकाशस्य तथा वि(तद्वि)धानां परमाणूनां न स्यादिति भावः । अथ तस्य परमाणुगुणत्वे तद्रूपादिवदप्रत्यक्षता स्यादिति चेत् ; आकाशगुणत्वेऽपि तद्विभुत्ववत् सा भवेदिति समानम् । अत्र गुणवैचित्र्यसंभवे अन्यत्र कोऽपरितोषः ? तन्न युक्तम् 'परमाणु[गुण]त्वे शब्दस्य तद्रूपादिवत् अप्रत्यक्षत्वप्रसङ्गः' इति ।

यत्पुनरुक्तम्[6]-'शब्दाधारो द्रव्यं विभु नित्यत्वे सति अस्मदादिप्रत्यक्षगुणत्वात् आत्म-

१५ वत्' तदनेन निरस्तम् ; परमाणूनामपि विभुत्वप्राप्तेः । न चात्मनि तत् इत्युक्तम् ।

अथ अत्यन्तपरोक्षगुणस्य परोक्षत्वम् ; वायुगुणस्य स्पर्शविशेषस्य समानं तदिति चेत् ; अत्राह-**असमानम्** । कुतः ? इत्याह-**वायोरपि** इत्यादि । स्पर्शात्मना इति । अनेन स्पर्शविशेषस्वभावतां वायोः दर्शयति अन्यथा [न] गुणगुणिभावः । कथं च वायुः प्रत्यक्षः ? [४६८ख] अक्षेणाऽसन्निकर्षात् ; स्पर्शेऽपि भवेत्, तस्य तत्सन्निकर्षद्वारेण तेन सन्निकर्षात् संयु-

२० क्तसमवायोपगमात् । अथ वायोः तेन सम्बन्धोऽस्ति, स तु तत्र ज्ञानं नोपजनयति ; येन इन्द्रियं साक्षात्सम्बद्धं तत्र न ज्ञानं संपादयति येन तद्द्वारेण तत्सम्पादयति, तदिदमायातम्-[11]'यस्य भोजनं खण्डशराव इव । स्पर्शे उत्पादयद् दृष्टं तेन तत्र उत्पादयति, नान्यत्र विपर्ययात् । कुत एतत् ? स्पर्शप्रतीतिः(तेः) इति चेत् ; किं पुनः इयं प्रतीतिर्नास्ति-'मृदुः खरः अन्यथा वा वायुः मे लगति' इति ? भ्रान्तेरियमिति चेत् ; कुत एतत् ? अप्रत्यक्षेऽपि तस्मिन् प्रत्यक्षत्वारोपात् । तदपि

२५ कुतः ? तत्प्रतीतेः विभ्रमात् ; अन्योऽन्यसंश्रयः-सिद्धे तद्विभ्रमे तदप्रत्यक्षत्वम्, अतः तद्विभ्रम इति ।

---

(१) शब्दाधारः । (२) प्रतौ अक्षरचतुष्टयं त्रुटितम् अतिघृष्टं च 'परेणापि' इत्येव पठितुं शक्यते । (३) तुलना-"अमूर्तगुणस्य आत्मगुणवद् इन्द्रियविषयत्वादर्शनात् ।"-त० वा० पृ० ६९। त० श्लो० पृ० ४२१। पञ्चास्ति० टी० पृ० १८५। "आकाशगुणत्वे च अस्मदादिप्रत्यक्षतानुपपत्तिः ।"-न्यायकुमु० पृ० २४७ । (४) शब्दस्य । (५) अप्रत्यक्षता । (६) तुलना-"यद्याकाशं व्यापकं न भवति तदा सर्वत्र शब्दोत्पत्तिर्न स्यात्, समवायिकारणाभावे कार्योत्पत्त्यभावात् । दिवि भुव्यन्तरिक्षे चोपजाताः शब्दा एकार्थसमवेताः शब्दत्वात् श्रूयमाणाद्यशब्दवत् । श्रूयमाणाद्यशब्दयोश्च एकार्थसमवायः कार्यकारणभावेन प्रत्येतव्यः ।"-प्रश० कन्द० पृ० ६२ । (७) स्पर्शस्य । (८) वायुसन्निकर्ष । (९) इन्द्रियेण । (१०) सम्बद्धम् । (११) अयमर्थः-यस्य भोजनं कृतं तस्य शरावः भाण्डः खण्डितः ।

स्यान्मतम्, स्पर्शमात्रे वायोरारोपात् 'स लगति' इति प्रतीतिः न तद्ग्रहणात्[1] इति; तर्हि रूपे घटारोपात् 'घटं पश्यामि' इति वित्तिः न तद्दर्शनात् इति सौगतमतम्। रूपोपाधिर्घटः प्रतीयते न स्पर्शोपाधिर्वायुः इति कुतोऽयं विभागः ? अथ [2]द्वीन्द्रियग्राह्यं द्रव्यं प्रत्यक्षम्, न च वायुस्तथा[3]; चन्द्रार्कादीनां प्रत्यक्षत्वं न स्यात्। पार्श्ववर्तिना[4] तेषाम् इन्द्रियद्वयेन ग्रहणाददोषश्चेत्; वायोरपि विशिष्टपुरुषेण[5] तद्द्वयेन ग्रहणाददोषोऽस्तु। किमत्र प्रमाणम् ? 'अन्यत्र किम्' इति समानम्। [6]तस्य रूपादेरभावान्न विशिष्टेनापि तथा[7] ग्रहणमिति चेत्; चन्द्रादौ स्पर्शादिरस्ति इति कुतः ? रूपवत्त्वात्; प्रकृते [४६९क] 'स्पर्शवत्त्वात्' इत्यभ्युपगमात्। शेषं चिन्तितमत्र।

यदि चायमेकान्तः [8]द्वीन्द्रियग्राह्यमेव[10] प्रत्यक्षम्; आत्मा प्रत्यक्षो न स्यान्मतम (स्यात्, मनस) एव तद्ग्रहणे व्यापारो नान्येन्द्रियस्य। किं च,

एकैकस्य नचेच्छक्तिः इन्द्रियस्येह तद्ग्रहे।
तद्द्वयस्यास्तु सा कस्मात येनैवमभिधीयते ॥

तन्न किञ्चिदेतत्।

अथवा, गगनवत् परमाणवोऽपि अत्यन्तपरोक्षा इति तत्परिणामोऽपि शब्दः प्रत्यक्षो न स्यादिति समानमिति चेत्; अत्राह-**परिमण्डलानाम्** इत्यादि। **तादात्म्यपरिणामोपपत्तेः** प्रत्यक्षत्वपरिणामोपपत्तेर**समानं** दूषणमिति। वायुना व्यभिचार इति चेत्; अत्राह-**वायोरपि** इत्यादि।

उपसंहारमाह-**तदिमे** इत्यादिना। यत एवं **तत्** तस्मात् **इमे** शब्दाः। किंभूताः ? इत्याह-**चैतन्ये**त्यादि। **चैतन्यग्रहणेन** अपौरुषेयशब्दव्युदासः, **विशेषपदेन** मिथ्याज्ञानप्रसूत-ध्वनिपरिहारः। किंभूताः पुनरपि ? इत्याह-**वर्ण** इत्यादि। ते किं क्रियन्ते ? इत्याह-**व्यवहार-पदवीमुपनीयन्ते**। किं कृत्वा ? इत्याह-**कथञ्चिद्** इत्यादि। केनचित् उपपत्तिप्रकारेण **प्रतिपद्य** ज्ञात्वा। काम् ? इत्याह-[**अर्थ** इत्यादि] **अर्थे** घटादौ **संसर्गः** सम्बन्धो यस्याः शब्दानां **योग्य-तायाः** ताम्। ननु नार्थे शब्दानां योग्यतयापि सम्बन्धः, तथापि पुरुषप्रकारेण ते व्यवहारपदवीमुप-नीयन्ते इति चेत; अत्राह-**नान्यथा** इति। तदेव दर्शयन्नाह-**कथञ्चित्** इत्यादि। निदर्शन-माह- **शब्दान्तरवत्** इति। अवर्णाद्यात्मकसमुद्रघोषादिवदिति [४६९ख]।

ननु योग्यता कार्यदर्शनादनुमीयते, न च शब्दानामर्थप्रतीतिरूपं कार्यमस्ति, तेभ्यः अस्पष्ट-साधारणाकारस्यैव प्रतीति(स्तेत)न्निरासार्थं न्वस्ति (?) तेषामिन्द्रियेऽन्यथा प्रतिभासनात्। भिन्नावभासिनोस्व(श्च) ज्ञानयोः नैकविषयता रूपादिज्ञानेष्वपि तत्प्रसङ्गात्। अथ योग्यतातः तत्कार्यव्यवस्था; अन्योऽन्यसंश्रयः-योग्यतायाः [11]तद्व्यवस्था, अतश्च योग्यतासिद्धिरिति चेत्; अत्राह-**वाग्** इत्यादि।

(१) वायुग्रहणात्। (२) चक्षुःस्पर्शनेति। (३) इति चेत्; (४) तदधिष्ठायकदेवेन। (५) योगिना। (६) वायोः। (७) द्वीन्द्रियेण। (८) वायौ रूपादिः। (९) चक्षुस्पर्शनेन्द्रियाभ्याम्। (१०) द्रव्यम्। (११) तत्कार्यव्यवस्था।

**[वागक्षसंविदेकार्थगोचरत्वेऽपि युज्यते ।**
**प्रतिभासभिदा दूरासन्नैकार्थोपलम्भवत् ॥३॥**

सामग्रीभेदात् प्रतिभासभेदेऽपि नार्थभेदैकान्तः प्रत्यासन्ने[तरज्ञानवत्] । कथमन्यथा अभ्रान्तज्ञानेन वस्तु पश्यन्नयं शुक्तिकाया विशिष्टमेव रूपं न पश्यति ? समानरूपासंभवात् ।
५ तत्संभवे प्रत्यासन्नेन रूपद्वयोपलम्भप्रसङ्गात् । तदयमासन्नवत् तदसाधारणं रूपं पश्यन्नपि न निश्चिनोति निश्चयप्रत्ययवैकल्यादिति उच्यमानं न जाघटीति । न हि प्रत्यासन्नेतर-विज्ञानयोः स्पष्टास्पष्टप्रतिभासविशेषमन्तरेण निश्चयप्रत्ययसाकल्यवैकल्यसंभवः । कथं च तयोः दूरेतरत्वादिसामग्रीभेदात् दर्शनस्वभावभेदो न स्यात् ? यतः प्रत्यासन्नवत् दूरस्थः स्पष्टमेव पश्येत् ? तन्न···]

१० **वाचाम् अक्षाणां** स्वकार्यभूताः **संविदः** तासाम् **एकार्थगोचरत्वेऽपि यो(यु)-ज्यते** । का ? इत्याह–**प्रतिभासभिदा** स्पष्टेतरप्रतिभासभेदः, निदर्शनमाह–**दूर** इत्यादि । **दूरासन्नौ यौ** पुरुषौ तयोः **एकः** साधारणो योऽ**र्थः** वृक्षादिः तस्य **उपलम्भयो**रिव **तद्वत्** । यथा दूरस्य तत्रैवार्थो(र्थे)ऽस्पष्ट उपलम्भः आसन्नस्य इतरः तथा क्षणस्य अस्पष्टैकत्रार्थे संविदिति न दोषः ।

१५ कारिकां व्याख्यातुमाह–**सामग्री** इत्यादि । शब्दाऽक्षादि**सामग्र्याः भेदात्** नानात्वाद्धेः (त्वाद्धेतोः) **प्रतिभासभेदेऽपि नार्थभेदैकान्तः** । निदर्शनमत्र **प्रत्यासन्न** इत्यादि ।

ननु दूरस्थस्य अविशदं ज्ञानम् अनर्थविषयमेव, तदवभासिनो घनाऽविशदाकारस्य अर्थऽ-भावात् । भावे वा आसन्नस्यापि [1]तत्प्रतीतिप्रसङ्गः । विशदेतररूपद्वयसद्भावे उभयत्र उभ-यप्रतीतिः, न चैवम् । तन्नाविशदार्थगोचरमविसंवादः, प्रमाणान्तरात् (?) तथा चोक्तम् ।
२० *"**समेव (ममैव) प्रतिभासो न स संस्थान[४७०क]वर्जितः ।**" [प्र० वार्तिकाल० २।१] इत्यादि । वस्तुविषयं तु शुक्तिकादिज्ञानं दूरेऽपि विशदमेव, तत्र रजतादिप्रतीतिः अन्या मानसी भ्रान्तिः तत्कथमुक्तम् **सामग्री**त्यादि इति चेत् ? अत्राह–**कथमन्यथा** इत्यादि । **अन्यथा** सामग्रीभेदाद् बुद्धिप्रतिभासभेदे अर्थभेदैकान्ते(न्त)प्रकारेण दूरस्थः **पश्यन् अभ्रान्तज्ञानेन** अविकल्पेन **वस्तु** प्रतिपद्यमानो**ऽयं जनः** ।

२५ तेन 'दूरस्थस्यापि शुक्तिकादिज्ञानं परस्य प्रत्यक्षम् , ततः परं रजतादिभ्रान्तिः मानसी, अन्यथा तद्भ्रान्तेः न किञ्चिदुदाहरणम्' इति मतं दर्शयति–**शुक्तिकायाः**, उपलक्षणमेतत् तेन 'मरीचिकाचक्ररज्वादेः' इत्यपि गृह्यते, **विशिष्टमेव** सर्वतो व्यावृत्तमेव **रूपं** स्वभावं **न पश्यति** कथमिति सम्बन्धः पश्यत्येवे[त्य]र्थः । तथा च आसन्नवद् दूरेऽपि रजतादिभ्रान्तिः । नहि नीले अन्यतो व्यावृत्ते दृश्यमाने सोऽस्ति इति भावः ।

३० स्यान्मतम्–यथा दूरेऽपि विरलकेशेषु परस्परविवेकाप्रतिभा[से]सर्वसाधारणी कृष्णता प्रतिभाति ; तथा शुक्तिकायाः विशिष्टरूपादर्शनेऽपि शुक्तिकारजतसाधारणं चैकचित्र (चाकचिक्य)-

(१) घनैकाकारप्रतीति । (२) भ्रान्तिः ।

मात्रं पश्यति इति ; तत्राह–**समानरूपासंभवादिति** । **समानस्य** शुक्तिकारजतसादृशस्य **रूपस्य** स्वभावस्य सौगतमतेऽ**संभवात्** । तथा च दूरे केशप्रतीतिवत् शुक्तिकायामपि समानरूपप्रतीति-र्मानसी भ्रान्तिः स्यादिति मन्यते । तत्र तद्रूपभावे दूषणमाह–**तत्संभवे** समानरूपसंभवे **प्रत्या-सन्नेन** नरेण **रूपद्वयोपलम्भप्रसङ्गात्** [३७०ख] तद्रूपासंभवादिति । पश्यत्येव तर्हि तस्या विशिष्टमेव रूपम् अन्यथा अनेकान्तः स्यादिति चेत् ; अत्राह–**तदयम्** इत्यादि । **सोऽयं दूरस्थः** ५ **तदसाधारणं** तस्याः शुक्तिकाया विशिष्टं **रूपम् आसन्नवत्** आसन्न इव तद्वत् **पश्यन्नपि न निश्चिनोति** तद्रूपम् । कुतः ? इत्याह–**निश्चय** इत्यादि । [**निश्चयप्रत्ययवैकल्यात्**][2] **इति** एवं परेणोच्यमानं **न जाघटीति** । कुतः ? इत्याह–**नहि** इत्यादि । **हि**र्यस्मात **न प्रत्यासन्ने-तरविज्ञान[यो:]स्पष्टास्पष्टप्रतिभासविशेषमन्तरेण** प्रत्यासन्नस्य विज्ञानस्य स्पष्टप्रतिभासभेदम् इतरस्य दूरस्य विज्ञानस्य अस्पष्टप्रतिभासभेदं विनाशमान(विना समान)प्रतिभास इत्यर्थः । १० **निश्चयस्य प्रत्ययो** हेतुः तस्य **साकल्यवैकल्यसंभवः** । अनुभवो हि तत्प्रत्ययः, स च द्वयो-रपि समानः, नैकत्र तस्य साकल्यम् अपरत्र वैकल्यम् इति भावः । दर्शनपाटवादिकमपि तत्कार-णम्, तद् दूरस्थे नास्तीति चेत् ; अत्रेदं चिन्त्यते–किमिदं तत्र दर्शनस्य पाटवम् ? प्रवृत्त्यभाव इति चेत् ; कुतः तस्य शुक्तिकायां मानसो रजतविपर्ययः ? यत इदं स्यात्–

*"नो चेद् भ्रान्तिनिमित्तेन संयु[यो]ज्येत गुणान्तरम् । १५
शुक्तौ वा रजताकारः रूपसाधर्म्यदर्शनात् ॥" [प्र० वा० ३।४३] इति ।

दर्शनाभावः रूपसाधर्म्यदर्शनं च इति विरुद्धम् । अथ सतोऽपि निश्चयजननासाम-र्थ्या[त्] तदिष्यते शुक्लतामात्रेऽपि ततो निश्चयो न भवेदिति न तत्र दर्शनव्यवहारः । तत्र सामर्थ्यम् [४७१क] अन्यत्र विपर्ययश्चेत् ; न निरंशे तदप्ययोगात्[3] । एकत्र सामर्थ्यमन्यत्र विपर्ययश्चेत् ; न ; नित्यानिषेधप्रसङ्गात् । २०

किंच, स्वग्रहणशक्तिरेव परग्रहणशक्तिः इति न बहिरर्थग्रहणनिषेधोऽपि । यदि पुनः अवैशद्यम् अपाटवम् ; तर्हि इदमायातम्–'इतरविज्ञानाऽस्पष्टप्रतिभासविशेषे सति निश्चयप्रत्ययवैकल्य-संभवः' इति, स्वभ्यासादिमतोऽपि दूरस्थस्य तन्निश्चयः इति न तद्वैकल्यं तत्र तदभावहेतुः । अथ अदूरत्वमपि निश्चयप्रत्ययः, ततो दूरस्थस्य तत्प्रत्ययवैकल्यसंभव इति चेत् ; अत्राह– **कथं च** इत्या द(दि । अयम)भिप्रायः–यथा प्रत्यासन्नेतरयोः शुक्तिरूपानुभवाऽविशेषेऽपि निकट- २५ त्वाऽनिकटत्वप्रत्ययभेदा[न्]निश्चयानिश्चयौ[4], तथा अर्थाविशेषेऽपि **तयोः**[5] **दूरेतरत्वादि-सामग्रीभेदाद् दर्शनस्य स्वभावभेदः** विशदेतररूपविशेषः **कथन्न स्यात् ?** स्यादेव, **यतो** दर्शनस्वभावभेदाभावात् **प्रत्यासन्नवत् दूरस्थ[:]स्पष्टमेव पश्येत्** । **यतः** इति वा आक्षेपे नैव पश्येत् । यदि च, यथा आसन्नः तथा दूरस्थोऽपि शुक्तौ विशिष्टं स्पष्टमेव रूपं पश्येत् ; तर्हि दूरस्थितविरलकेशानामपि तथाविधमेव रूपं पश्यति, निश्चयप्रत्ययवैकल्यात् न निश्चिनोति ३०

---

(१) शुक्तिकायाः । (२) अत्र पाठस्त्रुटितः प्रतीयते । (३) रूपद्वयाभावात् ।
(४) भवतः । (५) प्रत्यासन्नेतरयोः ।

इति स्यात । तथा च *"अणवो दूरविरलकेशवत् घनैकाभासमतिहेतवः" [प्र० वार्तिकाल० २।९२] इति प्रज्ञाकरस्य वचनं प्लवते । धर्मकीर्तेः *"चन्द्रद्वयज्ञानम् इन्द्रियजम्" इति । [४७१ ख]शक्यं हि वक्तुम्-प्रथममेकं त(मेकेन्दु)दर्शनं तदनन्तरं तद्द्वयविकल्प इति । कथमस्य वैशद्यमिति चेत ? कथं स्थूलैकघटादिविकल्प[स्य ?] ।

५ ननु च उक्तमत्र *"मनसोर्युगपद्वृत्तेः" [प्र० वा० २।१३३]इत्यादि । सत्यमुक्तम्-तत्तु अन्यत्राप्युक्तम् । 'अक्षभावाभावानुविधानं कथम् ?' इत्यपि न चोद्यम्; अस्य तद्विकल्पेऽपि समत्वात् । न च तत्र तन्नास्ति ; लोकस्य तथैव व्यवहारात् तदुक्तम्-*"अक्षज्ञानमनेकान्तमसिद्धं स्पराकृतेः ।" [प्रमाणसं० १।४] इति ।

अक्षजदर्शनान्तरभावित्वात्तत्र तद्विभ्रमः इति चेत् ; तथा चोक्तम्-

१० *"प्रत्यक्षासन्नवृत्तित्वात् कदाचिद् भ्रान्तिकारणम्" इति ; तदपि तादृगेव ।

यत्पुनरेतत्-अन्यत्र *"दृष्टस्मृतिमपेक्षेत" [प्र०वा० २।२९८] इति ; तदप्येतेन निरस्तम् ; नहि तद्विकल्पः तामपेक्षते क्वचित्तद्दर्शनाऽनभ्युपगमात् । तद्वासनातः तद्विकल्पः इति चेत् ; न ; सर्वस्य सर्वदा तस्य भावात् । व्यवहिता सा ; तद्द्वयविकल्पेऽपि । कामाद्युपप्लववत् बहिरर्थाभावः स्यादिति चेत ; अत एव संवेदनस्यापि स्थूलैकाकारवत् न द्विचन्द्रा-

१५ कारस्य विकल्पगोचरत्वेऽपि सन्तानान्तरे वाचकैः समर्पणम् । यदि पुनः तथापि तैमिरिकः चन्द्रादेः[वि]शिष्टं रूपं न पश्यति ; दूरस्थः शुक्तिकादेरपि तन्न पश्यति । तथाप्यस्य वस्तुविषयत्व(त्वे)शब्दस्याप्य त्वे(प्यस्तु । ए)तदेव दर्शयन्नाह-तत्र इत्यादि ।

ननु सामान्यं शाब्दे ज्ञाने प्रतिभाति । तच्च(न च)वस्तुनो भिन्ने(न्नं)तद्रूपमस्ति विरोधात्, ततो निर्विषयं तदिति चेत ; अत्राह-शब्द इत्यादि । [४७२ क] ।

२० **[शब्दसंसर्गयोग्येतरनिर्भासैकविकल्पवत् ।**
**स्याद्भेदो बहिरर्थस्य ततस्तत्त्वं द्वयात्मकम् ॥४॥**

**यथैव हि···ततः परमार्थसन् शब्दबुद्धौ प्रतिभासेत । यदि पुनरयं स्थिरस्थूलाकारः असन्नेव कथं प्रत्यक्षः कथं वा स्वार्थक्रियाकारी यतो लोकव्यवहारः ? तथा विकल्पस्वलक्षणस्य तदतदात्मकत्वमनिष्टमप्युपपद्येत । तथा च बहिरर्थस्य कस्यचित्**

२५ **अक्षशब्दज्ञानविषयत्वं कथन्नाङ्गीक्रियते यतः शब्दानां विकल्पानां च मिथ्यैकान्तताऽवसीयते । न चैतद् युक्तम्, कस्यचित्सम्यक्त्वमन्तरेण तन्मिथ्यैकान्तप्रतिपत्तेरयोगात् । तत्तत्त्वविकल्पसंभवे कथं सर्वविकल्पमिथ्यात्वम् ? तथाऽविकल्पसंवित्तेः निर्णयविरोधात् ।]**

**शब्दस्य** तेन वा **संसर्गः** सम्बन्धः तस्मै **योग्यः इतरो**ऽयोग्यः तौ आकारौ **निर्भासौ** तयो**रेकः** साधारणो **विकल्पः** । ननु सोऽपि असाधारणरूपमग्नोऽविकल्प

---

(१) "यथा विरलदेशस्थिता अपि केशमशकमक्षिकादयः एकघनाकारं प्रत्ययमुपजनयन्ति···"-प्र० वार्तिकाल० । (२) 'प्लवते' इति सम्बन्धः । "नीलद्विचन्द्रादिधियां हेतुरक्षाण्यपीत्ययम् ।"-प्र० वा० २। २९४ । (३) इन्द्रियान्वयव्यतिरेकानुविधानम् । (४)अन्यसन्ताने ।

एवेति चेत् ; आस्तां तावदेतत् । तस्यैव तद्वत् । **स्याद् भेदो बहिरर्थस्य ततः तत्त्वं द्व्यात्मकम्** सामान्यविशेषात्मकम् ।

कारिकां व्याख्यातुमाह–**यथैव हि** इत्यादि । निगमनमाह–**तत** इत्यादि । यत एवं **ततः परमार्थसन्** न संवृतिसन् **शब्दबुद्धौ प्रतिभासेत** ।

ननु विकल्पस्वलक्षणस्य अभिलापसंसर्गयोग्यत्वेनाभिमत आकारः ततो न व्यतिरिच्यते ५ इति स्वलक्षणमेव, तन्न दृष्टान्तसिद्धिरिति चेत ; अत्राह–**यदि पुनः** इत्यादि । **अयं** परि-दृश्यमानः **स्थिरस्थूलाकारः** शब्दवाच्यो **यदि पुनः असन्नेव** अविद्यमान एव विकल्पबुद्धि निरंशासेति (निरंशेति) यावत **कथं प्रत्यक्षः** स्वसंवेदनाध्यक्षग्राह्यः ? येन प्र ज्ञा क र गु प्त स्य इदं व[च]नं शोभेत– *"**प्रमेयद्वैविध्यं प्रमाद्वैविध्यसाधनं प्रत्यक्षतः प्रतीयते**"[1] इति । दृश्यसञ्च स (नहि असत् शश) विषाणमध्यक्षगोचरः ; तथा च स्वलक्षणमेकमेव प्रमेत्र[2] प्रमे- १० यम् , तत्र प्रत्यक्षमेव प्रमाणं न द्वितीयप्रमाणावकाश इति भावः ।

स्यान्मतम्–स एव तदाकारो विशेषेषु समारोपितः सामान्यम , ततोऽयमदोषः इति ; तत्राह–**कथं च (वा)** इत्यादि । शब्दवृत्तिः अनुमानप्रवृत्ति[श्च]**स्वार्थक्रिया तत्कारी** विकल्पबुद्धेरयमाकारोऽसन्नेव कथम ? **'वा'** इति दूषणसमुच्चये, **यतः** तत्का (तत्करणात[3]) **लोकस्य व्यवहारः** [४७२ ख] प्रवृत्त्यादिरूपः । १५

इदमत्र तात्पर्यम्–आकारोऽयं विशेषेषु किं तेनैव विकल्पेन आरोप्यते, विकल्पान्तरे-ण वा ? येनोच्यते प्र ज्ञा क रे ण–*"**स एवाकारोऽस्पष्टः ततोऽव्यतिरिच्यमानतनुः स्वलक्षणमपि भिन्ने खण्डादौ चारोप्यमाणः सामान्यम्**" इति[4] । तत्राद्ये पक्षे सिद्धा विकल्पस्य अभिलापसंसर्गयोग्यता, (?) अन्यत्र आरोप्यरूपस्य भ्रान्तस्यापि स्वीकारात् । न चैवं परस्य मतम् । एतेन द्वितीयोऽपि विकल्पश्चिन्तितः ; तथाहि–द्वितीयोऽपि विकल्पः २० प्रथमविकल्पस्य आकारमन्यत्र आरोपय रि[यति]स्वस्य नेति तस्यापि [5]भ्रान्ते[त]रूपापरि-त्यागः । अथ तस्यापि तत्र तदारोपः (?) स्वाकारत्वात स्वलक्षणम् ; अत्रापि स एव दोषः **'असन्नेव कथं स्वा–'** इत्यादिकः । पुनरपि विकल्पान्तरेण तस्य तत्र तदारोपे अनवस्था, पुनरपि [6]तदन्तरकल्पनात् ।

किं च, आद्य एव अन्यत्र स्वाकारमारोपयतु किं द्वितीयेन ? तत्र सत्यपि एकत्र विभ्र- २५ मेतरत्वानिवृत्तेः । भवतु आद्य एव तथा विकल्पः तथापि न भवतोऽभिमतसिद्धिः, आरोपिता-कारस्य असत्त्वात् , ततोऽनेकान्तेऽपि तथा स्यात् परमार्थाकारानेकान्तोपगमादिति चेत् ; अत्राह–**स्वलक्षणस्य** इत्यादि । **विकल्पस्वलक्षणस्य तदतदात्मकत्वम्** आरोपितेतराकारा-त्मकत्वं **तथा** तेन अनन्तरोक्तप्रकारेण **उप[प]द्येत** । किं भूतम् ? इत्याह–**अनिष्टमपि** सौग-

---

(१) "विषयद्वैविध्यं प्रत्यक्षत एव सिद्धम्"–प्र० वार्तिकाल० ३।२।(२) 'प्रमेत्र' इति व्यर्थम् । (३) अर्थक्रियाकरणात् । (४) "रूपादय एवाविशेषेण सामान्यमनुमानगोचरम् । व्यक्त्यन्तरापरित्यागे हि व्यक्त-य एव सामान्यमुच्यन्ते ।"–प्र० वार्तिकाल० पृ० १९२ । (५) द्वयरूपतापत्तिरित्यर्थः । (६) विकल्पान्तर ।

तस्य अनभिमतम् । नहि निरंशैकान्तवादिनो [४७३ क] भ्रान्तोऽपि द्वितीयोंऽशः सुखाय । **अपि**शब्दः **तथा** इत्यस्यानन्तरं द्रष्टव्यः । **तथा च** तदनिष्टानुषङ्गप्रकारेण च **बहिरर्थस्य** घटादेः **कस्यचित्** जैनोपगतस्य नापरस्य **अक्षशब्दज्ञानविषयत्वं कथं नाङ्गीक्रियते ?** एकत्र भ्रान्तेतराकारद्वयाविरोधे अभ्रान्तसाधारणेतराकारद्वयाविरोधोऽपि दुर्निवार इति भावः ।
५ **यतो** संगी (यदङ्गी) करणात **शब्दानां विकल्पानां च मिथ्यैकान्तता अवसीयते** । विकल्पाकारस्य शब्दसंसर्गयोगस्य (स्य) सत्त्वमभ्युपगम्य इदमुक्तम् ।

अधुना तत्रा (तन्त्रा) र्त्तानि दर्शयन्नाह–**न चैतद् युक्तम्** इत्यादि । **न च** नापि **एतद्** विकल्पस्वलक्षणस्य तदात्मकत्वम् आरोपिताकारात्मकत्वं **युक्तम्** उपपन्नम् । कुतः ? इत्याह– **कस्यचित्** इत्यादि । **कस्यचिद्** विकल्पस्य **सम्यक्त्वं** यथार्थत्वमन्तरेण **तेषां** विकल्पानां यो
१० **मिथ्यात्वैकान्तः** तस्य **प्रतिपत्तेरयोगात्** । अस्त्येव स विकल्पः सम्यक्, यतः तदेकान्तप्रतीतिरिति चेत् ; अत्राह–**तत्त्व** इत्यादि । **स** तन्मिथ्यात्वैकान्तः **तत्त्वं** परमार्थो यस्य **विकल्पस्य** तस्य **संभवे कथं सर्वविकल्पमिथ्यात्वम् ?** 'विवादगोचरापन्ना विकल्पा मिथ्या [1]तत्त्वात् [2]ईश्वरादिविकल्पवत्' अतोऽनुमानात् तत्प्रतीतिः । [3]तच्च [4]अतत्त्वविषयमपि प्रमाणम् अविसंवादात्, [5]सोऽपि पारम्पर्येण वस्तुनः उत्पत्तेः । तथा चोक्तम्–

१५ *"मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥"
[प्र० वा० २।५७]

[४७३ ख] तत्कथमुच्यते **तत्संभव (तत्तत्त्वसंभवे)** इति ? तदप्यसत्यम् ; यतः अनुमानस्य अतत्त्वविषयत्वे ततः तत्त्वाऽसिद्धेः, अन्यथा [6]प्रधानादिविकल्पादपि [7]तत्प्रसङ्गात् ।
२० [8]अस्य वस्तुन्यप्रतिबन्धात् नेति चेत् ; मरीचिकाजलज्ञानादपि तत्त्वसिद्धेः तदपि प्रमाणं भवेत्, तस्यापि पारम्पर्येण [9]तत्र प्रतिबन्धात् । तथाहि–मरीचिकाभ्यः तद्दर्शनम्, अतो जलविकल्पः इति । *"नो चेत्" [प्र० वा० ३।४३] [10]इत्यादि वचनादस्तु प्रमाणमिति चेत् ; प्रमाणान्तरं स्यात् । न प्रत्यक्षम् ; विकल्पत्वात् । नाप्यनुमानम् ; अलिङ्गजत्वात् । इतरथा *"**अनुमानानुमानिकम्**" [प्र० समु० १।८] इत्यनेन पर्याप्तमिति *"**भ्रान्तिसंवृतिसंज्ञा**
२५ **(सज्ज्ञा)नम्**" [प्र० समु० १।८] [11]इत्यनर्थकम् । जलस्यासतो ग्रहण (णं) तु प्रमाणमनुमानम्, तस्मात् सात्मनो (स्वात्मनो) ग्रहणात् । लोक एवं न मन्यते ; यो मन्यते तं प्रमाणे ति (णमिति) किं स्यादप्रमाणम् ? इतरथा शुक्लशङ्खादौ पीतादिज्ञानं विसंवादधियं प्रति प्रमाणं स्यादिति

(१) विकल्पत्वात् । (२) अनुमानम् । (३) सामान्यविषयमपि । (४) अविसंवादोऽपि । (५) साङ्ख्याभिमत । (६) तत्त्वसिद्धिप्रसङ्गात् । (७) प्रधानादिविकल्पस्य । (८) वस्तुनि । (९) "नो चेद्भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् । शुक्तौ वा रजताकारः रूपसाधर्म्यदर्शनात् ।"–प्र० वा० । (१०) "भ्रान्तिसंवृतिसज्ज्ञानमनुमानानुमानिकम् । स्मार्ताभिलापिकं चेति प्रत्यक्षाभं सतैमिरम् ।"–प्र० समु० । भ्रान्तिज्ञानं मृगतृष्णिकायां जलावसायि, संवृतिसतो द्रव्यादेर्ज्ञानम्, अनुमानं लिङ्गज्ञानम्, आनुमानिकं लिङ्गिज्ञानम्, स्मार्तं स्मृतिः, आभिलापिकं चेति विकल्पप्रभेद आचार्यदिग्नागेन उक्तः ।"–प्र० वा० मनोरथ० २। २८८ ।

तत्रानुमानोत्थापनमयुक्तमिति चेत् ; उच्यते-*"व्याख्यातारः खल्वेवं विवेचयन्ति"[प्र०वा० स्ववृ० १।७२] [1]इति वचनात् तेषां तत् प्रमाणं न स्यात्।

अथ ते विवेचयन्तोऽपि गत्यन्तराभावात् दृश्यविकल्प्ययोरेकीकरणात् प्रवर्त्तते (न्ते) ; तर्हि दूरस्थोऽविशदप्रतिभासाद् विवेचनचतुरधीरपि प्रवर्त्तते इति तदवस्थम् अनुमानोत्थापनमनर्थकम्। प्रवर्त्ततां को विरोध इति चेत् ? अनुमानवत् प्रमाणम् । अस्तु इति चेत् ; किं नाम ? प्रत्यक्ष- ५ मिति चेत् ; अनुमानमपि स्यात् । अवैशद्यान्नेति चेत् ; अत्र (अन्यत्र) समानम् । लिङ्गजत्वा-न्नेति चेत् ; एवं तर्हि कारणभेदात् [४७४क] मानभेदो न प्रमेयभेदात्[2] । तथा सति अक्षजन्मनो[3] मानसादि प्रमाणान्तरं स्यादिति न प्रमाणसङ्ख्यानियमः ।

स्यान्मतम्-स्वलक्षणगोचरत्वात्तदपि प्रत्यक्षम्, दूरस्थानुमानज्ञानयोः साधारणाविशद-विषयत्वादेकप्रमाणत्वमस्तु । अथ व्याख्यातॄणां नानुमानं प्रमाणम् ; कुतः ते स्वयं तत्त्वमव- १० बुद्ध्यन्ते परं वा प्रबोधयन्ति, येन ध र्म की र्ति प्र ज्ञा क र गु प्त द यो व्याख्यातारः स्युः ?

अथ मतम्-परप्रसिद्धानुमाने न तेषां वृत्तिरिति[4] चेत् ; न ते चार्वाकेभ्यो विशिष्यन्ते । तन्न युक्तम्-*"प्रमाणेतरसामान्यस्थितेः" [5]इत्यादि। स्वयं चानुमानमनिच्छन्तो *"निरालम्बनाः सर्वे प्रत्ययाः इति कोऽर्थः ? स्वरूपालम्बनाः" [प्र० वार्त्तिकाल० पृ० ३६५] इति कथं ब्रूयुः तत्र प्रत्यक्षावृत्तेः इत्युक्तम् । अद्वैतं च निराकृतम् । अथ अनुमानमर्थविषयमिति तेषा- १५ मपि प्रमाणं न मरीचिकातोयज्ञानम् ; आगतास्तेऽपि तर्हि मदीयं पन्थानमिति साधूक्तम्-**सर्वविकल्पमिथ्यात्वमिति** ।

अपरः प्राह-व्यवहारेण अनुमानं प्रमाणमिष्टम् "प्रामाण्यं व्यवहारेण" [प्र०वा० १।५] इति वचनात् । व्यवहारत्यागे तत्त्यागो भाण्डत्यागे शुक्ला (दुग्ध) त्यागवत् , तत्त्वं पुन-रविकल्पाध्यक्षात् सिद्ध्यति ; इत्यत्राह-**अविकल्पसंवृत्तेः(संवित्तेः)** इत्यादि । कुतः ? इत्यत्राह- २० **तथा** तेन मिथ्या सर्वे विकल्पा इति प्रकारेण **निर्णयविरोधात् अविकल्पसंवित्तेः** इति । तथाहि-

> विकल्पानुकृतेस्तस्य अविकल्पकता कुतः ।
> तेषां तया न निर्णीतिः [४७४ख]तादृप्यत्ययमिच्छताम् ॥
> सारूप्यमन्यथा वित्तौ निराधारं व्रजेदधः ।
> स्वरूपेतरसंवित्तौ नाविकल्पकताप्यतः ॥ २५
> तन्मिथ्यात्वस्य निर्णीतौ तया तस्या भवेत्कथम् ।
> अविकल्पकता नाम क्षणभङ्गे यतोऽनुमा ॥
> नसं (नन्व) निर्णयज्ञानं प्रत्यक्षं कैश्चिदीक्ष्यते ।
> निरस्ता ग्रन्थतोऽस्मात्ते समदोषानुषङ्गतः ॥

---

(१) "व्याख्यातार एवं विवेचयन्ति न व्यवहर्तारः, ते तु स्वालम्बनमेव अर्थक्रियायोग्यं मन्यमाना दृश्यविकल्प्यार्थावेकीकृत्य प्रवर्तन्ते ।"-प्र० वा० स्ववृ० १। ७२ । (२) प्रमाणभेदः । (३) निर्विकल्पात् । (४) प्रबोधनव्यवहारः । (५) 'अन्यधियो गतेः । प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित् ।' इति शेषः ।

यदि वा, तथा 'सर्वं विकल्पज्ञानं मिथ्या' इत्यनेन प्रकारेण **अविकल्पसंवित्तेः सकाशात् निर्णयविरोधात्।** विचारितमेतत् *"**अभेदात् सदृशस्मृत्या**" [सिद्धिवि० १।६] इत्यादिना।

ननु तस्य दर्शने न कश्चिद् विकल्पो नाम, स्वरूपमात्रवेदने तदयोगादिति चेत; उक्तमत्र–**स्थूलैकाकारप्रतिभासादिति।** तथाप्यविकल्पकत्वे विकल्पे नामान्तरम्[1]। अथायमाकारो न

५ ज्ञाने नाप्यर्थे, वनादिवद्विचार्यमाणस्यायोगात्, केवलमविद्याबलादाभातीति; तत्राह–**स्वग्राह्याकारं विकल्प(कारवैकल्य)**मित्यादि।

**[स्वग्राह्याकारवैकल्यं संवित् संवृण्वती स्वतः।**
**भेदेऽप्यभेदग्रहणात् स्वभावानपि स्वार्थयोः ॥७॥**

**चित्तस्वलक्षणं कथञ्चित् प्रतिभासनं स्वार्थयोः प्रतिभासेत ग्राह्य[ग्राकारत्वात्]**
१० **यतः, ततो न युक्तम् अनंश[विषयं]प्रत्यक्षादि, विकल्पकं निर्विषयम् इति। ]**

**ग्राह्याकारस्य** स्थूलाकारस्य **वैकल्यम्** अभावः तच्च ज्ञानस्य स्वरूपमेव। **स्वं** च तद् **ग्राह्याकारवैकल्यं** च इति तत्। **संव(संवि)त्** बुद्धिः **संवृण्वती स्वतः** आत्मनैव सदपि स्वयं विषयतामनयन्ती, इतरथा न स्थूलाकारावभासः स्यात्। नहि नीलविविक्तयाते वत्र(क्ते पीते वेद्य)माने नीलस्य विभ्रमतोऽपि प्रतिभासः। अथ तदाकाराद्भिन्नमात्मानमसौ वेत्ति
१५ *"**नीलादिशरीरव्यतिरेकेण संवेदनस्यान्यस्याप्रतिभासनात्**"[2] इत्यस्य विरोधात्।

किंच, अयमाकारः [४७४क] संवेदना[त्]चेद्भिन्नः; कथमाभाति? स्वतश्चेत; संवेदनान्तरम्, तत्र चोक्तो दोषः–विरुद्धधर्माध्यासैकवस्तुसिद्धिरिति, *"**मायामरीचिप्रभृतिप्रतिभासवदसत्त्वेऽप्यदोषः**" [प्र० वार्तिकाल० ३।२११] इत्यस्य विरोधश्च। संवेदनत्वेऽप्यसत्त्वमिति चेत्; न, *"**अज्ञातार्थप्रकाशः इति परमार्थलक्षणम्**" [प्र० वार्तिकाल० १।५] इत्यस्य विरोधात्।
२० विभ्रमाच्चेत; न विभ्रमसिद्धिः। पुनरपि संवेदनाद्भेदे अनवस्था। अविद्यावभासे एकस्य विभ्रमेतररूपता। अथ विकल्पेन आरोप्यते स तत्राकारः; न; स्पष्टताप्रसङ्गात्।

किंच, संवेदनात्तस्य भेदेनावभासे साकारभ्रान्तिर्न स्यात्। नहि नीलाद्भेदेन पीते प्रतिभासमाने तत्र नीलाकारेण साकारत्वभ्रमः कस्यचित्। अथ अभेदाध्यारोपादभेदभ्रमः; स कुतो मतः? उत्तरविकल्पात्; संहृताशेषविकल्पदशायां[3] न स्यात्, अभ्यासात् प्रवर्त्तमानस्य च[4]।
२५ तत एव संवेदनाच्चेत्; न[नु] च तेन तत्र तदव्यापारो(तदध्यारोपो)ऽभेदग्रहणान्नापरः। एवमिति चेत; तर्हि **भेदेऽपि अभेदग्रहणात्** तत्संवृण्वती इति सूक्तं भवत्वेवन्वेव(भवतु, एव)मिति चेत्; अत्राह–**स्वभाव** इत्यादि। **स्वभावान्** क्षणिकत्वादीन**पि** संवृणोति। कयोः? इत्याह–**स्वार्थयोः** इति।

कारिकां विवृण्वन्नाह–**चित्तस्वलक्षणम्** इत्यादि। चेतसो निरंशत्वप्रतिपादनार्थं **स्वलक्षण-**

---

(१) कृतं स्यात्। (२) "नीलादिसुखादिकमन्तरेणापरस्य ज्ञानाकारस्यानुपलक्षणात्। (पृ० ३४५) सुखादिनीलादिव्यतिरिक्तमपरमिह जगति संवेदनं नास्तीति सुखादिवत् स्वसंवेदनं नीलादिकमपीति युक्त एव निर्णयः।"–प्र० वार्तिकाल० पृ० ४५४। (३) निर्विकल्पावस्थायाम्। (४) 'न स्यात्' इति सम्बन्धः।

ग्रहणम्, परस्य तत्रैव स्वलक्षणत्वोपगमात्, **कथञ्चित् प्रतिभासेत** न सर्वथा। किं कारणम्? इत्याह–**स्वार्थयोः** इत्यादि। किं कुर्वाणम्? इत्याह–**कथञ्चित्** [४७५ख] सच्चेतनादिप्रकारेण न धर्मान्तरे[ण]**प्रतिभासमानम्**। एतदपि कुतः? इत्याह–**ग्राह्य** इत्यादि। **यत** इति **यत** एवं **ततो न युक्तम्**। किम्? इत्याह–**प्रत्यक्षादि**। कुतः? इत्याह–**अनंश** इत्यादि। **विकल्पकं निर्विषयम्** इति। तदविकल्पकवदन्यस्यापि[अ]साधारणगोचरत्वादिति मन्यते। ५

प्रत्यक्षस्य असाधारणविषयत्वमाधिकां परकीयां युक्तिमपनुदन्नाह–**प्रत्यक्षम्** इत्यादि।

**[प्रत्यक्षं स्वार्थशक्तेः स्वार्थाकारानुकारि चेत्।**
**सविकल्पमनस्कारशक्तेः स्यात् सविकल्पकम् ॥६॥**

**ततश्चैकत्वप्रसङ्गात् कस्यचित् केनचित् क्रमाक्रमनैरन्तर्यविप्रकर्षादिव्यवस्थैव न स्यात्।]** १०

**प्रत्यक्षं** कल्पनापोढमभ्रान्तं ज्ञानम्। किंभूतं तत्? इत्याह–**स्वार्थो** रूपादिपरमाणवः **तद(तदाकारा)नुकारि चेत्** यदि **स्यात्**। कुतः? इत्यत्राह–**स्वार्थस्य शक्तेः** सामर्थ्यात्। अत्र दूषणमाह–**सविकल्पमनस्कारशक्तेः** सामर्थ्यात् **स्यात् सविकल्पकं 'प्रत्यक्षम्'** इत्यनुवर्त्तते। तथाहि–सौगतप्रत्यक्षम् अनुमानसविकल्पकमुपादाय उपजायते, तथा कामशोकाद्युपप्लवः, एतदुभयोरपि नाल(तुल्य)त्वात् कुतस्तयोः अन्योऽन्यतो व्यावृत्तिः येन १५ व्यपदेशभेदः स्यात्। अथ ज्ञानस्य अर्थाज्ञा(अर्थाज्जा)तत्वेन, अर्थस्य ततो जडत्वेन; कुत एतत्? एकैकस्वभावस्यान्यासदृशस्यापि अन्यत्राभावादुच्यते; तयोः सदृशेतरतां(ता)प्रसङ्गः। अपि च, येन स्वभावेन तयोः अकार्यकारणेभ्यो व्यावृत्तिः तेन चेत् परस्परमकारणता[तयोरैक्यम्]।

तदेतेन अनुपादानोपादेयव्यावृत्तिरपि[४७६क] चिन्तिता। येन च स्वभावेन घटव्यपदेशभाजः परमाणवः मेरुपरमाणुभ्यो व्यतिरिच्यन्ते, तेन चेदन्योऽन्यम्; समूहाभावः। सुगत- २० ज्ञानं स्वोपादानानुमानक्षणात् येन रूपेण व्यावर्त्तते तेन यदि स्वोपादेयोत्तरक्षणात्; तस्योपादेयत्वमेवं न उपादानत्वम्। एतदेव दर्शयन्नाह–**ततश्च** तस्माच्च **एकत्वप्रसङ्गात् कस्यचित्** कारणक्षणस्य कार्यक्षणस्य वा **केनचित्** कार्यक्षणेन[कारणक्षणेन]वा यः **क्रमः** कस्यचिद् रसादेः केनचिद् रूपादिना यश्च **अक्रमः** कस्यचिज्जाग्रद्विज्ञानस्य केनचित् पूर्वज्ञानेन **नैरन्तर्य**(र्यं)प्रत्यासत्तिः स्वापव्यवहितप्रबोधित(प्रबोधेन) **विप्रकर्षः, आदि**शब्देन जडेतरत्वादिपरिग्रहः। यदि वा, घटे २५ कस्यचित् परमाणोः केनचित् परमाणुना **नैरन्तर्यं** प्रत्यासत्ति[:] द्रव्यान्तरपरमाणुना **विप्रकर्षादिः** तेषां **व्यवस्थैव न स्यात्**। एतेन द्वितीयोऽपि पक्षः चिन्तितः। तथाहि–चित्रज्ञानं येन स्वभावेन केवलनीलज्ञानाद् व्यावृत्तं पीतेन तेन चेत् तथा विज्ञानान्तरेभ्यः; पीतमेव स्यात्

---

(१) श्रुतमयी चिन्तामयी च भावने अनुमानरूपे, तत्प्रकर्षपरिप्राप्तौ सुगतज्ञानं भवति। (२) सुगतज्ञानं प्रमाणम्, कामाद्युपप्लवः तदाभासमिति। (३) अस्ति प्रतिभासभेदः। (४) व्यतिरेकस्तर्हि। (५) स्यात् किन्तु।

इति कुतः चित्रं नाम ? पूर्वमत्र यथासंभवं योज्यम् । विज्ञानपरमाणुसमुच्चयदर्शने अर्थपरमाणुसमुच्चयवद् वक्तव्यम् ।

ननु यदुक्तम्-*"तत्र दृष्टस्य भावस्य दृष्ट एवाऽखिलो गुणः" [प्र० वा० ३।४४] इति ; तदसारम् ; दृष्टस्य अदृष्टस्वरूपायोगात् अतिप्रसङ्गात् तस्येति सम्बन्धाभावात् शशविषाणवत् । [४ ७६ख] न हि दृष्टस्य घटस्य अदृश्यं शशविषाणमिति भ[व]ति व्यपदेशः । पश्चात्तत्रैव प्रतीयमाने[नै]ति चेत् ; न; अत्र प्रमाणाभावात् इति ; अत्राह-**दृश्यादृश्यात्मभेदेऽपि** इत्यादि ।

**[दृश्यादृश्यात्मभेदेऽपि तादात्म्यं रसादिषु ।**
**स्वसंविद्ग्राह्यनिर्भासविवेकादिवदञ्जसा ॥७॥**

१० एकद्रव्य···स्वसंवेदनवत् ।]

उपलभ्यानुपलभ्यस्वभावनानात्वेऽपि **तादात्म्यम्** एकत्वं स्यात् । क्व ? इत्याह-**रसादिषु** । निदर्शनमाहात्र-**स्वे**त्यादि । **स्व**श्चासौ **संविद्ग्राह्यनिर्भासविवेक**श्च स **आदि**र्यस्य चित्रज्ञाननीलाद्याकाराणां ते तथोक्ताः तेष्विव **तद्वत्** । **अञ्जसा** परमार्थेन ।

कारिकार्थमाह-**एकद्रव्य** इत्यादिना । अत्र निदर्शनम्-**स्वसंवेदन** इत्यादि ।

१५ लब्धं फलं दर्शयन्नाह-[**तत एव** इत्यादि]

**[तत एवोपाधितद्वद्भेदाभेदानुषङ्गिणः ।**
**अनवस्थादिदोषाः स्युस्तदनेकान्तहेतवः ॥८॥**

यच्चेदम्-उपाधितद्वतोर्भेदैकान्ते सम्बन्धो न सिध्येत् । तदुपकारेऽपि तदेकोपाधिद्वारेण सर्वोपाध्युपकाराङ्गैकात्मना धर्मिणो ग्रहणे प्रमाणान्तरावृत्तिः । तदुपकारि-
२० कशक्तीनां परस्परतो भेदकल्पनायामनवस्था । माभूदनवस्थेति तदभेदकल्पनायां कुत एतत् समस्तमनेकान्तसाधनम् उपाधि···तदेकोपाधिविशिष्टस्य धर्मिणः प्रतिपत्तावपि प्रमाणान्तरम्, तदन्यविशिष्टस्य तस्याप्रतिपत्तेः । व्यवसायात्मकस्य [प्रवर्तकत्वात्] । यदर्थसामर्थ्योत्पन्नं तदाकारमेवानुकरोति प्रत्यक्षं तदनन्तरवत् ; नायमेकान्तः चित्स्वभावाभावप्रसङ्गात् । तदनेकान्ते सामग्रीभेदात् सविकल्पादिरूपता ।]

२५ **तत एव** तेषां तादात्म्यादेव । किम् ? इत्याह-**उपाधि** इत्यादि । **उपाधयः** विशेषणानि **तद्वन्तो** विशेष्याः तेषाम् **अन्योऽन्यम्** एकान्तेन यौ **भेदाभेदौ तदनुषङ्गिणो** ये **अनवस्थादिदोषाः** आदिशब्देन विरोधादिपरिग्रहः, **स्युः** भवेयुः । किंभूताः ? इत्याह-**तदनेकान्तहेतवः** ।

कारिकां विवृण्वन्नाह-**यच्चेदम्** इत्यादि । पूर्वपक्षसमुच्चये चशब्दः । **यत्** (1)परं

(1) अन्यत् ।

परेणोक्तम्[1] **उपाधितद्वतोर्भेदैकान्ते** अङ्गीक्रियमाणे **सम्बन्धो न सिध्येत्**। समवायादेरन्यस्य सम्बन्धस्य निषेधात्।

नन्वेवम् अग्निधूमयोरपि स न सिध्येत ; इत्यत्राह–**यद्यनुपकारः** इति। तयोर्यद्युपकाराभावः तदा न सिध्येत, उपकारे तु सिध्येदेव। उपकारोऽस्ति चेत ; अत्राह–**तदुपकारेऽपि** इत्यादि। तयोः परस्परम् एकस्मादेकस्य[४७६ क]चोपकारेऽपि **प्रमाणान्तरावृत्तिः**। ५ कस्मिन् सति ? आह–**धर्मिणो ग्रहणे सति**। केन ? इत्याह–**तदेकोपाधिद्वारेण, तस्य** धर्मिणो य **एक उपाधिः** विशेषणं **तद्द्वारेण**। किंभूतस्य तस्य ? इत्याह–**सर्वोपाध्युपकाराङ्गैकात्मनः**। **सर्वस्य उपाधेः** य **उपकारः** तस्य **अङ्गं** निमित्तम् **एको**ऽभिन्नः **आत्मा** स्वभावो यस्य तस्य इति। एवं मन्यते परः–एकोपाधिद्वारेण सकलोपाध्युपकारशक्त्यात्मा तद्वान् प्रतीयमानः सकलोपाधीआह(धीग्राहि)यति, तदग्रहे तदग्रहात इति कुतः प्रमाणान्तरवृत्तिरिति। १० अथ तदुपकारशक्तयो भिन्नाः तेनायमदोषः ; तत्राह–**तदुपकार** इत्यादि। **तेषामुपाधीनाम् उपकारिकाः** ताश्च ताः **शक्तयश्च** तासाम् **भेदकल्पनायाम्**। कुतः ? इत्याह–**परस्परत** इत्यादि। तथाहि–शक्तिशक्तिमतोर्भेदैकान्ते सम्बन्धो न सिध्येत् यद्यनुपकारः। तदुपकारेऽपि पूर्ववद्वक्तव्यम्। पुनरपि तद्भेदकल्पनायां स एव दोषः **इत्यनवस्था** स्यात्।

सांख्यस्य मतमाशङ्कते परो दूषयितुम **मा भूत्** इत्यादि। **माभूदनवस्था इति** हेतोः **तयोः** १५ उपाधितद्वतोर**भेदकल्पनायां** सांख्येन क्रियमाणायाम ? किम ? इत्याह–**कुत** इत्यादि[2]। स्वयमेतन्निराकुर्वन्नाह–**एतत्** परेणोच्यमानं **समस्तं** निरवशेषम **अनेकान्तसाधनम्**। कुतः ? इत्याह–**उपाधि** इत्यादि। ततः किं जातम ? इत्याह–**तदेकोपाधि** इत्यादि। **तत्** तस्मात् **तयोः** [४७७ख] कथञ्चित्तादात्म्यात् **एकोपाधिविशिष्टस्य धर्मिणः प्रतिपत्तावपि प्रमाणान्तरं** 'प्रवर्तते' इत्यध्याहारः। कुतः ? इत्याह–**तद्** इत्यादि। **तस्मात्** उक्तादुपाधि न्येरोपाधिना (धेर- २० न्येन उपाधिनाऽ) **विशिष्टस्य तस्याऽप्रतिपत्तेरिति**।

स्यान्मतम्–'प्रतिपन्नस्य अप्रतिपन्नं रूपम्' इति कुतोऽवगम्यते ? इत्यत्राह–**व्यवसायात्मकस्य** इत्यादि। **व्यवसायात्मकस्य** सामान्यविशेषात्मकवस्तुविषयस्य **[प्रवर्तकत्वात्]** न प्रतिपरमाणुनिष्ठाजं (निष्ठम) भ्रान्तमविकल्पकम् इन्द्रियज्ञानं चाभ्यासे प्रवर्त्तकं केषाञ्चित्[3]।

एतेन सुखादिसंवेदनं व्याख्यातम्। तदपि अभ्यासजं परस्य। अभ्यासश्च नाऽविकल्प- २५ कस्य ; चक्षुरादिज्ञानं च चिरप्रवृत्ति(त्त)केवलविकल्पसन्तानान्तरभावि। नहि तस्याविकल्पकारणं पूर्वं सन्निहितमस्ति। 'चिरविनष्टं उपादानं च'[4] निरस्तम्। तेषां च सविकल्पकत्वे तत्सन्ता-

---

(१) तुलना–"योऽपि मन्यते उपाधयः परस्परमाश्रयाच्च भिन्ना एव, तन्निबन्धनाः श्रु तयोऽपि तदाधारे तत्रैव वर्तन्ते, तदयमप्रसङ्ग इति; तस्यापि नानोपाधीनामुपकाराङ्गशक्तिभ्योऽभिन्नात्मनः सर्वात्मना ग्रहे कृते उपकार्यस्य को भेदः स्यादनिश्चितः। (स्ववृत्तिः) तयोरात्मनि सम्बन्धादेकज्ञाने द्वयग्रहः। धर्मोपकारशक्तीनां भेदे तास्तस्य किं यदि। नोपकारस्ततस्तासां तथा स्यादनवस्थितिः॥ एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे। दृष्टे यस्मिन्नदृष्टास्ते तद्ग्रहे सकलग्रहः॥"–प्रमाणवा० स्ववृ० पृ० १३२–३८। (२) बौद्धः। (३) प्रज्ञाकरादीनाम्। (४) इति।

मितां तदेवं । एतेन मानसमपि चिन्तितम् । तदपि स[वि]कल्पाध्यक्षात्[1] तादृशमेवं । यदि पुनः तन्मनस्कारात्चित्द्रूपानुकरणमेव नाभिलापसंसर्गयोग्यानुकरणं तथा दृष्टेः, भावशक्तेरचिन्त्यत्वात् ; तत एव तर्हि परमाणुभ्यो नीलाद्याकारानुकारितैव न परस्परविवेकानुकारितैति (रितेति) प्राप्तम् , तथा च परमाणूनां सावयवत्वम् , प्रत्यक्षं च सामान्यगोचरम् अनेकसाधारणा-
५ कारानुकरणात् । अथ तत्रासौ आकारो नास्ति, कथमभा(कथमवभा)ति ? असन्नेवेति चेत् ; भ्रान्तमध्यक्षम् । तथेति चेत् ; [४७८क] लक्षणे[5] अभ्रान्तग्रहणमनर्थकं विषयाभावात् । व्यवहारार्थं तदिति चेत् ; न ; अनुम(मान)शब्दज्ञानगोचरस्यापि स्वलक्षणत्वमिति *"प्रमेयद्वैविध्यात् प्रमाणं द्विविधम्"[6] इत्यसारम् , विचार्यमाणस्याऽयोगात् । नेति चेत् ; अत एव चक्षुरादिगोचरस्यापि न स्यात् । व्यवहारादिति चेत् ; प्रकृतं न परिहृतम् । अथ अनुमानादि-
१० विषयो न स्वलक्षणम् , तस्य इन्द्रिये अन्यथा प्रतिभासनात् ; स्थूलाकारोऽपि न स्वलक्षणं योगिज्ञाने अन्यथा प्रतिभासनात् । अन्यथा कुतः परमाणुसिद्धिः येनोच्यते–*"दूरविरलकेशवत् परमाणवः स्थूलप्रतिभासहेतवः"[7] इति ? अनुमानात्तत्सिद्धिरिति चेत् ; असोः कोशस्य तीक्ष्णता–यद् योगिनाऽप्रतिपन्नम् अनुमानं प्रत्येति ।

किंच, इतरवद् योगिनो भ्रान्तत्वं सविकल्पकत्वं च, तदाकारे योगिन[:]स्वलक्षणं मा भूत्
१५ अन्यस्य भविष्यतीति चेत् ; अभिलापसंसर्गयोग्याकारोऽपि व्याख्यातृणां मा भूत् व्यवहारिणां भविष्यति । अनर्थक्रियाकारित्वान्नेति चेत् ; तदाकारः किमर्थ[क्रिया]कारी ? तथा चेत् ; परमाणुकल्पनाम(नम)नर्थकम् । व्यवहारिणां स तत्कारीति चेत् ; अभिलाप्याकारोऽपि । नहि ते[9] शब्दाऽक्षज्ञानगोचरयोः भेदं मन्यन्ते । व्याख्यातारो मन्यन्ते इति चेत् ; तदनुसरणे शून्यतैव शरणम् ।[10] तत्र–

२० न विकल्पो नास्य(नाप्य)विकल्प इति[प्रवदन्ति]कोविदः ।
कोविदो अ(दोऽ)र्धाता येनाऽद्वैतादि[वि]कल्पना ॥
कोविदः स्यात् निषेधात्तन्निराशङ्को विदोऽत्यये ।

ततः सिद्धं व्यवहारतः[४७८ख]शब्दाक्षज्ञानयोः सामान्यविषयत्वम् ।

विविकल्पकसिद्धौ परकीयां युक्तिं दर्शयन्नाह–**यदर्थ** इत्यादि । **प्रत्यक्षं यस्यार्थस्य**
२५ **सामर्थ्येन उत्पन्नं तस्याकारमेव** न जात्यादेर**नुकरोति** । निदर्शनमत्र, **तस्य** प्रत्यक्षजनकस्य अर्थस्य **अनन्तरम्** उपादेयोऽर्थस्वलक्षणमिव **तद्वदिति** । दूषणमत्र–**नायमेकान्त** इति । कुतः ? इत्याह–**चित्स्वभावाभावप्रसङ्गात्** प्रत्यक्षस्य । तथाहि–यथा तत्[11] तथा [12]तत्तस्य[13] नीलतां तथा जडतामनुकरोति[14] द्वितीयार्थक्षणवत्[15] [जडत्वापत्तिः] । अन्यथा

---

(१) सविकल्पत्वमेव । (२) जायते इति । (३) सविकल्पकमेव । (४) विकल्पात्मकात् । (५) प्रत्यक्षलक्षणे । (६) "मानं द्विविधं मेयद्वैविध्यात्"–प्र० वा० २।१। (७) "यथैव केशा दवीयसि देशेऽसंसक्ता अपि घनसन्निवेशावभासिनः, परमाणवोऽपि तथेति न विरोधः ।"–प्र० वार्तिकाल पृ० २९६। (८) अर्थक्रियाकारी । (९) व्यवहारिणः । (१०) शून्यतायाम् । (११) 'तत् तथा' इति निरर्थकमत्र । (१२) प्रत्यक्षम् । (१३) स्वलक्षणार्थस्य । (१४) चेत् । (१५) जडमेव स्यात् ।

विषयसांशत्वम्[1] इदं[2] निराकुर्यात् *"शब्दादर्थप्रतीतौ अक्षसंहतेर्वैफल्यम्" इति[3]। ननु पित्रोराकारमनुकुर्वदपि अपत्यं न सर्वथा यथानुकरोति तथा इदमर्थस्य इति चेत्; अत्राह–**तदे(तदने)कान्त** इत्यादि। **तस्य** अर्थस्य **अनेकान्ते** अङ्गीक्रियमाणे। किम्? इत्याह–**सविकल्प** इत्यादि। [अयम्]अभिप्रायः–अनेकान्तेऽपि तत उत्पत्तेः तदाकारानुकरणेऽयं दोषो नान्यथा इति, **सविकल्पे** त्यागनेन व्याख्यातम्। ५

स्यान्मतम्–यथा [तत्]अर्थस्य नीलत्वमनुकरोति न जडत्वं तथा तन्मनस्कारात् चिद्रूपतामात्रं[4] नाभिलाप्यमाकारम्; इत्यत्राह–**सामग्रीभेदात्** इत्यादि। तात्पर्यमिदमत्र–यथा कुतश्चित् प्रत्यासत्तेः प्रत्यक्षम् अर्थस्य नीलतामात्रमनुकरोति नाचेतनां तथा शाब्दं ज्ञानं तन्मात्रं तस्य गृह्णाति न वैशद्यमिति। ततो यदुक्तम्–*"यदि विशदोऽन्यथा वाऽर्थः तथैव उभयत्रापि प्रतिभासेत"; [४७९क] तन्निरस्तम्; अन्यत्र दोषात्। १०

यथा अर्थस्य चेतनाद् व्यावृत्तिरन्या अन्या वा(चाऽ)नीलव्यावृत्तिः नीलस्य, अन्यथा नीलानुकरणे जडतानुकरणमवश्यंभावि, तथा एकस्य यतो व्यावृत्तिः तद्रूपापेक्षया परमार्थभूतास्तावत्यो वावृत्तयः(व्यावृत्तयः) प्राप्नुवन्तीति दर्शयन्नाह–**एकस्य** इत्यादि।

**[एकस्य सर्वतोऽन्यस्मात् व्यावृत्त्याऽनन्तरूपता।**
**तत्र दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः ॥९॥** १५

**कस्यचित्...नहि कश्चिदेकस्माद् व्यावृत्तः तदेकत्वप्रसङ्गात्। अविकल्पप्रत्यक्षस्य अन्यस्य च एकदा प्रवृत्तौ कुतः पुनः प्रवृत्तिः, तस्य तद्ग्राह्यस्य चार्थस्य व्यवसायोपपत्तेः। अत एव अक्षशब्दज्ञानानां कथञ्चित् परमार्थैकविषयत्वम् प्रत्यक्ष...]**

**एकस्य** भावस्य **अनन्तररूप(नन्तरूप)ता**। कया? इत्याह–**व्यावृत्त्या,** जात्यपेक्षया एकवचनम् व्यावृत्तिभिः इत्यर्थः। कुतस्तया? इत्याह–**सर्वतः** साजा[तीयाद् विजातीया]च्च **अन्यस्मात्** परस्मात्। ततः किं जातम्? इत्याह–**तत्र** इत्यादि। यत एव **तत्** तस्मात् **दृष्टस्य[भावस्य]** उपलक्षणमेतत् अनुमितस्य शब्दप्रतिपादितस्य च **न दृष्ट एव** इदमप्युपलक्षणम् अनुमित एव **अखिलो गुणः** जडतावद् अन्यस्यापि अदृष्टस्य विरोधात्। २०

कारिकां व्याख्यातुमाह–**कस्यचित्** इत्यादि। तदनभ्युपगमे दूषणमाह–**नहि एकस्मात्** इत्यादि। येन स्वभावेन कश्चिद् एकस्माद् व्यावर्त्तते तेन परस्मादपि इति सौत्रान्तिकस्य। योगाचारस्य दर्शनम् अन्यस्यात्रातविकारात (अन्यस्मात्)। तत्र प्रथमपक्षे हि[5]यस्मात् **न कश्चिद्** भाव **एकस्मात्** चेतनाभिमतात् **व्यावृत्तः**। कुतः? इत्याह–**तदेकत्वप्रसङ्गात्**। २५

(१) आपाद्यमानं कर्तृ। (२) उच्यमानम्। (३) तुलना–"न तद् वस्तु अभिधेयत्वात् साफल्यादक्षसंहतेः।"–प्र० वा० २।११। "यदि समस्ताः सामान्यज्ञानेन प्रतीयन्ते तदा शब्दादुत्पद्यते यत्सामान्यज्ञानं तेन सकलव्यक्तिस्वरूपप्रतिपत्तेरक्षसंहतेर्वैफल्यप्रसङ्गः।"–प्र० वार्तिकाल० पृ० १९२। (४) सविकल्पचित्तात्। (५) अनुकुर्यात् प्रत्यक्षम्। (६) अत्रायं पूर्वपक्षः–"तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः।"–प्र० वा० ३।४४।

तल्लक्षणेन येभ्यो व्यावृत्तः ते गृह्यन्ते, तेषामेकत्वं समानरूपता तस्य प्रसङ्गात् । तथाहि–यथा ज्ञानाज्जडतामादाय व्यावृत्त इति [४७९ख]म(न)ज्ञाने जडता तथा अन्यतोऽपि इति, ततः तस्यापि जडता न स्यात्, एकत्रैव सा भवेत् । अथ जडता यथा एकत्र[त]था अन्यत्रापि इति मतिः ; तर्हि(न तर्हि) यथैकस्मात् व्यावृत्तः[तथाऽन्यस्मादपि ।]

५ किंच, नीलज्ञानार्थयोः यैवाऽतन्नीलात् स्वभावभूता व्यावृत्तिः सैव चेत् परस्परम् ; तदा [अ]नीलाद् व्यावर्त्तमानस्य ज्ञानस्य ततो यथा नीलव्यपदेशः तथा बहिरर्थादपि व्यावर्त्तमानस्य स एव स्या[त्] न व्यपदेशान्तरं तन्निमित्ताभावात् । अथ तयोरनीलान्नीलतया व्यावृत्तिः न तया ज्ञानस्य नीलार्थात् ; कुत(कुतः अ)विकल्पप्रत्यक्षस्य अन्यस्य च अनुमानादेः प्रवृत्तौ सत्याम् एकदा पुनः पश्चात् प्रवृत्तेः(त्तिः)तत्रैव 'व्यवसायात्मकस्य' इति घटनात् । कुतः ?

१० इत्याह–तस्य इत्यादि । तस्य प्रत्यक्षस्य अन्यस्य वा तद्ग्राह्यस्य चार्थस्य व्यवसायोपपत्तेः । पुनरित्येतदत्रापि द्रष्टव्यम् । 'उपपत्तेः' इत्यनेन एतद्दर्शयति–यथैकचित्रज्ञानं स्वनिर्भासेषु युगपदावर्तते तथा क्रमेणापीति, [अ]त एव अनन्तरन्यायाद् अक्षशब्दज्ञानानां कथंचित् परमार्थैकविषयत्वं 'सिद्धम्' इत्यध्याहारः । कुतः ? इत्याह–प्रत्यक्ष इत्यादि ।

तदेव दर्शयन्नाह–प्रत्यक्षस्ये[त्या]दि ।

१५ **[प्रत्यक्षस्य पूर्वापरकोट्योः शब्दादेस्तथा ।**
**स्वहेतुफलसन्तानो यथा स्वापप्रबोधयोः॥१०॥**

**मध्यरूपं पूर्वापरकाल्योरपि कथञ्चित् उपलभ्यं स्वभावविरुद्धानुपलब्धेः । न हि दृश्यात्मकमेव एकं स्तम्भाद्यवयवरूपमुत्प्रेक्षामहे, संवित्तिमात्रस्याप्यभावप्रसङ्गात् । तदेकान्ते यतोऽर्थक्रियानुपपत्तिः विरुद्धकार्योपलब्धिरेव । तदेतत् द्रव्यं दृश्यादृश्यान् सह-**
२० **भूतान् स्वान् स्वभावानसङ्करेण स्वयं स्वव्यापकतया लक्षयेत् स्वलक्षणमाश्रित्य मिथ्यासन्तानव्यवस्थापनात् । स्वापप्रबोधादिषु तदतिप्रसङ्गोपालम्भेन कुतः सन्तानैकत्वं प्रतिपद्येत ? ]**

[प्र]त्यक्षस्य मध्यावस्थायाम् अक्षज्ञानस्य वैशद्यस्य(द्यं) शब्दादेः तथा परोक्षता । क्वेत्याह(क ? इत्याह)–पूर्वापरकोट्योरिति । दृष्टान्तमाह–स्वहेतुफलसन्तानो यथा

२५ स्वहेतुफले उपादानोपादेयक्षणे, तयोः[४८०क] सन्तानो येन यथा प्रतीत्यादिप्रकारेण प्रत्यक्षः सन् परोक्षः तथा प्रकृतमपि । क स तथाभूतः ? इत्याह–स्वापप्रबोधयोरिति । स्वापेऽयं हि परोक्षः प्रबोधे प्रत्यक्षो भवति, पुनः तत्र प्रत्यक्षः स्वापे परोक्ष इति ।

कारिकां व्याख्यातुमाह–उपलभ्य[म्]इत्यादि । उपलभ्यं मध्यरूपं पूर्वापरकोट्योरपि न केवलं मध्य एवाऽस्तु । तर्हि पूर्वमेव परमेव वा स्यादिति चेत् ; अत्राह–कथञ्चिदिति । कुतः ?

३० इत्याह–स्वभाव इत्यादि । 'स्वभाव' इत्यनेन एकान्तस्वरूपं परामृश्यते तस्य विरुद्धो नित्याद्ये-

(१) नीलज्ञानस्य । (२) अनीलव्यावृत्तेः । (३) नीलज्ञानव्यपदेश एव स्यात् । (४) तदा । (५) प्रबोधे ।

कान्तः तस्य **अनुपलब्धिः**(ब्धेः) सुविवेचितमेतदसकृत् । **नहि** इत्यादिना एतदेव दर्शयति । **हि** यस्मात् **दृश्यात्मकमेव एकं स्तम्भाद्यवयविरूपं** व्यवस्थितमुत्प्रेक्षामहे युगपत् क्रमेण च कथञ्चिददृश्यताविरोधात् । एतदपि कुतः ? इत्याह-**संवित्ती**त्यादि । **संवित्तिरेव तन्मात्रं** तस्यापि न केवलं बहिरर्थस्यैवा**भावप्रसङ्गात्** । तदपि कुतः ? इत्यत्राह-**तदेकान्त** इत्यादि । **तदेकान्ते** संविदोऽन्यस्य वा दृश्यात्मकैकस्वभावैकान्ते **अर्थक्रियानुपपत्तिः यतोऽर्थस्य** उत्तरकार्यस्य **क्रिया** ५ **तदनुपपत्तिरिति** विचारितमेतत् ।

ननु संवित्तिमात्रदर्शने तदनुपपत्तिरिष्यते । *"अशक्तं सर्वम्" [प्र० वा० २।४] इति वचनात्, न च [त]दनुपपत्तेः संवेदनमात्रस्य प्रतीयमानस्याप्यभाव इति चेत्; अत्राह-[४८०ख] **विरुद्ध** इत्यादि । तदेकान्तविरुद्धोऽनेकान्तः तस्य **कार्यं** पूर्वस्य उत्तरपरिणामलक्षणं तस्य **उपलब्धिरेव** नानुपलब्धिः । संवित्तिमात्रमभ्युपगच्छतापि चित्रमेकमभ्युपगन्तव्यम्, तच्च १० तदविरुद्धमिति मन्यते ।

निगमनमाह-**तदि**त्यादि । यत एवं **तत्**तस्मा**दे**तत् प्रतीयमानं **जीवादि द्रव्यं लक्षयेत्** चिह्नयेत् । कया ? इत्याह-**स्वव्यापकतया** स्वेन रूपेण न समवायेन या व्यापकता तया इति । कान् ? इत्याह-**स्वान् स्वभावान् स्वयं** नेश्वरेण । किंभूतान् ? इत्याह-**सह** इत्यादि । पुनरपि किंभूतान् ? इत्याह-**दृश्ये**त्यादि । केन ? इत्याह-**असङ्कर** इत्यादि । कुतः ? इत्याह-**स्वलक्षणं** १५ न द्रव्यमाश्रित्य **मिथ्यासन्तानव्यवस्थापनात्** सौगतेनेति । तदनभ्युपगमे दोषमाह-**कुत** इत्यादि । **कुतः** कारणात् प्रमाणाद्वा **सन्तानैकत्वं प्रतिपद्यत**(द्येत) सौगतः ? न कुतश्चित् । केन ? इत्याह-**नदिति (तदति)प्रसङ्गोपालम्भेन-तस्य** द्रव्यस्य **अतिप्रसङ्गोपालम्भो** *"सर्वस्योभयरूपत्वे" इत्यादिकः [प्र०वा०३।१८१] तेन इति । क्व ? इत्याह **स्वापप्रबोधादिष्विति** । २०

तु (ननु) स्वापे यत एव चैतन्यं नोपलभ्यते तत एव नास्ति, तत्कथं तन्निदर्शनेन एकस्य दृश्येतरतासाधनमिति चेत् ? अत्राह-**परोक्ष** इत्यादि ।

**[परोक्षक्षणिकानन्ताणुवर्णपरिमण्डलः ।**
**स्यात्प्रत्यक्षस्थिरैकात्मस्थूलोऽर्थः स्फुटदर्शनात् ॥११॥**

**न हि...परिस्फुटम्, तदतिक्रमे दृश्यादृश्यव्यवस्थानुपपत्तेः । सुदूरमपि गत्वा** २५ **दृश्यादृश्यात्मैकरूपस्य चित्तस्य इतरस्य वा प्रतिक्षेपे अभावात् किं केन प्रमीयेत ।]**

अर्थः **स्यात्** भवेत् । किंभूतः स्यात् ? इत्याह-**परोक्षम्** इन्द्रिय(या) ग्राह्यं **क्षणिकानाम् अनन्तानामणूनां वर्णपरिमण्डलं** यस्य स तथोक्तः । पुनरपि किंभूतः ? इत्याह-[४८१क] **प्रत्यक्षात्थ**···[**प्रत्यक्षश्चासौ**] **स्थिरः** कालान्तरस्थायी **एकः** साधारण **आत्मा** स्वभावो यस्य स चासौ **स्थूलश्च** । कुतः ? इत्याह-**स्फुटदर्शनात्** । स्थिरैकात्मनः स्थूल- ३०

---

(१) अर्थक्रियानुपपत्तेः । (२) 'तद्विशेषानिराकृतेः । चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥' इति शेषः ।

स्यार्थस्य विशददर्शने प्रतिभासनात् नाविशदकल्प इत्यर्थः । ततो यन्नदर्शनात् स्वापचैतन्याभावः; तत एव अर्थस्य क्षणिकानन्ताणुवर्णपरिमण्डलभाव इति सौत्रान्तिकः, सर्वदा स्वापाक्रान्तः अन्यथा हेतोरनेक(नैकान्ति)व्यभिचार इति भावः । अथ तत्परिमण्डलस्यैव प्रत्यक्षता ; स्वापचैतन्यस्यस्त्वास्तु (स्यात्यस्तु)[1]। स्वापाभावः स्यादिति चेत ; कोऽयं स्वापो नाम ? चैतन्यरहिता सिद्धदशा इति चेत् ;
५ कथमदृश्यस्य चैतन्यस्य तदा[ऽ]भावः ? अदृश्यानुपलब्धेर्गमकत्वापपत्तेः । व्यवहार(रि)जनात् ; स हि स्वप्नदर्शनविरहिणीं तां दशां मन्यते इति चेत् ; स एत(एव) तर्हि तत्परिमण्डलदर्शनविकलां सकलां सकलकालकलापकलितां तां मन्यते इति समानम् । कथमन्यथा विवादः यतः तदर्थं शास्त्रप्रणयनम् ?

स्यान्मतम्–न व्यवहारिणोऽनभ्युपगमात् परमाणुदर्शनाभाव इति स्वापे चैतन्याभावोऽपि
१० मा भूत् ***लक्षणयुक्ते बाधासंभवे तल्लक्षणमेव दूषितं स्यात्"** [प्र०वार्तिकाल०पृ०२२६] इति । व्यवहारी(रो)मया दूषितः स्यादिति चेत ; क्रियापीति समः समाधिः । यथा च तव तद्दूष-ने(तद्दूषणेऽ)पि न दोषः परमाणुसिद्धि(द्धे)रनिवारणात् तथा ममाप्यात्मसिद्धिः अबाधनात् । अथ तद्दूषणे ममापि तेन, अहमपि यतो व्यवहारी[2]; तवापि [४८१ख] तदिति समानम्, बहिः परमाणुषु त्वमपि व्यवहारी ***"प्रामाण्यं व्यवहारेण"** [प्र०वा०१।५] इति वचनात् । अथ
१५ प्रथमं व्यवहारी परमाणून्यस्य(णून् पश्यति) दर्शनोत्तरकालभाविन्या त(तु) विकल्पबुद्ध्या स्थिरै-कात्मस्थूलाध्य(लाध्य)वसायो मिथ्या इति चेत् ; न ; उक्तमत्र–**स्फुटदर्शनादि**ति ।

किं च, स्वापेऽपि स चैतन्यं पश्यति स्ववेदनदर्शनात्, तत्र तन्निश्चयविरहात् पुनः जाय-माना मिथ्याविकल्पबुद्धिः तदभावं व्यवस्यति । संहृतविकल्पदशायां ज्ञानहेतुत्वात्ते[3] दृश्याः ; प्रबोधहेतुत्वात् स्वापचित्तं दृश्यम्[4] । कथमन्यस्य दृश्यत्वमन्यस्य इति चेत ? परमाणुषु कथम् ?
२० तदाकारता च नेष्यते, परेणाप्यनेकाकारप्रतिभासोपगमात् । यदि सद्भावेऽपि सर्वत्र नीलज्ञाना-भावात् परमाणवोऽनुमीयेते(यन्ते) ; मृतशरीरे अन्त्यचित्तसद्भावेऽपि प्रबोधादर्शनात् सुप्तस्य 'प्रबोधाऽदर्शनात्[5]' स्वापे चैतन्यमनुमीयताम् । जाग्रच्चित्तात्तत्प्रबोध इति चेत ; स्थूलात्तत्प्रतिभास इति न परमाणुसिद्धिः ।

अथ केशेषु तदाकाररहितेष्वपि तत्प्रत्ययदर्शनान्न तत्सिद्धिः ; परमाण्वभावेऽपि कामलिक-
२५ केशादिप्रत्ययदर्शनात् तदवस्थो दोषः । ज्ञानवदर्थेऽपि स्थूलाकाराऽविरोधात् । तथापि परमाणव एव तत्कारणं कल्प(ल्प्य)न्ते त्वया मया स्वापचित्तप्रबोधकारणं कल्प्यते ।

ननु चित्तं चेत् ; कथमदृश्यम् ? अदृश्यं चेत् ; कथं चित्तमिति चेत् ? उच्यते–[४८२क] परमाणवश्चेदालम्बनकार्यं (कारणम्) कथम् अतदाकारज्ञानहेतवः ? तथा चेत् ; कथमालम्ब[न]-कारणम् ? अन्यथा नीलज्ञानस्य पीतं[6] स्यात् । अथ न तेन(ते)[7] तदालम्बनकारणम् ; अन्यदेव

(१) तथा सति । (२) दूषणम् । (३) इति चेत् । (४) बौद्धः । (५) परमाणवः। (६) इति चेत् । (७) अस्तु । (८) 'प्रबोधादर्शनात्' इति व्यर्थमत्र पुनर्लिखितम् । (९) 'आलम्बनं स्यात्' इति योजनीयम् । (१०) परमाणवः ।

तद्वक्तव्यम्, तस्याप्यणुरूपत्वे अन्यद्वाच्यमित्यनवस्था । नीलतामात्रेण स्वाकारज्ञानहेतव इत्य-दोष[श्चे]न् ; कथञ्चित् प्रत्यक्षतेति आत्मनोऽपि स्वापेऽप्रत्यक्षस्यापि प्रबोधे प्रत्यक्षतेति सर्वं सुस्थम् ।

अपरः प्राह–स्वापेऽपि प्रत्यक्षं चित्तमिति चेत् ; सोऽप्यनेन निरस्तः ; तत्परिमण्डल-प्रत्यक्षत्वप्रसङ्गात् । विज्ञानवादिनो न यं(नायं) दोष इति चेत् ; न ; तस्यापि स्थिरैकात्मस्थूल-ज्ञानसम्भवे यथाप्रतिभासं तत्त्वसिद्धिः । किंनु (किं च,) दृश्येतरता एकस्याविरोधिनीति प्रति-पादितम् । तदसंभवो(वे) सौत्रान्तिका[द्]विशेषः ।

कारिकायाः विवरणमाह–**नहि** इत्यादिना । [कथं] तर्हि तत्र प्रतिभासते ? इत्याह–**परिस्फुट**मित्यादि । क्रियाविशेषणमेतत्, प्रतिभासत इति वचनपरिणामेन सम्बन्धः[2] । (?) **तदतिक्रम** इत्यादि । **तस्य** यथोक्ताकारप्रतिभासस्य **अतिक्रमे दृश्ये(श्यो)** घटादिः, **अदृश्य** ईश्वरादिः तयोः **व्यवस्थायाः अनुपपत्तेः** ।

ननु दृश्यव्यवस्थानुपपत्तिरिति वक्तव्यम् ततोऽन्यस्य अदृश्यस्याऽभावात्, न पुनः अदृश्यव्यवस्थानुपपत्तिः इति ततोऽन्यस्य सर्वस्या[स्य] दृश्यव्यवस्थानुपपत्तिः अन्यस्य तत्परि-मण्डलस्य प्रतिभासोपगमे [४८२ख] तद्वदाकाशकुशेशयादेरपि तदुपगमापत्तेः अदृश्यव्यवस्था-नुपपत्तिरिति । माभू [न् दृश्याऽ]दृश्यव्यवस्था, सकलशून्यतोपगमादिति चेत् ; अत्राह–**सुदूर-मपि** इत्यादि । **सुदूरं** सकलशून्यत्वम् अशेषसौगतमतान्ते व्यवस्थानात्, **तदपि** गंधाम(गत्वा न) केवलमदूरं सौत्रान्तिकादिमतिं(मतं) **किम्** शून्यतादिकं **केन** प्रत्यक्षादिना **प्रमीयेत** ? न केनचित् । कुतः ? इत्याह–**अभाव** इत्यादि । कस्मिन् सति ? इत्याह–**प्रतिक्षेपे** । कस्य ? **चित्ते (त्तस्ये)तरस्य वा** वचनस्य । यदि वा, **इतरस्य वा** बाह्यस्य च । किंभूतस्य ? **दृश्या-दृश्यात्मकरूपस्य** ।

ननु चित्तस्य यथास्थिताशेषार्थग्रहणस्वभावत्वात् कथमदृश्यात्मना अन्यसम्बन्ध(न्धः ?) तदेकत्वे अन्यतरदेव । तथापि स्वरूपनानात्वे अन्यत्य(अन्यत्वम् अन्य)त्राऽकिञ्चित्करमिति तदवस्थ(स्थं) चित्तस्य स्वपरयोः सर्वात्मना ग्रहणमिति चेत् ; अत्राह–

> **[तदेतच्चित्तमन्यद्वा बन्धं प्रति परस्परम् ।**
> **एकत्वेऽपि लक्षणतो हेमादिश्यामिकादिवत् ॥१२॥**
> **नानात्वमजहज्जातिं तथापरिणामलक्षणाम् ।**
> **अनुरूणद्ध्येव तद्बुद्धौ वस्तुनोऽप्रतिभासनात् ॥१३॥**
> **वर्णाकृतिपरिमाणादिभेदैः विकलात्मनः ॥ ३ ॥**

**व्यपोहस्य भेदात्मकत्वे···समारोप···निर्विकल्प···विकल्पोत्पादात् । तन्नाक्ष-विज्ञानस्य सदेकान्तविषयत्वम्, प्रत्यक्षस्य अतीतविषयत्वाभ्युपगमात् । शब्दोत्थापित-विकल्पस्यापि स्वसंवेदनप्रत्यक्षत्वात् । कथम्···]**

(१) स्थिरैकात्मस्थूलज्ञानासंभवे । (२) अत्र किञ्चित् त्रुटितमिति भाति ।

**तद्देनचित्तमन्यथा (मन्यद्वा** अ)चेतनं कर्म वस्तु **परस्परमन्यो**ऽन्यं **बन्धं** संयोग-विशेषं **प्रति** एकत्वेऽपि **लक्षणतो** लक्षणेन **नात्व(नानात्वम्) हेमादिश्यामिकादिवत् अजह[द्]**परित्यजन् **तथा** तेन द्रव्याद्द्रव्यात्मैकरूपपरेण **परिणामलक्षणामेव** नान्यथा **जातिम्** आत्मलाभम् **अनुरुणद्धि** स्वीकरोति । कुतः ? इत्याह–**वर्ण** इत्यादि । **तद्बुद्धौ** चित्तेतरग्राहिकायां बुद्धौ **अप्रतिभासना[त्]** चित्तेतरवस्तु[नः] किं स तस्य (किम्भूतस्य ?) इत्याह–**वर्णः** नीलादिः **आकृतिः** वर्तुलत्वादिः **परिमाणम्** इयत् तोन्या(इयत्ता तानि **आ)दि**भूतानि [४८३क] येषां अनुगतेचेत(गतचेतनाचेतन)धर्माणां ते तथोक्ताः तैः **विकलात्मनः ।**

ननु नार्थः शब्दगोचरः अपि त व्यापोहत्वा(तु व्यपोहगोचरत्वाच्छ)ब्दविज्ञानस्य असदे-कान्तविषयत्वमिति चेत्; अत्राह–**व्यपोहस्य** इत्यादि । व्यपोहनं **व्यपोहः** अनभिमतव्यावृत्तिः तस्या **तदा** (तस्य **भेदा**)त्मकत्वे स्वलक्षणात्मकत्वे अङ्गीक्रियमाणे **'किं केन प्रमीयेत'** इति सम्बन्धः ।

ननु शब्देन लिङ्गेन वा समारोपे व्यवच्छिन्ने तेन स्वलक्षणं प्रमीयत इति चेत्; अत्राह–**समारोप** इत्यादि । तदपि कुतः ? इत्याह–**निर्विकल्प** इत्यादि । कुतः ? इत्याह– **विकल्पोत्पा-दा**दिति । **तन्न** इत्यादुपसंहरन्नाह–**अक्षविज्ञानस्य सदेकान्तविषयत्वं न** । कुतः ? इत्याह–**प्रत्यक्षस्य** इत्यादि । **प्रत्यक्षस्य** अक्षविज्ञानस्य **अतीतविषयत्वाभ्युपगमात्**, उपलक्षणमेतत् तेनाअगत(तेन अनागत)विषयत्वाभ्युपगमादिति च गृह्यते, ततो व्यवहारे शब्दविज्ञानस्यापि असदेकान्तविषयत्वमिति भावः । **शब्दात्थापितविकल्पस्यापि** न केवलम् अध्यक्षस्य **स्वसंवेदनप्रत्यक्षत्वात्** । अतिप्रायो(अयमभिप्रायो)यथा अर्थव्यापारः तथा आत्मव्यापारोऽपि, तद्विक-कल्पस्य शब्देनान्यथा तदतज्जन्यरूपतया स एको भवेत् । अथ स्वसंवेदनरूपता पूर्वज्ञानात्; कुत एतत् ? यस्मिन् सति भावाच्चेत्; शब्देऽपि सति समानम् । तदभावेऽभावादिति चेत्; इद-मपि समानम्[*] । नहि शब्दविकल्पाः तदभावे स्वरूपं लभन्ते,[अ]तत्कार्यताप्रसङ्गात् *"विक-ल्पाः शब्दयोनयः" इति प्लवते । अथ स्वसंवेदनरूपता [४८३ख] शब्दाभावेऽपि प्रत्यक्षेऽ-स्तीति न तज्जन्या; तर्हि विकल्परूपतापि सङ्केतभाविनि शब्दे तदभाव इति (वेऽस्तीति) सापि तज्जन्या न भवेत् । अन्या सा इति चेत्; अन्यत्रापि समः समाधिः । उभयं तत इति चेत्; उभयमसत्यं न वा किञ्चित् । न चैवमिति मन्यते ।

स्यान्मतम्–अध्यक्षस्य अतीतात् भाविनो वा उत्पत्तेः स्वरूपेण तादात्म्यात् तद्विषयता, न शब्दस्य अर्थविषयता विपर्ययादिति चेत्; एतदेवाह–**कथमि**त्यादि ।

परिहारमाह–**यथार्थे**त्यादि ।

---

(१) पुद्गलात्मकं ज्ञानावरणादि कर्म । (२) चेतनत्वाऽचेतनत्वरूपेण । (३) पूर्वज्ञानाभावे । (४) शब्दे समानम् । (५) शब्दाभावे । (६) शब्दाकार्यत्वप्रसङ्गात् । (७) द्रष्टव्यम्–पृ० ३१९ टि० ८ । (८) शब्दजन्या ।

**[यथार्थविभ्रमैकान्तो न सिध्येद् विभ्रमात्स्वयम् ।**
**तथार्थाप्रतिबन्धत्वात् सर्वमुक्तं मृषेत्यपि ॥१३॥**

**बहिरर्थप्रतिक्षेपे सर्वज्ञानानां विभ्रमैकान्तः। विभ्रमैकान्तात् यथा विभ्रमो न सिध्यति तथैव साकल्येन शब्दानामर्थानभिधानम् अर्थाप्रतिबन्धात् । सत्यपि बहिरर्थे विकल्पानां विभ्रमैकान्ते तद्विभ्रमैकान्तासिद्धेः निर्विकल्पस्य [अनिर्णयात्मकत्वात् ] तद्विवक्षाविषयैकान्ते कुतः सत्यमिथ्याव्यवस्था यतो जयपराजयव्यवस्था कल्प्यते ? ]** ५

अयमभिप्रायः–यदि अर्थाप्रतिबन्धान्निर्विषया एव शब्दाः तन्निर्विषयताप्रतिपादनाय न शब्दप्रयोगः श्रेयानिति । तथाहि–**यथा** येन प्रकारेण **अर्थविभ्रमैकान्तः** 'स्तम्भादिज्ञानमशेषं भ्रान्तम्' इत्येकान्तः। यदि वा, **अर्थे विभ्रमैकान्तो** विकल्पानामभिप्रेतो **न सिध्येत्**। कुतः ? इत्याह–**विभ्रमात्** । नहि विभ्रमाद् विभ्रमसिद्धिः । अथ सिचत (अथ असिधत) १० **स्वयं** बौद्धस्य **तथा** तेन प्रकारेण **सर्वं** निरवशेष**मुक्तं** वचनम्, 'उच्यते स्म उक्तम्' इति व्युत्पत्तेः, **मृषा** मिथ्या **इत्यपि** सिध्येत । कुतः ? इह (इत्यत्राह–) **अर्थाप्रतिबन्धत्वादिति।** अत्रोऽर्थ (अत्र **अर्थः** ) सर्वशब्दमिथ्यात्वं पराभ्युपगतं गृह्यते तत्रा**ऽप्रतिबन्धत्वात्** तन्मिथ्यात्वप्रतिपादकं शब्दानां 'तथा च सर्वे मृषा शब्दाः' इत्यपि न भाषणीयम् तदर्थानभिधानात्। तथापि भाषणे असाधनाङ्गवचनं वक्तुः निग्रहस्थानम् । १५

स्यान्मतम्–व्यवहारी न मन्यते सर्वशब्दमृषात्वम् ,[४८४क] अतः तैमिरिकवदपरतैमिरिकेण स मिथ्याशब्देन प्रतिबोध्यत इति ; तदसारम् ; यतः 'घटमानय' इत्यादौ भवतु काचिद् गतिः ' वस्तु वाचामगोचर(रम्') इत्यभिधाने तु साकल्येन यद्यसौ तथा प्रतिपद्यते, न तत्त्वं प्रतिपादितः स्यात । नहि शब्दात् सर्वशब्दमिथ्यात्वं प्रतिपद्यमानः तत्प्रतिपद्यते, न तत्त्वं प्रतिपादितः यात । नहि शब्दात् सर्वशब्दमिथ्यात्वं प्रतिपद्यमानः तत्प्रतिपद्यते नाम विरोधात् । २० तथाहि–यदि ततः तत्प्रतिपद्यते ; न सर्वशब्दमृषात्वम् । [न]प्रतिपद्यते चेत ; न ; ततः तत्प्रतिपत्तुमर्हति । नहि शब्दस्य अन्यस्य वा मृषात्वं जानन्नेव कश्चित तदस्त (ततः त)दवैति । यतोऽवैति नत्तस्य तन्नावैति इति चेत् ; कुत एतत् ? ततस्तत्परिज्ञानात्[3] ; पटादिशब्दात् पटादिकमवैतीति तस्यापि तन्न प्रत्येतीति समाना(नम्) । नहि व्यवहारी सर्वप्रत्ययानां मिथ्यैकान्तं (कान्तत्वं) मिथ्याप्रत्ययात् तथाऽवगतादवगच्छति । एवमर्थं च '**अर्थविभ्रमैकान्तो न सिध्येत्** २५ **विभ्रमात्**' इत्युच्यते, अगत्या तत एतत्प्रतीयताम् । प्रत्यक्षादिति चेत् ; आस्तां तावदेतत् । अथ अर्थविषया न शब्दाः तत्राऽप्रतिबन्धात् हेत्वाभासवत (न ; कुत) इदमवगम्यते ? तदप्रतिबन्धोऽपि कुतः ? प्रत्यक्षादिति चेत् ; न न्न क्त (न् ; तन्नोक्त)म् , आस्तां तावदेतदिति । तदभावेऽपि प्रवृत्तेरिति चेत् ; उक्तमत्रोत्तरं पूर्वम्–अक्षज्ञानस्यापि तदभावे प्रवृत्तेः । अन्यत्वम् ; उभयत्रापि । मिथ्याविकल्पयोनित्वाच्चे[त ]; तदुक्तम्– ३०

(१) शब्दमिथ्यात्व । (२) 'वाचामगोचरम्' इति सर्वशब्दमृषात्वं वा । (३) इति चेत् । (४) अर्थाभावेऽपि । (५) अर्थाभावे प्रवृत्तिमज्ज्ञानमन्यत्, अन्यच्च तत्सद्भावे प्रवृत्तिकारि ।

*"विकल्पयोनयः शब्दाः विकल्पाः शब्दयोनयः । [४८४ख]
तेषामन्योन्यमम्बन्धा(न्धो) नार्थान् शब्दाः स्पृशन्त्यमी ॥" इति ;

ननु सर्वविकल्पानां मिथ्यात्वैकान्ते इदमपि दुरवसेयम् । अत एव उच्यते–'अर्थे विभ्रमैकान्तो विकल्पानान्न सिध्येद् विभ्रमात्' इति ।

५ किंच, सर्वशब्दमृषात्वप्रतिबद्धः, अन्यथा वा तत्प्रतिपादकः[2] शब्दो भवेत ? आद्ये विकल्पे सिद्धं नः समीहितम्, तद्वदन्यस्यापि स्वार्थप्रतिबन्धसंभवात् । द्वितीये तद्प्रयोगः[3] । नहि जानन्नेव सौगतः साध्याप्रतिबद्धं वस्तु, तेन व्यवहारमुपरचयति ; प्रेक्षाकारिताहानेः । अगत्या तेनापि[4] रचयति इति चेत ; किम् इदानीमध्यक्षस्य अन्यस्य वा तदुत्पादि(त्पाद)कल्पनया ? स्वयमप्रतिबद्धाद्[5] व्यवहारं कुर्वन्नन्यस्मै[6] तत एव[7] तं कुर्वाणाय कुप्यतीति कथं स्वस्थः ? [8]तद्वि-
१० वक्षायां तत्प्रतिबन्ध इति चेत ; अत्रोत्तरम्–'**सदसद्वस्तुभेदेन**' इत्यादि भविष्यति । तत एवाह–**अर्थाप्रतिबद्धत्वात** इत्यादि ।

कारिकां व्याख्यातुमाह–**बहिरर्थप्रतिक्षेप** इत्यादि । **बहिरर्थस्य प्रतिक्षेपे** क्रियमाणे निराचारेण योगाचारेण । किम् ? इत्याह–**सर्वज्ञानानां विभ्रमैकान्ते** बहिरर्थवत स्वरूपस्यापि प्रतिक्षेपप्रसङ्गात्, [9]"स्वरूपवत अर्थस्यापि प्रतिभासनात्[10]" । चिन्तितमेतत । ततः किम् ?
१५ इत्याह–**विभ्रमैकान्ताद्यथा विभ्रमो न सिध्यति तथैव साकल्येन शब्दानाम् अर्थानभिधानं न सिध्यति** । कुतः ? इत्याह–**अर्थाप्रतिबन्धात्** साकल्येन शब्दानामिति । [४८५क] यथा वा सौत्रान्तिकस्य **सत्यपि बहिरर्थे विकल्पानां विभ्रमैकान्ते तद्विभ्रमैकान्तासिद्धिः** तच्छब्देन विकल्पानां परामर्शः, तथैवे(**तथैव** इ)त्याद्यत्रापि पूर्ववत् । अविकल्पात्तत्सिद्धिरिति चेत ; अत्राह–**निर्विकल्पस्य** इत्यादि ।

२० ननु 'सर्वे शब्दा निर्विषयाः' इत्यस्यां विवक्षायां प्रतिबन्धोऽस्ति मदीयस्य शब्दस्य, ततोऽयमदोष इति चेत ; अत्राह–**तद्विवक्त**(क्षे)त्यादि । निर्विषयाः [13]'सविषयाः' सर्वे शब्दा इति वाञ्छा **तद्विवक्षा विषयो** यस्य तस्य भावः तत्ता **तदेकान्ते कुतः सत्यमिथ्या** सर्वे शब्दा बहि(बहिरर्थ)रहिता इति वचनं **सत्यम्**, तत्सहिता इति च **मिथ्या** तयोः **व्यवस्था कुतः यतो जयपराजयव्यवस्था कल्पते (कल्प्यते)** ? विवक्षाव्यभिचारः ; उभयत्रापि । अर्था-
२५ प्रतिपादनं च[14] ।

(१) 'तेषामन्योन्यसम्बन्धे' न्यायमं० पृ० १५८ । 'तेषामत्यन्तसम्बन्धो' नयचक्रवृ० पृ० २४३ । 'कार्यकारणता तेषां नार्थान् शब्दाः स्पृशन्त्यपि'–न्यायावता० टी० पृ० ४४ । रत्नाकराव० पृ० ९ । स्या० मं० पृ० १७५ । 'तेषामन्योन्यसम्बन्धः'–न्यायकुमु० पृ० ५३७ । स्या० र० पृ० ७०१ । (२) 'सर्वं मृषा' इत्याकारकः । (३) शब्दप्रयोगो न कर्त्तव्य इति । (४) वस्त्वप्रतिबद्धेनापि शब्देन । (५) अर्थादुत्पाद । (६) शब्दात् । (७) चार्वाकाय । (८) अप्रतिबद्धात् शब्दात् हेतोर्वा । (९) व्यवहारम् । (१०) शब्दविवक्षायाम् । (११) अन्यथा । (१२) तत्सत्त्वं स्यादिति भावः । (१३) 'सविषयाः' इति व्यर्थमत्र पुनर्लिखितमिव । (१४) उभयत्रापि ।

स्यान्मतम्–मदीया विवक्षा परम्परया अर्थप्रतिबद्धा नेतरा, ततः तद्व्यवस्था इति ; तदपि मदीयमतानुकूलम् ; बहिरर्थेऽपि तथा प्रतिबन्धसद्भावात् ।

अत्रैव दूषणान्तरं दर्शयन्नाह–**सदसद्वस्तु** इत्यादि ।

**[सदसद्वस्तुभेदेन विवक्षायामनादरात् ।**
**तद्वस्तु चिन्त्यते यत्र प्रतिबद्धः फलोदयः ॥१४॥** ५

शब्दार्थविवक्षामनादृत्य सर्वोऽर्थक्रियार्थी तत्समर्थमेव शब्दार्थं परीक्षेत तत्रैव··· ततः व्यवहारं शास्त्रं च कुर्वाणः तदर्थप्रतिपादनायैव कर्तुमर्हति नान्यथा । न चायमेकान्तः सर्वत्र अर्थप्रतिबन्धादेव बुद्धीनां प्रामाण्यम् । क्वचित् रूपमात्रप्रतिभासनात् वर्णरसादिप्रतिबन्धाविशेषेऽपि···तज्जन्मसारूप्ययोरवस्तुत्वात् सर्वथा तदनुपपत्तेः स एव प्रतिबन्धोऽस्तु अन्यत्र विकल्पघटनात् । यद्ययं निर्बन्धः "नाकारणं विषयः" प्रत्ययस्येति ; १० कथमनुमानज्ञानं क्वचित् प्रमाणम् ? कथं च न ? संविदितप्रतिबन्धविशेषस्य प्रत्यक्षसिद्धत्वात् । तदन्यत्र प्रतिबन्धासिद्धेः कथं प्रमाणम् ? सामान्येन ; किं पुनरन्यापोहः ? तदनुमानकल्पनायामनवस्थानात् । न प्रमाणमन्तरेण तत्प्रतिपत्तिः ; अन्यत्रापि प्रमाणकल्पनानर्थक्यात् । सादृश्यलक्षणजातिमन्तरेण कथं पावकादिकमन्यव्यावृत्तमेकत्वेन प्रतीयात् ? विवक्षितज्ञानपदार्थस्य अन्यव्यावृत्तेः सर्वत्राविशेषात् ।] १५

**तद् वस्तु चिन्त्यते** परीक्ष्यते **यत्र** वस्तुनि **प्रतिबद्ध(तिबद्धः)** आयत्तः **फलोदयः** फलात्मलाभः शब्दाविषयत्वेनि (शब्दविषयत्वेन इ)त्यध्याहारः । कथं चिन्त्यते ? इत्याह–**सच्चा[ऽसच्च] सदसत्** भावाऽभावावित्यर्थः, **सच्च(सदसच्च) तद्वस्तुभेदश्च** सः **तेन** । 'कस्य शब्दस्य बहिरर्थोऽस्ति, कस्य नास्ति' इत्यनेन रूपेण विवक्षा कस्मान्न चिन्त्यते ? इत्याह–**विवक्षायामनादरा[त्]** । नहि तस्यां जलाहरणादिफलं प्रतिबद्धम्, अन्यथा न बहिः २० कश्चित् प्रवर्त्तेत । सर्वस्य वा फलं(ल)सम्बन्धः सर्वत्र विवक्षाभावा[त्] । [४८४ख] विवक्षा चेच्छब्दार्थः ; तत्रैव प्रवृत्तिः स्यात् न बहिरर्थे । न हि शब्दादन्यप्रतिपत्तौ अन्यत्र प्रवृत्तिः, इतरथा गोशब्दाद् अश्वे प्रवृत्तिः[3] । अथ विवक्षा अर्थप्रतिबद्धा, ततः तत्प्रतिपत्त्यौ तत्र प्रवृत्तिः ; नन्वेवं मीमांसकस्य प्रति (प्रतीत)परसामान्यस्य विशेषे वृत्तिरविरुद्धा स्यात् ।

स्यादेतत्, विवक्षितस्यार्थस्य स्वलक्षणे समारोपाद् भ्रान्त्या तत्र वृत्तिरिति ; तन्न सारम् ; २५ यतः सर्वस्य सर्वत्रारोपात् प्रवृत्तिप्रसङ्गात् ।

अथ मतम्–गोविवक्षारूढस्य स्वदा(खण्डादा)वेवारोपः सादृश्यात्, नान्यत्र विपर्ययात् ; सिद्धं तर्हि विवक्षाविकल्पस्य बहिरर्थगोचरत्वम् । नहि प्रत्यक्षस्यापि सादृश्यादपरं तत्[7] । सर्वथा सादृश्यं सर्वत्र दुर्लभम् ।

ननु नियतवृत्तयो भ्रान्तयः ततः काचित् क्वचिदिति न सर्वत्र प्रवृत्तिरिति चेत ; कुत ३०

(१) "नाकारणं विषयः"– प्र० वा० मनोरथ० २।२५७ । (२) विवक्षायाम् । (३) स्यादिति । (४) अर्थप्रतिपत्त्या । (५) अर्थे । (६) अश्वादौ । (७) बहिरर्थगोचरत्वम् ।

एतत् ? य एव हि पारम्पर्येण तद्विकल्पवासनाप्रबोधकाः तत्रैव तद्विकल्पस्य दर्शनात्, कथमेव-मानवन्ता (कथमेवम् अनुमानवत् ना)र्थप्रतिबद्धजन्मानो विकल्पाः, यतस्तद्योनयः शब्दाः तथा न स्युः ? भवन्तु तत्परिबद्धा (तत्प्रतिबद्धाः) ननु (ननु) तद्विषया इति चेत्; प्रत्यक्षस्य तद्वि-षयता न भवेत्। सारूप्यादिति चेत्; कुतः तस्य तत् ? तस्मादुत्पत्तेरिति चेत्; अविकल्पादु-
५ त्पत्ति(त्ते)र्विकल्पस्यापि स्यादित्युक्तम्।

किन्त्व(किं च,)पारम्पर्येण स्वलक्षणादुत्पत्तेः तदध्य(तदध्य)वसायी चेद् विकल्पः; चक्षु-रादध्य(रध्य)वसायी स्यात्। अयोग्यत्वान्नेति चेत्; स्वलक्षणे योग्यत्वं कुतः ? [४८६क] तदनुभवादुत्पत्तेः; तस्यानुभव इति कुतः ? [तत]उत्पत्तेश्चेत्; चक्षुरादेः स्यात्। 'अतद्रूप-त्वान्न' इत्यपि नोत्तरम्; स्वलक्षणेऽप्यस्य समानत्वात्। तत[:] स्थितम्–'शब्दाद्विवक्षाप्रतीतौ
१० अर्थे प्रवृत्तिर्न स्यात्' इति।

कारिकार्थमाह–**शब्दार्थ** इत्यादिना। **शब्दस्य अर्थः** 'स विद्यमानोऽसत्त्वा[द]विद्य-मानो वा' इति **तद्विवक्षाम्** अर्थवाञ्छाम् **अनादृत्य(दृत्य)सर्वः**। कः ? **अर्थक्रियार्थी** जला-द्याहरणार्थी **तत्समर्थ[मेव अर्थ]**क्रियायोग्यमेव **शब्दार्थं परीक्षेत**। कुतः ? इत्याह–**तत्रैव** इत्यादि। यत एवं 'तत एवं' **ततः [व्यवहारं] शास्त्रं च कुर्वाणः** सुगतोऽन्यो वा तदनायैव
१५ **(तदर्थप्रतिपादनायैव)** अर्थक्रियासमर्थप्रतिपादनायैव **कर्तुमर्हति नान्यथा** नान्येन विवक्षाप्रतिपादनप्रकारेण, तत्प्रतिपादनेऽपि प्रयोजनाभावादिति। कथं पुनः अर्थाऽप्रतिबद्धजन्मनः शब्दाद् अर्थप्रतिपत्तिः इति ? अत्रैव पुनरपि दूषणमाह–नचेत्यादि(न च इत्यादि)**न च** नैवा-**यमेकान्तः**। कोऽसौ ? इत्याह–**सर्वत्र** मेय(प्रमेये)**बुद्धीनां प्रामाण्यम् अर्थप्रतिबन्धादेव** इति। कुतः ? इत्याह–**'इन्द्रिय'** इत्यादि। युक्त्यन्तरमत्रैव दर्शयन्नाह–**क्वचित्** इत्यादि। **क्वचित्**
२० चक्षुर्विज्ञाने **रूपमात्रप्रतिभासनात्**, **मात्र**शब्देन रूपविशेषस्य क्षणनाशादेरप्रतिभासनात्, **वर्णरसादिप्रतिबन्धाविशेषेप्या** [४८६ख]··········[४८७क]सत्त्वविशेषात् (?)[10] नापि व्यतिरिकानुविधानेन; संशयादिज्ञानस्य अर्थाभावेऽपि भावात्, अपि चक्षुरादिषु समर्थेषु सत्स्वपि अर्थाभावे ज्ञानाभावः। तदनुविधानं तच्च(तं च) न तेनैव ज्ञानेन प्रतीयते; तदा तदभावात्, अन्यथा तद्विरोधः। अन्येन प्रतीयत इति चेत्; उभयदशावलम्बिना तेन भवितव्यम्, इतरथा
२५ तेन तद्ग्रहणायोगात्। तस्यापि स्वद(स्वार्थ)कार्यता, अन्येन तदनुविधानग्रहण इत्यनवस्था। ततः स्थितम्–तज्जनो (तज्जन्मसारूप्ययोर)**वस्तुत्वात् सर्वथा [तद]नुपपत्तेः स एव प्रतिबन्धोऽस्तु**। तथा (**सर्वथा** तस्य) सारूप्यस्य सर्वेण सर्वात्मना[न] कथञ्चित् प्रकारेण **अनु-पपत्तेः** ज्ञानजडत्वानेकान्तप्रसङ्गात्, स एव अस्तु इति। यदि वा, **सर्वेण** प्रत्यक्षानुमानप्रकारेण

(१) विकल्पाज्जायमानाः। (२) अर्थप्रतिबद्धाः। (३) अर्थविषयाः। (४) अर्थविषयता। (५) सारूप्यम्। (६) चक्षुरादेरपि परम्परया तदुत्पत्तिदर्शनात्। (७) इति चेत्;। (८) स्वलक्षणात्। (९) 'तत एवम्' इति निरर्थकमत्र। (१०) अत्र आदर्शप्रतौ '४८६ ख' तमे पृष्ठे पङ्क्तिद्वयं रिक्तमलिखितम्, '४८७ क' तमः पृष्ठश्च संपूर्णो रिक्तः; ४८७ ख पृष्ठे च पङ्क्तिरेका रिक्ता वर्तते।

**तदनुपपत्तेः** इति ग्राह्यम् । तथाहि–ज्ञानार्थयोः द्वयोरपि दर्शने इदमनेन समानमिति भवति निश्चयो यमलकवत् । न च परस्यार्थद[र्शनमस्ति अ]न्यत्रोपचारात् । सोऽपि न युक्तः, यतः पूर्वं (र्वं) द्वयो[:]दर्शने, पुनरन्यतरदर्शना[त्] तत्सदृशान्यदर्शनाध्यारोपस्य (पः स्यात) तत्त्वा[त्] चैत्र-मैत्रदर्शनाध्यारोपवत् । द्वयोर्दर्शने वा तदाकारेण चेतसा ; तदवस्थो दोषोऽनवस्था । भ्रा[न्त्या] तदाकारेण वेदने सिद्धं नः समीहितम् ।    ५

प्रत्यक्षं च सदात्मान(नं) नीलाद्याकारवर्जितम् ।
वेत्ति तस्मान्न सारूप्यं सिद्धं ज्ञानार्थयोः क्वचित् ॥
घटादिकमहं वेद्मि [४८७ख] देशभिन्नं परिस्फुटम् ।
इति लोके यतो दृष्टो व्यवहारो ह्यविगानतः ॥
अहंप्रत्ययतो नान्या संवित्तिर्वीक्ष्यते मतम् ।    १०
सारूप्यं सौगतैर्यस्या मानत्राणसमन्वितम् ॥
प्रत्यक्षबाधनात् सिध्येत् सारूप्यं नानुमानतः ।
प्रत्यक्षबाधितः पक्षो नान्यतः सिद्धिमृच्छति ॥
द्वयोरेकेन दृष्टिश्च दृष्टत्वान्न विरुध्यते ।
सममन्यच्च तेन स्यादेकस्मात् कार्यमन्यथा ॥    १५
वासना कारणं वित्तेः चिन्तनीया मनीषिभिः ।
बहिरर्थग्रहे दोषैः सापि योज्या समस्तवैः (?) ॥
यस्याप्यहेतुकं ज्ञानं चित्तमेकमनाविलम् ।
तस्यापि चार्थसंवित्तिरविरुद्धेति साधितम् ॥
निरंशानेकविज्ञानवादः पूर्वं कृतोत्तरः ।    २०
एकानेकविकल्पादिशून्यं हि सर्वथा ततः ॥

सारूप्यस्य सर्वथानुपपत्तेः स एव प्रतिबन्धोऽस्तु किं सर्वथा तज्जन्मसारूप्ययोरवस्तुत्वम् ? न ; इत्याह–**अन्यत्र विकल्पघटनात्** विकल्पे[घट]नात् अन्यस्मिन् परमार्थपक्षो(क्षे) वस्तुत्वं तद्घटनात्तु वस्तुत्वमेव इत्यर्थः ।

ननु *"**प्रामाण्यं व्यवहारेण**" [प्र०वा० १।५] इत्यभिधानात् सौगतेन[न] संवृत्या[3] तया त एव दोषाय इति चेत् ; न ; अन्यथाभिप्रायात् । तथाहि–तज्जन्मसारूप्यवत् विकल्प-घटना[त्] निराकारमेव ज्ञानं वस्तु(मस्तु) तथैव लोके व्यवहारादिति ।    २५

पुनरपि तत्रैव दूषणान्तरमाह–**यद्ययं निबन्धः** (निर्बन्धः) इत्यादि । [न] प्रत्ययस्य **ज्ञाना(नस्य अ)कारणम्** अपि तु कारणमेव **विषयः इति ; कथम्** न **अनुमानज्ञानं** [४८८क] **क्वचित्** पावकादौ साध्ये **प्रमाणम्** ? परः पृच्छति–'**कथं च न**' इति ? तस्योत्तरमाह–**संविदित** इत्यादि । **संविदितः** प्रत्यक्षेण प्रतिपन्नः **प्रतिबन्धविशेषः** तदुत्पा(त्पत्त्या)दिलक्षणो यस्य    ३०

(१) योगाचारस्य । (२) अविवादतः । (३) कल्पनया ।

महानससम्बन्धिनोऽन्यादेः **तस्य प्रत्यक्षसिद्धत्वात्**, न तत्र तेन प्रमाणमिति। अन्यत्र प्रमाणमिति चेत ; अत्राह–**तदन्यत्र** इत्यादि । **तस्मादन्यत्र** प्रत्यक्षादन्यत्र परोक्षे **प्रमाणं कथम्** ? कुतः ? इत्याह–**प्रतिबन्धासिद्धेः** अन्यत्र इति ।

स्यान्मतम्–धूमसामान्यम् अग्निसामान्येन व्याप्तमेकदा प्रतिपन्नं सर्वदा प्रतिपन्नमेव इति
५ चेत ; तदाह–**सामान्येन** इत्यादि । परं पृच्छति '**किं पुनः**' इत्यादिना । पर आह–**अन्यापोहः सामान्य[म्** इत्यादि । **अन्य]स्माद्** विजातीयाद**पोहः** व्यावृत्तिः, अन्यस्य वा अपोहः, अन्यो वा अपोह्यतेऽस्मिन विकल्पाकारे इति । विकल्पान्तरवदपोहविषयत्वेन प्रत्यक्षस्य विकल्पकत्वप्राप्तेः इति मन्यते । अथ अनुमानात तत्प्रतीतिरिष्यते ; तत्राह–**तदनुमान** इत्यादि । **तस्य** व्याप्य-व्यापकापोहसामान्यस्य **अनुमानकल्पनायां** सत्याम **अनवस्थानात् कथमनुमानज्ञानं क्वचित्**
१० **प्रमाणमिति** ? तथाहि–सामान्यम अनुमानात प्रतीयते। तदपि लिङ्गादुदयवत , तत्रापि सामान्येन प्रतिबन्धवेदनम् , तत्रापि तदेव वक्तव्यं यावन्न क्वचिदवस्थानमिति ।

स्यान्मतम्–प्रमाणमन्तरेण तत्प्रतीयते इति ; तत्राह–**प्रमाणमन्तरेण न तस्य** अपोहस्य **प्रतिपत्तिः तत्प्रतिपत्तिः** । कुतः ? इत्याह–**अन्यत्रापि** इत्यादि । [४८८ख] **अन्यत्रापि** प्रत्य-क्षानुमानाभिमतेऽपि **प्रमाणकल्पनाऽनर्थक्यात्** प्रकृतसामान्यवद् अन्यस्यापि तदन्तरेण प्रतीतेः ।
१५ व्यवहारेण तस्य सार्थकत्वे प्रतिबन्धज्ञानं तथास्तु । योगिप्रत्यक्षं तदस्तीति चेत ; उक्तमत्र 'सर्वस्मात स्वविषयात तदनुत्पत्तेः' 'इत्यत्तेः' इतरथा तत एव साध्यसिद्धेः किमनुमानेन ? तत्रापि सामान्येन प्रतिबन्धग्रहणे सविकल्पं तत इति । दूषणान्तरमाह–**सादृश्य** इत्यादि । सदृशपरिणाम-लक्षणं(णां)जातिं सामान्य**मन्तरेण कथम् अन्यव्यावृत्तम्** अन्यस्मात विजातीयादपसृतं **पावका-दिकम् एकत्वेन** अभेदेन **प्रतीयात्** ? न कथञ्चित । स्वयं हि सादृश्याद् व्यावर्त्तते नान्ये सदृश-
२० परिणामलक्षणजातिसद्भावे च किमन्यापोहसामान्येन इति भावः । कुतः न कथञ्चित प्रतीयात ? इत्याह–**विवक्षित** इत्यादि । **विवक्षितं ज्ञानम्** अशेषं स एव **पदार्थः** पदाभिधेयः तस्य **अन्यस्माद्**-ज्ञानात पटात **व्यावृत्तिः** तस्याः **सर्वत्र** घटादावविशेषात् । तथा च अज्ञानात् पटाद् व्यावर्त्त-मानं यथा ज्ञानं ज्ञानपदाभिधेयं तथा घटादिकमपि स्यात । अथ स्वयं ज्ञानमेव ततो व्यावर्त्तमानं तद्व्यपदेशभागुच्यते ; तर्हि साम्प्रतम्–**सदृश** इत्यादि ।
२५ ननु न परमार्थतः सादृश्यमप्येवं सामान्यमस्ति, केवलमेकप्रत्यवमर्शज्ञानहेतुत्वात् धियामभेदः, तदभेदाद् व्यक्तीनामभेद इति । तदुक्तम्–[४८९क]

*"**एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।**
**एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥**" [प्र० वा० ४।१०८] इति;

तत्राह–**सादृश्येन** इत्यादि ।

३० **[सादृश्येन विनार्थानां प्रत्यभिज्ञाबलात् किल ।**
**प्रतिपत्ता तदतद्धेतूनर्थान् विभजते स्वयम् ॥१५॥**

(१) अनुमानम् । (२) अनुमानमपि । (३) अविनाभावसम्बन्ध । (४) प्रमाणमन्तरेण । (५) 'इत्यत्तेः' इति निरर्थकमत्र । (६) योगिप्रत्यक्षादेव । (७) घटपदाभिधेयं स्यात् ।

तदेकप्रत्यवमर्शस्य···]

साहृश्येन सदृशपरिणामेन विना तदन्तरेण। केषाम् ? अर्थानां पावकादीनाम् प्रत्यभिज्ञाबलात् प्रतिपत्ता सौगतोऽन्यो वा अर्थान् विभजते विभागेन व्यवस्थापयति। किंभूतान् ? तदतद्धेतून् [तद्धेतून्] उदकाद्याहरणहेतून् घटान् अतद्धेतून् पटादीन् स्वयम् आत्मना किल इति अरुचौ, सादृश्याभावे प्रत्यभिज्ञानस्यापि दुर्लभत्वात्। नहि लूनपुनर्जात- ५ केशादावपि तदस्ति, अन्यथा तृणदर्शनादपि त एव केशा इति स्यात् इति मन्यते।

कारिकां व्याख्यातुमाह–तदेकप्रत्यवमर्शस्य इत्यादि। तेषां खण्डादीनाम् एकप्रत्यवमर्शस्य। शेषं गतार्थम्।

अत्र दूषणमाह–विषय इत्यादि।

[विषयविषयिव्यवस्थैवं सर्वत्रोत्सन्नैव किल। १०
वर्णादिप्रत्यभिज्ञानकृतेर्वर्णादिसंविदः ॥१६॥

···किंचन व्यवस्थापयेत् यावता तत्संविद्धेतुत्वात् वर्णादिमत्त्वं सादृश्यवत्। ततः किं कस्य कारणं कार्यं वा यतोऽयं व्यवहारः प्रवर्तते। न वर्णादेः प्रत्यक्षाद् व्यवस्था; सदृशात्मनः प्रत्यक्षत्वात्। न प्रतीतेः प्रमेयव्यवस्था; एवं हि वर्णादिव्यवस्थापि मा भूत्। तदेको हि स्थवीयानाकारः समक्षसन्निवेशी परिस्फुटमवभासते। तदप्रत्यक्षत्वे न कोऽपि १५ प्रत्यक्षार्थः।]

विषयो रूपादिः विषयि तद्विज्ञानम् तयोर्व्यवस्थैव(वं)सर्वत्र बहिरन्तश्च उत्सन्नैव स्यात् किलशब्दः अनेन व्याख्यातः। कुतः ? इत्याह–वर्णादि इत्यादि। वर्णः शुक्लादिः रूपमादिर्यस्य रसादेः तस्य प्रत्यभिज्ञानं मानसो विकल्पविशेषः तस्य कृतेः कारणात् वर्णादिसंविदः रूपादिसंवित्तयः वर्णादिसंविदां हेतुः वर्णादिः(देः)स्यात् न ततो वर्णादिः २० स्यात्। अथ मतम्–वर्णाद्यभावे खरविषाणवत् न तत्संविदः, तदभावे न तत्प्रत्यभिज्ञानमिति; समानमेतदन्यत्रापि।

कारिकां विवृण्वन्नाह–किंच ते(चन इ)त्यादि। कुतो न व्यवस्थापयेत ? इत्याह–यावता इत्यादि। वर्णा[दि]प्रत्यभिज्ञाताद्(नाद्)वर्णादिसंविदो व्यवस्थाप्यन्ते [४८९ख] तत्संविदां वर्णादिधियां हेतुत्वा[त्]मानानां वर्णादिमत्त्वं न स्वभावतः सादृश्यवत् इति निदर्शनम्। ततः २५ तस्मात् भ[ा]वानां तत्त्वा(त्त्व)व्यवस्थाभावात् किं चेतनमचेतनं वा कस्य तथाविधस्य कारणं कार्यं वा न किञ्चित् कस्यचित् इत्यर्थः। यतोऽयं कस्यचित् कार्यकारणभावात् व्यवहारः प्रवर्तते। परमतमाशङ्कते दूषयितुं वर्णादिः(देः) इत्यादि। तात्पर्यम्–वर्णादेः प्रत्यक्षाद् व्यवस्था, न प्रत्यभिज्ञानात्। अत्र दूषणम्–'न' इत्यादि। न इति परपक्षनिषेधे। कुतः ? इत्याह–सदृशात्मनो वर्णादेः प्रत्यक्षत्वात्। तथाहि–संमयरहितस्य अन्यत्र गतचित्तस्य वा क्वचित् ३० खण्डमुण्डादिदर्शिनः 'एते समानाः' इति प्रतीतिः, अस्या अपलापे सकला(ल)प्रतीतिविलोपरः

(१) सादृश्यं विना प्रत्यभिज्ञानमस्ति। (२) सङ्केतरहितस्य। (३) सदृशप्रतीतेः।

(लोपः) । परः प्राह–**न प्रतीतेः प्रमेयव्यवस्था** इतरथा मरीचिकायां जलव्यवस्था तत्प्रतीतेः स्यादिति ; सोऽनेन निरस्तः ; **एवं हि वर्णादिव्यवस्थापि मा भूत्** । शक्यं हि वक्तुं न तत्प्रतीते[:] तद्व्यवस्था[1] मरीचिकाजलवदिते (दिति) । बाधकाभावं नैवं (भावान्नैवं) चेत् ; सादृश्यप्रतीतेः किं बाधक (कम् ?) प्रत्यक्षमिति चेत ; किं पुनः तद्[2] आत्मानं बाधते ? सादृश्यमात्र

५ इति चेत ; भेदमात्र इति समानम । प्रतीतेः[3] ; इतरत्रापि मास्ति ।

किंच, तदात्मनि बाधितेतररूपद्वयं प्रतिपद्यमानमेव (न एव) अन्यत्र सदृशेतरस्वभावद्वयं न सहत इति महती प्रेक्षाकारिता ! किंच तेन तत्र बाधनम् ? अग्रहणमिति चेत् ; तदसिद्धं वर्णादिमात्रेऽपि प्रसङ्गात । तदग्रहणे प्रत्यक्षाभावः; अन्यत्रापि । अतस्मिंस्तद्ग्रहज्ञापनमनेन

[४५०क] चिन्तितं (चिन्तितम्) वर्णादिवद् अन्यत्रापि न तथाप्रतीतिः । तन्न प्रत्यक्षं बाधकम् ।

१० अत एव नाऽनुमानमपि ; तदभावे [ऽ]भावात[4] । व्यक्तिव्यतिरेकेण तददर्शनं बाधकमिति चेत ; किं पुनः वर्णादेः तद्व्यतिरेकेण दर्शनमस्ति ? स एव व्यक्तिरिति चेत ; सादृश्यमप्यस्तु । नहि नैयायिकेनेव जैनेन तद (तद्-)[6] भिन्नं सामान्यमिष्यते । व्यक्तय एव स्युः इति चेत ; भवन्तु का नो हानिः ? केवलं परस्परं सदृशात्मान इति । निरंशपरमाणुदर्शनात न तासां सदृशेत[र]रूपतां (ता)[7] युक्ता इति चेत ; अत्राह–**तदेको हि** इत्यादि । **तस्य** वर्णादेः **एकः**

१५ साधारणः **हिर्भावनायाम** । कः ? इत्याह–**आकारः** । किंभूतः ? **स्थवीयान्** । पुनरपि किंभूतः ? **समक्षसन्निवेशी** । कथं किम् ? इत्याह– **परिस्फुटं** यथा भवति तथा **अवभासते** इति । अस्यानभ्युपगमे दूषणमाह–**तदप्रत्यक्षत्वे** तस्य आकारस्याऽप्रत्यक्षत्वे तको (**न कोऽपि**) **न कश्चित प्रत्यक्षार्थः**[8] । विचारितमेतत अनेकधा, न पुनरुच्यते । एवं मन्यते–यदि अयमाकारः बहुषु परमार्थसन् खण्डादिषु सदृशपरिणामोऽपि स्यादिति ।

२० प्रज्ञाकरगुप्तस्त्वाह–*"**न तदाकारदर्शनाद् बहिः तथा वस्तुसिद्धिः दूरविरलकेशादौ तदाकारप्रतिभासेन व्यभिचारात्**" इति ; स प्रष्टव्यो भवति–किं बहिरर्थमाश्रित्य एवमुच्यते, उत ज्ञानमात्रम , विभ्रममात्रम , शून्यतामात्रं वा ? प्रथमपक्षे बहिर्वर्णादिव्यवस्थापि मा भूत शुक्ले शङ्खे पीतप्रतिभासनेन व्यभिचारात । न सुवर्णादौ पीतभासावऽ (पीतावभासः) तत्प्रतिभासात ; मधुरे क्षीरे [४५०ख] पित्तज्वरिणः कटुकप्रतिभासेन अनेकान्तात । निम्बादौ

२५ कटुकता तत्प्रतिभासात् । एवं सर्वत्र योज्यमिति साध्वी सारूप्यव्यवस्था ! बाधकाभावोऽन्यत्रापि । द्वितीयविकल्पे बहिरिव ज्ञानेऽपि स कथम् आकार इति चिन्त्यम् ? नास्तीति चेत् ; किं पुनः नीलादेरन्यद्विज्ञानम् ? तथा चेत् ; नीलादिः किम् ? न किञ्चिदिति चेत् ; विज्ञानमपि तथास्तु । प्रतीत्यपलापे परं (वरं) सर्वालापः । एवं हि सुतरां क्लेशविच्छेदः । भ्रान्त इति चेत ; तेन तर्हि व्यभिचारात् न प्रतिभासात् कस्यचित् स्वसंवेदनसिद्धिः । नीलादिरेव ज्ञानमिति चेत् ; कथं

३० तत्र तदाकारः पारमार्थिकः ? अन्यथा अर्थेऽपि स्यात् । अथ दूरविरलकेशेषु व्यभिचारात् न तत्र

(१) वर्णादिव्यवस्था । (२) प्रत्यक्षम् । (३) इति चेत् । (४) प्रत्यक्षाभावे । (५) अनुमानस्याप्यनुपपत्तेः । (६) व्यक्तिभिन्नम् । (७) व्यक्तीनाम् । (८) 'न' इत्यत्रापि योज्यम् ।

सं तथा ; तत एव ज्ञानेऽपि न स्यात् । अथ ज्ञानपक्षे तत्केशानामभावात् न तैर्व्यभिचारचोदना; परपक्षे तैरसद्भिः सा कथं क्रियते ? पराभ्युपगमादिति चेत् ; भवदभ्युपगमाद् विज्ञानवद् अर्थेऽपि स आकारः परेण किन्न साध्यते ? सन्देहः स्यादिति चेत् ; तथहि–किं ज्ञानवदर्थेऽपि स सन् उत तत्केशवदसन् इति ? तदेतदसत् ; यतः ज्ञानेऽपि सन्देहानिवृत्तेः । तद्यथा स्तम्भाद्यर्थवत् ज्ञाने सन् अयमाकारः अहोस्विन्न[न्न]केशादिव[द]सन्निति । भवेदयम् अर्थवादिनः ५ सन्देहो व्यभिचारविषय(ये)तेनाङ्गीकरणे भ्रममवि(मपिवि)पर्ययादिति चेत् ; न ; सारमेतत् ; यतः यथैव पराभ्युपगतव्यभिचारविषयमादाय परस्य सन्देह उत्पाद्यते, तथा आत्मन्यपि उत्पादनीयः, एवं हि मध्यस्था(स्थ)ता स्यात् । [४९१क] परो वा यदा एवं वदति–बहिरिव ज्ञानेऽपि तत एव व्यभिचारात् नायमाकारः सत्यः ; तदा किं त्वया वक्तव्यः–'तदभ्युपगमादेव स व्यभिचारः स चाभ्युपगमो न प्रमाणम्' इति चेत् ; न ; अप्रमाणात् संसित्प्रत्या(संवित्प्रतिपाद)दनायोगात्। १० अथं(अथ) परो यथाकथंचिद्वक्तव्य इति, तत एव संशयगर्त्तपाती क्रियते; तर्हि बौद्धोऽपि परेण यथा कथंचिद्वक्तव्य इति व्यभिचारविषयमनादृत्य विज्ञानवदर्थेऽपि तदाकारसत्यता साध्यते । अभ्युपगतपरित्यागो दोष इति चेत् ; न ; यत्परित्यागेऽपि बहुतरं सिद्ध्यति स्वपक्षे परपक्षक्षयकारी तत्परित्यागेऽप्यदोषात् । तदुक्तम्–

*"त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । १५
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥" तदिति ।

अथ ज्ञानेऽपि न स परमार्थतः ; तर्हि तेन व्यभिचारात् वर्णादिरपि तत्र तथास्तु । तन्न द्वितीयोऽपि पक्षः श्रेयान् । इदानीं तृतीयो विचार्यते–येन विभ्रमोवि(मोऽधि)गम्यते तत्प्रतिभासस्य विभ्रमेण(सत्याविभ्रमे तेनैव) व्यभिचारान्न सत्यता । मा भूत् इति चेत् ; उक्तमत्र–विभ्रमासिद्धेरिति । २०

चतुर्थः पञ्चतां नीतः पक्षः पूर्वं यथाविधि ।
प्रमाणबाधनात् सत्तत(सत्यं त)स्माद्भावा यथोदिताः ॥

ननु यया प्रत्यासत्त्या किंचित् सादृश्यं केचन भावाः स्वीकुर्वन्ति तया स्वयमतदात्मकाः तथावभासिष्यन्त इति चेत् ; अत्राह–**स्वीकुर्वन्ति** इत्यादि ।

**[स्वीकुर्वन्ति गुणानर्था यया शक्त्याऽगुणा न किम् । २५**
**तया तत्संविदः कुर्युर्भिन्नाश्चेदेकसंविदः ॥१७॥**

**यथा तत्सामान्यमेकं व्यक्तय उपकुर्वन्ति न पुनरेकबुद्धिमिति न युज्येत तथैकं घटादितत्त्वमात्मनि स्पर्शादीन् बिभर्ति न पुनः स्पर्शाद्याकारप्रत्ययानेव करोतीति न घटां प्राञ्चति, ततो निराकारोऽर्थः स्यात् । ]**

---

(१) तदाकारः । (२) पारमार्थिकः । (३) व्यभिचारचोदना । (४) बौद्धेन ।(५) शून्यतामात्रमिति पक्षः । (६) पञ्चतां नाशतां प्राप्तः । (७) उद्धृतोऽयम्–न्यायवि० वि० प्र० पृ० ४०८ ।

**स्वीकुर्वन्ति गुणान्** रूपादिज्ञानादीन् **अर्थाः** [४९१ख] घटादयः **यया शक्त्या अगुणा** गुणरहिताः **न किं तया** शक्त्या **तत्संविदो** गुणसंविदः **कुर्युः भिन्नः (भिन्नाः)** परस्परविलक्षणाः अर्थाऽन्येन् यदे(यदि ए)**कसंविदः** एका संविद् येषामिति ।

कारिकां व्याख्यातुमाह-**तत्सामान्यम्** इत्यादि । **तत्सामान्यं** सादृश्यसामान्यम् **एकं**
५ सकलबाहुलेयादिव्यक्तिसाधारण**मुपकुर्वन्ति** आत्मनि धारयन्ति व्यञ्जयन्ति वा । काः ? **व्यक्तयः** खण्डादिविशेषाः । **न पुनरेषां(रेक)बुद्धिं** गौर्गौः इति प्रत्ययं **कुर्वन्ति** व्यक्तय इत्येवं **यथा** येन तद्बुद्धिकरणप्रकारेण **न युज्येत** किन्तु तदेकबुद्धिमेव कुर्वन्ती[ति] युज्येत [त]त्रैव सामर्थ्य-दर्शनात्, **तथा एकमखण्डं घटादितत्त्वम् आत्मनि** स्वस्वरूपे **स्पर्शादीन् गुणान् बिभर्त्ति न पुनः स्पर्शाद्याकारप्रत्ययानेव करोति** इत्येवं **न घटां प्राञ्चति** अपि तु अतद्गुणमपि तत्प्रत्ययान्
१० करोतीति घटां प्राञ्चति । **ततोऽनन्तरन्यायात् निराकारोऽर्थः स्यात् ।**

एवं हि (एवं वहिः) निराकारमर्थं प्रतिपाद्यान्तः(य अधुना अन्तः) प्रतिपादयन्नाह-**जीव** इत्यादि ।

**[जीवः मुग्धादिपर्यायानेति शक्त्या यया तया ।**
**शक्तिमानिव लक्ष्येत चित्रबुद्धिः यथा स्वयम् ॥१८॥**

१५ यया ... ततो भेदैकान्ते क्व दर्शनप्रत्यभिज्ञानादयः कथञ्चिद् व्यवहारपदवीमव-तरेयुः ?]

**जीवः** आत्मा **मुग्धादिपर्यायान् एति** गच्छति **शक्त्या** योग्यतया **यया तया** शक्त्या **शक्तम वा (शक्तिमा)निव लक्ष्येत** अनुभवोत्तरविकल्पबुद्ध्या व्यवसीयेत नानु-भवेन गृह्यत(ह्येत) । परप्रसिद्धनिदर्शनमाह-**चित्राद्दे(त्रे)त्यादि** । चित्रमेव(मेच)कादौ
२० प्राह्यादौ वा **बुद्धिः स्वयम**चित्रापि **यथा** [1]'चित्रापि यथा' चित्रानिव (चित्रेव) लक्ष्यते ।

कारिकाविवरणमाह-**यया** इत्यादि । [४९२क] ततः किं जातम् ? इत्याह-**ततः** तस्मात् न्यायात् **क्व** बहिरन्तर्वा न क्वचिद् **दर्शनप्रत्यभिज्ञानादयः कथञ्चिद् व्यवहारपदवमेव (दवीमव)तरेयुः** कभेयुः (भवेयुः) । क्व ? **भेदैकान्ते** इति ।

भेदैकान्ते एकप्रत्यवमर्शमभ्युपगम्य दूषणमुक्तम्, इदानीं य (स) [2]एव नास्तीति दर्शय-
२५ न्नाह-**अर्था** इत्यादि ।

**[अर्थाः प्रत्यवमर्शस्याहेतवोऽविषयीकृताः ।**
**ततस्तत्प्रतिबन्धस्य अविनाभावो न लैङ्गिकम् ॥१९॥**

**नहि प्रत्यभिज्ञानं स्वयमविषयीकृतान् प्रत्यवमृशति, प्रमेयाधिक्याच्च प्रमाणान्तरत्वप्रसङ्गात् । ततस्तत्र प्रतिबन्धाऽसिद्धौ साकल्येन व्याप्त्यसिद्धेश्च कुतोऽनु-**
३० **मानम् ?]**

(१) 'चित्रापि यथा' द्विर्लिखितम् । (२) एकप्रत्यवमर्श एव ।

**अर्थाः** परपरिकल्पितक्षणिकपरमाणुरूपा घटादयः **प्रत्यवमर्शस्यास्याहेतवः** अकारणम् । किंभूताः ? इत्याह–**अविषयीकृताः** अदृष्टा इति यावत् । **ततः** तदहेतुत्वात् **तत्प्रतिबन्धस्य** तेषां लिङ्गलिङ्गिभूतार्थानाम् **अविनाभाव[ः]** स्यात् **न लैङ्गिकम**नुमानं स्यात् ।

'**नहि**' इत्यादिना कारिकार्थमाह–न खलु **स्वयं** प्रत्यभिज्ञात्रा **अविषयीकृता** ननुभूता ५ नर्थांतु प्रत्यभि(न् अननुभूतार्थान्) **प्रत्यभिज्ञानं प्रत्यवमृशति** तथाविधे विषये तदुदया-भावात्, अन्यथा सर्वत्र तदुदयः स्यादिति मन्यते । अथाविषयीकृतानपि प्रत्यवमृशति इति ; तत्राह–**प्रमेय** इत्यादि । प्रत्यक्षानुमानाभ्याम् अविकल्पलिङ्गजाभ्याम् अन्यत् **प्रमाणं तदन्तरं** तद्भावः तत्त्वं तस्य **प्रसङ्गात्** प्रत्यभिज्ञानस्य इति । '**नहि**' इत्यादिना सम्बन्धः । कुतः ? इत्य-त्राह–**प्रमेयाधिवाक्या(धिक्या)च्च** इति । प्रत्यक्षानुमानाविषयीकृतप्रमेय(ये)प्रवर्त्तनात् '**प्रमेया-** १० **धिक्यात्**' इत्युक्तम् । च शब्दात्म(न स)विकल्पालिङ्गजत्वात् इति ।

लब्धं फलं दर्शयन्नाह–**ततः** स्वयमविषयीकृतस्य प्रत्यभिज्ञानेनाऽपरामर्शात् **तत्र** निरंशे तत्त्वे **प्रतिबन्धासिद्धौ** [४९,२ख] लिङ्गस्याविनाभावाऽनिश्चये **कुतो** लिङ्गाद**नुमानम्** ? न कुतश्चित् । भवतु वा सन्निहिते प्रत्यक्षतः विषयीकृते प्रत्यभिज्ञानेन प्रत्यवमर्शः, तथापि साकल्येन तदभावान्नानुमानमिति दर्शयन्नाह–**साकल्येन** इत्यादि । च शब्दोऽत्र द्रष्टव्यः । १५ सामस्त्येन व्याप्त्यसिद्धेश्च **कुतोऽनुमानम्** ?

इन्द्रियजात् प्रत्यक्षात्[3] तथा व्याप्तिसिद्धिः इत्येके[4] । योगिप्रत्यक्षात् इत्यपरे[5] । मानसात् इत्यन्ये[6] । अनुमानात् इति केचन । व्यापकानुपलब्धेः इत्यर्थः । तत्राह–**प्रत्यक्षात्** इत्यादि ।

**[प्रत्यक्षात् क्वचिद् व्याप्तिरनुमानेनानवस्थितिः ।**
**व्यापकानुपलम्भश्च व्याप्त्यसिद्धौ न सिध्यति ॥२०॥** २०

**यावान्**...**इत्यविचारितेन नामात्मना प्रतिबन्धं व्यवस्थापयतीति सुव्यवस्थितः**

---

(१) प्रत्यभिज्ञानकर्त्रा । (२) अननुभूते । (३) सामान्यलक्षणाप्रत्यासत्त्या अलौकिकप्रत्यक्षेण । (४) नैयायिकाः । "लिङ्गलिङ्गिसम्बन्धदर्शनमाद्यं प्रत्यक्षम् ।"–न्यायवा० पृ० ४४ । "भूयोदर्शनगम्या च व्याप्तिः सामान्यधर्मयोः । ज्ञायते भेदहानेन क्वचिच्चापि विशेषयोः ।"–मी० श्लो० अनु० श्लो० १२ । "भूयो-दर्शनबलादग्निधूमयोर्देशादिव्यभिचारेऽपि अव्यभिचारग्रहणम् ।"– प्रश० व्यो० पृ० ५७० । "तस्माद्-भिजातमणिभेदतत्त्ववत् भूयोदर्शनजनितसंस्कारसहितमिन्द्रियमेव धूमादीनां वह्न्यादिभिः स्वाभाविक-सम्बन्धग्राहीति युक्तमुत्पश्यामः ।"–न्यायवा० ता० पृ० १६७ । ता० प० पृ० ६९७ । प्रश० किरण० पृ० २९५ । प्रश० कन्द० पृ० २०९ । तत्त्वचि० अनु० पृ० २१० । (५) तुलना–"अन्ये तु व्याप्तिग्रहणकाले प्रतिपत्तुर्योगिन इवाशेषविषयं परिज्ञानमस्तीति ब्रुवते । अन्यथा हि सर्वो धूमोऽग्निं विना न भवतीति व्याप्तिस्मरणं न स्यात् ।"–प्रश० व्यो० पृ० ५७० । (६) "तस्य ग्रहणं प्रत्यक्षानुपलम्भसहायात् मानसात् प्रत्यक्षात् । धूममग्निसहचरितमिन्द्रियेणोपलभ्य अनग्नेश्च जलादेर्व्यावर्तमानमनुपलम्भेन ज्ञात्वा मनसा निश्चिनोति धूमोऽग्निं न व्यभिचरतीति ।"–न्यायकलि० पृ० ३ । न्यायम० पृ० १२१, १२३ ।

**प्रतिबन्धः ! तदनुमानकल्पनायाम् [अनवस्था]क्षणिकत्वेन[व्याप्त्यसिद्धौ व्यापकानुपलम्भश्च न सिध्यति । ]**

ननु विचारितमेतत्–*"**भूता भव्या भवन्तो वा सर्वे भावाः**" [सिद्धिवि० ३।८] इत्यादिना तत्किमर्थं पुनरुच्यते इति चेत् ? तत्र साक्षादनुमाननिरूपेण(पणे) तदुक्तम्, अत्र तु
५ शब्दस्य प्रतिबन्धाभावे अगमकत्वे लिङ्गस्यापि तेन स्यादिति प्रदर्शनार्थम् इत्यदोषः । **क्वचिद्** वह्निरन्तर्वा कार्यस्वभावे वा **प्रत्यक्षात**(**न**) कुतश्चनापि **व्याप्तिर्न सिध्यति** न तद्विषयतां गच्छति । अनुमानात सिध्यतीति चेत ; अत्राह–**अनुमानेवं** (**नेन** अङ्ग)गीक्रियमाणे अनवस्थितिः सत्त्वस्य **व्यापकम्** अर्थक्रियाकारित्वं(त्वं) तस्य नित्येऽ**नुपलम्भः** सत्त्वस्य क्षणिकत्वेन व्याप्तिं साधयतीति चेत ; अत्राह–**व्यापकानुपलम्भश्च न सिध्यति** सत्त्व-
१० व्यापकस्य अर्थक्रियाकारित्वस्य अनुपलम्भोऽपि अक्षणिके साकल्येन न सिध्यति । नहि अर्थक्रियाविकलमक्षणिकं सर्वं द्रष्टुं शक्यं येन तत्र तदभावे सत्त्वाभावः स्यात वृक्षाभावे शिंशपाभाववत । अथा(अथ) क्षणिकत्वाभावात [४९३क] तत्रै अर्थक्रियाकारित्वानुपलम्भः ; कुतः ? तदभावेऽदर्शनादिति चेत ; मीमांसकस्यापि दर्शननिवृत्तिः सर्वज्ञसत्तां नि[वर्तयेत इति] साधूक्तम् –सुगतो न सर्वज्ञः वक्तृत्वादिभ्यो रथ्यापुरुषवदिति । अथ अक्षणिके सर्वादर्शनं न सर्वज्ञः
१५ (ज्ञं), तत्र स्वयं सर्वज्ञान्तरेण दर्शनसंभवात । प्रकृते सर्वादर्शनं कुतः सिद्धम् ? तद्द्रष्टः(तद्द्रष्टुः) कस्यचिज्जगति भवतोऽदर्शनात । मीमांसकेनापि सर्वद्रष्टः(द्रष्टुः) तत्र कस्यचि[द्]दर्शनात् इति समानम् । तस्य सर्वज्ञता स्यादिति चेत ; भवतोऽपि । भवतु इति चेत ; परस्यापि । वेदाप्रामाण्यं स्यादिति चेत ; भवतोऽनुमानस्य । नहि सर्वज्ञस्य अनुमानेन किंचित । परार्थं तदिति चेत ; परस्यापि इच्छामात्रेण अशेषज्ञत्वात ।

२० ननु यदि कश्चिदक्षणिकदर्शी स्यात , स यदि इन्द्रियज्ञानेन ; तन्न शक्यम् ; तस्य वर्त्तमानमात्रविषयत्वात । अथ अनुमानेन ; तन्न ; तदभावेऽभावात । न च प्रमाणान्तरादिति चेत ; कथमिदवगतम्–'सर्वमक्षज्ञानं वर्तमानविषयमेव' ?

स्यान्मतम्–अखिलमिन्द्रियज्ञानं वर्त्तमानविषयं तत्त्वात अस्मदादित नहि (दिज्ञानवत इति ; तर्हि) 'सुगतो न सर्वज्ञो वीतरागो वा पुरुषत्वादिभ्यो रथ्यापुरुषवत' इत्यपि स्यात ।
२५ अथ पुरुषत्वाद्यविशेषेऽपि कश्चित सर्वज्ञः कल्प्यते ; इन्द्रियज्ञानमपि यदि किञ्चिदेव त्रिकालानुयायिनमेकमर्थं पश्येत को विरोधः, यतोऽक्षणिके सर्वादर्शनं सिध्ये[त् ?] तन्न अदर्शनात् क्षणिकाभावः । केवलम् अर्थक्रियावैकल्यमवशिष्यते । [४९३ख] तदप्यदर्शयन्नसिद्ध(र्शनान्न सिद्ध)त्युक्तन्यायात ।

यदि मतम्–क्षणिकत्वेन अर्थक्रिया व्याप्ता, तच्च विरोधादक्षणिकाद् व्यावर्त्तमानं

(१) अगमकत्वम् । (२) अक्षणिके । (३) मीमांसकेन । (४) अक्षणिके । (५) सर्वादर्शनसाक्षात्कर्तुः । (६) यदि मीमांसकः सर्वज्ञद्रष्टा स्यात् तदा । (७) मीमांसकः यदि सर्वज्ञं स्वीकुर्यात् तदा । (८) वैयर्थ्यं स्यात् (९) प्रयोजनम् । (१०) इन्द्रियज्ञानस्य । (११) प्रत्यक्षाभावे । (१२) क्षणिकत्वम् ।

'तामानं' तामादाय व्यावर्त्तते, सा च त (स)त्त्वमिति ; तत्राह–**व्याप्त्यसिद्धौ न सिध्यति** क्षणिकत्वेन अर्थक्रियायाः या **व्याप्तिः** तस्याः **असिद्धौ** उक्तनीत्या **न सिध्यति।**

**कारिकार्थमाह–यावान्** इत्यादिना ।

अत्राह परः–प्रत्यक्षात न परमार्थतः कस्यचित् केनचित् सौगतेन व्याप्तिसिद्धिरिष्यते, अपि तु[संवृतेः],संवृतिश्च विचारानुपपत्तिः इति ; तत्राह–**अविचारित** इत्यादि । **अविचारितेन** विचाराऽसहिष्णुना **आत्मना** स्वभावेन संवृतिकल्पितेन इत्यर्थः, **नात्म**(नाम इ)त्यरुचौ(चौ) **प्रतिबन्धं** लिङ्गलिङ्गिनोरविनाभावं व्यवस्थापयति सौगत **इति** एवं **सुव्यवस्थितः प्रतिबन्ध** इत्युपहासः । तथा शब्दार्थयोरपि स्यादिति भावः ।. अनुमानात्तत्सिद्धिरिति चेत ; अत्राह–**तदनुमानकल्पनायाम्** इत्यर्थः । व्यापकानुपलब्धेस्तत्सिद्धिरिति चेत ; अत्राह–**क्षणिकत्वेन** इत्यादि । ततः स्थितम्–साकल्येन प्रतिबन्धसिद्धिमन्तरेण यदि लिङ्गं गमकं शब्दोऽपि स्यादिति ।

अत्रैव युक्त्यन्तरमाह–**समनन्तर**मित्यादि ।

**[समनन्तरमज्ञेयं स्वरूपार्पणकारणम् ।**
**प्रतिबन्धान्तरं शंसेत् प्रत्यर्थनियतं धियाम् ॥२१॥**

**तादात्म्यतदुत्पत्तिसम्बन्धेऽपि समनन्तरप्रत्ययस्य अविपर्यीकरणात् कारण···यत्र यदेव यदर्थ[नियतं]तदेव तमर्थं विपयीकरोतीति युक्तः प्रतिबन्धः । स शब्दज्ञानज्ञेययोरपि पारमार्थिकः प्रतिपद्युमशक्यत्वात् ]**

ननु चायमर्थः **'न चायमेकान्तः सर्वत्र अर्थप्रतिबन्धादेव बुद्धीनां प्रामाण्यम्'** इत्यनेन[4] उक्तः, किं पुनरुच्यते ? 'तदुपसंहारार्थम्' इत्येके[5] । न त्रा(तन्न ; अ)न्यथा व्याख्यानात । **समनन्तर**मिति[6] न उपादानज्ञानमुच्यते उक्तत्वात, अपि तु **समं** नीलाकारज्ञानसदृशं नीलम **अनन्तरं** सन्निहितं पूर्व(तत्पूर्वम) [४९४क]किंभूतम् ? इत्याह–**स्वरूपार्पणकारणम् स्वरूपार्पणेन कारणं** समानन्तरमकारणमपि त्य(त)स्योपादानम । तथाहि–देवदत्तनीलज्ञानस्य पूर्वानन्तरक्षणभावि सर्वनीलसमनन्तरं(सर्वं नीलं समनन्तरं) च । तत्किम् ? इत्याह–**अज्ञेयं** प्रत्यक्षस्याऽपरिच्छेद्यम् अदृश्यं वर्त्तमानं च ज्ञेयम् इत्यर्थः । तथाहि–अहमहमिकया स्वसंवेदने ज्ञानमघटाकारमपि घटग्राहकं प्रतीयते । ततो यदुक्तम्–*"**न नीलादिसुख्यादि(दिसुखादि)व्यतिरेकेण तद् ग्राहकं प्रतीयते**" इति[7] ; तत् प्रत्यक्षप्रतीतिबाधितमिति । तत्किं कुर्यात ? इत्याह–**प्रतिबन्धान्तरं** सामर्थ्यलक्षणं **धियां शंसेत्** अर्थमर्थं प्रति[प्रत्यर्थं तत्र नियतं]**प्रत्यर्थनियतं** । यथैव हि विसदृशादपि गोमयादेरेव सां(शा)लूकादेव जायमानं तस्यैव आत्मनि सामर्थ्यं सूचयति न सर्वस्य । नहि एवं तत्र वक्तुं शक्यम्–

(१) 'तामानं' इति व्यर्थमत्र द्विर्लिखितम् । (२) अर्थक्रिया । (३) बौद्धः । (४) वाक्येन । (५) व्याख्याकाराः । (६) पदेन । (७) "यथा च न सुखादिव्यतिरेकेणापरं विज्ञानं तथा नीलादिव्यतिरेकेणापि ।"–प्र० वार्तिकाल० पृ० ४०९।

'सर्वं विज्ञानीयं तत्कारणमनु न वा किञ्चित्' इति, प्रतीतिबाधनात् , तथा विसदृशात् समानकालात् नियमादेव ज्ञानात् नियतो घटादिः प्रतीयमानः तस्यैव आत्मग्रहणे शक्तिं संशति (शंसति) । यतो यदुक्तम्–*"नियतकार्यदर्शनात् योग्यतानुमीयते कारणस्य, न योग्यतायाः तत्कार्यम्[1] अतीन्द्रियत्वात्तस्याः । परम्परतोऽनुमाने अन्योऽन्यसंश्रयः ।" इति ;
५ तदनेन निरस्तम् ; नियतवर्त्तमानार्थग्रहणादेव प्रतिबन्धान्तरानुमानात् ।

एतेन इदमपि चिन्तितम्–*"-संविन्मात्रस्य सर्वत्राविशेषात् सर्वस्य सर्वदर्शित्वम्" इति ; नियतार्थदर्शनप्रतीत्या बाधनात् । ननु अर्थदर्शनं नीलादिवदर्थधर्मश्चेत् ; [४९४ख]कथमर्थस्य संभवेत ?

एतेन अनुभयधर्मता चिन्तिता इति चेत ; उच्यते–कार्यकरणं नीलादिकार्यधर्मश्चेत् ;
१० सर्वोऽपि कस्यचित् कार्यस्य हेतुः । यथैव हि तस्य नीलत्वं नैकं प्रत्येव अपि तु सर्वं प्रति, तथा जन्यत्वमपि येन य(ज)न्यते तं प्रत्येव तत् ; तदितरत्र समानम् । कारणधर्मश्चेत् ; अर्थदर्शनवत् प्रसङ्गः ।

एतेन उभयधर्मता[निर]स्ता ; अनुभयधर्मता तत्सत् व्याख्यात (व्याघात)कारिणी । अथ कचिदपि हेतुफलभावो नेष्यते; किमिष्यते ? स्वसंवेदनमात्रमिति चेत ; एतदपि तादृगेव । तथाहि–
१५ नीलज्ञानलत्वं (नत्वं) यथा सर्वाणि ज्ञानान्युद्दिश्य तथा(तथा)स्य संवेदनमपि इति 'सर्पीति'[2] सर्वैः तत्संविदितं भवेत् ; विशेषकल्पनसर्थेऽपि समानम् । अथ अन्यज्ञानं नेष्यते ; किं तर्हि स्यात् ? 'एकव्यक्तिप्रतिभासाद्वैतम्' इति चेत् ; अत्राह–मितीव[3] घटादेरपि प्रतिभासे तद्योगात् । घटज्ञानयोः सहप्रतिभासे स्वरूपसंवेदनमात्रनियतता इति चेत ; पररूपसंवेदननियतता कुतो न भवति, कल्पनायाः निरंकुशत्वात् ? यदि च सहप्रतिभासादेकरूपता ; तथा प्रतिभासमानयोः
२० निम्बाम्रयोः कटुकता मधुरता वा स्यात् । अथ न सहप्रतिभासात् समानता किन्तु तथा प्रतिभासात् ; न तर्हि घटज्ञानयोः संवेदनैकरूपता, ग्राह्यग्राहकतयावभासनात् इत्यलमतिप्रसङ्गेन । ततः स्थितम्–'**प्र[ति]बन्धान्तरं शंसेत् प्रत्यर्थनियतं** [४९५क] **धियाम्**' इति ।

कारिकां विवृण्वन्नाह–ते **तदुत्पत्तीत्यादि** ।–(ह–**तादात्म्य** इत्यादि) **तादात्म्यं च तदुत्पत्तिश्च** ते तादात्म्यतदुत्पत्ती, ते एव **सम्बन्धः** तस्मिन्नङ्गीक्रियमाणेऽपि **समस्य** सदृशस्य
२५ **अनन्तरस्य** अव्यवहितस्य **प्रत्ययस्य** कारणस्य **अविषयीकरणाद्** असदृशस्य वर्तमानस्य विषयीकरणात् इत्यर्थः । ततः किम् ? इत्याह–**कारण** इत्यादि । तदेव दर्शयन्नाह–**यत्र** इत्यादि । **यत्र** प्रमेये **यदेव** मतिज्ञानम् अवग्रहादिसंवेदनं श्रुतज्ञानं वा । किंभूतं तत् ? इत्याह–**यदर्थ** इत्यादि । **तदेव ज्ञानं तमर्थं विषयीकरोति इति युक्तः प्रतिबन्धः** । **स** प्रतिबन्धः **शब्दज्ञानज्ञेययोरपि** शब्दस्य यज्ज्ञानं यच्च तस्य[ज्ञेयं] प्रमेयं तयोरपि **पारमार्थिकः** । कुतः ?
३० इत्याह–**प्रतिषेद्धुमशक्यत्वात्** ।

**अस्य हेतोरसिद्धतां पादत्रयेण उद्भाव्य चतुर्थपादेन परिहरन्नाह–अफलत्वात्** इत्यादि ।

(१) अनुमीयते ।(२) 'सर्पीति' इति व्यर्थमत्र ।(३) मितिः संवेदनम् सा इव संवेदनवत् इत्यर्थः ।

**[अफलत्वादशक्तेश्च न सङ्केत्येरन् स्वलक्षणे ।
वाचोऽसङ्केतितं वाहुरित्यनेकान्तसाधनम् ॥२२॥**

नहि [शब्दाः असङ्केतितं प्रतिपादयन्ति] सङ्केतं च कुर्वन् प्रतिपित्सुर्वा ततः प्रतिपत्तुमिच्छन् अर्थक्रियामेव समुद्दिश्य कर्तुं प्रतिपत्तुं वाऽर्हति । न च स्वलक्षणमेव सङ्केतितम् [व्यवहारकालमन्वेति] पुनः असङ्केतितशब्दार्थप्रतिपत्त्ययोगात् । न चायं ५ स्वलक्षणे शक्यः कर्तुम् अविषयीकृतयोः विषयीकृतयोश्च भिन्नेन्द्रियग्राह्ययोरसंभवात् । मनोविकल्पमन्तरेण अस्येदमिति घटनाऽयोगात् । मनोविकल्पेन च''' तन्न''' । सामान्येऽपि सुतरां न सङ्केतः तस्य दृष्टावप्रतिभासनात् सतोऽप्यर्थक्रियाऽसामर्थ्यात् । तदपोहविषयः सङ्केतः । तद्विषयं शब्दज्ञानं विभ्रमवशात् दृश्यविकल्प्यावेकीकृत्य पुरुषं व्यवहारे नियुङ्क्ते । अस्यापि सङ्केतितातत्कार्यकारणव्यपोहैकरूपस्य पुरुषार्थक्रियाकारिणः कथम- १० भावैकान्तत्वम् ? खपुष्पादः''' तत्कृतामर्थक्रियामुपजीवति न पुनस्तद्भावतत्त्वमिति तथागतप्रज्ञो देवानां प्रियः । संविदः समानेतरपरिणाममन्तरेण प्रवर्तमानासंभवात् न हेतुफलभावनियमः । तत्संभवे बहिरपि किन्न स्यात् ?]

**वाचः** शब्दा **न सङ्केत्येरन्** । क ? **स्वलक्षणे** । कुतः ? इत्याह–**अफलत्वात्** सङ्केतकरणस्य[फलाभावात्] । तथाहि–सङ्केतविषयस्य प्रत्यक्षविषयत्वात् न तत्र सङ्केतोपयोगः । १५ अन्यत्र तदभावात् । इतश्च न तत्र ते सङ्केत्येरन् ; इत्याह–**अशक्तेश्च** इति । **च** शब्दो हेतुसमुच्चये । तद्यथा, नाप्रतिपन्नयोः शब्दार्थस्वलक्षणयोः सङ्केतः ; अतिप्रसङ्गात् । नापि प्रतिपन्नयोः इन्द्रियज्ञानेन ; तस्य 'इदमस्य वाच्यमिदं वाचकम्' इति परामर्शायोगात् । नापि विकल्पेन अवस्तुविषयेन । तन्न ते तत्र सङ्केत्येरन् । असङ्केतितमर्थं शब्दाः कथयन्ति इति चेत् ; अत्राह– [४९५ख] **असङ्केतितं वाहुः न,** परोपदेशवैफल्यापत्तेः । २०

इदमपरं व्याख्यानम्–चशब्दमन्तरेणापि हेतुसमुच्चयगतेः । **न** शब्दो भिन्नप्रक्रमः '**स्वलक्षणे**' इत्यस्याऽनन्तरं द्रष्टव्यः उक्तसमुच्चये । ततोऽयमर्थः–न केवलं **स्वलक्षणे** अपि तु सामान्येऽपि **शब्दा न सङ्केत्येरन्** । कुतः ? इत्याह–**अफलत्वात्** तत्र वाचाम् । नहि शब्दप्रतिपादितमपि सामान्यं वाहाद्यर्थक्रियाकारि, विशेषकल्पनावैफल्यापत्तेः । हेत्वन्तरमाह– **अ[श]क्ते**रिति तत्र सङ्केतस्य कर्तुमशक्यत्वात् अप्रमाणविषयत्वात् । अथ शब्दात् सामान्यं २५ ततोऽपि विशेषः प्रतीयते इति मतिः ; तत्राह–**असङ्केतितं वाहुः न** । अस्यायमर्थः–न विद्यते सङ्केतितं सामान्यं यस्मिन् स्वलक्षणे **तदसङ्केतितं** न च वाचः कथयन्ते(न्ति) । नहि यद्द्वारेण विशेषे प्रवृत्तिः तत्र सामान्यमस्ति । तत्र उत्तरमाह–इत्येवं परेण उच्यमानम् **अनेकान्तसाधनम्** ।

**'नहि'** इत्यादिना कारिकार्थमाह–**[न हि शब्दाः असङ्केतितं प्रतिपादयन्ति]** सङ्केतितं ३०

(१) प्रत्यक्षाविषये । (२) सङ्केताभावात् । (३) इन्द्रियज्ञानस्य । (४) सामान्ये । (५) मीमांसकस्य ।

प्रतिपादयन्ति इति चेत ; अत्राह–**सङ्केतं च कुर्वन्** सङ्केतकारी **प्रतिपित्सुर्वा ततः** सङ्केतं प्रतिपत्तुमिच्छत्ता(न् ना⁽¹⁾)प्रतिपाद्यः **अर्थक्रियामेव समुद्दिश्य कर्तुं प्रतिपत्तुं वा अर्हति**, अन्यथा अप्रेक्षाकारितापत्तेः । द्वयोरपि⁽²⁾ तथेति चेत ; अत्राह–**स्वलक्षणमेव** इत्यादि । तत्रैव सङ्केत इति चेत ; अत्राह–**न च** इत्यादि । कुतः ? इत्यत्राह–**सङ्केतेति (सङ्केतिते)**त्यादि । व्यवहारका-

५ लक्षणस्य [असङ्केतितत्वात । तस्य] असङ्केतितस्य प्रतिपत्तिरिति चेत ; अत्राह–**पुन**रित्यादि । सङ्केतात पश्चात **असङ्केतितशब्दार्थप्रतिपत्त्ययोगात्** [४९६क] अन्यथा गोशब्दाद् अश्वप्रतीतिः स्यात । अनेन '**अफलत्वात्**' इति व्याख्यातम ।

द्वितीयं हेतुं व्याख्यातुमाह–**न चायम्** इत्यादि । कुतः ? इत्यत्राह–**अविषयीकृतयोः** शब्दार्थयोरसंभवात सङ्केतस्येति । विषयीकृतयोः स्यादिति चेत ; अत्राह–**विषयीकृतयोश्च**

१० विषयीकृतयोरपि **असंभवादिति** । किंभूतयोः ? इत्याह–**भिन्नेन्द्रियग्राह्ययोः** भिन्नेन्द्रियग्राह्यत्वात इति । श्रवणेन्द्रियज्ञानस्य शब्दमात्रे चक्षुरादिज्ञानस्य रूपादिमात्रे पर्यवसानात । नान्योन्यविषयीकरणे⁽³⁾ च 'अस्येदम' इति घटनायोगात सन्तानान्तरवत् । कुतस्तर्हि सङ्केतः ? इत्याह–**मनोविकल्पमन्तरेण घटनायोगात्, 'अस्येदम्' इति** सम्बन्धस्य करणासंभवात, मनोविकल्पादेव⁽⁴⁾ तद्योगात इत्यर्थः । तत एव भवतु इति चेत ; अत्राह–**मनोविकल्पे(ल्पेन) च** इत्यादि । **न**

१५ **चायं सङ्केतः स्वलक्षणे शक्यः कर्तुमिति** । उपसंहरन्नाह– **तन्न** इत्यादि ।

द्वितीयमर्थं कथयन्नाह–**सामान्येऽपि** न केवलं स्वलक्षणे वस्तुनि **सुतरां न सङ्केतः** । कुतः ? इत्याह–**तस्य** सामान्यस्य **दृष्टौ** इन्द्रियज्ञानेऽ**प्रतिभासनात्** । अनेन अशक्तं (**अशक्ते**रिति व्याख्यातम्) **सतोऽपि** विद्यमानस्यापि **तस्य अर्थक्रियाऽसामर्थ्यात्** सामान्येऽपि **न सङ्केत** इति । यत एवं **तत्तस्मात अपोहविषयः सङ्केतः** । तत्रापि⁽⁵⁾ शब्दात् कथं स्वलक्षणे प्रवृत्तिः इति

२० चेत् ; अत्राह–**तद्विषयम्** इत्यादि । **सोऽपोहः विषयो** यस्य शब्दज्ञानस्य तत्तथोक्तम । तत्पक्षी (तत क किं)करोति ? इत्याह–**पुरुषं व्यवहारेषु** [४९६ख] **नियुङ्क्ते** इति । किं कृत्वा ? इत्याह–**दृश्य** इत्यादि । **दृश्यं** स्वलक्षणं **विकल्पः(ल्प्यः)** शब्दज्ञानाकारः तौ **एकीकृत्य** । कुतः ? इत्याह–**विभ्रमवशात्** इति । अस्योत्तरमाह–**अस्य** इत्यादि । **अस्यापि** व्यपोहस्यापि **कथम् अभावैकान्तत्वम्** नीरूपतैकान्तत्वम् । किंभूतस्य ? **पुरुषार्थकारिणः** । पुनरपि किंभूतस्य ?

२५ इत्याह–**सङ्केतिते**त्यादि । **न तत्** विवक्षितं **कार्यकारणं** येषां विजातीयाभिमतानां ते **अतत्कार्यकारणाः** तेभ्यः तेषां चा(वा) **व्यपोहः, सङ्केतितानाम अतत्कार्यकारणव्यपोहः** खण्डादीना स **एकं रूपं** यस्य तस्य इति । तथापि अभावैकान्तत्वे दूषणमाह–**खपुष्पादेः** इत्यादि ।

सौगतमुपहसन्नाह–'**तत्कृताम्**' इत्यादि । **तत्कृतां** व्यपोहकृताम् **अर्थक्रियामुपजीवति न पुनः तद्भावतत्त्वं** तस्य व्यपोह[स्य]भावरूपमुपजीवति । कोऽसौ ? इत्याह–**तथागतप्रज्ञः** तथागते

३० सुगते प्रज्ञा यस्य स तथोक्तः **देवानांप्रियः** । यदि वा, **तथा** तेन प्रकारेण **गता** ध्वस्ता **प्रज्ञा**

---

(१) प्रतिपत्सुमयोग्यः । (२) प्रतिपाद्यप्रतिपादकयोः । (३) अन्योन्याविषयीकरणे इत्यर्थः । (४) मनोविज्ञानादेव । (५) अपोहविषयत्वेऽपि ।

यस्य इति ग्राह्यम्, अत एव **देवानां प्रियः** । भावा(भवाँ)स्तर्हि कुतोऽस्य भावतत्त्वमुपजीवति इति चेत् ? अत्राह–**संविद्** इत्यादि । **संविदो** ज्ञानस्य नीलतया अर्थेन सह यः 'नं' **समानो** यश्च जडेतररूपतया **इतरः** असमानः **परिणामः** तमन्तरेण **तथा** प्रत्यक्षादिप्रकारेण दृश्यप्रा-प्ययोरेकत्वाध्यवसायप्रकारेण वा **प्रवर्तमानासंभवात्** 'व्यवहारिणः' इत्यध्याहारः । **प्रवर्त-मान(नः)** संसार(रः), पूर्वपावकादिवासनात उत्तरोत्तरपावकादिप्र[ति]भासप्रवृत्तिः [४९७क] ५ तस्या**ऽसंभवात्** । किमन्तरेण ? इत्याह–**समान** इत्यादि । तथाहि–पूर्वोत्तरपावकज्ञानयोः उपा-दानोपादेयभूतयोः भासुरतया **समान** उपादानोपादेययोग्यतया **इतरः परिणामः** तथापि समान-परणामो विज्ञानवादेऽपि न हेतुफलभावनियमः । निरस्तमद्वैतम् । संविदो भवत्त(तु त)त्परिणामो नार्थस्य इति चेत्; अत्राह–**तत्संभवे** समानपरिणामसंभवे 'संविदः' इत्यनुवर्त्तते **बहिरपि किन्न स्यात्** तत्परिणामः ? १०

यदुक्तं परेण–*"न चायं सङ्केतः स्वलक्षणे शक्यः कर्तुम्" इति[3]; तत्र दूषणं दर्शयन्नाह–**अशक्यसमयमि**त्याह (त्यादि) ।

**[अशक्यसमयं रूपं यथार्थानामनन्यभाक् ।**
**अशक्यदर्शनं रूपं तथार्थानामनन्यभाक् ॥२३॥**

**यथा अर्थरूपं तथैव द्रष्टुमशक्यं कारणस्यापि दृष्टेरविषयत्वात् कालभेदात् तत्स-** १५ **मानाकारदर्शनात् । तद्विषयीकरणव्यवस्थायां साकल्येन तत्सामान्यं विषयः स्यात् । न चेयं दृष्टिः स्वकारणस्यैव रूपमनुकरोति, क्वचित् स्वयमुपादानरूपमनुकरोत्यपि, स्वकार-णोपादानस्य च । कथञ्चित् सादृश्यस्य अन्यत्राप्यनिवारणात्, सर्वथानुकरणासंभवात् । साक्षात्तदुत्पत्तेरभावादतत्प्रतिभासित्वमयुक्तम्; स्वप्नादावभ्रान्तत्वापत्तेः । ]**

**अशक्यः समयः** सङ्केतो यस्मिन् तत्तथोक्तम् । किम् ? **रूपं** स्वभावः । केषाम् ? २० इत्याह–**अर्थानाम् यथा** येन अनन्तरोक्तप्रकारेण । किंभूतम् ? **अनन्यभाग्** असाधारणम् **अशक्यदर्शनं रूपं** क्षणिकपरमाणुलक्षणम् **तथा अर्थानाम[न]न्यभाक्** इति विचारित-मेव(त)न ।

का[रि]कां विवृण्वन्नाह–**यथार्थरूपम्** इत्यादि । **तथैव द्रष्टुमशक्यमिति** । कुतः ? इत्याह–**दृ[ष्टे]**रित्यादि । कारणे(ण)स्य विषयता स्यादिति चेत्; अत्राह–**कारणस्यापि दृष्टे-** २५ **रविषयत्वात्** । कुतः ? इत्याह–**कालभेदात्** दृष्टिकालपरिहारेण अर्थकालो व्यवस्थितः । एव-मन्यत्रापि योज्यम् । न च परस्य कालभेदे ग्राह्यग्राहकभावः । तदाकारानुकरणात् तैत्तस्यै ग्राहक-मिति चेत्; अत्राह–**स(त)त्समान** इत्यादि । **तेनार्थेन समानो य आकारः** ज्ञानस्य तस्य

(१) 'न' इति निरर्थकम् । (२) ज्ञानं न जडम्, अर्थस्तु जड इति । (३) "शब्दाः सङ्केतितं प्राहु-र्व्यवहाराय स स्मृतः । तदा स्वलक्षणे नास्ति सङ्केतस्तेन तत्र न ॥"–प्र० वा० ३।९१ । (४) ज्ञानम् । (५) अर्थस्य ।

**दर्शनात् तद्विषयीकरणव्यवस्थायाम्**, तदित्यर्थः परामृश्यते। **साकल्येन** [४९७ख] बहिरन्तश्च **तत्सामान्यं** सदृशपरिणामसामान्य(न्यं) **विषयः स्यात्** दृष्टिः(दृष्टेः) इति सम्बन्धः। ज्ञान-ज्ञेयवदन्यत्रापि तत्सामान्यस्य निषेद्धुमशक्यत्वादिति भावः। अनेन कारिकायाः पाश्चात्यो भागो विवृतो न पूर्वः सुगमत्वात्।

५ यच्चान्यदुक्तम्–*"**मनोविकल्पमन्तरेण योजनासंभवात् मज्ञो(मनो)विकले च वस्तुप्रतिभासप्रत्ययस्तमयात्**" इति; तत्राह–**न चायम्** (**चेयम्**) इत्यादि। च शब्दः अपिशब्दार्थः भिन्नप्रक्रमः '**दृष्टिः**' इत्यस्यानन्तरं द्रष्टव्यः। तयोऽयमर्थः –**दृष्टिरपि न** केवलं मनोविकल्पः **इयं** परेण अभ्युपगम्यमाना अविक[ल्पिका] न **स्वकारणस्यैव** कारणशब्दात् सामान्यवाचिनोऽपि प्रकमाद् आलम्बनकारणस्य परिग्रहः। स्वशब्दाद् अव्यवहितकारणस्व(स्यै) **रूपं**

१० **स्वभावमनुकरोति**। कुतः ? इत्यत्राह–**क्वचिद्** इत्यादि। **क्वचित्** सितादिशङ्खादौ **स्वयम्** आत्मना न पारम्पर्येण **उपादानस्य** समनन्तरकारणस्य **रूपमनुकरोति अपि** न केवलं नानुकरोति, तत्र हि उत्तरोत्तरं पीतज्ञानं पूर्वपूर्वपीतज्ञानस्य आकारमनुकरोति नार्थस्य तदा[का]राभावात्। अयमभिप्रायः–मनोविकल्पस्य[क]चिदर्थाभावेऽपि प्रवृत्तिदर्शनात् तत्र सर्वत्र यदि वस्तुप्रतिभासप्रत्ययस्तमयः, दृष्टिरि(दृष्टेर)पि कस्याश्चित् अर्थाकारानुकरणाभावात् सर्ववस्तुप्रतिभासप्रत्ययस्तमय

१५ इति तथा **स्वकारणोपादानस्य च रूपमनुकरोति** अपि। [४९८क] अत्रापि '**क्वचित्**' इत्यनुवर्तते। **क्वचिद्** शीघ्रभ्रमदलाभा(दलाता)दौ दृष्टेः **स्वकारणम्** 'अनन्तरक्षणम्'[६] अनन्तर(रः) क्षणः, तस्य च यत् साक्षात् पारम्पर्येण **उपादानं** तयोः द्वन्द्वैकवद्भावः, तस्य च **रूपमनुकरोत्यपि**। स्वकारणस्यैव रूपानुकृतौ एकचक्रा[का]रा प्रतीतिर्न स्यात् सर्वदा प्रसङ्गात्। कथं भिन्नकालरूपानुकृतिरिति चेत् ? कथं भिन्नदेशरूपानुकृतिः ? यतो दूरविरलकेशेषु घनैकप्रतीतिः स्यात्।

२० अथ यावतो(न्तो)ऽलातक्षणाः तावत्य एव क्रमभाविन्यो दृष्टयः कल्प्यन्ते[७]; सन्तानान्तरवत् चक्रबुद्धिर्न स्यात्। मानसी सा इति चेत्; न; स्पष्टत्वात् द्विचन्द्रदर्शनवत्। ततः **स्वकारणोपादानस्य च रूपमनुकरोत्यपि**।

स्यान्मतम्–भासुरतामात्रानुकृतिरेव तत्र, नाशेषरूपानुकृतिः, न चैक(न वा एकत्वाद्याकारानुकृतिरिति चेत्; अ)त्राह–**कथञ्चित्** इत्यादि। **कथञ्चित्** भास्वरतामात्रेण न इतराकारेण

२५ **यत्सादृश्यं** सारूप्यं तस्य **अन्यत्रापि** प्रत्यक्षाभिमतेऽपि ज्ञाने **अनिवारणात्** इति। निरूपितमेतत्। कुत एतत् ? इत्यत्राह–**सर्वथा** इत्यादि। नीलाकारेणैव कारेणैक(नीलाकारेणेव एक)-त्वाद्याकारेऽप्यनुकरणम् **सर्वथानुकरणम्** तस्य स्वकारणं प्रत्य**संभवात्**। कार्यकारणयोरविशेषा(ष)-प्रसङ्गादिति।

ननु 'यत एव साक्षद्यते(साक्षादुत्पद्यते)ज्ञानं तस्यैव रूपमनुकरोति नापरस्य' इति कदा-

३० चित् निराकृतोऽपि परो[८] ब्रूयात्; तत्राह–**साक्षात्** इत्यादि। अव्यवधानेन **तस्मात्** स्वकारणोपादा-

(१) तदिति शब्देन। (२) सदृशपरिणामसामान्यस्य। (३) प्रकरणात्। (४) परिग्रहः इति सम्बन्धः तस्य। (५) मनोज्ञाने। (६) 'अनन्तरक्षणम्' इति व्यर्थमत्र। (७) तदा। (८) बौद्धः।

नात् उत्पत्तेरभावात् [४९८ख] अतत्प्रतिभासित्वं तदुपादानाप्रतिभासित्वमयुक्तम् । कुतः ? इत्याह–स्व आद(स्वप्नादा)वित्यादि । अत्र आदिशब्देन कामशोकाद्युपप्लवपरिग्रहः । नहि तत्रै साक्षादर्थो ज्ञानकारणम्, अभ्रान्तत्वापत्तेः । नापि तदाकारं ज्ञानम्[२]; चिरकालव्यवहितादपि तदाकारा[ज्]ज्ञानात् तत्रार्थप्रतिभासप्रतीतेः । तदे[व] तदुपादानमिति चेत्; एवं कालव्यवहितोऽर्थोपि त[३]ज्ज्ञानकारणम् इति न स्वप्नादिज्ञानस्य वासनामात्रभावित्वम् । तिमिरादिज्ञानं (नस्य) ५ च कथमेवंवादिनो निर्विषयता ; तत्रापि व्यवहितस्यार्थस्य कारणत्वोपपत्तेः । अव्यवहितार्थाभावात् निर्विषयत्वे ; अनन्तरोपादानाभावाद् अनुपादानं किन्न स्यात् ?

स्यादेतत्–लाक्षारसावसेकोपकृतकुसुमाहितशक्तिकात् कार्पाससन्तानाद् अन्तरालविजातीयनीलपत्रादिसंभवेऽपि यथा फले रक्तता, तथा नीलादिज्ञानाहितशक्तिकात् चित्तसन्तानात् विजातीयाऽन्तरालविज्ञानभावेऽपि स्वप्ने नीलादिज्ञानमिति ; तत्रापि यदि सजातीया(य)ज्ञानाहितवासनं १० भिन्नजातीयम् उपादानकारणम् ; न तर्हि साक्षात्कारणस्यैव आकारमनुकरोति व्यवहितस्याप्यनुकरणात् ।

परमतमाशङ्कते भ्रान्तेः इत्यादि ।

**[भ्रान्तेरदोषः स्वप्नादौ अन्यत्राप्यात्मनः कथम् ।**
**संवित्तेश्चेदभ्रान्तिः अविशेषात्सतोऽसतः ॥२४॥**　　१५

**तदतद्ग्रहणलक्षणत्वात् कथं च न दोष एव तल्लक्षणव्यभिचारेऽपि इति चित्रमेतत् ।]**

स्वप्नादौ भ्रान्तेः कारणाददोषः 'अर्थप्रतिभासाभावप्रसङ्गः' इति यो दोषः तस्याभावः ; साक्षादकारणस्यापि आकारानुकरणादिति चेत् ; अत्रोत्तरमाह–**कथम्** इत्यादि । [४९९क] **अन्यत्रापि** जाग्रज्ज्ञानेऽपि सौगतस्य **अभ्रान्तिः** कथम् ? कुतः ? इत्याह–**आत्मान(त्मन)** इत्यादि । **आत्मनः** स्वरूपस्य । किंभूतस्य ? **सतः** विद्यमानस्य । कस्य(स्याः) ? **संवित्तेः** २० अर्थस्य घटादेः **असतः** प्रतिपत्ते**रविशेषात्** । उभयत्रापि प्रतिभासाभेदात् कथमन्यत्रै भ्रान्तिरिति?

उपसंहारमाह–'**तद**' इत्यादि । यस्मादेवं **तत्** तस्मात् **अतद्ग्रहणलक्षणत्वात्** न तद्त्त (तद् अतत् त)स्य **ग्रहणं** तदेव **लक्षणं** यस्य तस्य भावात् तत्त्वात्, अन्यस्य **कथंचन दोष एव** । कस्मिन् सति ? आह–लक्षणा(ण)**व्यभिचारेऽपि** तदुत्पत्तिसारूप्ये बहिरर्थदर्शनलक्षणं तद्व्यभिचारेऽपि **इति चित्रमेतत्** । अनेन सौत्रान्तिकस्य सर्वत्र विभ्रमेतररूपतां दर्शने दर्शयति । २५

'यस्मात् यत् साक्षादुपाश्राय ते(दुत्पद्यते) तस्येव द्रूय(तस्यैव तद्रूप)मनुकरोति' इत्यत्र पुनरपि दूषणमाह–**तद्रूपानुकृतौ** इत्यादि ।

**[तद्रूपानुकृतौ हेतुः तत्साक्षाज्जन्मतैव न ।**
**परिणामाविनाभावात् गर्भपित्रादिरूपवत् ॥२५॥**

**न वै गर्भः साक्षात्तदुत्पत्तिरपि पितृरूपमनुकरोति । साक्षादनुत्पत्तेः, तथापरिणाम** ३०

(१) स्वप्नादौ । (२) तत्र कारणम् । (३) स्वप्नादिज्ञान । (४) स्वप्नादौ ।

एव तदाकारानुकारित्वलक्षणं पितामहाद्याकारानुकारित्वोपपत्तेः । तथा च प्रत्यक्षवत् स्मृतिप्रत्यभिज्ञानतर्कादेरतीतार्थानुकरणात् वस्तुनि सङ्केतो न पुनर्व्यावृत्तौ नीरूपत्वात् खपुष्पवत् । वस्तुतत्परिणामस्यैव वस्तुनि भावात्, अविरोधात् । अर्थक्रिया[करणाच्च] तत्रैव सङ्केतः फलवान् व्यवहारकालेऽपि तद्भावान्नान्यत्र । अन्यथा प्रत्यक्षानुमानयोरपि
५ निरर्थकत्वम् । नहि तयोरकारणं विषयः, कारणं व्यवहारकाले न संभवत्येव अक्षणिकतापत्तेः । विकल्पकल्पितान् दृश्यप्राप्यैकत्वादवस्तुनः अर्थक्रियासिद्धौ स्वलक्षणदर्शनं क्वोपयुज्येत ? तत्कारणत्वेऽपि…]

तस्य विवक्षितस्य रूपं तस्यानुकृतौ क्रियमाणायां हेतुः कारणम् तस्माद् विवक्षितात् साक्षाद् अनेन (अव्यवधानेन) जन्म यस्य तस्य भावः तत्ता सैव न । कुतः ? इत्याह–
१० परिणामाविनाभावा[त्] तद्रूपानुकृतौ इति । निदर्शनमाह–गर्भ इत्यादि ।

कारिकार्थमाह–पितृरूपम् इत्यादिना । अनेन व्यवहितकारणरूपानुकरणं कार्यस्य दर्शयति । नहि पितुः साक्षादपत्यं भवति शुक्रादेस्तथा ततो भावात् । तस्यापि तद्रूपानुकृतिरिति चेत् ; अत्राह–साक्षात् इत्यादि । ननु गर्भः शुक्रशोणितसंपातः पितृरूपमनुकरोति । किंभूतः ? इत्याह–साक्षात्तदुत्पत्तिरपि साक्षात् तस्मादप्युत्पत्तिर्यस्य इति । [४९९ख]

१५ द्वितीयं निदर्शनं व्याख्यातुमाह– साक्षादनुत्पत्तेः इत्यादि । विवृतमेतत् । (तमेतत् ) । यदि साक्षात् तज्जन्म नाकाराधानकारणं किं तर्हि स्यात् ? इत्यत्राह–तथा तेन व्यवहितेऽपि कार्ये तदाकारसमर्पणप्रकारेण परिणाम एव तदाकारानुकारित्वलक्षणं विवक्षितवस्त्वाकारित्वज्ञापकम् । पितामहाद्याकारानुकारित्वस्य उपपत्तेर्दर्शना[त्] । भवत्वेवं तथापि प्रकृतं किं सिद्धम् ? इत्याह–तथा च इत्यादि । तेन हि तका(तत्का)रणाकारानुकरणप्रकारेण च
२० प्रत्यक्षस्य च (स्येव)तद्वत् स्मृतिप्रत्यभिज्ञानतर्कादेरतीतार्थानुकरणात् कारणाद् वस्तुनि सङ्केतो न पुनर्व्यावृत्तौ । कुतः ? इत्याह–नीरूपत्वात् व्यावृत्तेरिति 'खपुष्पवत्' इति सूक्तम्–*"तस्य य(व्य)पोह(ह्य)वस्तुषु भावात्"[2] तत्कथं नीरूपत्वमिति चेत् ? अत्राह– वस्तु इत्यादि । वस्तु च तत्परिणामश्च सः सादृश्यरूपः तस्यैव वस्तुनि खण्डादौ भावात् न एकान्तवादिकल्पितस्यापोहादेः इत्येवकारार्थः । एतदपि कुतः ? इत्याह–अविरोधात् प्रमाण-
२५ बाधाभावात् । साधनान्तरमाह–अर्थक्रिया इत्यादि । तत्रैव सदृशपरिणाम एव सङ्केतः फलवान् व्यहारकालेऽपि तस्य भावात् नान्यत्र फलवान् विपर्ययादिति भावः । यच्चान्यदुक्तम्–

*"शब्दाः सङ्केतितं प्राहुः व्यवहाराय स स्मृतः ।
तदा स्वलक्षणं(णे) नास्ति सङ्केतस्तत्र तेन [न] ॥"[प्र० वा० ३।९१] [इ]ति ।

तत्राह–अन्यथा इत्यादि । अन्येन वस्तुनि सङ्केताभावप्रकारेण अन्यथा प्रत्यक्षानुमानयोरपि
३० [५००क] न केवलं शब्दस्यैव निरर्थकत्वं निष्फलत्वम् । एतदेवाह–न हिर्यस्मात् तयोः प्रत्यक्षा-

(१) निःस्वभावत्वात् । (२) तुलना–"तस्य वस्तुषु भावादि साकारस्यैव साधनम्"–न्यायवि० १।१४८ ।

नुमानयोः **अकारणं विषयः** किन्तु कारणमेव, परापेक्षया[1] इदमुक्तम् । भवत्वेवमिति चेत् ; अत्राह-**कारणं व्यवहारकाले न संभवत्येव अक्षणिकतापत्तेः** । तथाहि—पूर्वकालभावि कारणम् पूर्वं[2] सौगतानाम् । न च तत्र[3] योगिनापि प्रवर्तितुं शक्यम् । नापि वर्त्तमाने ; तस्य अकारणत्वेन तद्विषयत्वात्[4] । तथापि प्रवृत्तौ न प्रमाणात् प्रवृत्तः स्यात् । न च तस्य देशभिन्नस्य तदेव (तदेव) प्राप्तिः। नहि यदेव धूमादग्निः अनुमीयते, तदेव प्राप्यते । अप्रवृत्तिः इति　५
चेत् ; तदकारणं नास्ति सङ्केतितवत् । तत्सदृशे भाविनि प्रवृत्तौ तत्रापि प्रवृत्तिर्यथा देवदत्तसदृशे यज्ञदत्ते इति ; तर्हि सङ्केतितसदृशे[5] प्र[वृ]त्तिरस्तु । भ्रान्तिरुपचारो वा स्यादिति चेत् ; प्रत्यक्षादौ तथैव भाविनि[6] । भ्रान्त्यैव तत्[7]प्रमाणमिति चेत् ; शब्दो[8]ऽप्यस्तु, तथा च कुतः प्रमाणद्वयम् ? अथ सङ्केतव्यवहारकालार्थयोः भिन्नसन्तानत्वात् न ; एकान्तेन सन्तानभेदाभावात् ; एकस्मिन्नपि देवदत्तसन्ताने सङ्केतव्यवहारयोर्दर्शनात् ।　१०

किंच, प्राप्य-प्रत्यक्षादिकारणयोः[9] एकसन्तानतानिश्चयः कुतः ? सादृश्यादिति चेत ; न; व्यभिचारात् यमलकेन । 'हेतुफलभावाधिकात्[10]' इति चेत ; न; सुगतेतरज्ञानेन[11] [व्यभिचारात्] । [12]पूर्वस्य च रसत्वे चान्यस्य तत्सदृशस्य कुतश्चित् सन्निधानाशङ्कायां दुरवबोधमेतत् । नहि कार्यमेव अनन्तरं सदृशं वा ; सर्वस्यापि तथाविधस्य [५००ख] कार्यत्वप्रसङ्गात् । ततः सूक्तम्—**'कारणं व्यवहारकाले न संभवत्येव'** इति ।　१५

भावि तयोः कारणम् तत्र (तद् भावि) काल एव संभवात्य परः (वर्तीत्य) परः[13]; शब्दस्यापि यदि व्यवहारकालोऽर्थः कारणं को दोषः ? चिरभावी कथं कारणमिति चेत् ; कथं मरणादिः तथाविधः[14] अरिष्टादेः येन[15] अतः तदनुमानं कार्यलिङ्गज (ङ्गजं स्यात्) ? नरकादिदेशव्यवहितं कथं देशान्तरे शब्दकारणमिति चेत ; उक्तमत्र कथं भवतोऽपि स्वप्नान्तिकशरीरं देशान्तरे सुप्तशरीरात् ? सुप्तादेर्वा देशान्तरनीतस्य[16] पूर्वचित्तात्[17] प्रबोध इति ।　२०

ननु यद्यर्थात् कुतश्चित् शब्दस्य जन्म ; तदा (तद्)भावे[18] स न भवेत् , भवति च [19]अन्यथापीति चेत ; उच्यते—यदि [20]प्राप्या[त्] दृश्यस्य जलाभासस्य[21] जन्म, कथं मरीचिकाचक्रे[22] ? नहि तत्र स्नानादिकं प्राप्यमस्ति । भ्रान्तः स इति चेत् ; अन्यत्र समानम् । अर्थभावाभावयोः

(१) बौद्धापेक्षया । "नाऽहेतुर्विषयः"–प्र० वार्तिकाल० ३।४०६ । "अहेतुश्च विषयः कथम्"–प्र० वा० । "नाकारणं विषयः"–प्र० वा० मनोरथ० २।२५३। (२) 'पूर्वं' इति निरर्थकम् । (३) पूर्वकालभाविनि । (४) ज्ञानाविषयत्वात् । (५) सदृशे प्रवृत्तौ । (६) प्रवृत्तौ भ्रान्तता स्यात् ।(७) प्रत्यक्षम् । (८) शब्दः प्रमाणम् । (९) प्रत्यक्षादिना यदेव दृष्टं स्वकारणभूतं वस्तु यच्च तेन प्राप्यम् प्रवृत्तौ सत्याम्, तयोरेकसन्तानतानिश्चयः कुतः इत्यभिप्रायः । (१०) 'कार्यकारणभावे सति सादृश्यात्' इत्यर्थः । 'हेतुफलभावः' इत्यधिकं विशेषणं 'सादृश्यात्' इति हेतौ देयमिति भावः ।(११)यदा सुगतः इतरजनज्ञानं जानाति तदा सुगतज्ञानेन इतरजनज्ञानस्य विषयतया कार्यकारणभावोऽस्ति, सादृश्यमपि ज्ञानरूपतया विद्यते एव, अतः तयोरेकसन्तानत्वं स्यादिति भावः । (१२) पूर्वं रसोऽपि सन् तस्माज्जायमानः कदाचित् अन्यः स्यात् अथवा सन्तानान्तरवर्ती सदृशो रसः स्यादिति शङ्का न निवर्तते । (१३) भाविकारणवादी प्रश्नाकरः । (१४) चिरभावी । (१५) अरिष्टादेः । (१६) पुरुषस्य । (१७) जाग्रच्चित्तात् । (१८) अर्थाभावे । (१९) अर्थाभावेऽपि । (२०) भाविनः । (२१) विपरीतज्ञानस्य । (२२) जलज्ञानं स्यात् ।

एकः शब्दः' ; कुत एतत ? प्रतिज्ञानात् ; अत एव प्राप्यार्थक्रियाभावाभावयोः जलप्रतिभास एकः स्यात । 'व्यवहारी तथा न मन्यते' इत्युभयत्र समानम् । तन्न किंचिदेतस्य (तत्) ।

ननु दृश्यप्राप्ययोरेक त्व (कत्वाध्य) वसायत (यात) दृश्य (श्यः) व्यवहारकालेऽप्यस्ति इति चेत ; अत्राह-विकल्प इत्यादि । **विकल्पेन कल्पितं दृश्यप्राप्ययोरेकत्वं** तस्मात **विकल्प-**
५ **कल्पिता[त्]** । किंभूतात ? **अवस्तुनः अर्थक्रियासिद्धौ** अङ्गीक्रियमाणायां **स्वलक्षणदर्शनं क उपयुज्येत** ? न क्वचित , विकल्पादेव सर्वदा प्रवृत्तिसद्भावात [५०१क] सोऽयं दृश्यप्राप्य-योरेकत्वाध्यवसायेन प्रत्यक्ष (क्षं) भाविनि प्रमाणमिच्छन अभ्यासेऽविकल्पकमेव इच्छतीति कथं स्वस्थः ?

किंच, दृश्ये प्राप्यस्य कुतश्चित सर्वथा आरोपे, तावन्मात्रमेव इति कथं तथापि प्रवृत्ति-
१० र्यतोऽस्य व्यवहारः सुघटः स्यात ? प्राप्ये दृश्यस्य प्राप्यवदस्यापि परोक्षता इति स एव प्रवृ-त्यभावः । नहि परोक्षे समारोपितमन्यथा भवति । कथञ्चिद्वादोऽनिष्टः परस्य । अथ विकल्प-कारणत्वाद[वि]कल्पः प्रमाणम ; तत्राह-**तत्कारणत्वेऽपि** इत्यादि । '**न चेयं दृष्टिः स्वका-रणस्यैव रूपमनुकरोति**' इत्यनुत्र (नुवर्तते) ।

पुनरपि युक्त्यन्तरमाह-**ज्ञानं नीलेन** इत्यादि ।

१५ **[ ज्ञानं नीलेन सारूप्यं स्वस्य रूपस्य दर्शयेत् ।**
**नो चेन्नीलान्तराणां वा सर्वथाऽयमसद्ग्रहः ॥२३॥]**

**वर्णाद्यात्मकोऽवबोधोऽयं स्वार्थेन स्वस्य अत्यन्तसारूप्यं स्वीकरोति न तत्कारणा-दीनामपि नीलान्तराणामिति कथं सम्भाव्यम् ? यतः अनन्यभागसाधारणोऽर्थात्मा प्रत्यक्षविषयः स्यात् । संविदां तदाकारानुकारित्वात् ।]**

२० **वा** इत्यवधारणे '**नीलेन**' इत्यस्यानन्तरं द्रष्टव्यः । **नीलेनैव** साक्षात कारणेनैव **ज्ञानं सारूप्यं स्वस्य रूपस्य** स्वभावस्य **दर्शयेत् सर्वथा** नीलत्वमात्रेणेव क्षणक्षयादिनापि **नो** न **चेत्** यदि **नीलान्तराणं (णां)** रूपस्य नीलेन सारूप्यं स्वस्य वा दर्शयेत् **अयं पर-स्यासंग्रहः (सद्ग्रहः)** विरूपाभिनिवेशः ।

कारिकार्थमाह-**अयं** स्वसंवेदनविषयो वा**ऽवबोधो** बाह्यघटादिज्ञानं सौत्रान्तिकस्य, **वर्णा-**
२५ **द्यात्मि (द्यात्म) कः** बाह्यरूपादिप्रतिबिम्बः **स्वार्थेन स्वस्य** साक्षात कारणेन **अर्थेन** नीलादि-विशेषेण **स्वस्य आत्मनः अत्यन्त[सा]रूप्यं** सर्वाकारसादृश्यं **स्वीकरोति न नीलान्तराणां स्वस्य सारूप्यं स्वीकरोति** । किंभूतानाम् ? **तत्कारणादीनामपि** इति । तच्छब्देन ज्ञानस्य स्वार्थो नीलादिविशेषः [५०१ख] परामृश्यते । **तस्य कारणमादिर्येषां** तत्सन्तानपातिनां सर्वेषामन्येषां वा तानि **तेषामपि इति कथं संभाव्यम् ?** न कथंचित् । **यतः** संभावनात्
३० **अनन्यभाग् असाधारणोऽर्थात्मा प्रत्यक्षविषयः** 'स्यात्' इत्यध्याहारः । एवं मन्यते-नहि

(१) एक एव शब्दः कथं प्रयुज्यते ? (२) दृश्यमात्रमेव । (३) प्राप्तु योग्यस्याभावात् । (४) सर्वथा आरोपे सति । (५) दृश्यस्यापि । (६) प्रत्यक्षम् । (७) इति चेत् । (८) योगाचारस्य ।

ज्ञानं स्वार्थस्यापि दायाद इव धनम् आकारं गृह्णाति इत्युच्यते । सदृशं च तत् सर्वनीलार्थैः इति । यदि स्वार्थेनैव सारूप्यम् ; तर्हि चित्रो मित्रानुकारीति लोके व्यपदेशो न स्यादिति ।

ननु स्वार्थस्यैव रूपं स्वीकुर्वेदुपलभ्यते ज्ञानम् [न] नीलान्तराणाम् तेन एवमुच्यते इति चेत् ; अत्राह–**तदाकार** इत्यादि । **तेषां** नीलान्तराणाम् **आकारानुकारित्वात् संविदाम् ।**

भवत्वेवम् , ततः किम् ? इत्याह–**प्रत्यक्षम्** इत्यादि ।　５

**[प्रत्यक्षं सदसद्रूपसामान्यार्थं तथा स्मृतिः ।**
**प्रत्यभिज्ञा वितर्कश्च सङ्केतस्तत्र नासति ॥२७॥**

**सदसदात्मनि प्रत्यक्षमन्यत्र स्मरणादिकं प्रमाणं तद्व्यवहारान्यथानुपपत्तेः । शब्दार्थविकल्पयोः तद्विषयत्वात् । तत्र समयः कर्तुं शक्यः फलवानपि तादृशस्त्रिकाल-विषयत्वात् । अन्यथा अर्थक्रियानुपपत्तेः कथं कुतश्चित् व्यवहारप्रवर्तनं यतः तत्प्रामाण्यम्,**　१०
**अर्थक्रिया[ऽभावे तदभावात् ।]**

**प्रत्यक्षं** चक्षुरादिज्ञानम् । तत् किंभूतम् ? इत्याह–**सद्** इत्यादि । **सच्च** विज्ञानं तस्य स्वयमुपलभ्यमानत्वात्–*"**उपलम्भः सत्ता**" [प्र० वार्तिकाल० ३।५४] इति, **असच्च** तत् स्वकारणकारणादिकम् , अस्य साक्षादप्रतीतेः **सदसती** तयो **रूपं** स्वभावो न व्यावृत्तिमात्रं ततो भिन्नं वा, तत्स्वामान्यं(**तत्सामान्यं**) च सदृशपरिणामलक्षण**मर्थो** यस्य　१५
तत्तथोक्तम् । यथा अर्थेऽदृष्टेऽपि तत्सदृशज्ञानदर्शनदर्शनात् 'नै' नीलादिता 'दृष्टा' इत्युच्यते, तथा शावलेयादावदृष्टेऽपि तत्सदृशखण्डदर्शनात् तत्सदृशपरिणामसामान्यं दृष्टमुच्यतामिति भावः । तवा च (तथा च) यदुक्तम् अ र्च टा दि ना–*"**एकव्यक्तिदर्शनकाले अन्यासाम-दर्शनात्** [५०२क] **कथं तदाधारं सामान्यं प्रत्यक्षतः प्रतीयते ?**" इति ; तदनेन निर-स्तम् । भवतु प्रत्यक्षं तदर्थम् , ततः किम् ? इत्याह–**तथा** तेन प्रकारेण **स्मृतिः** सदसद्रूप-　२०
सामान्यार्थेति, तथा **प्रत्यभिज्ञा** तदर्था, **वितर्कश्च** तदर्थः **सङ्केतः तत्र** तस्मिन् याये-(न्याये) सति **नासति** अपोहे अपि तु वस्तुनि ।

कारिकां विवृण्वन्नाह–**सदसदात्मनि** भावाभावात्मके वस्तुनि **प्रत्यक्षम् अन्यत्र स्मर-णादिकं प्रमाणम्** । कुतः ? इत्याह–**तद्व्यवहार** इत्यादि । प्रमाणव्यवहारस्य **अन्यथानुप-पत्ते**रिति निवेदितमेतत् ।　२५

ननु भवतु तत्र[३] प्रत्यक्षम् अन्यत्व (अन्यद्वा) प्रमाणम् , ननु (नतु) शब्दः तज्जो[४] वा विकल्पः तत्र प्रमाणम् , अन्यविषयत्वादिति चेत् ; अत्राह–**शब्द** इत्यादि । **शब्दस्वा (ब्दश्चाऽ) र्थविकल्प-[श्च]** न ईश्वरादिविकल्पः, तयोश्च **तद्विषयत्वात्** सदसदात्मकवस्तुगोचरत्वात् । तथा चोक्तम्–

***"सदसद्वस्तु (तदतद्वस्तु) वागेषा तदेवेत्यनुशासती ।**
**न सत्या स्यान्मृषावाक्यैः कथं तत्त्वार्थदेशना ? ॥"**　३०

[आप्तमी० श्लो० ११०] इति ।

---

(१) उत्तराधिकारी । (२) 'न' इति निरर्थकमत्र । (३) सदासदात्मकवस्तुनि । (४) शब्दजः । (५) सामान्य ।

ततः किं जातम् ? इत्याह–**समयः** सङ्केतः **तत्र** सदसदात्मनि वस्तुनि **शक्यः कर्त्तुं** न केवलं शक्य एव कर्तुम् अपि तु **फलवानपि** । कुतः ? इत्याह–**तादृशः** सदसदात्मनोऽर्थस्य **त्रिकालविषयत्वात्** । एतदपि कुतः ? इत्याह–**अन्यथा** इत्याद(दि) । अन्येन अर्थस्य त्रिकालविषयत्वाभावप्रकारेण **अर्थस्य** उत्तरकार्यस्य अनुभवस्य वा **क्रिया** करणं तस्याः **अनुपपत्तेः** इति ।

५ तस्याः किम् ? इत्याह–**कथम्** इत्यादि । **कुतश्चित्** प्रत्यक्षात् अनुमानाद्वा **व्यवहा[र]प्रवर्त्त[नं]यत** एकान्तवादिनः [५०२ख] **कथं तत्प्रामाण्यं** प्रत्यक्षादिमानत्वम् । ननु यदि नाम तदनुपपत्तिः प्रामाण्यस्य किमायातम् येन तत्र स्यात् ? इत्याह–**अर्थक्रिया** इत्यादि ।

एवं शब्दानां वस्तुनि सङ्केतं तत्र च तत्साफल्यं प्रतिपाद्य अधुना यदुक्तम्–*"**विवक्षाप्रतिबन्ध(बद्ध)जन्मानः शब्दाः तामेव सूचयेयुः**" इति[1] ; तद्दूषयन्नाह–**वाक्यानाम्** इत्यादि ।

१० **[वाक्यानामविशेषेण वक्त्रभिप्रेतवाचिनाम् ।**
**सत्यानृतव्यवस्था स्यात्तत्त्वमिथ्यादर्शनात् ॥२८॥**

**वाक्येषु वक्त्रभिप्रायसूचनेषु अविशेषेण तत्त्वविषयत्वमन्तरेण सत्यानृतव्यवस्था नोपपद्यते प्रत्यक्षवत् । संवृतेः मिथ्यैकान्तात्मकत्वात् तद्विकल्पात् कुतः तत्त्वप्रतिलम्भो यतो वादी विजयी स्यात् । बहिरन्तश्च प्रतिक्षणं परस्परात्मकं स्वलक्षणमनुभवतोऽपि**

१५ **तिमिरादिप्रत्यक्षस्य ज्ञानावरणकर्मण उदयोदीरणाभ्यामन्यत्र कुतः निरन्वयैकान्ते विपर्ययप्रतिपत्तिः ?]**

पदस्य अर्थव्यभिचाराद् व्यवहारानुपयोगाद् वाक्यानां विपर्ययात्[3] इति **वाक्यानाम्** इत्युक्तम् । तेषां किंभूतानाम् ? इत्याह–**वक्त्रभिप्रेतवाचिनाम्** विवक्षितवाचिनाम् इत्यर्थः । केन ? इत्याह–**अविशेषेण** साकल्येन यथा हरिहरहिरण्यगर्भवाक्यानां तद्वाचित्वम् ; तत्राह–

२० **सत्यानृतव्यवस्था** सुगतवाक्यानां **सत्यव्यवस्था** क ण च रा दिवाक्यानाम् **अनृतव्यवस्था** या सा **स्यात् न** । पूर्वकारिकातो '**न**' इत्यनुवर्त्तते । क **(वक्त्र)भिप्रेतवाचिनाम्**इत्येतद्विशेषणं हेतुश्च अविशेषेण तद्वा[चित्वा]दिति । एवं मन्यते–तद्वाचित्वात् यदि सुगतवाक्यानां सत्यव्यवस्था अन्येषामपि[5] स्यात् । नहि तान्यपि वक्त्रभिप्रेतादन्यत्र वर्त्तन्ते । अथ तेषां तत्त्वप्रतिपादनाभावादनृतव्यवस्था ; अत एव सुगतवाक्यानामपि ईयमेवास्तु[6] । नैवम् ,

२५ अर्व (अर्थ) प्रतिबन्धेतरकृतं(त) विशेषसद्भावात्[7] । तथाहि–अर्थेभ्यः सुगतज्ञानं[8] ततो वाञ्छा तस्याश्च वाक्यानि, नैवमन्यत्र । ततोऽपि तद्व्यवस्था अनुमान(नं) तदा भवदुक्तम्(भवेत् , तदुक्तम्–) *"**मणिप्रदीपप्रभयोः**" [प्र०वा०२।५७] इत्यादि इति चेत् ; उक्तमत्र अनुमानवत्तेषां प्रमाणान्तरत्वमिति [५०३क] तत्र तद्व्यवस्था स्यादिति । कुतः स्यात् ? इत्यत्राह–**तत्त्वमिथ्या-**

(१) अर्थक्रियानुपपत्तिः । (२) तुलना–"वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते । प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ।"–प्र० वा० १।४ । (३) अर्थव्यभिचाराभावात् । (४) अभिप्रायवाचित्वात् । (५) कणादादिवाक्यानामपि । (६) अनृतव्यवस्थैव । (७) सुगतवाक्यं परम्परया अर्थप्रतिबद्धं नेतरवाक्यमिति । (८) उत्पद्यते । (९) 'मणिबुद्ध्याभिधावतोः । मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥' इति शेषः ।

**र्थदर्शना**दिति । **तत्त्वार्थस्य मिथ्यार्थस्य दर्शनात्** प्रतिपादनात्, दृशेर्णिजन्तस्य अयं प्रयोगः ।

कारिकार्थं कथयितुमाह–**वाक्य** इत्यादि । **वाक्येषु सत्यानृतव्यवस्था नोपपद्यते** । किं सर्वेषु ? न, इत्याह–**वक्त्रभिप्रायसूचनेषु** । तेष्वपि केषुचित् सा भव[ती]ति चेत् ; अत्राह–**अविशेषेण** इति । किमन्तरेण नोपपद्यते ? इत्याह–**तत्त्व** इत्यादि । अत्र दृष्टान्तमाह–**प्रत्यक्ष** ५ इत्यादि । न परमार्थतः तत्र तद्व्यवस्था अपि तु संवृतेः, अतः परमार्थतः तत्र तदभावसाधनं सिद्धसाधनमिति चेत् ; अत्राह–**संवृतेः** इत्यादि । सत्यानृतव्यवस्थाऽभावेऽपि तद्व्यवस्थाविकल्पः **संवृतिः** तस्याः **मिथ्यैकान्तात्मकत्वात्** मिथ्यारूप एकान्तः मिथ्यैकान्तः तदात्मकत्वात् कारणात् **तद्विकल्पात्** शब्दविकल्पात् **कुतो** न कुतश्चिन् **तत्त्वस्य** कृतकत्वादिसाधनस्य अन्यस्य वा **प्रतिलम्भो यतः** कृतकत्वादिवचनात् **वादी विजयी स्यात्** । नहि तद्विकल्पसंवृत्या तत्त्वविपर्यो १० व्यवस्थाप्यमानः तत्प्रतिलम्भहेतुः, अतिप्रसङ्गात् ।

स्यादेतत्–द्विचन्द्रदर्शितैमिरिकद्वयवत् सर्वत्र तद्व्यवस्था इति चेत् ; अत्राह–**तिमिर** इत्यादि । **स्वलक्षणमनुभवतोऽपि** न केवलमन्यस्य **विपर्ययविप्र(यप्र)तिपत्तिः** विपरीतार्थगृहीतिः । किंभूतम् ? इत्याह–**परस्पर** इत्यादि । भेदाभेदात्मकमित्यर्थः । क्व ? इत्याह–**बहिरन्तश्च प्रतिक्षणमनुभवन्तः(तः)** [५०३ ख] कस्य ? इत्याह–**प्रत्यक्षस्य** । किंभूतस्य ? इत्याह– १५ **तिमिर** इत्यादि । व्याख्यातमेतत् ।

सा तस्य कुतः ? इत्यत्राह–**कुतोऽन्यत्र** इत्यादि । **स्वयमुदयावी(दी)रणाभ्यां कुतोऽन्यत्र** अपि तु ताभ्यामेव तस्य [त]त्प्रतिपत्तिः इति । कस्य ताभ्याम् ? इत्याह–**कर्मणः** । किंभूतस्य ? इत्याह–**'ज्ञान'**[इत्यादि । कस्मिन् ?]इत्याह **निरन्वयैकान्त** इत्याद्य(दि । अयम)भिप्राय(यः)– द्विचन्द्रदर्श(र्शि)तैमिरिकद्वयस्य भ्रान्त्या शब्दव्यवहारदर्शनात् सर्वत्र तत्कल्पनाया(यां) प्रत्यक्ष- २० स्यापि व्यावर्णितरूपस्य मिथ्यादृष्टेः क्वचिद् विपर्ययप्रतिपत्तिदर्शनात् सर्वत्रानाश्वासः स्यादिति ।

ननु भवतु प्रत्यक्षस्य कर्मसंश्लिष्टस्य ताभ्यां तत्प्रतिपत्तिः शब्दस्तत्त (शब्दस्य तु) तद्विपरीतस्य सा कुतः ? इत्याह–**उदयोदीरणाभ्याम्** इत्यादि ।

**[उदयोदीरणाभ्यां च तदावारककर्मणाम् ।**
**मिथ्यार्थदर्शनज्ञानान्मिथ्यार्थत्वं गिरां स्मृतम् ॥२९॥** २५

**क्षायोपशमिकस्यापि भावस्य घातिकर्मोदयोदीरणाभावे तत्त्वप्रतिपत्तिः, न केवलं तज्जन्म [सारूप्याभ्याम्] तदनेन कुतश्चित्तत्त्वं व्यवस्थापयितुकामेन स्वाभिप्रेतमात्रं निरस्ततत्त्वं संसूचयितुमयुक्तम् पक्षान्तरानतिशायनात् । स्वयमभिमतस्य सत्यानृतस्य अनृतानृतात् न कश्चिद्विशेषं पश्यामः वक्त्रभिप्रायमात्रे तद्व्यापारोपगमात् ।]**

**गिरां** शब्दानां **मिथ्यार्थत्वं स्मृतं** पूर्वाचार्यैरनुज्ञातम् । कुतः ? इत्याह–**मिथ्यार्थ-** ३०

(१) 'दर्शनात्' इति । (२) विपरीतार्थगृहीतिः । (३) उदयोदीरणाभ्याम् । (४) विपर्ययप्रतिपत्तिः ।

**दर्शनज्ञाना**दिति । तदपि कुतः ? इत्याह–**उदयोदीरणाभ्याम्** । केषाम् ? इत्याह–**तद्** इत्यादि । [**तदि**]त्यनेन शब्दनिमित्ते दर्शनज्ञाने गृह्येते [**तदावारककर्मणाम्** ] ।

कारिकां विवृण्वन्नाह–**क्षायोपशमिकस्यापि** इत्यादि । **भावस्य** ज्ञानस्य । किंभूतस्य ? [**क्षायोपशमिकस्यापि**] क्षयोपशमप्रयोजनस्यापि । तस्य किम् ? इत्याह–**तत्त्वप्रतिपत्तिः** ।
५ कस्मिन् सति ? इत्याह–**घाति** इत्यादि । **घातिकर्मोदयोदीरणाभावे** सति इत्यर्थः । तदुत्पत्तिमात्रकृपाभ्यां स्यादिति चेत ; अत्राह–**न केवलं तज्जन्म** इत्यादि । प्रकृतं निगमयन्नाह–**तदनेन** इत्यादि । यत एवं **तत्** तस्मात् **अनेन** सौगतेन **तत्त्वं** चतुरार्यसत्यादिलक्षणं त्रिरूपं हेतुलक्षणं वा वस्तु **कुतश्चित्** सुगतसम्बन्धिनोऽन्यसम्बन्धिनो वा वाक्याद् **व्यवस्थापयितुकामेन स्वाभिप्रेतमात्रम्**, किंभूतम् ? **निरस्ततत्त्वं संसूचयितुमयुक्तम्** 'वाक्यात्' इति घटना ।
१० अन्यथा गां प्रतिपादयितुकामेन अश्वोऽपि सूचयितुं युक्तः स्यात् । अप्रकृतत्वमुभयत्र । गत्यन्तरस्याभावात तत्सूचनमिति चेत ; न ; तद्भावप्रतिपादनात ।

किंच, साधु कर्तुमशक्तिमता साधुना किमसाधु कर्तव्यम ? तत्र उपेक्षैव तस्य[1] न्यायो (न्याय्ये)ति भावः । कुत एतत ? इत्याह–**पक्षान्तर** इत्यादि । सौगतपक्षात नित्यादिपक्षः **तदन्तरं** तस्मादनतिशायनात् स्वपक्षस्य, तत्सूचनस्याविशेषात्[2] इति ।

१५ ननु सौगतपक्षे वाक्यस्य क्षणक्षयविज्ञानविभ्रमशून्यैकान्ते यद्यपि विसंवादः तथापि न रूपादौ, वक्त्रभिप्रायद्वारेण ततः तत्प्रतीतेः, पक्षान्तरे तु सर्वत्र विसंवादः तत्कथमुच्यते '**पक्षान्तरानतिशायनात्**' इति चेत् ; अत्राह–'**सत्यानृतस्य**' इत्यादि । **सत्यं** च तद् रूपादौ **अनृतं** च क्षणिकत्वाद्येकान्ते **सत्यानृतं** शास्त्रं **तस्य** । किंभूतस्य ? **स्वयं** बौद्धेन **अभिमतस्य** अङ्गीकृतस्य **अनृतात्** सतोऽप्यर्थस्याप्रतिपादनं तत्प्रतिपादनाभिप्रायेण सौगतैः प्रयुज्यमानं
२० वचनमनृतं **तस्माद**पि अत्यन्तासतोऽक्षणिकत्वा(द्ये)कान्तस्य प्रतिपादनाभिप्रायेण[५०४ख] प्रयुज्यमानमृत (नम् अनृत)**मनृतानृत**(तं)**तस्मात् कंचि**[**द्विशेषं न पश्यामः**] तत्त्वज्ञानात इत्यर्थः । न च परस्य तदस्ति, **वक्त्रभिप्रायमात्रे तद्व्यापारोपगमात्** , सतोऽपि रूपादेः बहिः शब्देनाप्रतिपादने असदविशेषात इति भावः ।

कथं तत्त्वे असम्बन्धाच्छब्दात[3] तत्त्वज्ञानं भवत्पक्षे[4]ऽपीति चेत् ? अत्राह–**वाच्य-**
२५ **वाचकसम्बन्ध** इत्यादि ।

**[वाच्यवाचकसम्बन्धः स्वतः शङ्काऽन्यथा कथम् ?**
**असङ्केतितानन्तवाच्यभेदेऽपि गिरां श्रुतौ ॥३०॥**

**वाच्यवाचकयोः स्वतः सम्बन्धः कथञ्चित् सिद्धः परिणामविशेषात् चक्षूरूपवदिति । कथमन्यथा किमयमाहेति वाच्यविशेषशङ्का उपपद्येत अप्रतिपन्नरूपदर्शिनः**
३० **तद्विशेषवत् । कथम् ?]**

(१) साधोः । (२) वक्त्रभिप्रायमात्रसूचनस्य समानत्वात् । (३) असम्बद्धात् । न विद्यते सम्बन्धो यस्येति । (४) जैनपक्षे ।

**वाच्यो** घटादिः **वाचको** घटादिशब्दः तयोः **सम्बन्धो**ऽविनाभावः । **स्वतः** स्वमाहात्म्यात् । न सङ्केतमात्रादेव इत्यर्थः । **कथमन्यथा** अन्येन स्वतः सम्बन्धाभावप्रकारेण **शङ्का** संशीतिः । कदा ? इत्याह–**गिरां** शब्दानां **श्रुतौ** समीचीनश्रवणेऽ**पि** न केवलमश्रवणे । क ? इत्याह–**असङ्केतितानन्तवाच्यभेदे** । अनेन तद्भेदे न सामान्ये शङ्केति दर्शयति । ५

कारिकां विवृणोति–**वाच्यवाचकयोः** घटतच्छब्दयोः **स्वतः सम्बन्धः** । स्वतः संभवंति (संभवन् नि)त्यः स्यात् । *"**औत्पत्तिकस्तु शब्दार्थसम्बन्धः**" [मी०सू० १।१।५] स्वाभाविक इत्यर्थः । तथा च मीमांसकपक्षः, तदुक्तम्–*"**नित्याः शब्दार्थसम्बन्धाः**" [वाक्य प० २।२३] इत्यादि; अत्राह–**परिणामविशेषादि** वाच(दिति । वाच्य)वाचकयोः यः **परिणामविशेषः** तदभावे उभयोरभाव इति **तस्मात्, कथञ्चित्** देशनादि(देशादि)नियतत्वेन **सिद्धो** निष्पन्नो निश्चितो वा **सम्बन्ध** इति । निदर्शनमाह–**चक्षु(चक्षू)रूपवदिति** । चक्षु-(चक्षू)रूपयोरिव तद्वत् । उपलक्षणमेतत्, श्रोत्रादिशब्दादीनां परिणामविशेषस्तत्सम्बन्धादेव चक्षुरेव रूपमेव प्रकाशयति न घ्राणादिकं[५०५क] रसादिकं वा । १०

स्यान्मतम्–चक्षुषो रूपेण सन्तानवृत्त्याऽतिशयः कश्चिदापादितोऽस्ति, न तत्तदेव प्रकाशयति, नैवम् अर्थेन शब्दस्य, तत्कथं दृष्टान्तदार्ष्टान्तिकयोः साम्यमिति ; तदसत् ; यतः चक्षुषा रूपस्य किमिदं प्रकाशनम् ? तत्र ज्ञानजनकत्वं चेत् ; स्वसमानकालभाविनि रूपक्षणे तज्ज्ञानं जनयति, कथमन्यथा तज्जनने रूपलक्षणः(रूपक्षणः) तत्सहकारी यतो ज्ञानेन गृह्येत, अकारणस्याविषयत्वात् ? न च समानसमयेन तत्क्षणेन चक्षुषोऽतिशयः क्रियते । तत्कारणं (तत्करणं) हि तज्जननान्[नाऽ]परम् । एकलक्षण(एकक्षण)योश्च हेतुफलभावः सन्ताननाशकृत् । तन्न चक्षुःसहकारिणा रूपेण[कश्चिदतिशय]स्तथापि तत्प्रकाशयति तत् । अथ तदुपादानेन तदुपकारः क्रियमाणः तेन कृत इत्युच्यते सन्तानापेक्षया ; तदपि न सुन्दरम् ; एवं हि रसादिनापि कृतः इति स्यात् । यथैव हि [11]तद् रूपग्राहकरूपजनकं तथा तत्समानकालरसादेरपि । कथमन्यथा [12]तयोः एकसामग्र्यधीनता । नोपादानत्वेन इति चेत् ; न ; उपादानेतरभावस्य भेदैकान्ते[अ]प्रमाणत्वादिति प्रतिपादितम्, अन्वयव्यतिरेकानुकरणस्य सर्वत्राविशेषात् । भवतु रसादेरपि तदुपकार इति चेत् ; न ; तस्यापि तेन[13] प्रकाशनप्रसङ्गात् । अयोग्यत्वान्नेति चेत् ; तर्हि योग्यतैव प्रकाशननिबन्धनमस्तु किं तदुपकारकल्पनया ? १५ २० २५

किंच, पूर्वापररूपमेत्कणाममे(रूपक्षणानामे)वैकसन्तानत्वेऽपि नीलतामिव जडतामपि तेषां [14]तत्प्रकाशयेत्, [15]तस्याः अपि [तदुपकारकत्वात्] अन्यथा अंशेन जन्यजनकभावः । न

(१) मीमांसकः प्राह । (२) 'शब्दस्यार्थेन सम्बन्धः'–मी० सू० । (३) 'तत्राम्नाता महर्षिभिः । सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥' इति शेषः ।(४) कश्चिदतिशय आपाद्यते । (५) रूपक्षणेन । (६) अतिशयकरणम् । (७) समानसमयवर्तिनोः कार्यकारणभावे न सन्तानः स्यात्, सर्वेषामेकक्षणे एव उत्पद्य अनन्तरं नाशात् । (८) वर्तमानरूपक्षणस्य उपादानेन पूर्वरूपक्षणेन । (९) चक्षुषः क्रियमाणः उपकारः । (१०) वर्तमानरूपेण । (११) पूर्वरूपम् (१२) रूपरसयोः (१३) चक्षुषा । (१४) चक्षुः । (१५) जडतायाः ।

चैवम । ततो योग्यतैवास्तु इति साधूक्तम् चक्षु(क्षू)रू[पादिवदि[1]]ति ।

तदनभ्युपगमे दोषमाह–**कथमित्यादि** । **कथम् अन्यथा** अन्येन स्वतः सम्बन्धाभाव-प्रकारेण **उपपद्येत** घटेत । का ? इत्याह–**वाच्यविशेषशङ्का** । किंभूता ? इत्याह–**किमयमाह** इति । कुतः ? इत्याह–**अप्रतिपन्न** इति । निदर्शनमत्राह–**रूपदर्शिनः** पुरुपस्य **तद्विशेषवत्**

५ रूपविशेष इव ।

परमतमाशङ्कते निग[कर्त्तुं]'**कथम्**' इत्यादि । तत्रोत्तरमाह–**यथा** इत्यादि ।

**[यथा प्रत्यक्षभेदाः स्युः समयापेक्षनिर्णयाः ।**
**तथा शब्दार्थभेदाः स्युः सङ्केतापेक्षनिर्णयाः ॥३१॥**

**प्रत्यक्षेण विषयीकृतेषु स्वपररूपादिविशेषेषु यथा कृतसङ्केतनिश्चयपाटवाः स्वानु-**

१० **भूतविशेषान् विवेचयन्ति न तथेतरे । न चैतावता इतरे अनुपलब्धा एव, सत्यपि सङ्केते तथाऽप्रतिपत्तिप्रसङ्गात् । तथा शब्दार्थोपलम्भिनः समयस्तद्विशेषनिर्णयहेतुः । कथं पुनः स्वाभाविकः सम्बन्धः सङ्केतादन्यथा क्रियेत ? न हि भावस्वभावाः पुरुपेच्छया परावर्त्यन्ते निःस्वभावताप्राप्तेः ? वचनं तु दाराः पण्णगरीत्यादौ यथा वाचकत्वेन वक्तृभिर्नियम्यते तत्तथैवानपेक्षितबाह्यार्थं परावर्त्यम् । नैतदेवम्, परमार्थतः तत्सम्बन्धव्यपदेशयोः सङ्करव्य-**

१५ **तिकरप्रसङ्गात् ।]**

प्रत्यक्षप्रमितोऽर्थः **प्रत्यक्षः** तस्य **भेदाः** अवान्तरविशेषाः **यथा** येन तथा योग्य-[ताप्र]कारेण अन्येन वा **स्युः** भवेयुः । किंभूताः ? इत्याह–**समयापेक्षनिर्णयाः** समयापेक्षः निर्णयो येषामिति, सङ्केतग्रहणमुपलक्षणं तेन दर्शनपाटवादेरपि ग्रहणम् । **तथा शब्दार्थभेदाः स्युः सङ्केतापेक्षनिर्णयाः ।**

२० एवं मन्यते–यथा अनुभवः स्वार्थभेदनिश्चये स्वतो योग्योऽपि, न हि तस्य तद्योग्यता निश्चयेन क्रियते अन्योऽन्याश्रयदोष(षात्), न स्वसत्तामात्रेण निश्चयं तत्र जनयति क्षणभङ्गादौ प्रसङ्गात्, अपि तु सहकारिकारणं सङ्केतादिकमपेक्ष्यत(क्षते) तथा शब्दोऽपि स्वतो योग्यत[2] एव स्वार्थविशेषे सङ्केतमपेक्ष्य निर्णयं जनयति । तथादृष्टेरुभयत्र समत्वादिति ।

कारिकां विवृण्वन्नाह–**प्रत्यक्षेण** इत्यादि । [**प्रत्यक्षेण**] चक्षुरादिदर्शनेन **विषयीकृतेषु** । केषु ?

२५ [५०६क] **स्वपररूपादिविशेषेषु** **स्वं** च प्रत्यक्षं **परश्च** बहिर्घटादिः तयोर्यथासंभवं ये **रूपादि-विशेषाः** तेषु **यथा कृतसङ्केतनिश्चयपाटवाः** कृतश्चासौ **सङ्केतश्च** तेन **निश्चयपाटवं** येषां ते तथोक्ताः **यथा स्वानुभूतविशेषान् विवेचयन्ति** व्यवस्यन्ति **न तथा इतरे** [अ]कृतसङ्केतपाटवः (वाः) तथा न ताव यं ति (तान् व्यवस्यन्ति) **न चैतावता तैरितरे** विशेषाः **अनुपलब्धा एव** अपि तु उपलब्धाः । कुतः ? इत्याह–**सत्यपि सङ्केते तथाऽप्रतिपत्तिप्रसङ्गात् । तथा**

३० **शब्दार्थोपलम्भिनः समयः** सङ्केतः **तद्विशेषनिर्णयहेतुः** शब्दार्थभेदनिश्चयकारणम् ।

परः प्राह–'**कथम्**' इत्यादि । **कथं पुनः स्वाभाविकः** वाच्यवाचकयोरात्मभूतः योग्यता-

(१) अत्र प्रतिः त्रुटिता । (२) योग्यत्वादेव ।

लक्षणः **सम्बन्धः सङ्केतादन्यथा** अर्थान्तरप्रतिपादनप्रकारेण **क्रियेत** । अयमभिप्रायः परस्य-शब्दस्य वित् (चेत्) सर्वत्र वार्थे स सम्बन्धः, प्रतिनियते वा ? प्रथमपक्षे युगपत् ततः सकलार्थप्रतीतिः स्यात् । इतरत्र विपरीतसमयाद् अर्थान्तरे प्रवृत्तिर्न स्यात् । अथ सङ्केतान्तराद् अर्थान्तरप्रतिपादनयोग्यता अस्य इति चेत्; अत्राह–**नहि** इत्यादि । हिर्यस्मात् **न भावानां** शब्दादीनामर्थानां **[स्व]भावाः [पुरुष]च्छया परावर्त्यन्ते** अन्यथा अन्यथा च जायन्ते । ५ कुतः ? इत्याह–**निःस्वभावता**[प्राप्ते स्तद्भा]विनामिति । शब्दस्वभावोऽपि तर्हि सङ्केतानु (तान्न) परावर्त्तत (वर्त्येत) इति चेत्; अत्राह–**वचनं** न्वि[[1]त्वित्यादि । **दाराः पण्णगरीत्यादौ]** **यथा वाचकत्वेन वक्तृभिर्नियम्यते तद्वचनम्** [५०६ख] **तथैवानपेक्षितबाह्यार्थं परा**व[[2]र्त्यमिति जातपरिणा]मेन सम्बन्धः । "**दाराः पण्णगरी**" इत्यादि अत्रोदाहरणम् । एतद् दूषयन्नाह–**नैतदेवम्** इत्यादि । **एतत्** परक[[3]ल्पितं भाषितं] **परमार्थतो नैवम्** । कुतः ? इत्याह–**तत्सम्बन्ध** १० (**तत्सम्बन्धे**) त्यादि । **तयोः** वाच्यवाचकयोः **सम्बन्धश्च व्यपदे**[शश्च अस्येदं] वाचकं वाच्यं चेति प्रतिपादनं तयोः **सङ्करः** सर्वेषामयोगव्यवच्छेदादीनामेव व (मेकत्र) गमनं **व्यतिकरः** परस्परविषयगमनम् तयोः **प्रसङ्गात्** ।

तत्प्रसङ्गोऽस्त्येव इति चेत्; अत्राह–**विशेषण** इत्यादि[4] ।

**[विशेषणविशेष्याभ्यामुक्तौ च क्रियया सह ।** १५
**अयोगं योगमपरैरत्यन्तायोगं न चान्यथा ॥३२॥**

**व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः ।**
**सामर्थ्याच्चाप्रयोगेऽर्थो गम्यः स्यादेवकारयोः ॥३३॥**

न वै पुरुषेच्छया चैत्रो धनुर्धर एव, पार्थ एव धनुर्धरः; नीलं सरोजं भवत्येवेति अयोगव्यवच्छेदादिस्वभावस्थितवाक्येषु अन्यथात्वं संभाव्यते, तथाप्रतिपत्तिप्रसङ्गात् । २० तत एव एवकारप्रयोगविकलेष्वपि वाक्येषु सामर्थ्यात् भवत्येव अयोगव्यवच्छेदादिप्रतिपत्तिः, न विवक्षया तत्प्रतिपत्तिः, तद्ग्रहणत्वात् । तथैव स्यात्कारप्रयोगविकलेष्वपि वाक्येषु स्वरूपादिप्रतिपत्तिः ।]

**विशेषणं** नीलत्वादि **विशेष्यम्** उत्पलत्वादि **ताभ्याम्, क्रिया** भवत्यादिका **तया च सहोक्तौ** द्र(प्र)योगे सति **अयोगं योगमपरैरत्यन्तायोगं व्यवच्छिनत्ति** । २५ कस्य ? इत्याह–**धर्मस्य** । कः ? इत्याह–**निपातः** । किं सर्वः ? न, इत्याह–**व्यतिरेचकः**

---

(१) अत्र प्रतिस्त्रुटिता । (२) तुलना–"यद् यथा वाचकत्वेन वक्तृभिर्विनियम्यते । अनपेक्षितबाह्यार्थं तत्तथा वाचकं वचः ॥ दाराः पण्णगरीत्यादौ..."–प्र० वा० ३।६५, ६६ । (३) अत्र प्रतिस्त्रुटिता । (४) तुलना–"अयोगं योगमपरैरत्यन्तायोगमेव च । व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः ॥ विशेषणविशेष्याभ्यां क्रियया च सहोदितः । विवक्षातोऽप्रयोगेऽपि सर्वोऽर्थोऽयं प्रतीयते ॥ व्यवच्छेदफलं वाक्यं यतश्चैत्रो धनुर्धरः । पार्थो धनुर्धरो नीलं सरोजमिति वा यथा ॥"–प्र० वा० ४।१९०-९२ ।

एवकार इत्यर्थः । तथा[हि]–विशेषणेन सहोक्तो [1]अयोगं विशेषेण(ष्येण) अन्ययोगं[2] क्रियया वा अत्यन्तायोगम् एवकारो धर्मस्य [व्य]वच्छिनत्तीति । पुरुषेच्छातो न स्वस्वभावत इति चेत्; अत्राह–न च नैव अन्यथा उक्तापिछातः(क्तोऽपीच्छातः) [3]तं तस्य सं[न्]व्यवच्छिनत्ति तथाऽदर्शनात् । नहि 'चित्रो धनुर्धर एव' इत्युक्ते इच्छातोऽपि [4]पर्योगस्य व्यवच्छेदः प्रतीतिविषः(षयः)

५ इतरथा यथाविन्यासमेव च इष्टार्थप्रतीतेः भिन्नप्रक्रमयोजनं सर्वत्र अयुक्तं भवेत् । स्यादेतत्–अनादिरयं सङ्केतो विशेषणादिना सह प्रयुज्यमान एवकारोऽयोगादिव्यवच्छेदकृदिति, ततः तथा प्रतीतिः न शब्दस्वभावात् [५०७क] अन्यथा सङ्केते हि तथैव तं व्यवच्छिनत्ति, न वादी प्रमादस्ति (न चात्र दोषोऽस्ति) इति; तदयुक्तम्; यतः तथा सङ्केतयतोऽपि लोकस्यानिवृत्तेः। न खलु 'पक्षस्यैव धर्मो हेतुः' इति वाक्याद् 'अयोगव्यवच्छेदं प्रतिपद्यस्व' इत्युक्तोऽपि लोकः तथा

१० प्रतिपद्यते इति ।

अत्रैव युक्त्यन्तरमाह–सामर्थ्याच्च इत्यादि । च शब्दः अपिशब्दार्थः भिन्नप्रक्रमः । ततोऽयमर्थः–अप्रयोगेऽपि अनुच्चारणेऽपि । कयोः ? स्यादेवकारयोः । किम् ? इत्याह–गम्यः । कः ? इत्याह–अर्थः । कुतः ? इत्यत्राह–सामर्थ्यात् । एतदुक्तं भवति–यदि इच्छात एव तदर्थः प्रतीयते, तदा [10]तदप्रयोगे तदिच्छास्तीति कुतो निश्चयः ? अथ च तदर्थः सामर्थ्यात्

१५ प्रतीयते इति ।

[कारि]काया युगलं विवृण्वन्नाह–चित्रो धनुर्धर एव इत्यादि । चित्रो विशेषः(ष्यः) तस्य धनुर्धर इति विशेषणम् अस्मात् परः एवकारः, पोऽर्थोजनो(पार्थः अर्जुनः) विशेष्यः अस्माच्च परः एव स (एवकारः) तद्विशेषणं धनुर्धर इति, 'नीलं सरोजम्' इति विशिष्टं कर्तृ निर्दिष्टं तत्क्रिया'भवति' इति, अस्याः पर एवकार इत्येवं यथा स्तम(स्वम्) अयोगा(ग)व्यव-

२० च्छेदादिना स्वभावेन स्थितानि यानि वाक्यानि तेषु नवै नैव पुरुषेच्छया अन्यथात्वं विपरीतत्वं संभाव्यते । कुतः ? इत्याह–तथा इत्यादि । तथा तेन पुरुषेच्छया अन्यथात्वप्रकारेण प्रतिपत्तिप्रसङ्गात् अयोगव्यवच्छेदादिसंवित्तिप्राप्तेः । अथवा 'तथा सौगताभिमतप्रकारेण प्रतिपत्तिप्रसङ्गात्' [५०७ख] इति ग्राह्यम् । विशेषणादिसहि स तान्न (सहितात्त)तो गर्दभादिप्रतीतिप्रसङ्गादिति ।

२५ अधुना 'सामर्थ्याच्च' इत्यादि व्याख्यातुमाह–तत एव इत्यादि । तत एव पुरुषेच्छया अन्यथा संभावनाभावादेव सामर्थ्याद् भवति अयोगव्यवच्छेदादिप्रतिपत्तिः । क ? इत्याह–वाक्येषु । किंभूतेषु ? इत्याह–एवकारतत्प्रयोगविकलेष्वपि । विवक्षया तत्प्रतिपत्तिरिति चेत्; अत्राह–न विवक्षया तत्प्रतिपत्तिरिति । तथाहि–*"पक्षधर्मस्तदंशेन व्याप्तः" । [प्र० वा० ३।१] इत्यादि वाक्ये अन्यथा विवक्षायामपि नान्यथात्वं संभाव्यते प्रमाणबाधनात्,

३० प्रत्यक्षाभासवत् ।

---

(१) असम्बन्धं व्यवच्छिनत्ति । (२) अन्येन सह सम्बन्धं व्यवच्छिनत्ति । (३) अत्यन्तसम्बन्धाभावं व्यवच्छिनत्ति, तत्र सम्बन्धमेव द्योतयति । (४) अयोगादिकम् । (५) विशेषणादेः । (६) एवकारो निपातः । (७) अन्यसम्बन्धस्य (८) चैत्राद् भिन्नस्य मैत्रस्यापि धनुर्धरत्वाविरोधात् । (९) सङ्केतात् । (१०) एवकाराद्यप्रयोगे ।

ननु यदि एवकारप्रयोगविकलानि वाक्यानि कानिचित् सन्ति, कुतः तेषु इदमवगम्यते–'अयमर्थः अत्र एवकारस्य' इति ? नहि शशशृङ्गस्य अयमर्थ इति शक्यमवसातुम् । अदर्शनमुभयत्र, इति चेत् ; अत्राह–**तद्ग्रहणत्वादिति** । **तेन** सामर्थ्यलभ्येन **अर्थेन ग्रहणम्** उपादानं यस्य एवकारस्य तस्य भा[वा]त्तत्त्वात् । यथैव हि धूमः प्रतीयमानः स्वकारणमग्निं [त]दविनाभावाद्गमयति तथा अर्थोऽपि कुतश्चित् प्रतीयमानः स्ववाचकमव्यभिचारं[1] । तद्यथा, *"**नेधुखे[ऽ]गे**" ५ [जैनेन्द्र० १।१। १८] इत्यनेन घोः (धोः) एत्वे (एत्वेप) योः प्रतिषेध उच्यमानः तयोः विकारि-[विकारत्व] द्भावं सूचयति तदभावे तयोरभावात् प्रतिषेधानुपपत्तिः । ततो ज्ञायते 'न घोः(घोः) सर्वस्य खे' इति, सोऽपि ज्ञायमानः श्रुतार्थापत्त्या एकदेशशब्दं गमयतीति, लोकेऽपि 'स्थूलबहलो देवदत्तो दिवा न भुङ्क्ते' इति वाक्यं [५०८क] 'रात्रौ भुङ्क्ते' इति गमयति । एतत् स्यात्कारेऽपि अतिदिशन्नाह–**तथैव** इत्यादि । तेन सामर्थ्यप्रकारेण **स्यात्कारविकलेष्वपि** १० **वाक्येषु** । किम् ? इत्याह–**स्वरूपादि** इत्यादि ।

प्रमाणविरोधं दर्शयन्नाह–**चैत्रस्यायो**(स्य इत्यादि ।)

**[चैत्रस्यायोगे व्यवच्छिन्ने योगः प्रतिपादितो भवेत् ।**
**सर्वथा चैत्रता सिध्येन्न च स्याद्वादविद्विषाम् ॥३४॥**

**चैत्रो धनुर्धर एव इति**···**तदयुक्तम्–पक्षधर्म एव** इत्ययोगव्यवच्छेदेन **विशेषणम्** । १५ **यदि पुनः** अन्ययोगव्यवच्छेदेन **पक्षधर्मं विशेषयेत् पक्षस्यैव धर्मो हेतुरिति; तद्विशेषणापेक्षस्य हेतोरसाधारणता** अन्यत्राप्यवृत्तेः इत्ययुक्तम्, **कथम् ?]**

(अयम)भिप्रायः–**चैत्रस्य** धनुषा **अयोगे व्यवच्छिन्ने योगः प्रतिपादितो भवेत्** इतरथा 'चैत्रो धनुर्धर एव' इति प्रयोगानुपपत्तिः । स च **सर्वथा**, कथंचिद्वा स्यात् ? आद्ये पक्षे **चैत्रस्य** धनुषा **[अ]योगे व्यवच्छिन्ने** सति **न** २० **चैत्रता सिध्येत्** धनुर्भावः सिध्येत । केषाम् ? इत्याह–**स्याद्वादविद्विषाम्** एकान्तवादिनाम् इत्यर्थः । **सर्वथा** तस्य तेन योगे गर्दभाक्षीरतापत्तिः तयोः अन्यथा एकान्त इति भावः ।

कारिकां व्याख्यातुमाह–**चैत्रो धनुर्धर एव इति** इत्यादि । निगदेनैं विवृतमेतत् । ततः किं जातम् ? इत्याह–**तदयुक्तम्** इत्यादि । **तत्** तस्मादुक्तन्यायात् **अयुक्तम्** अनुपपन्नम् । किम् ? इत्याह–**पक्षधर्म एव इति अयोगव्यवच्छेदेन विशेषणम्**, पक्ष-धर्मयोरेकत्वापत्त्या २५ गुडयोरसत्तापत्तेः (गुणिगुणयोरसत्त्वापत्तेः) **पुनः** अयोगव्यवच्छेदव्यवस्थापरेण अन्यत्र[2] दूषणमुक्तम्, त[द्] दूषयितुं प्रकटयन्नाह–**यवि(दि) पुनः** इत्यादि । **[पुनरिति]** पक्षान्तरद्योतने **अन्ययोगव्यवच्छेदेन** अन्यो विपक्षः तेन अयोगः पक्षधर्मस्य तस्य व्यवच्छेदो निरासः तेन **विशेषयेत् पक्षधर्मं पक्षस्यैव धर्मो हेतुरिति** कश्चिद् व्याख्याता *"**पक्षधर्मस्तदंशेन**" [हेतुबि० पृ० ५२] इत्यादेः । तत्र दूषणमाह कीर्त्ति [**स्तद्विशेष]णे**त्यादि । स च पक्षो ३०

(१) यथा स्यात्तथा 'गमयति' इति सम्बन्धः । (२) 'घु' इति धातोः संज्ञा । (३) प्रयोगः । (४) स्वशब्देन । (५) हेतुबि० पृ० ५२ । (६) अन्ययोगव्यवच्छेदे । (७) धर्मकीर्तिः । (८) "तद्विशेषणापेक्षस्यान्यत्राननुवृत्तेरसाधारणतेति चेत्; न; अयोगव्यवच्छेदेन विशेषणात् ।"–हेतुबि० पृ० ५२ ।

**विशेषणं** च [५०८ ख] तत, तस्मिन्नपेक्षा यस्य, तद[पेक्षा तद्विशेषणे, **तद्विशेषणा]पेक्षः** तस्य । कस्य ? **हेतोः** लिङ्गस्य । किम् ? इत्याह–**असाधारणता** । कुतः ? इत्याह **[अन्यत्रापि** विप]**क्षेऽप्यवृत्तेः** । अत्र सूरिः दूषणमाह–इत्येवं परेणोच्यमानम् '**अयुक्तम्**' इत्यनुवर्त्तते । **क[थम्** इ]ति प्रश्ने, केन प्रकारेण [अ]युक्तम् इति ?

५ अस्योत्तरमाह–**अन्ययोगव्यवच्छेदात्** इत्या[दि । ]

**[अन्ययोगव्यवच्छेदात् सपक्ष एव सन्निति ।**
**सोऽपि चेत् पक्षधर्मः स्यात् एवकारस्य किं फलम् ॥३५॥**

सजातीये सन्नेव हेतुरित्ययोगव्यवच्छेदे शब्दानित्यत्वे प्रयत्नानन्तरीयकत्वादेरहेतुत्वप्रसङ्गभयात् 'सजातीय एव सन्' इति अन्ययोगव्यवच्छेदेनैव विशेषयेत् , तथैव १० विशेषितोऽपि तद्धर्मः सन् एकान्तमतिक्रम्य यदि वस्तुस्वभावेन पक्षधर्मः स्यात् तर्हि पक्षे एव सन्निति विशेषितोऽपि सजातीये वर्तेत स्वरसतः अनेकान्तावलम्बनात् । न च···तदन्तर्व्याप्तेः अन्ययोग···]

[अन्य]योगव्यवच्छेदेन हेतुना सं(**सन्**)विद्यमानः **सपक्ष एव** नान्यत्र तद्विरुद्धे हेतुरि**ति** [सम्बन्धः]**स** इत्थंभूतोऽ**पि चेद्** यदि **पक्षधर्मः स्यात्** इतरथा चाक्षुषत्वादिवद् १५ अपक्षधर्मः स्यात् , तदपक्ष एव सन् सपक्षे किन्न स्यात् ? स्यादेव । विशेष्येण सह **एवकारस्य** उच्चारणे **किं फलम्** इति चेत् ? अथ 'तत्तुल्य एव सन्' इत्यत्र किं फलम् ? अतुल्ययोगव्यवच्छेद(द)इति चेत ; अन्यत्रापि स एवास्तु । तुल्ययोगव्यवच्छेदः कस्मान्नेति चेत् ? पक्षयोगव्यवच्छेदो भवतोऽप्यस्तु, विपक्षवत् पक्षोऽपि अन्य एव । एतत् परे परिहरन्ति इत्थम्–*"**अनुमेयेत् कथ(येऽथ) तत्तुल्ये सद्भावः**"[1] इत्यत्र अनुमेये प्रथमं हेतोः सद्भावमभिधाय २० 'तत्तुल्य एव' इत्युच्यमानम् उक्तनिषेधकं न भवति, यथा *"**द्वौ पुत्रौ जनयांबभूव नरं नारायणमेव च**"[2] इति 'नारायणमेव' इति श्रुतिः नरमुक्तं न निषेधति, अनुक्तनिषेधपरत्वात् । अत्रापि इदमेवोत्तरम्–**अन्ययोगव्यवच्छेदात्** इत्यादि । एवमर्थं च स तु '(सन्)सपक्ष एव' इत्यभिप्राय(यः) । 'पक्ष एव सन्' इत्युक्ते यथा परेण [५०९क] '**पक्षधर्मः**' इत्युक्त्वा '**तदंशेन**'[3] इत्युक्तम् ।

२५ कारिकार्थं प्रकटयितुं *"**सन् सजातीय एव**" इत्यवधारणे पराभिप्रायं द्योतयन्नाह–**सजातीये सन्नेव** इत्यादि । **सजातीये सन्नेव** नाऽसन् मनागपि हेतुः इत्येवम् **अयोगव्यवच्छेदे** अङ्गीक्रियमाणे **शब्दानित्यत्वे** साध्ये **प्रयत्नानन्तरीयकत्वादेः** आदि शब्दादन्यस्यापि तत्प्रकारस्य सपक्षैकदेशवृत्तेः **अहेतुत्वप्रसङ्गभयात् अन्ययोगव्यवच्छेदेनैव विशेषयेज्जनः 'सजातीय एव सन्'** इति ।

---

(१) अत्र प्रतिस्त्रुटिता । (२) अत्र प्रतिस्त्रुटिता । (३) "यदेतदाचार्येण–अनुमेयेऽथ तत्तुल्ये सद्भावो नास्तिताऽसति । निश्चित ···"–हेतुबि० टी० पृ० २२२ । (४) "नरं च नारायणमेव चादौ स्वतः सुतौ द्वौ जनयांबभूतव"–हेतुबि० टीकालो० पृ० २४७ । (५) "पक्षधर्मस्तदंशेन व्याप्तो हेतुः"–हेतुबि० पृ० ५२ । (६) "तत्र हेतुलक्षणमेव तत्र यः सन् सजातीये' इत्यादिकं युक्तं वक्तुम्'–प्र० वा० मनोरथ० ४।१८९ ।

एतद् दूषयितुं सूत्रार्थमाह–**तथैव** इत्यादिना । **तथैव** अन्ययोगव्यवच्छेदप्रकारेणैव **विशेषितोऽपि** तद्धर्मः सन् **एकान्तमतिक्रम्य** विशेष्येण सहोदितो निपातो व्यतिरेचकः अन्ययोगव्यवच्छेदनियममपहाय । केन ? इत्याह–**वस्तुस्वभावेन** शब्दमाहात्म्येन **यदि पक्षधर्मः स्यात्** । **तर्हि पक्षे एव सन्निति विशेषितोऽपि सजातीये वर्त्तेत** । कुतः ? इत्याह–**स्वरसतः** स्वभावेन **अनेकान्तावलम्बनात्** । अन्ययोगव्यवच्छेदेऽपि 'अनुक्तस्यैव व्यवच्छेदो नेतरस्य' इति योऽयम् ५ **अनेकान्तः तस्याश्रयणात्** कारणात् 'पक्ष एव सन्' इत्युक्तेऽपि सपक्षे वृत्त्यनिषेधः । दृश्यते हि पूर्वोक्तस्यैव एकस्मिन् वाक्ये पश्चादप्युक्तस्याऽनिषेधः, तद्यथा ।

*"**जिन एव परा भक्तिः सर्वज्ञे नरसेविधं(वितं) । सिसासने (?) तस्य सर्वदा ।।**"

अस्याप्रमाणत्वे प्रकृते कः समाश्वास इति न किञ्चिदेतत् ।

यत्पुनरुक्तम्–'असाधारणता स्यात्' इति; सोऽपि (सापि) न दोष इति दर्शयन्नाह–**न च** १० इत्यादि ।[५०९ख] कुतः ? इत्याह–**तदन्तर्व्याप्तेः** इत्यादि । विचारितमेतत् । तत्र 'पक्ष एव सन्' इत्युक्तेऽपि असाधारणता नाम दोषः, अयं तु स्यादिति दर्शयन्नाह–**अन्ययोग** इत्यादि ।

यच्चान्यदुक्तम्–*"**क्रियया सहोदितोऽत्यन्तायोगमेव च व्यवच्छिनत्ति निपातो व्यतिरे[च]कः** ।" [प्र० वा० ४।१९०] इति ; तत्र दूषणमाह–**प्राप्तम्** इत्यादि ।

**[प्राप्तं नीलं सरोजैकरूपं व्यक्तमिदं जगत् ।** १५
**नित्यं समन्ताद्भवत्येव चेन्नीलं सरोजमिति ॥३६॥**

**नीलं सरोजं भवत्येवेत्यत्यन्तायोगव्यवच्छेदैकान्ते स्वकालादिनियमाक्रान्तं सर्वं नीलमयं सरोजात्मकं शाश्वतं जगत् स्यात् । ततो नीलं सरोजमित्येव न स्यात् व्याघातादिति । कथमन्यथा अनेन 'पक्षस्य धर्मो भवत्येव' इति नाश्रियेत ? यतोऽयोगव्यवच्छेदेनैव विशेषयेत् ? तन्न···न च स्याद्वादे काचिदनवस्थितिः, स्वयमभिमत-** २० **वस्तुतत्त्वप्रत्यायनात् ।]**

**नीलं सरोजं भवत्येव इति चेत्** यदि तर्हि **समन्तात् नित्यं** सर्वदा **नीलं सरोजैकरूपं व्यक्तं** यथा भवति तथा **इदं जगत् प्राप्तम्** । [अयम्] अभिप्रायः–सर्वथा, कथंचिद्वा नीलं सरोजं भवत्येव ? प्रथमपक्षे अयं दोषः । अन्यत्र अनेकान्त इति ।

कारिकाविवरणमाह–**नीलम्** इत्यादि । **नीलं सरोजं भवत्येवे[ति एव]मत्यन्तायोगव्य-** २५ **वच्छेदैकान्ते** अङ्गीक्रियमाणे । किम्? इत्याह–**स्व** इत्यादि । **काल आदिर्यस्य** द्रव्यादेः स तथोक्तः पुन[:]स्वशब्दो(ब्दे) नास्य कर्मधारयः तेन **नियमः** तेन, स च **अतिक्रान्तो** येन तत्तथोक्तम्, **सर्वं नीलमयं जगत् स्यात्** । किं नीलमयमेव स्यात् ? न, इत्याह–**सरोजात्मकं** जगत् स्यात् । **शाश्वतं** नित्यं स्वकालनियमातिक्रमात् । ततः को दोषः ? इत्याह–**तत** इत्यादि । तस्मात् अनन्तरैकान्तात् **नीलं सरोजम् इत्येव न स्यात्** । कुतः ? इत्याह– **व्याघातादिति** । 'यदिति'[२] ३०

(१) कथंचिदिति पक्षे । (२) 'यदिति' व्यर्थमत्र ।

यदि नीलमयं[न] सरोजात्मकम् , अथ तदात्मकं[न]नीलात्मकम् इत्यनयोः अन्योन(ऽन्य)-विरोधात् ।

स्यान्मतम्–'नीलं सरोजं भवत्येव' इति वचनेऽपि नायं दोषः यथाभावस्वभावम् अभिधानप्रवृत्तेरिति चेत ; अत्राह–**कथमि**त्यादि । [५१०क] **अनेन**, अस्य दोषस्य अभावप्रकारेण

५ **अन्यथा पक्षस्य धर्मो हेतु[ः]भवत्येव** इति **कथं नाश्रियेत** यतोऽनाश्रयणात् **अयोगव्यवच्छेदेनैव विशेषयेत्** । । प्रकृतं निगमयन्नाह–**तन्न** इत्यादि ।

ननु स्याद्वादेऽपि तथैव दोषः; इत्याह–**न च** इत्यादि । [**नच**]नैव **स्याद्वादे काचिद् अनवस्थितिः** भावानामवस्थितेरभावः । कुतः ? इत्याह–**स्वयं** जैनस्य **अभिमतं** यद्वस्तुतत्त्वं तस्यैव **प्रत्यायनात्** ।

१० पुनरपि वक्त्रभिप्रेतमर्थं शब्दाः सूचयन्तीत्येकान्ते दूषणमाह–**एवकार** इत्यादि ।

**[एवकारः स्वतः स्वार्थं स्वक्रममनुवर्तयन् ।**
**वक्त्रभिप्रायमित्यत्र यथा श्रुतेन तथा परः ॥३७॥**

**ध्वनयो वक्त्रभिप्रायमेव सूचयन्ति इत्येकान्ते यथा एवकारः भिन्नप्रक्रमः चकारो वेति यदा स्वार्थप्रतिपादने कथञ्चित् शक्तिस्वाभाव्यं न भवेत् स्वेच्छया क्रमं न लङ्घयेत् ।**

१५ **योगरूढेषु दाराः पण्णगरीत्यादिष्वपि भेदप्रतिपत्तौ शब्दशक्तिरेवानुगन्तव्या । विचारितं चैतत्** *"**स्वाभाविकत्वादभिधानस्य एकशेषानारम्भः**" इत्यत्र भगवद्भिः **पूज्यपादैः शब्दानुशासनदक्षैः । पदावधिकः समयः स्वार्थप्रतिपादने पुरुषाभिप्रायाधीनश्चेत् ; न ; तावन्मात्रेण व्यवहाराभावात् । पदान्तरसन्निधाने स्वत एव विशिष्टार्थप्रतिपादने कथं वाचकस्य स्वत एव शक्तिः प्रत्याख्यायेत ? एकपदस्य नानार्थप्रतिपादनसंभवे**

२० **सर्वथा नियमासंभवात् एकान्तो न सिध्यति इत्यलं प्रसङ्गेन]**

**एवकारः स्वार्थे** अयोगव्यवच्छेदादौ **श्रुतेन स्वतो** बौद्धेन । किं कुर्वन् ? इत्याह–**अनुवर्त्तयन्** अनुवर्त्तमानं प्रयुञ्जानः भिक्षादिवद् अचेतनस्यापि हेतुकर्तृत्वम् । किम् ? इत्याह–**स्वक्रमम्** स्वस्य आत्मनः क्रमम् । तं किमनुवर्त्तयन् ? इत्याह–**वक्त्रभिप्राय**मिति । क ? इत्याह–**अत्र** विवक्षा शब्दार्थ इत्येकान्ते । तदन्यत्र अतिदिशन्नाह–यथा एवकारः **तथा**

२५ **परो**ऽन्यस्तादिः(न्यः स्यादादिः) **आदि**शब्दः निपातगणिग्रहणार्थः **श्रुतेन अनुवर्त्तयन् स्वक्रमं वक्त्रभिप्रायम्** । न चैवम्, व्यवधानेन प्रयोगेऽपि यावद्विशेषणादिना ना[भि]-संबध्यते, तावत् ततः तदर्थाऽप्रतिपत्तेः इति भावः ।

कारिकाविवरणमाह–**ध्वनयो वक्त्रभिप्रायमेव नार्थं सूचयन्ति इत्येकान्ते** सति **यथा** येन प्रकारेण **एवकारः भिन्नप्रक्रमः, भिन्नः** विशेषणादिव्यतिक्रमेण **प्रक्रमः** प्रयोगपरिपाटि-

३० र्यस्य स तथोक्तः, तस्यैव (**तथैव**) **चकारो** यत्तदोर्नित्यसम्बन्धात् [तथैवेति] गम्यते । न केवलं चकारः किन्तु **'वा' इति** । इति शब्दः[५१०ख] प्रकारवाची वा, [एवं] प्रकारोऽन्योऽपि

(१) सरोजात्मकम् । (२) बौद्धेन । (३) जैनेन्द्र० १।१।१०० । (४)'तं' इति व्यर्थम् ।

शब्दः[1]। तत् किं कुर्यात् ? इत्याह–**क्रमं स्वविन्यासस्थितिं न लङ्घयेत्** पुरुषकारणे अन्यत्र उद्दिष्टो विशेषणादिना न सम्बन्धमर्हेत् यथान्यासमवे (थान्यासमेव)तमर्थं गमयेदित्यर्थः। कदा ? इत्याह–**यदि (यदेत्यादि) यदा शक्तिस्वाभाव्यं कथंचित्** केनचित् प्रकारेण निगदितेन **स्वार्थप्रतिपादनेन भवेत्**। केन कृत्वा ? इत्याह–**अस्तेच्छया(स्वेच्छया)** पुरुषेच्छानुवर्त्तनेन, शब्दशक्तिस्वाभाव्ये तु तं लङ्घयेत् अन्यत्र निर्देशेऽपि विशेषणादिसम्बन्धमन्तरेण तदर्थाप्रतिपत्तेरिति। कथं तर्हि ५ तत्स्वाभाव्ये एकस्मिन् कामिनीकाये 'दाराः' बहुवचनम् ? तस्य बहुत्वे नियतत्वात्। षण्णां नगराणां समूहे 'षण्णगरी' इत्येकवचनम् ? अस्य एकत्र नियमात्, षण्णगरव्यतिरेकेण तत्समूहाभावात्। दृश्यते च तद्वचनम्[2], ततो मन्यामहे विवक्षार्थाऽशब्दा(र्थाः शब्दाः) इति; तत्राह–**योग** इत्यादि। [**योगरूढेषु]दारा[:]षण्णगरी इत्यादिष्वपि** ध्वनिषु न केवलं पूर्वेषु **भेदप्रतिपत्तौ** बहुत्वैकप्रतिपत्तौ **शब्दशक्तिरेव अनुगन्तव्या** न विवक्षामात्रम्, अन्यथा तत्रैकवचनादि- १० प्रसङ्गात्। **विचारितं चैतत्–**"स्वाभाविकत्वादभिधानस्य एकशेषानारम्भः"** [जैनेन्द्र० १।१।१००]इत्यत्र **भगवद्भिः पूज्यपादैः शब्दानुशासनदक्षैः** इति।

पुनरपि परमतमाशङ्क्ते दूषयितुं **पदावधिक** इत्यादि। **पदमवधिर्यस्य** स तथोक्तः। कः ? इत्याह–**समयः** शब्दागमः। स किम् ? इत्याह–**पुरुष** इत्यादि। [५११क]**पुरुषस्य** वक्तुः **अभिप्रायः** समिच्छा **तदधीनः** तदायत्तः **स्वार्थप्रतिपादने** इति चेत्; अत्राह–**न** इत्यादि। १५ यदुक्तं परेण **तन्न**। कुतः ? इत्याह–**तावन्मात्रेण** पदमात्रेण **व्यवहाराभावात्** शब्दस्य प्रवृत्तिरूपस्य निवृत्ति[रूपस्य वा] व्यवहारस्याऽयोगात्। न खलु घट इति वचनमात्रेण तद्भावः।

स्यान्मतम्–पदान्तरेण अभिसम्बन्धाद् विशिष्टार्थप्रतिपत्तिः, ततो व्यवहार इति; तत्राह–**पदान्तर** इत्यादि। विवक्षितपदाद् अन्यत् पदं तदन्तरम् तस्य **सन्निधाने** सति **स्वत एव** आत्मनैव पुरुषकृतसङ्केतमन्तरेण **विशिष्टार्थप्रतिपादने** अङ्गीक्रियमाणे। न हि सर्वा वाक्यार्थ- २० प्रतिपत्तिः सङ्केतमपेक्षते असकृत पूर्ववाक्यादपि केषांचित् सुधियाम् अर्थप्रतीतिदर्शनात् **कथं स्वत एव शक्तिः वाध(वाच)कस्य प्रत्याख्यायेत ?** एवमभ्युपगम्य पदावधिकस्य समयस्य पुरुषाभिप्रायाधीनत्वमिदं दूषणमुक्तम्।

अधुना तत्रापि तदधीनत्वं नास्तीति दर्शयन्नाह–**नानार्थ** इत्यादि। **नानार्थस्य** अनेकार्थस्यैकस्य(स्यैकस्य)पदस्य **प्रतिपादनं(न)संभवे,** यथा *"**अग्निहोत्रं जुहुयात् स्वर्गकामः**" २५ [मैत्रा० ६।३६] प्रत्यत्र (इत्यत्र) वाक्ये अग्न्यादिपदस्य वक्त्रभिप्रायमेव शब्दाः सूचयन्तीति **नियमासंभवात् सर्वथा अयं** परकीय **एकान्तो न सिध्यति**। तथाहि–यदि वक्त्रभिप्रायमेव शब्दाः सूचयन्ति; तर्हि वक्तुः मीमांसकस्य अग्निः स्वेत्य(अग्निहः श्वा इत्य)भिप्रायाभावात् कथं कीर्त्तेः[9] ततः स्वार्थ([10]श्वार्थ) प्रतिपत्तिर्येन उच्यते–

(१) ज्ञातव्यः। (२) इति। (३) दाराशब्दस्य। (४) एकवचनं बहुवचनं च। (५) विवक्षातः। (६) समये। (७) पुरुषेच्छाधीनत्वम्। (८) अग्निं हन्तीति अग्निहः श्वा तस्य उत्रं मांसम् अग्निहोत्रमिति। (९) धर्मकीर्तेः। (१०) 'श्वा' इत्यर्थस्य।

*"[तेन] अग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रुतौ ।
खादेत् [५११ख] श्वमांसमित्येष नार्थः इत्यत्र का प्रमा ॥"
[प्र० वा० ३।३१८] इति ।

[तस्य] व्याख्यानैव वक्ता इत्युच्यते ; न ; व्याख्यातृकथितार्था[द]धिकस्यापि सयुक्तिके
५ श्रोतरि प्रमेयस्य प्रतिभासनात् । पघट्टक (प्रघट्टक) मुपसंहरन्नाह–इत्येवमर्थ (म अलं) पर्याप्तं
प्रसङ्गेन वचनपरम्परया ।

अथ मतम्–न परमाणुव्यतिरेकेण वर्णाः पदानि वाक्यानि च सन्ति अत्र (अन्यत्र) संवृतेः,
तत्कथमुक्तम् *"तद्भिदः (तद्भेदः) प्रतिलब्धवर्णपदवाक्यात्मा" [सिद्धिवि० ४।१] इति ?
तत्राह–**पदमि**त्यादि ।

१० **[पदमभिन्नं भिन्नैः स्वैः आकारैरवभासते ।**
**सदसद्भिर्यथा ज्ञानमात्मनीति प्रचक्षते ॥३८॥**

**यथादर्शनं ज्ञानतत्त्वव्यवस्थायामनेकान्तप्रसङ्गात् तत्त्वमेकरूपं कथञ्चिददृष्टपूर्वमा-
स्थेयम् । तथा च व्यलीकमात्रानिर्भासमक्षरं वितथवर्णनिर्भासं पदमदृष्टपदार्थं वाक्यमप्य-
प्रतिषिद्धम् अक्रमप्रतिपत्तेः । दृष्टहानिरदृष्टकल्पनेति चेत् ; संवित्तावपि समानः प्रसङ्गः ।
१५ तद्भेदाभेदात्मकत्वे अन्यत्र कः प्रद्वेषः ?]**

तात्पर्यमत्र–सौगतस्य चित्रैकज्ञानोपगमे जैनस्य वर्णादि[:]सिद्धः । तदनभ्युपगमे निरंशत-
त्वोपगमाद् वैयाकरणस्य इति न तथागतस्य पतस्य (पर)पक्षपाताद् विमोक्षः इति । **पदम्** इत्युप-
लक्षणम् वर्णवाक्ययोः, ततो वर्णः पदं वाक्यं **चावभासते** । कैः सह ? इत्याह–**आकारैः**
भेदैः । किंभूतैः ? **स्वैः** आत्मीयैः । कथंचित् तदात्मभूतैः, अन्यथा सत्त्वासिद्धेः, समवायादि-
२० सम्बन्धनिषेधात् । पुनरपि किंभूतैः ? इत्याह–**भिन्नैः** परस्परविलक्षणैः । किंभूतं तत् ? इत्याह–
**अभिन्नं** स्वावयवसाधारणम्, अथवा निरंशम् । पुनरपि किंभूतैः ? इत्याह–**सदा (सद) सद्भि-**
रिति जैनमतापेक्षया **सद्भिः** विद्यमानैः वैयाकरणविशेषदर्शनापेक्षया **असद्भिः** । अत्र
निदर्शनमाह–**यथा** इत्यादि । **यथा** येन प्रकारेण **ज्ञानम्** आकारैः तथाविधैः**अवभासते**
इत्येवं केचित् **प्रचक्षते** जैनाः वैयाकरणाश्च ।

२५ ननु क्व तद[व]भासते ? स्वात्मनि इति चेत् ; विज्ञानम्[४] । अन्यस्मिन् प्रत्यक्षे चेत् ; न ;
तन्निषेधात्, [५१२क] सतोऽपि तस्य वर्त्तमानमात्रपर्यवसानाच्च । नानुमानेऽपि ; प्रत्यक्षाभावे
तदभावात्[६] इति चेत् ; **आत्मनि** अनेकात्मनि स्वपरसंवेदनपरिणामात्मनि तदवभासते इति
ब्रूमः । तदुक्तं न्या य वि नि श्च ये–*"आत्मनाऽनेकरूपेण" [न्यायवि० १।८] इत्यादि ।
पूर्वपूर्ववर्णश्रवणाहितसंस्कारस्य अन्त्यवर्णश्रवणात् पूर्ववर्णस्मरणे सति मानसं प्रत्यक्षमुपजायते,

(१) अत्र प्रतिः घृष्टा । (२) प्रकरणम् । (३) स्फोटवादिनो मतसिद्धिः । (४) विज्ञानवादः स्यात्, अथवा विज्ञानरूपतापत्तिः । (५) प्रत्यक्षस्य । (६) अनुमानोत्पत्त्यभावात् । (७) "नादेनाहितबीजायामन्त्येन ध्वनिना सह । आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवभासते ॥"–वाक्यप० १।८५। न्यायकुमु० टि० पृ० ७४९ ।

तत्रावभासते इत्येके[1]। तदसत्यम्; निरंशैकस्वभावे तत्र क्रमभाविवर्णादिप्रतिभासायोगात्। शेषं चिन्तितमत्र।

कारिकां विवृण्वन्नाह–[यथा]दर्शनमित्यादि। दर्शनानतिक्रमेण **यथादर्शनं ज्ञानतत्त्वव्यवस्थायां** क्रियमाणायाम् **अनेकान्तप्रसङ्गात्** अनेकान्तात्मकवर्णादिप्रसङ्गात् कारणात् **तत्त्वं** ज्ञानं वस्तु, किंभूतम् ? **एकरूपम्** निरंशमास्थेयम्। पुनरपि किंभूतम् ? इत्याह–**कथंचित्** ५ प्रत्यक्षादिप्रकारेण स्वसंवेदनाद्वैतादिप्रकारेण वा[ऽ]**दृष्टपूर्वम्**, न हि निरंशं ज्ञानं पुरुषवत् द्रष्टुं शक्यम्। इष्यत एव तथाविधं ज्ञानतत्त्वमिति चेत्; अत्राह–**तथा** च तेन च तथाविधज्ञानाभ्युपगमप्रकारेण **अक्षरम्** '**अप्रतिपिद्धम्**' इति गत्वा सम्बन्धः करणीयः। किंभूतम् ? इत्याह–**व्यलीकमात्रानिर्भासं** व्यलीकोऽसत्यो मात्राणां ह्रस्वादीनां निर्भासो यस्मिन्निति। न केवलम् अक्षरम् अपि तु **पदमप्यप्रतिपिद्धम्**। किंभूतम् ? इत्याह–**वितथवर्णनिर्भासं** तथा **वाक्यमपि** १० **अप्रतिपिद्धम्**। किंभूतम् ? इत्याह–**दृष्टपरमार्थम्** (अदृष्टपदार्थम्) असत्यपदप्रतिभासम्। कुत एतत् सर्वम् ? इत्याह–**अक्रमप्रतिपत्तेः** इत्यादि। [५१२ख]

परमाशङ्कते दूषयितुं **दृष्टहानिः** इत्यादि। **दृष्टस्य** मात्रादिभेदस्य **हानिः अदृष्टस्य** निरंशाक्षरादेः **कल्पना** इति चेत्; अत्राह–**संवित्तावपि** न केवलम् अक्षरादौ **समान[:]प्रसङ्गो** दोषः। न समानः तत्र चित्रैकरूपत्वोपगमात् *"**चित्रप्रतिभासाप्येकैव बुद्धिः**" [प्र० १५ वार्तिकाल० ३।२२०] इत्यादि वचनादिति चेत्; अत्राह–**तद्** इत्यादि। **तस्याः** संवित्तेः **भेदाभेदात्मकत्वे अन्यत्र** वर्णादौ **कः प्रद्वेषः** भेदाभेदात्मकत्वस्य यत्तत्र[2] तन्न[3] भवेत् ?

नानु (ननु) नादृष्टपूर्वं ज्ञानतत्त्वमिष्यते येनायं दोषः, अपि तु दृष्टम्, स्वसंवेदनात्मकस्य परोक्षत्वविरोधात्। तत्पुनरभिन्नमिव अवभासते। तदुक्तम्–

*"**अविभागोऽपि बुद्ध्यात्मा**" [प्र० वा० २।३५४] इत्यादि, २०

*"**मन्त्राद्युपप्लुताक्षाणाम्**" [प्र० वा० २।३५५] इत्यादि च।

तत्राह–**अभिन्नम्** इत्यादि।

**[अभिन्नमन्यथा ज्ञानमात्मानमवभासयेत्।**
**नाक्रमं सक्रमं कुर्यात्तज्ज्ञानं पदमविद्यया ॥३०॥**

**यदि पुनः ज्ञानपरमाणवः सर्वथा भिन्नाः; कुतस्तत्त्वमन्यथा प्रतिभासेरन् ? २५ वेद्याकारः पुनः वेदकाद्याकारविलक्षण एव संवित्स्वभावमतिवर्तेत अर्थान्तरवत्। वेदकाकारः तद्व्यतिरेकेणासंवेद्यः कथं चेतनः यतः तस्य स्वसंवित्तिः स्यात् ? तन्न तदभेदैकान्ते विभ्रमवशादन्यथावभासः, बहिरपि विभ्रमवशात् निःकलस्यैव पदादेरन्यथावभासः कल्पेत।]**

**अभिन्नमविभागं ज्ञानं** यत् सौगतेष्टम् **अन्यथा** ग्राह्यग्राहकसंवित्तेर्भेदवन्तमिव ३०

(१) स्फोटवादिनः। (२) अक्षरादौ। (३) भेदाभेदात्मकत्वम्।

**आत्मानं** स्वस्वरूपम**वभासयेत्** । कया ? **अविद्यया** । तत्किं कुर्यात ? इत्याह–**नाक्रममित्यादि** । **अक्रमं** क्रमरहितं **सक्रमं** क्रमवदिव **कुर्यात्** गृह्णीयात् करोतेः क्रियासामान्यवाचित्वात् । किम ? **न** कुर्यादेव **तज्ज्ञानम्** ? किम ? **पदम्**, उपलक्षणमेतत वर्णादेः । कया ? **अविद्यया** इति ।

५ स्यान्मतम्–न ज्ञानमन्यथा आत्मानमवभासते, चत्प्रतिमद्वा (तत्प्रतिभासा)द्वयस्यावभासनात् । केवलं विकल्पबुद्धिः ग्राह्यग्राहकसंवित्तिभेदकल्पितमिव श्रद्दध्य (तद्दृश्य)वस्यति । [त]त एव केनचिदुक्तम्–*"ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" [प्र० वा० २।३५४] न 'गृह्यते' इति; तत्राह–**यदि पुनः** इत्यादि । **[यदि]** चेत **पुनः** इति वितर्के । **ज्ञानपरमाणवः** । किंभूताः ? इत्याह–[५१३ क] **सर्वथा भिन्नाः** परस्परव्यावृत्ततनवः **तत्त्वम्**

१० इत्यध्याहारो (त्यध्याहारो ऽ)न्यथा थंध (स्कन्ध)स्य नि[ः]कल्पत्वासिद्धेः । ततः किम् ? इत्याह–**कुतः** कारणात न कुतश्चित , **कथंचिदेकत्वेन** उपलक्षणमेतत तेन स्थूलत्वेन दीर्घत्वेन सावयवत्वेन **प्रतिभासेरन्** । नहि यद्रूपं यत्र भवति तद्रूपेण स्वग्राहिणि ज्ञाने तत प्रतिभाति, इतरथा चक्षुपि रूपं च रसात्मना प्रतिभासेत । नास्ति च तत्परमाणुपु प्रत्येकं समुदितेपु वा तदेकत्वादिकमिति, प्रतिभासन्ते च, संहृताशेपविकल्पदशायामपि स्थूलस्यैकस्य दर्शनात । तदुक्तं धर्म की र्ति ना पि–

१५ *"सरूपयन्ति किं ज्ञानं स्थूलाभासं च तेऽणवः ।"

[प्र० वा० २।३२१] इति[4] ।

स्यान्मतम्–नाभात्येष आकारः, स तु ग्राह्याकारोऽसन्नेव *"**मायामरीचिप्रभृतिप्रतिभासवदसत्त्वेऽप्यदोपः**" [प्र० वार्तिकाल० ३।२११] इति वचनादिति चेत्; अत्राह–**वेद्याकार** इत्यादि । **वेद्याकारः** ग्राह्याकारः स्थूलैकरूपः '**यदि**' इत्यनुवर्तते **पुनः वेदकाद्या-**

२० **कारविलक्षण एव, वेदकः** येनासौ वेद्याकारो गृह्यते, तदभावे तदप्रतीतिः । स्वतः प्रतीतिरिति चेत ; प्राप्तं ज्ञानत्वम इति चित्रैकतत्त्वसिद्धिः । न चैतत परस्य पथ्यम , ततो ज्ञानादन्य एवासौ । **स आदिर्यस्य,** संवेदनाकारस्याप्यभावे तदसिद्धिः । नहि क्रियारहितं कर्म अस्ति, तदेवाकारः तस्माद् **विलक्षण एव** भिन्न एव **संवित्स्वभाव(वं)** ज्ञानस्वरूपं स्वसंवेदनलक्षण**मतिवर्त्तेत** अतिक्रामेत, वेद्याकारोऽचेतनः स्यात् इत्यर्थः । तथा च *"**यदवभासते**

२५ **तज्ज्ञानं यथा सुखादि**" इत्यस्य अनेन व्यभिचारः । [५१३ ख]

अनेन *"**नान्योऽनुभाव्यो बुद्ध्यास्ति**" [प्र० वा० २।३२७] इत्यादि निरस्तम् ।

अत्र निदर्शनमाह–**अर्थान्तरवत्** इति । नीलार्थाद् अन्योऽर्थः तदन्तरम् पीत्यादि (पीतादि) तदिव तद्वत इति । यथा पीतं नीलस्वभावमतिवर्त्तते तथा वेद्याकारोऽपि संवित्स्वभावमिति । यदि वा, **संवित्** कर्त्री **स्वभावं** नीलबोधरूपताया(तया)द्व्यात्मानं *"**विषयज्ञानं-**

(१) प्रतिभासाद्वैतम् । (२) धर्मकीर्तिना । (३) इत्युक्तमपि तु 'लक्ष्यते'–आभाति इत्युक्तम् । (४) "ते परस्परं भिन्ना अणवः तज्ज्ञानं स्थूलाभासं स्थूलाकारं केन रूपेण सरूपयन्ति ? यदणुस्वरूपमस्थूलमस्ति न तत् ज्ञानारूढम् । यच्च ज्ञानारूढं स्थौल्यं नाणुपु तदस्ति ।"–प्र० वा० मनोरथ० ।

**(न)तज्ज्ञानविशेषाच्च द्विरूपता ।''** [प्र० समु० १।१२] इति वचनात् **अतिवर्त्तेत** निराकारा स्यात् इत्यर्थः । वेदकाकारे दूषणमाह–**वेदकाकारः** । किंभूतः ? **असंवेद्यः** । कथम् ? इत्याह–**तद्व्यतिरेकेण** ग्राह्याकारव्यतिरेकेण कथंचित् प्रत्यक्षादिप्रकारेण । नहि नीलादिव्यतिरेकेण निरंशं ज्ञानमनुभूयते । **कथं चेतना** [ऽय]मतदाकारो **यतः** चेतनत्वात् **स्वसंवित्तिः** तस्य **स्यात्** । निगमनमाह–**तन्न** इत्यादि ।　५

ननु न वेद्याकारः संवेदनादन्यः, किन्तु परमार्थतोऽतद्वत्यपि[2] तद्वतीव प्रतिभातीति चेत ; अत्राह–**तदभेदैकान्ते विभ्रमवशादन्यथावभासः** सांशतयेव प्रतिभासनम । अत्रोत्तरं **बहिरपि** न केवलम् अन्तः, **विभ्रमवशादन्यथाऽवभासः कल्पेत** । कस्य ? **पदादेः** । किंभूतस्य ? **निःकलस्यैव** ।

ननु वर्णादिस्फोटस्य तदवयवा व्यञ्जका इष्यन्ते, तेषां चाविगति (चाभिव्यक्ति) क्रिया व्यापारः । नहि मरीचिकाजले (लं) कांति द (काञ्चिद) र्थक्रियां विधातुमलमिति चेत ; अत्राह–**मिथ्याकारैः** इत्यादि ।　१०

**[मिथ्याकारैर्यथा ज्ञानमेकं जातुचित्तथा ।**
**[3]द्वैध्यं मिथ्याक्रमैः वाक्यं व्यज्यते व्यञ्जकैः पदैः ॥४०॥**

**नानानिर्भासैरेकं ज्ञानं यदि वितथैरर्थैरपि व्यज्येत ; वितथक्रमैः पदैः वाक्यं व्यङ्ग्यं किन्न भवेत् विशेषाभावात् ]**　१५

**मिथ्या** असत्यैः**राकारैः** अंशैः **यथा** येन तद्द्वारेण प्रतिपत्तिप्रकारेण **ज्ञानम् एक**मद्वयं **द्वैध्यं त्यज्यत (व्यज्यते) जातुचित्** कदाचित् **तथा मिथ्याक्रमैः** मिथ्या क्रमो येषां [५१४क] तैः इति । **वाक्यम्** उपलक्षणमेतत् , तेन वर्णः(र्णैः) पदं **व्यज्यते** । किं कैः ? इत्याह–**व्यञ्जकैः** वर्णपदवाक्यावयवैः इति ।　२०

कारिकाविवरणमाह–**नाना** इत्यादि । **नानाभि (नि) र्भासैः** वेद्याद्याकारैः **एकं** निरंशं **वितथैरर्थैरपि यदि व्यज्येत ज्ञानं वितथक्रमैः पदं (पदैः) वाक्यं व्यङ्ग्यं किन्न भवेत्** ? भवेदेव । कुतः ? इत्याह–**विशे**षेत्यादि ।

ननु नित्यो व्यापी च स्फोटः[5] परैरिष्यते । न च तथाविधस्य वेदनमिति चेत ; अत्राह–**न ज्ञाये[ते]**त्यादि ।　२५

**[न ज्ञायेत नोत्पद्येत न नश्यत्येकमञ्जसा ।**
**धीवर्णपदवाक्यादि तद्भित्तिवितथात्मना ॥४१॥**

(१) "विषयज्ञानतज्ज्ञानभेदाद् बुद्धेर्द्विरूपता । स्मृतेरप्युत्तरं काले न ह्यसावविभावितः ॥"–प्र० समु० । (२) वेद्याकारशून्यापि संवित्तिः संवेदने । (३) वेद्याकारसहितेव । (४) द्विधा भावः द्वैध्यम् । (५) "नानेकावयवं वाक्यं पदं वा स्फोटवादिनाम् । निरस्तभेदं पदतत्त्वमेतत्…"–स्फोटसि० श्लो० २९, ३६ । "वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायकः नित्यः शब्दः स्फोट इति तद्विदो वदन्ति …"–सर्वद० पृ० ३०० । द्रष्टव्यम्–न्यायकुमु० पृ० ७४५ टि० ९ ।

प्रत्यक्षानुपलम्भसाधने कार्यकारणभावे न किञ्चित् कस्यचित् कार्यम्, निष्कलसाक्षात्कृतेरसंभवात्। तत एव न नश्येत् उपलब्धिसत्त्वात्]

**न ज्ञायेत** न गृह्येत **नोत्पद्येत न नश्यत्येकमञ्जसा** परमार्थेन। किं तत्? इत्याह-**श्रीवर्णपदवाक्यादि** आदिशब्देन शब्दब्रह्मादिपरिग्रहः। केन हेतुना? इत्याह-
५ **तद्वित्तेरि**(**तद्वित्ति** इ)त्यादि। **तस्य** ज्ञानत्व-जन्म-नाशस्य **वित्तिः** तद्वित्तिः तस्या **वितथो** य **आत्मा** स्वभावः **तेन**। एतदुक्तं भवति-यदि ज्ञानमज्ञानमपि स्वरूपमात्रपर्यवसितं क्षणिकम् अहेतुफलभूतम् अनंशं चोच्यते; हि(र्हि) वर्णादिकमदृष्टमपि नित्यव्यापितया इष्यताम्। अस्यानुपलम्भेन असत्त्वं ज्ञानेऽपि समानमिति।

कारिकां विवृण्वन्नाह-**प्रत्यक्ष** इत्यादि। **कार्यकारणभावे** अङ्गीक्रियमाणे। किंभूते?
१० इत्याह-**प्रत्यक्षानुपलम्भसाधने**। किं जातम्? इत्याह-**न** इत्यादि। **किंचित्** जाग्रद्विज्ञानं स्वापादिविज्ञानं वा **कस्यचित्** चक्षुरादेः वासनादेर्वा **कार्यं** न तथा **किंचित्** सुबन्तमिदमन्यद्वा पदं वाक्यं वा **कस्यचित्** ताल्वादेः गगनस्य वायोः शब्दस्य वा न कार्यम्। कुतः? इत्याह-**निष्कल** इत्यादि। [**निष्कलस्य**] ज्ञानादेः निरंशस्य या **साक्षात्कृतिः** [(१)स्य] तस्याः **असंभवात्**। मा भूत् तत्कार्यं तत, तथापि अनित्यं स्यादिति चेत्; अत्राह-**तत एव** तदसंभ-
१५ वादेव **न नश्येत्**। एतदपि कुतो(तः?) इत्याह-**उपलब्धि** इत्यादि। ततः संन्नि(सन्नि)-त्यमेव तदिति भावः।

ननु ज्ञानस्य निष्कलस्य साक्षात्कृतेरसंभवेऽपि विभ्रमाकारैरनुमानादिति चेत्; अत्राह-**'ज्ञानतत्त्वस्य'** इत्यादि।

**[ज्ञानतत्त्वस्य निर्भासैस्तादात्म्यं नास्ति सर्वथा।**
२० **तथा भ्रान्तैस्तदुत्पत्तिर्यत्तैस्तदनुमीयते ॥४२॥**

ज्ञानतत्त्वं निरंशं न प्रत्यक्षम्, यदङ्गीकृत्य स्फोटमुपालभेरन्, सर्वविकल्पातीतं निरंशं तत्त्वं यदि सांशमिव लक्ष्यते न प्रत्यक्षेण गृह्यते; तदितरत्रापि समानम्। अनादिनिधनं सादिनिधनवत् अक्रमं क्रमवदिव प्रतिभासते इति तत्त्वस्य कुतश्चित् स्वभावतः सिद्धौ सत्यां स्यात्, अन्यथा सर्वत्रानाश्वासप्रसङ्गात्, सर्वथा [विभ्रमस्य असिद्धेः]

२५ **ज्ञानतत्त्वस्य** निरंशस्य **निर्भासैः** ग्राह्यग्राहकाकारैः **नास्ति तादात्म्यं सर्वथा भ्रान्तैः** हेतुपदमेतत् वितथत्वादिति। नहि अभ्रान्तस्य भ्रान्तेन तादात्म्यं विरोधात्। **तथा** नास्ति **तदुत्पत्तिः तस्य** तैः **यद्** यस्मात् तादात्म्यात् **तदनुमीयते** तैराकारैरिति।

ज्ञानतत्त्व 'मितेतत्त्व' मित्यादिना कारिकार्थमाह-[**ज्ञानतत्त्वम्**] किंभूतम्? इत्याह-[**निरंशं**] यद् विज्ञानतत्त्वम् **अङ्गीकृत्य** आश्रित्य **स्फोटम् उपालभेरन्** सौगताः शब्दब्रह्म
३० वा, **तन्न प्रत्यक्षम्** इति।

(१) "प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः।"-हेतुबि० पृ० ५४। (२) सिद्धान्तम्। (३) अविभागस्य। (४) 'मिततत्त्व' इति व्यर्थमत्र। (५) अत्र पाठस्त्रुटित आभाति।

यत्पुनरुक्तम्[1]–'भेदवानिव लक्ष्यते न गृह्यते' इति ; तत्राह–**सर्वान्** सत्त्वादीन् **विकल्पा-[न् अ]तीतं तत्त्वं** ज्ञानस्वरूपं **यदि निरंशं** वेद्यांस(वेद्याद्यंश)विकलं सत् **सांशमिव** सभेदमिव **लक्ष्येत** (क्ष्यते)विकल्पेन व्यवसीयेत (यते) **न प्रत्यक्षेण गृह्यते**; तद् अनन्तरोक्तम् **इतरत्रापि** पदादावपि **समानम्** । शक्यं हि वक्तुम्–अविकल्पबोधेन पदादि अक्रमं प्रतीयते, तदुत्तरकाल-भाविन्या तु विकल्पबुद्ध्या सक्रममिव व्यवसीयते । ननु सकलं ज्ञानं स्वरूप एव मग्नं कथं ५ पदादौ भिन्ने प्रवृत्तिमत् ? स्वरूपे मग्नमिति कुतः ? इतरथा, ज्ञानं तत्र भवे (तन्न भवेत्)[2] । लक्षणान्तराभावात् इति चेत्; अत[3] एव पदरूपेऽपि [५१५क] मग्नमित्यप्यस्तु । तथाऽदर्शना-न्नेति[4] चेत् ; इतरत्र समानम् । तथा कल्पनमुभयत्रापि ।

भवतु तर्हि 'वा (वर्ण)पदवाक्यादि जन्मादिरहितम्' इति चेत् ; अत्राह–**अनादि** इत्यादि । न विद्यते आदिनिधने जन्मविनाशौ यस्य तद**नादिनिधं**धस्यादि (**निधनम्** तत् १० **सादि) निधनवदक्रमं** हेतुफलक्रमरहितं **क्रमादिव(क्रमवदिव)** हेतुफलक्रमवदिव **प्रतिभासत इति** एवं **तत्त्वस्य** ज्ञानादिस्वरूपस्य **कुतश्चित्** प्रत्यक्षात् अनुमानात् अन्यतो वा **स्वभावतः** स्वभावेन **सिद्धो (द्धौ)** निर्णीतौ **सत्यामेवं (व)** स्यात् , **अन्यथा** स्वभावतः तत्सिद्ध्यभावप्रकारेण **सर्वत्र** सुखादावपि **अनाश्वासप्रसङ्गात्** । तथाहि–'न सुखादिकं नाम किंचन, केवलं सुखादिक-मिव न (व तत्) प्रतिभासते, 'प्रतिभासत इव' इत्यपि स्यात् । ननु नास्त्येव सुखादिनीलादि- १५ व्यतिरेकेण परस्य प्रतिभासनम्, सुखादिनीलादेश्च विचार्यमाणस्यायोगात्, प्रतिभासनेऽपि भ्रान्तता इति चेत् ; अत्राह–**सर्वथा** इत्यादि । निरूपितमेतत् ।

अत्राह प्र ज्ञा क रः[5]–*"**प्रतिभास[मा]नस्य विभ्रमायोगात् प्रतिभासाद्वैतमस्तु**" इति ; तत्राह–**ध्वनिभ्यः** इत्यादि ।

**[ध्वनिभ्यो वाचकं भिन्नं श्रद्धेयं विदुर्बुधाः ।** २०
**ज्ञानतत्त्वं विनिर्भासाद् व्यतिरिक्तं तथाऽन्यथा ॥४३॥**

**यथादर्शनमिति परीक्षानिमित्तं न भवति, प्रमाणागोचरं । तन्न···]**

**ध्वनिभ्यः** पदादिव्यञ्जकेभ्यो **वाचकं** स्फोटाख्यं **भिन्न**मर्थान्तरभूतं **श्रद्धेयं** श्रद्धागम्यम् न प्रमाणगम्यं स्यात् । **अन्यथा तथा ज्ञानतत्त्वं** श्रद्धेयं **विदुर्बुधाः** । किंभूतम् ? इत्याह–**विनिर्भास** इत्यादि । विधा(विविधो) विचित्रो वा सुखादिनीलादिनिर्भासः तस्माद् **व्यति-** २५ **रिक्तमिति** । अत्रायमभिप्रायः–प्रतिभासाद्वैतं स्तम्भादिस्वभावम्, अन्यद्वा स्यात् ? प्रथमपक्षे आह–*"**यथादर्शनम्**" [प्र० वा० २।३५७][6] इत्यादि **परीक्षायाः** [५१४ख] **निमित्तं न भवति**, जीवादितत्त्वाप्रतिकूलं हि तत् इति । द्वितीये दोषमाह–**प्रमाणागोचरम्** इत्यादि । तन्न युक्तम्–*"**अज्ञातार्थप्रकाशो वा इति पारमार्थिकं प्रमाणलक्षणम्**" [प्र० वार्तिकाल० पृ० ३०] इति । ३०

(१) पृ० ६५६ प० ८। (२) यदि स्वरूपमग्नं न स्यात्तदा ज्ञानमेव न स्यात् । (३) लक्षणान्तरा-भावादेव । (४) प्रमाणात् । (५) प्रतिभासाद्वैतवादी प्राह । (६) "यथादर्शनमेवेयं मानमेयफलस्थितिः । क्रियतेऽविद्यमानापि ग्राह्यग्राहकसंविदाम्॥"–प्र० वा०

उपसंहारमाह–**तत्र** इत्यादि ।

सांप्रतं सौगतस्य अनवस्थितचेष्टितं प्रकटयन्नाह–**बहिरर्थोऽस्ति** इत्यादि ।

**[बहिरर्थोऽस्त्यनाकारा बुद्धिश्चाप्यनाकृतिः ।**
**असंभाव्याननुमेयेत्याकुलं किमतः परम् ॥४४॥**

५ बहिरन्तर्ज्ञेययोः विधिप्रतिषेधैकान्तसंवृतिवादान् परस्परविलक्षणानवलम्ब्य किमप्याकुलं कथयन् कथं स्वस्थात्मा नाम यतोऽयं परीक्षकसमयमवतरति ?]

**बहिरर्थोऽस्ति अर्थाकारा बुद्धिश्चा**स्ति इति सौत्रान्तिकाः । नास्ति बहिरर्थः **अर्थाकारा** नीलाद्याकारा[1], तत्रैव लोकस्य अर्थ इति व्यवहारात् एवमभिधानम्[2] **बुद्धिर**स्तीति योगाचाराः । बहिरपि(रिव) बुद्धावपि परमाण्वाकारपरिहारेण व्यवस्थितस्य स्थूलस्य नीलाकारस्य असंभवात्

१० **अनाकृतिः** न विद्यते आकृतिः नीलाद्याकारो यस्याः सा अनाकृतिः बुद्धिरस्ति इत्यन्यैः तद्विशेषैः[3] । नीलादिपरिहारेण प्रत्यक्षे तदप्रतिभासनाद् ब्रह्मवदिति, सद्भाव्या भ्रान्तान्यथा(न्नार्थान्यथा)नुपपत्त्याऽनुमेया[ऽ]नाकृतिर्बुद्धिः मीमांसकबुद्धेरिव । अर्थदृष्टतया तस्यापि क्वचिद् भ्रान्त्या सद्दर्शनाभावात् न ततस्तदनुमानम् इत्य**संभाव्याऽननुमेये**त्येवमा **कुल** मनवस्थितत्वं **किमतः परम्** ? अपि तु इदमेव आकुलत्वम् ।

१५ अथवा दृष्टापलापित्वेन सौगतस्य चौर्यन्द(चौर्यं द)र्शयन्नाह–**बहिर**स्ति इत्यादि । **बहिरर्थो** विचेतनो घटादि**रस्ति** प्रमाणवलावलं वा (बलाबलम्बी) विद्यते, तथापि नास्ति बहिरर्थः[4] । **बुद्धिरनाकृतिरस्ति** तथापि अर्थाकारा संभाव्या अहमहमिकया स्वसंवेदनाध्यक्षानिश्चेया(या) तथाप्यसंभाव्या सुखादिनीलादि [५१६क]व्यतिरेकेण अध्यवसेयेत्त्य**वमाकुलम्** असम्बद्धं वचनम् **किमतः परम्** इदमेव प्रमाणवादिताभिधानात् (भिघातात्] ।

२० कारिकाविवरणमाह– **बहिरन्तर्ज्ञेय** इत्यादि । **बहिर्ज्ञेयं** घटादि **अन्तर्ज्ञेयं** बुद्धिसुखादि **तयोः** पूर्वं **विधिश्च** पुनः **प्रतिषेधश्च तावेकान्तौ** च **संवृतिवादश्च** तान् । किंभूतान् ? **परस्परविलक्षणान्** अन्योऽन्यपरिहारस्थितस्वभावान् । किम् ? **अवलम्ब्य** आश्रित्य **आकुल**मनवस्थितम् **किमपि** रूपादि[5] स्कन्धजातं दुःखादि[6] जातं वा **कथयन् कथं स्वस्थात्मा नाम यतः** स्वस्थात्मत्वादयं सौगतः **परीक्षकसमयमवतरति** । द्वितीये तु व्याख्याने **बहिरन्तर्ज्ञेययोः** यो

२५ **विधिः** स्वरूपादिचतुष्टयेन, यश्च **प्रतिषेधो** विपर्ययेण **भावेनै**(तावेव ए)**कान्तौ** प्रधानधर्मो (र्मौ)तयोः **संवृतिवादान्** कल्पनाशिल्पितधर्मभेदवचनविशेषाविति(षानिति) ग्राह्यम् । शेषं पूर्ववत् ।

तर्हि सर्वस्य वस्तुनो विचार्यमाणस्यादयो(स्याऽयो)गात् सकलशून्यतैव भवत्विति चेत्; अत्राह–**एतत् वस्तुबलागतम्** इत्यादि ।

---

(१) बुद्धिरेव । (२) 'अर्थाकारा' इति कथनम् । (३) माध्यमिकः । (४) योगाचारविशेषः । (५) आदिपदेन वेदनासंज्ञासंस्कारविज्ञानस्कन्धपरिग्रहः । (६) आदिपदेन समुदयनिरोधमार्गलक्षणार्यसत्यपरिग्रहः ।

**[एतद्वस्तुबलागतं जगदिदं शून्यं यदाप्तोऽब्रवीत्,**
**यस्माद्वस्तु विचार्यमाणमखिलं नावस्थितं चेतरत् ।**
**लोकेऽयमवधेयवाक्किल महाकष्टं प्रविष्टः कलिः,**
**एकान्तग्रहरक्तरक्तपटवाचालविप्रलब्धाकुलः ॥४५॥]**

**यदाप्तः** सुगतोऽ**ब्रवीत्** त**देतद् वस्तुबलागतम्** अर्थसामर्थ्येनागतम् । किं तत् ? ५
इत्याह–**जगदिदं शून्यम्** इति । कुतः ? इत्याह–**यस्मात्** इत्यादि । **यस्मात्** कारणात्
**वस्तु** च **इतरजातं (रञ्च** तत) **विचार्यमाणम् अखिलं** निरवशेषं **नावस्थितम् । च**
इत्यवधारणे **इति** एव**मयं** ध र्म की र्तिः **लोके**ऽस्मिन्न अवधेयवाक् **(न् अवधेयवाक्)**
आदेयवचनः **किल महाकष्टं प्रविष्टः कलिः** । किंभूतोऽसौ ? इत्याह–**एकान्तग्रहेन**
**(हेण) रक्ताः** त एव **रक्तपटाश्च वाचालाश्च** तैः पूर्वं **विप्रलम्भः (लब्धः)** वञ्चितः १०
[५१६ख] **पश्चादाकुलः** प्रमाणप्रमेयविकलवचनादिति ।

इति र वि भ द्र पादोपजीवि-अ न न्त वी र्य विरचितायां सि द्धि वि नि श्च य
टी का यां शब्दसिद्धिर्नवमः प्रस्तावः ।

---

# [दशमः प्रस्तावः]

## [१० अर्थनयसिद्धिः]

प्रमाणसिद्धिविधानानन्तरं नयसिद्धिं विधित्सुः तदादौ तदर्थसंग्रहवृत्तमाह–**ज्ञातॄणाम्** इत्यादि ।

**[ज्ञातॄणामभिसन्धयः खलु नयास्ते द्रव्यपर्यायतः,**
**द्वेधा द्रव्यमनन्तपर्ययपदं भेदात्मकाः पर्ययाः ।**
५ **तच्छुद्धिभिदया नया बहुविधाः सम्प्रादितोऽर्थाश्रयाः,**
**चत्वारोऽत्र च नैगमप्रभृतयः शेषास्त्रयं शब्दतः ॥१॥]**

प्रमाणेन प्रत्यक्षादिना स्वार्थं जानन्ति **ज्ञातारः** तेषाम् **अभिसन्धयः** प्रमाणप्रमितार्थैकदेशावसायकल्पाः **खलु** स्फुटं **नयाः** । नयसामान्यलक्षणमेतत् । तद्भेदमाह–**ते** नया **द्वेधा** द्वाभ्यां प्रकाराभ्यां व्यवतिष्ठन्त(न्ते) इत्यध्याहारः । कुतः ? इत्याह–**द्रव्य** इत्यादि । **द्रव्यतो**
१० द्रव्यमाश्रित्य **पर्यायतः** पर्यायाणाना(याना)श्रित्य द्रव्यार्थिकपर्यायार्थिकनया इत्यर्थः । द्रव्यस्वरूपमाह–**द्रव्यम् अनन्तपर्ययपदम्** अनन्ताः पर्यवसानरहिताः प[र्य]याः पर्यायाः परिणामा इत्यर्थः तेषां पदं स्थानम् । उपलक्षणमेतत्–तेन अनादिपर्ययपदम् इत्यपि ग्राह्यम्, अनेन नित्यैकरूपं द्रव्यमपास्तम् । निरूपितं चैतत् । तेन पर्यायाणां पदम् इत्यनेन तेषां स्वातन्त्र्यं निषेधति । तद्ध[द्]द्रव्यस्य किं पदम् ? द्रव्यान्तरम् इति चेत्; तस्यापि तदन्तरम् इत्यनवस्था ।
१५ स्वतन्त्रं तदिति चेत्; पर्यायाः तथा सन्त विशेषाहेतु (सन्तु विशेषहेत्व)भावादिति चेत्; उक्तमत्र–चित्रैकज्ञाने नीलादिनिर्भासवत् परतन्त्राणां सदा तेषामवभासनात् तज्ज्ञानवदेव । न च तस्य अवश्यम् अपरस्थानान्वेषण(णं) न्यायोपपन्नम् । अनादिपर्ययपदम् इत्यनेन जीवादेर्द्रव्यस्य सादित्वं प्रत्याचष्टे । [५१७ क] **अनन्तपर्ययपदम्** इत्यनेनापि प्रदीपादेः तत्त्वम्, उभयत्रोक्तप्रमाणबाधनात् ।

२० ननु यदा द्रव्यादयो भिन्नाः समवायेन च तत्र वर्तन्ते, तदापि तेषां तत्पदम्, तत्कुतोऽस्य व्युदास इति चेत् ? अत एव, द्रव्यपर्यायसमवायानाम् अन्योऽन्यं भेदैकान्ते 'किं कस्य पदम्' इति न निश्चयहेतुरस्ति । पर्यायस्वरूपमाह–**भेदात्मकाः भेदः** परस्परव्यावृत्तिः **आत्मा** स्वरूपं येषां ते तथोक्ताः **पर्याया (पर्ययाः)** इति परियन्ति भेदम् इति व्युत्पत्तेः । ननु पर्याया इति निपातनं बाधकमिति तदसिद्धिरिति चेत्; न; *"**पर्या[या]र्हर्णोत्पत्तौ वुन्**" [जैनेन्द्र०
२५ २।३।९२] इत्यत्र पर्याय इति निपातनात् । सिद्धावपि *"**न्यायपरिणायपर्यायः**" [जैनेन्द्र०

(१) द्रव्यम् । (२) पर्यायाणाम् (३) पर्यायवत् । (४) पर्यायाणाम् । (५) सान्तत्वं प्रत्याख्यातं भवति । (६) जीवादिद्रव्यस्य सादित्वे, प्रदीपादेः सान्तत्वे च । (७) नैयायिकः प्राह ।

२।३।३६] इति निपातनं क्रियमाणं ज्ञापकम् तदनित्यत्वस्य इति उभयसिद्धेरिति । पुनरपि त[द्]द्वैविध्यं दर्शयन्नाह-**तच्छुद्धि** इत्यादि । तेषां द्रव्य-पर्यायाणां शुद्धिश्च (शुद्धिः **तच्छुद्धिः**) द्रव्यस्य **शुद्धिः** पर्याय(या)निराकृतिः, पर्यायाणां शुद्धिः तेषां परस्परापेक्षा, तयोर्द्वन्द्वैकवद्भावेन नपुंसत्वह्रस्वादेशः । तदेव तस्य वा **भेदतश्च**(**भिदा** भेदः) तया **द्वेधा** इति घटना । पूर्वं सुनयापेक्षम्[2], इदं तु सुनयदुर्नयापेक्षं द्वैविध्यम् इति विशेषः । पुनरपि तेषामवान्तरभेदं दर्शयन्नाह-**बहुविधाः** । अपि कियन्तः ? इत्याह-**सप्त** इति । '**द्रव्यपर्यायतः**' इति वा अत्रापि द्रष्टव्यम् । सप्तस्वपि अवान्तरभेदोऽस्ति इति दर्शयन्नाह-**आदित** इत्यादि । सप्तानां नयानाम् आदौ **आदितो** ये **चत्वारो नैगमप्रभृतयः अत्र** लोके ते **अर्थाश्रयाः** अर्थप्रधानाः **शेषाः** शब्दादयः । कियन्तः ? **त्रयं** स्ते(ते) किम् ? [५१७ख] इत्याह-**शब्दतः** शब्दमाश्रित्य प्रवर्तयन्त(र्तन्ते) इति ।

एतदेव वृत्तं विवृण्वन्नाह-**ज्ञानम्** इत्यादि ।

**[ज्ञानं प्रमाणमित्याहुः नयो ज्ञातुर्मतं मतः ।**
**ताभ्यामधिगमोऽर्थानां द्रव्यपर्यायशालिनाम् ॥२॥**

**ज्ञानमेव इत्यवधारणात् सन्निकर्षादेरसंविदितात्मनः व्युदासः । स्यात्कारमन्तरेण मत्यज्ञानादेः व्युदासे कथञ्चिदनभिमतात्मनापि व्युदस्येत । ज्ञानं प्रमाणमेवेत्युच्यमाने अनभिमतेनापि प्रसज्येत अकिञ्चित्करादेरतिचारणात् तदविसंवादनियमाभावात्, अनधिगतार्थाधिगमलक्षणत्वात् । नयस्य प्रमाणात्मकत्वे पृथग् वचनमनर्थकम्, अन्यथा कथं तेनाधिगमो नाम यतः प्रमाणनयैरधिगमः प्रतिपाद्येत, तन्न; ततस्तत्त्वाधिगमोपपत्तेः तत्परीक्षालक्षणत्वान्नयस्य । द्रव्यार्थिकपर्यायार्थिकद्वयविचारे सति परमार्थप्रतिपत्त्यविरोधात् ।]**

**ज्ञानम्** इति वचनात् 'ज्ञानमेव' इति द्रष्टव्यम्, एवमन्यत्रापि, अन्यथा तद्वचनमनर्थकम्, **प्रमाणम्** इत्यस्य तं तं(मतम्) । नयमाह-एतन्मूलत्वात[6] **नयो ज्ञातुः** प्रमाणवतो **मतम्** अभिप्रायः **मतः** । किमर्थं प्रमाणनयनिरूपणमिति चेत् ? अत्राह-**ताभ्यां** प्रमाणनयाभ्याम् **अधिगमो** निर्णयः *"प्रमाणनयैरधिगमः" [त० सू० १।६] इति वचनात् । केषां किंभूतानाम् ? इत्याह-**अर्थानाम्** इत्यादि[7] ।

(१) सम्बन्धः । (२) द्वैविध्यमुक्तम् । (३) तुलना-"अत्थप्पवरं सद्दोवसज्जणं वत्थुमुज्जुसुत्तंता । सद्दप्पहाणमत्थोवसज्जणं सेसया विंति ॥"-विशेषा० गा० २७५३ । लघी० श्लो० ७२ । त० वा० पृ० २६१ । नयवि० पृ० २६२ । प्रमाणनय० ७।४४, ४५। जैनतर्कभा० पृ० २३ । नयप्र० पृ० १०४ । (४) तुलना-"णाणं होदि पमाणं णओ वि णादुस्स हिदयभावत्थो । णिक्खेवो वि उवाओ जुत्तीए अत्थपडिगहणं ॥"-ति० प० गा० ८३ । "ज्ञानं प्रमाणमात्मादेरुपायो न्यास इष्यते । नयो ज्ञातुरभिप्रायः युक्तितोऽर्थपरिग्रहः ॥"-लघी० श्लो० ५२ । प्रमाणसं० पृ० १२७ । उद्धृतोऽयम्-ध० टी० संत० पृ० १६ । (५) इत्यनेन सम्बन्धः । (६) प्रमाणमूलत्वात् । (७) अत्र 'किम्भूतानाम्' इति प्रश्नस्य उत्तरेण 'द्रव्यपर्यायशालिनाम्' इति भवितव्यम् ।

कारिकाविवरणं 'ज्ञानमेव' इत्यादि । **ज्ञानमेव प्रमाणम् इत्यवधारणात् सन्निकर्षादेः।** किंभूतस्य ? **असंविदात्मनः** मत्यज्ञानादेः **व्युदासो** निरासः प्रमाणत्वेन ।

ननु भवता अत्रानुग(त्राग)मानुसारिणा ज्ञानपदेन मत्यज्ञानादिकं निराक्रियते, सौगतादिना अभ्रान्तादिपदेन ततः तस्माद् भवतः को विशेष इति चेत ? अत्राह-**कार(स्यात्कार)**मित्यादि ।
५ **स्यात्कारमन्तरेण मत्यज्ञानादेः कथंचित्** केनापि तेच्छेदकविशेषेण (पण) प्रकारेण 'व्युदासे' इत्यनेन 'कात' सम्बन्धः । अत्र दूषणम्-**अभिमतात्मनापि** सौगतादिभिः येनात्मना स्वसंवेदनादिस्वभावेन मत्यज्ञानादेः प्रामाण्यमभिमतम् तेनापि न केवलं द्विचन्द्रादिरूपेण **व्युदस्येत** मत्यज्ञानादिरिति । विचारितं चैतत । न चैवम्, अतः सर्वत्र स्यात्कारोऽपेक्षा (क्ष्य) इति भावः ।

ननु ज्ञाने[प्रामाण्यं]नियतमुपदर्शितं ज्ञानं त्वनियतम् [५१८ क]अप्रामाण्यमपि गच्छेत;
१० तन्न युक्तम्-*"**मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम् । तत्प्रमाणे**" [त० सू० १।९, १०] इति, इति चेत; अत्राह-**ज्ञानं प्रमाणमेव** इत्युभयावधारणमत्र इति भावः । एकान्तवादिनोऽप्येवं स्यादिति चेत; अत्राह-**अनभिमत** इत्यादि । **'स्यात्कारमन्तरेण'** इत्यनुवर्तते । यतोऽयमर्थः-स्यात्कारमन्तरेण 'ज्ञानं प्रमाणमेव' **इत्युच्यमाने** येनात्मना तत्प्रमाण**मनभिमतं** परस्य **तेनापि प्रसज्येत** प्रमाणमिति । कुतः ? इत्यत्राह-**अकिञ्चित्करादेः**
१५ इत्यादि । स्वापादौ बोधोऽ**किञ्चित्करः** प्रवृत्त्यनङ्गत्वात् । मत्र (अत्र) तदभावे प्रबोधोऽनुपादानः स्यात । जाग्रच्चित्तोपादान इति चेत ; समानसमयसुप्तपित्रादि विधो(दिचित्तो)पादानः कुतो न स्यात ? भिन्नकालत्वात्; इतरत्र समानम् । भिन्नसन्तानत्वात्; अन्यत्रैकः सन्तानः इति कुतः ? उपादानोपादेयभावात्; अन्योऽन्यसंश्रयः; तथाहि-विवक्षितजाग्रच्चित्तप्रबोधयोः एकसन्तानत्वे सिद्धे सति उपादानोपादेयभावः, तत्र सति एकसन्तानत्वमिति । तत एव पितापुत्र-
२० जाग्रच्चित्तप्रबोधयोः एकः सन्तानोऽस्तु । तदभावान्नेति चेत; स कुतो मतः ? भिन्नसन्तानत्वात; अयमपरोऽन्योऽन्यसंश्रयः- तदभावे भिन्नसन्तानत्वम्, अतश्च तदभावः । अथ भिन्नशरीरवर्तित्वात न जनकजाग्रच्चित्तं जन्यप्रबोधोपादानकारणम्; तर्हि सुप्तशरीरचित्तात् स्वप्नान्तिकशरीरचित्तं तस्माच्च सुप्तदेहे चित्तम् स्वापशरीरप्रबोधचित्तं वाऽचेतनोपादानं स्यात् । कथं वा ऐहिकदेहचित्तात परलोकदेहचित्तम् ?

२५ किंच, [५१८ ख] देवदत्तजाग्रत्सुप्तप्रबुद्धशरीरैकत्वं भेदैकान्ते [कथम् ?] उपादानोपादेयभावात; अत एव अन्यत्राप्यस्तु । यदि पुनः भिन्नदेशयोः जनकापत्यशरीरयोः न उपादानोपादेयभावः; सुप्तस्वप्नान्तिकदेहयोर्न स्यात । अन्यत्र सुप्तस्य अन्यत्र प्रबोधश्च, चित्तयो[:] भिन्नदेशयोरपि उपादानोपादेयभावो न शरीरयोः इति चिन्त्यमेतत् ।

स्यान्मतम्-पितृशरीरे तदवस्थ एव ततः कथम् उपादेयमपत्यशरीरं जायत इति[10]; कथं
३० सुप्तशरीरे तदुच्छ्वासादौ वा तदवस्थे स्वप्नान्तिकशरीरोच्छ्वासादिकम्[11] ? तन्न किञ्चिदेतत् ।

(१) तदुच्छेदक । (२) 'कात्' इति व्यर्थमत्र । (३) निश्चितं प्रामाण्यम् । (४) स्वापादौ । (५) इति चेत्; । (६) उपादानोपादेयाभावात् । (७) उपादानोपादेयभावः । (८) इति चेत्; । (९) भवति । (१०) चेत्; । (११) जायते ।

अथ मतम्–विवक्षितजाग्रच्चित्तानुकारित्वदर्शनात् प्रबोधस्य तदेतदुपादानम् । तथाहि–रुष्टस्य सुप्तस्य मूर्च्छितस्य वा तदनुरूप एव प्रबोधो लक्ष्यते, पुनः शब्दादिग्रहणादिना इति; तन्न; नियमाभावात् । कदाचित् प्रसन्नस्य व्यामोहवतो वा [प्रबो]धस्य दर्शनात् । कदाचित् कथं[चित्] तदनुकारित्वम् अन्यत्रापि । तथाहि–गर्भे शुक्रशोणितसंपातानन्तरं कुतश्चिन् मृते पितरि कालान्तरादौ पुनरपत्यं जायमानं चेतसापि तदनुकारि प्रतीयते । अपि च, यदि दीर्घकाल- ५ व्यवहितमपि उपादानकारणम्; ज्ञानस्य आलम्बनकारणं तथाविधं[1] किन्न स्यात् ? भवतु को दोष इति चेत्; भ्रान्त्यभावः, तैमिरिके अन्यदेशादेः केशोण्डुकादेः प्रतिभासनात् । व्यवहारी नैवं मन्यते इति चेत्; व्यवहिता[त्] जाग्रच्चित्ता[त्] प्रबोधमप्यसौ[2] न मन्यत इति [५१९ क] समानम् । न हि सुप्तस्य व्यवहारी मृतव्यवहारं ना च चशति (रमाश्चयति) किन्तु विशिष्टाकारदर्शनात् चैतन्यमनुमिनोति । स्वयमनुपलक्षितं तत्तत्र[3][4][5] कथमस्तीति चेत् ? मानसमध्यक्षं तथाविधं[6] कथमस्ति ? १० यथा तत्[6] आगमे पठ्यते तथा स्वापादिचेतनापि । नचानयोरवस्थयोः विशेषः । सोऽक्ष्यं सोपगत (स्वोपगत)मनुपलक्षितम् 'अस्ति' इति वदति न परोपगतमिति स्वेच्छाचारी ।

ननु नीलमिदं पीतमिदमिति निर्णयात्मकं मानसं प्रत्यक्षं लक्षितमेवास्ते इत्यपरः; उक्तमत्र–इन्द्रियव्यापारदशायां तत्कल्पने इन्द्रियजमेव तत् इत्यस्यैव नामान्तरकरणम् । न च अन्या रूपाद्य-वभासिनी दशाऽस्ति, यत्कल्पना स्यात् । 'सत्यस्वप्रदशा' इति चेत्; तत्र तर्हि पूर्वं पश्चात् १५ चाक्षु[ष]व्यापाराप्रतीतेः *"इन्द्रियज्ञानेन जनितम्" [न्यायबि० १।६] इति[7] व्याहन्यते ।

कथमेवं योगिप्रत्यक्षं तत्प्रत्यक्षं न स्यात् ? अथ अभ्यासदशायां मानसं तदिष्यते; तत्रेदं चिन्त्यते–प्राप्यभाविविषयम्, वर्त्तमानविषयं वा ? प्रथमपक्षे तदेव तत्र प्रमाणं नेन्द्रियजमिति अप्रामाण्यमस्य विकल्पवत् । इतरत्र मानसस्याप्रामाण्यम् अप्रवर्त्तकत्वात् । अपि[च,] वर्तमाने अक्षाणां व्यापारः तत्र मानसम्[8], भाविनि न[10] तद्व्यापारः तत्र इन्द्रियजम् इति व्याघातो महानिति । २०

स्यान्मतम्–इन्द्रियव्यापारावस्थायां प्रत्यक्षद्वयं मानसम् इन्द्रियजं च सदा प्रवर्त्तते इति; तर्हि नैयायिकस्येव सौगतस्यापि अस्य सर्वदा द्विःप्रतिभासं[भवेत्] रूपादीनाम् । अथ मनुषे यदुत अनिर्णयात्मना मानसेसि(सेन) [५१९ख] तिरस्कारादिन्द्रियज्ञानमविकल्पमनुपल-क्षितमास्ते तथा स्वापादिसंवेदनं तथाविधं मिद्धादितिरस्कृतमस्तु इति साधूक्तम्–'स्वापादिबोधः' इति । स आदिर्यस्य संशयविपर्यासकरस्य स तथोक्तः तस्यातिचारणात् विज्ञानाभिमतात्म[ना]पि २५ प्रसज्येत इति ।

भवतु तस्यापि प्रामाण्यमिति चेत्; अत्राह–**तद्** इत्यादि । **तस्य** [अ]किञ्चित्करादेः **अविसंवादस्य नियमेन** अवश्यंभावेन **असंभवात्** । अथवा **तस्मिन् अविसंवादकस्य(दस्य)यो नियमः तस्याऽसंभवात्** । स्यात्कारमन्तरेण अनभिमतात्मनाप(पि)प्रसज्येत इति । भवतु

(१) दीर्घकालव्यवहितम् । (२) व्यवहारी । (३) चैतन्यम् । (४) सुप्ते । (५) स्वयमनुपलक्षितम् । (६) मानसमध्यक्षम् । (७) "स्वविषयानन्तरविषयसहकारिणा इन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तन्मनोविज्ञानम् ।"–न्यायबि० (८) मानसप्रत्यक्षम् । (९) स्वीक्रियते । (१०) चाक्षुषव्यापारः ।

तदसंभवः, तथापि तस्य प्रामाण्यम् अज्ञातार्थप्रकाशनादिति चेत् ; अत्राह–**अनधिगत** इत्यादि। ततः सूक्तम् ज्ञानं(नमेत्र) **प्रमाण**मिति ।

'**नयो[ज्ञातु]र्मतं मतः**' इति न व्याचष्टे सुगमत्वात् । केवलं तत्र चोद्यं परिहर्तुं कुर्वन्नाह–**नयस्य** इत्यादि । **नयस्य प्रमाणात्मकत्वे पृथक् वचन[मन]र्थकम्** , 'ज्ञानं प्रमाणम्'
५ इत्येतावदेव वक्तव्यम् तथा च परैकवाक्यता । तस्य तदात्मकत्वं नास्ति, ततः पृथग्वचनमिति चेत् ; अत्राह–**अन्यथा** प्रमाणात्मकत्वाभावप्रकारेण **कथं तेन** नयेनाधिगमो **नाम** स्वार्थव्यवसायो नाम यत्नेन अधिगमा[त् *"प्रमा]णनयैरधिगमः" [तत्त्वार्थसू० १।६] **प्रतिपाद्येत** त त्त्वा र्थ सू त्र कृ ता । नहि अप्रमाणेन कस्यचिदधिगमः, प्रमाणपरीक्षानर्थक्यप्राप्तेः इति भावः । तत्रोत्तरम्–**न** इत्यादि । यदुक्तं परेण **तन्न** ; कुतः ? इत्याह–**ततो** नयात् **तत्त्वस्य**
१० जीवादेः **अधिगमोपपत्तेः** । एतदपि कुतः ? इत्याह–**तत्परीक्षालक्षणत्वात्** [५२०क] तस्य जीवादेः परीक्षा विचारः सैव लक्षणं स्वरूपं यस्य तस्य भावात् तत्त्वात् **नयस्य** इति, ततः तदधिगमोपपत्तिः । कुत इति चेत् ? अत्राह–**द्रव्य** इत्यादि । **द्रव्यार्थिकपर्यायार्थिकयोः** नययोः **द्वयेन** द्वयस्य वा **विचारे** सति **परमार्थप्रतिपत्तेः** परमार्थस्य परमार्थो वा प्रतिपत्तिः तस्याः **अविरोधात्** । सुविचारितं तत्त्वं सुस्थिततरं भवतीति परीक्षकन्यायः ।
१५ ननु यदि तेतः तदधिगतिः ; तर्हि प्रमाण[त्वापत्ति]स्तस्य तल्लक्षणत्वात् । तथा च अन्त्यचोद्यपरिहारो नान्यस्य(नात्रस्य) इति चेत् ; अत्राह–**स्यात् प्रमाणात्मकत्वेऽपि** इत्यादि ।

**[स्यात्प्रमाणात्मकत्वेऽपि प्रमाणप्रभवो नयः ।**
**विचारो निर्णयोपायः परीक्षेत्यवगम्यताम् ॥३॥**

२० **स्वयं साक्षात्कृतेऽपि विवाददर्शनात् पुनः ऊहापोहाभिप्रायमन्तरेण न तत्र तत्त्वाभिप्रायाभिनिवेशः यतः सर्वत्र तदनुष्ठानम् । प्रत्यक्षोपलम्भस्य परीक्षेतरयोरविशेषात्, तावताऽर्थसिद्धौ न कस्यचित्तत्त्वज्ञानं स्यात् । कुतः पुनस्तत्त्वज्ञानमन्यद्वेति चेत् ; सुनयदुर्णयाभ्याम् । समानेऽपि साक्षात्करणे अभिप्रायभेदात् तत्त्वेतराभिनिवेशोपपत्तेः तन्निष्ठत्वात् परीक्षायाः]**

२५ **स्यात्** भवेत् प्रमाणभावः **प्रमाणात्** अनेकान्तग्रहणरूपात् **प्रभव** उत्पादो यस्य स तथोक्तः ततो भिन्न इत्यर्थः, हेतुफलयोः कथंचिद्भेदात् । कोऽसौ ? इत्याह–**नय इति** । प्रमाणगृहीतैकदेशाव्य(शाध्य)वसायाभिप्रायः। कस्मिन् सत्यपि ? इत्याह–**प्रमाणात्मकत्वेऽपि** । नयस्य तदात्मकत्वं कुतः ? इत्याह–**निर्णयोपायो नयो** गतः(यतः) । सोऽपि कुतः ? इत्याह–**विवारो(विचारो)**यतः । ननु प्रत्यक्षादेरपि सविकल्पकवादिनो विचारो भवति,
३० ततोऽस्य को विशेष इति चेत् ? अत्राह–**परीक्षति(परीक्षा** इति) नित्यः क्षणिको वा भावः अनेन प्रकारेणेति या **परीक्षा** सा नये(नय) **इत्येवमवगम्यताम्** ।

(१) नयस्य । (२) प्रमाणात्मकत्वम् । (३) इति । (४) नयात् । (५) अत्र प्रतिः घृष्टा ।

स्यान्मतम्–प्रमाणपरिच्छिन्नार्थैकदेशो नयः, तस्य च प्रमाणत एव सिद्धेः, नहि समुदायाः तदेकदेशसिद्धिमन्तरेण सिध्यन्ति । वृक्षः प्रचलन् सहावयवैः प्रचलति, ततः किं तत्र नयेन इति ? तत्राह–**स्वयम्** इत्यादि । **स्वयं** [५२०ख] प्रतिपन्ना **साक्षात्कृतेऽपि** उपलक्षण [मेतत्, तेनाऽ]भिहितेऽपि अनुमितेऽपि **विवाददर्शनाद्** वस्तुनि **पुनः** पश्चात् **ऊहापोहाभिप्रायमन्तरेण नु(न)[तत्र त]त्त्वाभिप्राय[याभि]निवेशः** तत्त्वरुचिर्यतः **तदनुष्ठानं सर्वत्र** ५ बहिरन्तश्च इति । तदभिप्रायमन्तरेणा[पि तत्त्वेऽ]तिप्रसङ्गात्, अभिमतवदनभिमतेऽपि तदभिनिवेशप्रसङ्गात् । प्रत्यक्षमेव अतिप्रसङ्गं निवारयतीति चेत्; अत्राह–**प्रत्यक्षोपलम्भस्य** प्रत्यक्षेण दर्शनस्य **परीक्षेतरयोरविशेषात्** कारणात् **ताव[ता]** तदुपलम्भमात्रेत्यै(त्रेण) **वार्थसिद्धौ अङ्गीक्रियमाणायां तत्त्वज्ञानं न कस्यचित्** परीक्षकस्य इतरस्य वा **स्यात्** इतरस्मात् परीक्षको न भिद्येतेति परीक्षाऽनर्थिका भवेत् इति यावत् । परः पृच्छति–**कुतः** कारणात् **पुनः तत्त्वज्ञानमन्यद्वाऽतत्त्वज्ञानं** वा इत्येवं **चेत्** ? अत्रोत्तरमाह–**सुनयदुर्णयाभ्याम्** इति । **सुनयेन** तत्त्वज्ञानं **दुर्णयेन** अतत्त्वज्ञानम् । सौगतादिवदेतदिति चेत्; अत्राह–**समानेऽपि** जैनैकान्तवादिनोः **साक्षात्करणे अभिप्रायभेदात्** अभिप्रायस्य ज्ञावभिमत्त्वेः(ज्ञात्रभिरुचेः)अर्थानुसारित्वेतरत्वकृतविशेषात् **तत्त्वेतराभिनिवेशोपपत्तेः** । तदपि कुतः ? इत्याह–**तन्निष्ठत्वात्** नयस्वरूपत्वात् **परीक्षायाः** । १०, १५

तद्भेदं सुनयदुर्णयत्वं च दर्शयन्नाह–**तत्र** इत्यादि ।

**[तत्र मूलनयौ द्रव्यपर्यायार्थगोचरौ ।**
**मिथ्यात्वं निरपेक्षत्वे सम्यक्त्वं तद्विपर्यये ॥४॥**

**परीक्षा भेदाभेदप्रतिष्ठा द्रव्यपर्यायविषयद्वैविध्यात् नयद्वैविध्यमाह । तत्र अन्योऽन्याविनाभावप्रतिपत्तिः प्रमाणम्[४] । इतरथा न प्रमाणपरीक्षा । सत्येव असत्त्वप्रतिपत्तेर्दुर्णयता । ]** २०

**तत्र** नयसामान्यलक्षणे, **मूलनयौ** नैगमादिप्रकृतिभूतनयौ **द्रव्यपर्यायार्थौ** द्रव्यं पर्यायश्च अर्थौ **गोचरौ** ययोः तौ तथोक्तौ–द्रव्यार्थोद्रव्यार्थिकः [५२१क] पर्यायार्थि(यार्थः) पर्यायार्थिक इत्यर्थः । **मिथ्यात्वं नयोः निरपेक्षत्वे** परस्परापेक्षाभावो(वे) **सम्यक्त्वं तद्विपर्यये** निरपेक्षत्वविपये सापेक्षत्वविपये(निरपेक्षत्वविपर्यये) सापेक्षत्व इत्यर्थः । तथा चोक्तम्– २५

(१) प्रवर्तते । (२) अत्र प्रतिस्त्रुटिता । (३) तुलना–"निरपेक्षा नया मिथ्या सापेक्षा वस्तु तेऽर्थकृत् ।" –आप्तमी० इलो० १०८ । "तम्हा सव्वे वि णया मिच्छादिट्ठी सपक्खपडिबद्धा । अण्णोण्णणिस्सिआ उण हवंति सम्मत्तसब्भावा ॥"–सन्मति० १।२१ (४) तुलना–"धर्मान्तरादानोपेक्षाहानिलक्षणत्वात् प्रमाणनयदुर्णयानां प्रकारान्तरासंभवाच्च । प्रमाणात् तदतत्स्वभावप्रतिपत्तेः नयात् तत्प्रतिपत्तेः दुर्णयात्तदन्यनिराकृतेश्च ।"–अष्टश०, अष्टस० पृ० २७९ । लघी० इलो० ३० । "सदेव सत्स्यात् सदिति त्रिधार्थो मीयेत दुर्नीतिनयप्रमाणैः ।"–अन्ययोगव्य० इलो० ८ ।

*"य एव नित्यक्षणिकादयो नयाः मिथोऽनपेक्षाः स्वपरप्रणाशिनः ।
त एव तत्त्वं विमलस्य ते मुनेः परस्परेक्षाः स्वपरोपकारिणः ॥"
[बृहत्स्व० श्लो० ६१]

कारिकां विवृण्वन्नाह–**परीक्षा** इत्यादि । **परीक्ष(क्षा)**सामान्यनयस्वरूपम् इत्यर्थः । ५ केषामिति किं विषया सा ? इत्याह–**भेदाभेदप्रतिष्ठा [भेदा]भेदयोः** विशेषसामान्ययोः **प्रतिष्ठा** स्थितिर्यस्याः, द्रव्यपर्यायविषयद्वैविध्यात् नयद्वैविध्यमाह । **'सम्यक्त्वम्'** इत्यादि व्याचष्टे । **तत्र** तस्मिन् नयस्वरूपतद्भेदे सति **अन्योऽन्यं** परस्परं द्रव्ययर्यौ(पर्याययो) **रविनाभावस्य प्रतिपत्तिर्यस्यां** परीक्षायां सा **अन्योऽन्या[विना]भावप्रतिपत्तिः** । सा किम् ? इत्याह–**प्रमाणं** सुनय(सुनय) इति यावत । **मिथ्यात्व** मित्यादि यदि सति तेरथा (**त्वमि-** १० त्यादि व्याचष्टे–**इतरथा** अन्योऽन्याविनाभाव(नाभावाभाव)प्रतिपत्तिप्रकारेण **इतरथा न प्रमाणपरीक्षा** इति । कुतः ? इत्याह–"सत्येव इत्याह"–सत्येव[1] इत्यादि । **सत्येव** विद्यमान एव पर्यायार्थिकस्य[द्रव्ये]द्रव्यार्थिकस्य पर्याये **असत्त्वप्रतिपत्तेः** न प्रमाणम् । **अत एव** अस्मा-देव कारणात **दुर्णयता** । सत्येव असत्त्वप्रतिपत्तिं दर्शयन्नाह–**द्रव्यार्थिकस्य** इत्यादि ।

**[द्रव्यार्थिकस्य पर्यायाः सन्त्येवात्राविवक्षिताः ।**
१५ **पर्यायार्थिकस्यापि सद् द्रव्यं परमार्थतः ॥५॥]**

**[द्रव्यार्थिकस्य** द्रव्यवि]षयप्रधानाभिप्रायस्य **पर्यायाः** स्थासशिविकादिभेदाः **सत्येव (सन्त्येव) अत्र** विद्यन्त **एव**, तदभावे[2] द्रव्यस्याप्यभावः इत्युक्तम् । ततो दुर्णयता । नय-प्रमाणयोरविशेषः स्यादिति चेत ; अत्राह–**अविवक्षिता** गुणीभूतास्ते[५२१ख] तस्य सन्ति, प्रमाणे तूभयं प्रधानमिति विभागः । तत्किम् ? इत्याह–**सद्** विद्यमानं **परमार्थतः ।** २० कस्य ? इत्याह–**पर्यायार्थिकस्य** पर्या[य]प्रधानाभिप्रायस्य । **अपिः** अभिप्रायसमुच्चये । अत्राप्यविवक्षितमिति द्रष्टव्यम् । तदाभा[तदभावे पर्यायस्यापि]विलोपः ।

कारिकायाः सुगमत्वाद् व्याख्यानं न कृतम् ।

यदि द्रव्यार्थिकस्य पर्यायाः सन्ति पर्यायार्थिकस्य द्रव्यम्[3], कथं सत्प्र(तत्प्र)तिक्षेप इति चेत् ? अत्राह–**संविदाम्** इत्यादि ।

२५ **[संविदामाकारभेदेषु विभ्रमप्रतिभासिषु ।**
**विसंवादोपलब्धिर्वा प्रसिद्धवितथात्मसु ॥६॥**

**अविशेषेण गुणपर्यायेषु मिथ्यात्वप्रतिपत्त्या द्रव्यार्थावधारणं क्वचित् केषुचित् वा प्रत्यभिज्ञाविसंवादात् सर्वेण तद्विसंवादात् पर्यायावधारणं च दुर्णयः तत्त्वप्रतिक्षेपात् ।]**

**संविदां** ज्ञानानां **विसंवादोपलब्धिः** । क ? इत्याह–**आकारभेदेषु** ग्राहक-३० संवेदनाकारविशेषेषु, **संविदा**मिति सम्बन्धः । नहि एकस्य अनेकं रूपं परमार्थसत् युक्तम्,

(१) 'सत्येव इत्याह' इति पुनर्लिखितमत्र व्यर्थम् । (२) पर्यायाभावे । (३) अस्ति ।

विरोधात्। एतत् शुद्धविज्ञानवादिमतापेक्षया उक्तम्। बाह्यार्थनयापेक्षया आह-**विभ्रम** इत्यादि। विभ्राम्यतीति **विभ्रमः** पा(का)चादिलक्षणोऽत(णोऽन्तः)**प्रतिभासो** येषां मन्त्राद्युपप्लुतोपलब्धमृच्छकलादीनां तेषु। **वा** इति समुच्चये। किंभूतेषु? **प्रसिद्ध-वितथात्मसु**। **प्रसिद्धः** परीक्षकेतरलोकविख्यातो **वितथोऽ**सत्यः **आत्मा** येषां तेषु इति। ५

तदुपलब्धिः किम्? इत्याह-**अविशेषेण** इत्यादि। **अविशेषेण** साकल्येन **मिथ्यात्वप्रतिपत्तिः**। क्व? इत्याह-**गुणपर्यायेषु**। तथाहि-अन्तः संवित्सुखादिभेदः बहिश्च घटपटादिभेदः मिथ्या भिन्नप्रतिभासवेद्यत्वात् ग्राह्यग्राकारद्विचन्द्रादिभेदवदिति। तया[कि]-म्? इत्याह-[तया]मिथ्यात्वप्रतिपत्त्या **द्रव्यार्थावधारणं** द्रव्यमेव अर्थः तस्य अवधारणम्-तदेव अस्तीति। १०

एवम्मन्यते-यथा[५२२ क] ग्राह्यग्राकारभ्रमेऽपि न स्वसंवेदनभ्रमः स्वप्नादिभ्रान्तावपि न जाग्रद्भ्रान्तिः तथा सकलभेदविभ्रमेऽपि न सत्तामात्रभ्रान्तिः। ततो यदुक्तं प्र ज्ञा क रे ण-***"प्रतिभासनेऽपि सुखादिनीलादेः वितथत्वे द्रव्ये कः समाश्वासः?"** इति; तन्निरस्तम्; **क्वचिद्** बहिरन्तर्वा **केषुचित्** वा अर्थान्तरेषु लूनपुनर्जातनखादिषु **प्रत्यभिज्ञाविसंवादात् सर्वेण** देशान्तरादिप्रकारेण **तद्विसंवादात् पर्यायावधारणं च**। किम्? इत्याह-**दुर्णयः**। १५ पूर्वो द्रव्यार्थिकनयाभासः परः पर्यायार्थिकनयाभास इति भावः। कुतः? इत्याह-**तत्त्वस्य** जीवादेः **प्रतिक्षेपान्निरासात्**।

द्रव्यार्थावधारणं दर्शयन्नाह-[**शुद्धे**त्यादि]।

**[शुद्धद्रव्यार्थिकस्यास्ति सन्मात्रं परमार्थतः।**
**नाकारभेदो न रूपादिः न क्रमो न सुखादयः॥७॥** २०

न खलु विज्ञानं सद्भावं व्यभिचरति विशेषेषु व्यभिचारात्। सन्मात्रस्य तद्विशेषाविनाभावात्। न चैवं भेदाव्यभिचारि ज्ञानमस्ति इति शुद्धद्रव्यप्ररूपणात्। पर्याय-[निराकरणात् दुर्णयः] यथा *"आरामं तस्य पश्यन्ति न तं पश्यति कश्चन" [बृहदा० ४।३।१४] इति तदाश्रयं दर्शनान्तरम्। शुद्धपर्यायनयः पुनः यदि स्वभावभेदेऽपि भावैकत्वं न क्वचित् कथञ्चिन्नानात्वं सर्वथा अद्वैतप्रसङ्गात् इति सर्वथा २५ द्रव्यप्रतिक्षेपे पर्याय प्ररूपणक्रमोऽयं दुर्णयः। सर्वथा अनयोरतादात्म्यनैगममाश्रित्य दर्शनान्तरम् अविवक्षिततादात्म्यलक्षत्वात् नैगमस्य।]

(१) तुलना-"अन्योऽन्यगुणभूतैकभेदाभेदप्ररूपणात्। नैगमोऽर्थान्तरत्वोक्तौ नैगमाभास इष्यते॥" -लघी० श्लो० ३९। "तत्र संकल्पमात्रस्य ग्राहको नैगमो नयः। यद्वा नैकं गमो योऽत्र स सतां नैगमो मतः॥ धर्मयोः धर्मिणोर्वापि विवक्षा धर्मधर्मिणोः।"-त० श्लो० पृ० २६९। नयवि० श्लो० ३३-३७। सन्मति० टी० पृ० ३१०। नयचक्र० गा० ३३। तत्त्वार्थसा० पृ० १०७। प्रमाणनय० ७।७। स्या० म० पृ० ३११। जैनतर्कभा० पृ० २१।

**शुद्धं** पर्यायमलकलङ्कविकलं **द्रव्यमेव अर्थो**ऽस्यास्तीति **शुद्धद्रव्यार्थिकः तस्यास्ति ।** किम ? इत्याह–**सन्मात्रं परमार्थतो** न संवृत्या,**नाकारभेदो**ऽस्ति न ग्राह्यादिविशेषः स्थूलादिविशेषो वा **न रूपादिः न क्रमो** हेतुफलभावो **न सुखादयः परमार्थतः,** अपि तु संवृत्या इति ।

५ कारिकां विवृण्वन्नाह–**न खलु विज्ञानं सद्भावं सत्त्वं व्यभिचरति।** कुतः ? इत्याह–**विशेषेषु** इत्यादि । सत्त्वव्यभिचारे दूषणमाह–**सन्मात्र** इत्यादि । तर्हि विज्ञानं विशेषमपि न व्यभिचरति इति चेत्; अत्राह–**न चैवम्** इत्यादि । एवं **सन्मात्र[स्य] तद्विशेषावि[नाभावात्] भेदाव्यभिचारि** ना (न)**ज्ञानमस्ति** तत्र व्यभिचारप्रतिपादनात इत्येवं **शुद्धद्रव्यप्ररूपणात् ।** कुतः 'दुर्णयः' इति घटना । कुतः ? इत्याह–**पर्याय** इत्यादि । निदर्शनमाह–[५२२ ख]

१० **यथेत्यागम** (**यथे**त्यादि । **आराम**)**माटोपं तस्य** सत्तामात्रद्रव्यस्य **पश्यन्ति** जनाः **न तं** सद्भावं **कश्चन पश्यतीति** **तदाश्रयं** [स]न्मात्राश्रय(यं)**दर्शनान्तरम् ।**

पर्यायार्थिकदुर्णयाभिप्रायं दर्शयन्नाह–**शुद्धपर्यायनयः पुनः** इत्यादि । **स्वभावभेदे**ऽपि स्वरूपनानात्वेऽपि **यदि भावैकत्वं न क्वचित्** पटादौ **कथंचिद्** देशादिभेदप्रकारेण **नानात्वम्,** कुतः ? इत्याह–**सर्वथा** सर्वेण घटादिप्रकारेण **अद्वैतप्रसङ्गात् ।** लब्धं फलं दर्शयन्नाह–**सर्वथा**

१५ इत्यादि । **इति** एवं **पर्यायप्ररूपणक्रमोऽयं दुर्णयः ।** कस्मिन् सति ? इत्याह–**द्रव्यप्रतिक्षेपे सति ।**

नैगमाभासं दर्शयन्नाह–**सर्वथा** इत्यादि । सर्वेण देशादिप्रकारेण **अनयोः** द्रव्यपर्याययोः **अतादात्म्यात्** नैगमः तमाश्रित्य **दर्शनान्तरं** वैशेषिकमतम् । कुतः ? इत्याह– [**अ**]**विवक्षित** इत्यादि । द्रव्यपर्याययोरविवक्षितं सदपि नार्पितं यत् **तादात्म्यं** तल्लक्षणत्वात् **नैगमनयस्य ।**

२० तद्दर्शनान्तरस्वरूपं दर्शयन्नाह–**सामान्य** इत्यादि ।

**[सामान्यसमवायानामात्मादीनां च नित्यता ।**
**तत एव तत्संख्यादेर्नित्यत्वं शेषमन्यथा ॥८॥**

**द्रव्यार्थिकनयमाश्रित्य द्रव्यस्य तत्संख्यादेः सामान्यसमवायानां च नित्यत्वं शेषाणामनित्यत्वं च केचिन्निगच्छन्ति कार्यद्रव्यकर्मगुणविशेषाणामनित्यत्वाभ्युपगमात्।**

२५ **न तत् सामान्यं वस्त्वन्तरमेव युक्तम्, संविदां विषयसारूप्यमिव । न हि वस्त्वन्तरभेदा भावाः तद्वन्तः नाम स्युः । कथमुपकार्योपकारकभावमन्तरेण तद्वत्त्वमतिप्रसङ्गात् । अपरिणामिनस्तावद् वस्तुत्वमेव न संभाव्यम् । न तादृशस्य क्वचिद् वृत्तिः क्वचिदवृत्तिः वा । सदादिप्रत्ययकर्तृत्वमकर्तृत्वं च क्वचित् कदाचित् कथंचिन्न संभाव्यम् । इति दुर्णयः । सत्तावत् जात्यन्तराणां सर्वगतत्वे वृत्तिप्रत्ययसङ्करः । स्वविषयसर्वगतत्वे निष्क्रियस्य**

३० **प्राक् तत्रासतां अर्थोत्पित्सुदेशप्राप्तिर्न स्यात् ।]**

(१) सन्तीति सम्बन्धः । (२) भेदेषु । (३) आटोपो विस्तारः तम् । (४) "आरामं तस्य पश्यन्ति न तत् पश्यति कश्चन ।"–बृहदा० ४।३।१४।

**सामान्यानि** च **समवायश्च तेषाम् आत्मादीनाम्** वा (च) **आदिशब्दात्** आत्मव्यतिरिक्तसकलमूलद्रव्यपरिग्रहः । किम् ? इत्याह–**नित्यता** सदकारणत्वात् इति मन्यते । [त]**त एव** नित्यद्रव्येषु वर्त्तमानस्य **संख्यादेः नित्यत्वं** संख्यादिनित्यत्वम् । अत्र आदिशब्देन परिणामादि (परिमाणादि) परिग्रहः । एतेन नित्यव्यापिद्रव्यवृत्तयोऽन्त्यविशेषा व्याख्याताः । **शेषं** कथिता**दन्यथा** अनित्यम् इति । ५

कारिकां व्याख्यातुमाह–**द्रव्यार्थिकनयम्** इत्यादि [५२३क] । नित्यत्वे भावानां द्रव्यार्थिकस्यैव व्यापारो न नैगमस्य अन्यथाभूतत्वात् अतो **द्रव्यार्थिकनयमाश्रित्य** इत्युच्यते । **द्रव्यस्य** आत्मादेः **तत्संख्यादेः सामान्यसमवायानां च नित्यत्वम् शेषाणाम् अनित्यत्वं च**, **'च'** इत्यवधारणे सामान्यादिषु **केचन** नैयायिकादयो **निगच्छन्ति** प्रतिपद्यन्ते । कुतः शेषाणा(णां) ने ह्य ह् (न ? इत्याह–)**कार्यद्रव्य** इत्यादि । **कार्यद्रव्यम्** प्रागसत् सत्तासम- १० वायिकारण(णं) समवायि या द्रव्यम्, **कर्म** उत्क्षेपणादि **गुणविशेषाः** कार्यद्रव्यगताः सर्वे रूपादयः नित्यद्रव्यगताः संख्यादिभ्योऽन्ये बुद्ध्यादिरक्तादयः **तेषाम् अनित्यत्वाभ्युपगमात्** । किं सामान्यम् ? इत्याह–**तत्र** इत्यादि । तेषु सामान्यादिषु मध्ये समानानां सदृशानां भावः **सामान्यम्** तद् विशेषेभ्यो भिन्नमेव इति यौगाः । तत्राह–**न तत्** सामान्यं **वस्त्वन्तरमेव** व्यक्तिभ्यो भिन्नमेव **युक्तं** 'कथञ्चिद्भिन्नं तु युक्तम्' इति **एव**कारेण दर्शयति एकत्र प्रमाणाभावाद् १५ अन्यत्र विपर्ययात् । कथं तत्तर्हि इति सौगतः; तत्राह–**संविदाम्** इत्यादि । **संविदां ज्ञानानामिव विषयसारूप्यं** यथा ज्ञानानां विषयेण सारूप्यं तथा सामान्यमिति विचारित[म]सकृत् । कुतो न तद् वस्त्वन्तरमेव इति चेत् ? अत्राह–**नहि** इत्यादि । [हि] यस्मात् **न वस्त्वन्तरेण भेदाः** परस्परविलक्षणा **भावाः** समाना इतरथा चन्द्रमसैकेन सर्वेऽपि उडुविशेषाः समाना इति [न] तेषु तारोपति (तारा इति) प्रत्ययः । २०

स्यान्मतम्–न तेषु विधुर्वर्तते, सामान्यं तु स्वपि (स्ववि)शेषवृत्ति, ततोऽयमदोष इति ; तत्राह–**तद्वन्तः** सामान्यवन्तो [५२३ख] **भेदा नाम स्युः** । यथा अव्यवन्नगरं (?) तद्वन्त एव इति चेत् ; अत्राह–**कथं च** इत्यादि । केन च प्रकारेण न केनचिद् **उपकार्योपकारकभाव-मन्तरेण** वस्त्वन्तरेण **तद्वत्त्वम् अतिप्रसङ्गात्** विन्ध्यस्य साध्येन (सह्येन) तद्वत्ता स्यादि[त्य]ति-प्रसङ्गः । २५

ननु भवन्मते–रूपतद्विज्ञानयोः उपकार्योपकारकभावमन्तरेणापि भवति तद्वत्ता 'रूपस्य ज्ञानम्' । अथ तत्र अयमेव तद्भावो[६] यो ग्राह्यग्राहकभावः ; जातिव्यक्त्योरपि प्रकाश्यप्रकाशक-भाव एव तद्भावोऽस्तु । न हि योग्यतात्र राजदण्डवारिता । जात्या वा व्यक्तीनामुपकारः–तत्र विशिष्टबुद्धिजननमिति चेत् ; अत्राह–**अपरिणामिनो** नित्यैकरूपस्य सामान्यादेः **तावद्वस्तु-त्वमेव सत्त्वमेव न संभाव्यं** प्रमाणाभावात् । नहि खण्डादिभ्यो भिन्नस्य नित्यस्य **निरंशस्य** ३०

(१) सत्त्वे सति कारणरहितत्वात् इति । (२) विशेषा अपि नित्या इति । (३) सर्वथा भेदे । (४) कथञ्चिद्भेदे । (५) तारागणेषु । (६) उपकार्योपकारकभावः । (७) इति चेत् ।

अमूर्त्तस्य सामान्यस्य प्रतीतिरस्ति यतः तस्य तौ व्यञ्जिकाः स्युः, सदृशात्मनां तासां स्वबुद्धौ प्रतिभासनात् । नापि सामान्यं तथाविधं तासु प्रत्ययविशेषमुपजनयदुपलब्ध(ब्धं) येन तावता दुपक (तावता तदुपकारक) मुच्यते, परिणामिनो भावस्य स्वयं चक्षुरादिप्रत्यये प्रथनात् ।

अथ मतं नो (नो) पकार्योपकारकभावाद् भेदानां तद्वत्त(त्त्व) मपि तु सामान्यस्य तत्र ५ समवायादिति; तत्राह–**तादृशस्य** इत्यादि । **तादृशस्य** असंभावितवस्तुत्वस्य **क्वचित्** शावलेयादौ **वृत्तिः** समवायः सम्बन्धः **क्वचित्** कर्कादाववृत्तिः **न** 'संभाव्या' इति सम्बन्धः । यदि हि तादृशं तदुपलब्धं भवेत् तदा तत् कचिद्वर्त्तते न वा इति [५२४ क] कल्पनमर्हति, नान्यथा वन्ध्यासुतवत् । अनेन तत्र तत्समवायसाधनं निरस्तम् । यदा हि तद्वर्त्तमानं तत्रोपलब्धं भवति तदा 'इह जातिर्वर्त्तते' इति प्रत्ययात् तद्युक्तं नवा । एवं कदाचित् पिण्डोत्पत्तिसमये वृत्तिः तद्विनाश-
१० समये अवृत्तिः न संभाव्या । न परिणाममन्तरेण सम्बन्धेतररूपद्वयम् एकस्य ।

ननु पिण्ड एव उत्पद्यते विनश्यति वा न सामान्यं समवायो वा, न वाऽन्यस्य उत्पत्त्यादेरन्य[त्र] तद्वत्; अतिप्रसङ्गात् । अतो यथा कर्तृत्वाकर्तृत्वभावेऽपि न तद्भेदः तथा वृत्त्यवृत्तिभावेऽपि इति चेत्; न सदेतत्; यतः पूर्वरूपापरित्यागे इदमिह वर्त्तते न वर्त्तते चेति ततः प्रत्ययायोगात्, सर्वदा वा तत्प्रत्ययप्रसवः, नित्यस्य अपेक्षायोगात् । कथंचित् (कथंचन)
१५ सर्वात्मना वृत्तिरवृत्तिर्न संभाव्या ।

नन्वेकस्य सदादिप्रत्ययकर्तृत्वाकर्तृत्ववत् वृत्त्यवृत्ती स्यातामिति चेत्; अत्राह–**सदादि** इत्यादि । **सदादि**र्यस्य द्रव्यगुणादेः तस्य **प्रत्ययः** तस्य **कर्तृत्वं [अकर्तृत्वं]** च **क्वचित् कदाचित् कथंचिन्न संभाव्यम्** इत्येवं **दुर्णयः** ।

किंच, सामान्यं सर्वगतम्, स्वव्यक्तिसर्वगतं वा भवेत् ? प्रथमपक्षे दूषणमाह–**सत्तावत्**
२० महासामान्यवत् **जात्यन्तराण्यं**(**राणां**) गोत्वादीनां **सर्वगतत्वे** अङ्गीक्रियमाणे **वृत्तिप्रत्ययसङ्करः** । यथा गोत्वस्य खण्डादौ वृत्तिः सयवायथादृदित्त्वादेरिति (समवायात् तथा दधित्वादेरिति) वृत्तिसंकरः, तत एव तत्र गोप्रत्ययवत् दध्यादि[प्र]त्ययोऽपि स्यादिति प्रत्ययसङ्करः । द्वितीयपक्षे **स्वविषय** इत्यादि । **स्वविषयसर्वगतत्वे** स्वगोचरे व्यक्तिव्यापित्वे क्रियावत्त्वमन्तरेण **निष्क्रियस्य** इत्यर्थः । **अर्थो** द्रव्यादिः [५२४ ख] **उपित्सुर्यस्मिन् देशे** स तथोक्तः, कामचारेण विशेषणविशेष्य-
२५ भावः इति उत्पित्सुपदस्य विशेष्यत्वं स चासौ देशश्च **तत्प्रप्तिः**(**तत्प्राप्तिः**) **प्रागुत्पत्तेः पूर्वं तत्र** देशेऽसतां जात्यन्तराणां **न स्यात्** । तदुक्तं स म न्त भ द्र स्वा मि भिः–

***"सामान्यं समवायश्च एकत्र समवायितः ।**
**अन्तरेणाश्रयं न स्यात् नाशोत्पादिषु को विधिः ॥"**

[आप्तमी० श्लो० ६५] इति ।

३० अतश्च न तद् वस्त्वन्तरमेव युक्तमिति दर्शयन्नाह–**सत्स्वभावोपलब्धौ** इत्यादि ।

---

(१) व्यक्तयः । (२) नित्यम् । (३) वक्तुं शक्येत । (४) अन्यो भावः तद्वान् भवितुमर्हति । (५) खण्डादौ ।

**[ सत्स्वभावोपलब्धौ किं सत्तया समवायिनाम् ?**
**असतां सत्ताभिसम्बन्धे नाभावः कस्यचित् क्वचित् ॥९॥**

स्वतः सतो [न सत्तासमवायः] सामान्यसमवायवदिति । यदि पुनः [स्यात्] स्वपक्षघाती कथमनुन्मत्तः ? कश्च द्रव्यादीनां स्वतः परतो वा सद्भावे विशेषः यतः सत्तासम्बन्धेन अर्थो विशेष्येत । यदि पुनः तयोः नित्यत्वात् ; उत्सन्नेदानी- ५ मभाववार्ता । तन्नेयं परकीया वाचोयुक्तिः । सत्तावत् सामान्यान्तरेषु अयं समानश्चर्चः तत्र…परस्पर…]

**सत्स्वभावः** स्वरूपं येषां ते **सत्स्वभावाः** घटादयः, अनेन सत्तातद्वतोर्व्यतिरेकं प्रत्याचष्टे[1], **तेषामुपलब्धौ** दर्शने सति, अनेनापि *"खण्डादौ गौर्गौरिति ज्ञानं भिन्नविशेषणनिमित्तं स्वयम् अन्यथाभूते अन्यथा ज्ञानत्वात् पुरुषे दण्डीति ज्ञानवत्" इति १० हेतोः व्यभिचारं दर्शयति । 'सन्तो घटादयः' इति ज्ञानस्य भिन्नविशेषणमन्तरेणापि भावात् । तत्रापि भिन्नसत्ता दिष्यत (दिश्यत) इति चेन ; अत्राह–**किं न किंचित् सत्तया** भिन्नसत्तासम्बन्धेन इत्यर्थः । केषाम ? इत्याह–**समवायिनाम्** द्रव्यगुणकर्मणाम । ननु स्वतः सतां तत्सम्बन्धे[2] स्यादयं दोषो नाऽसतामिति चेत् ; अत्राह–**असतां च सत्तयाऽभिसम्बन्धे** अङ्गीक्रियमाणे **नाभावः कस्यचित्** शशविषाणादेः **क्वचिद्** देशादौ 'भवेत' इत्युपस्कारः । १५

कारिकां व्याख्यातुमाह–**स्वतः सत** इत्यादि । परप्रसिद्धं निदर्शनमत्र **सामान्यसमवायवदिति** । अन्त्यविशेषण ग्र (पग्र)हणं कुतो नेति चेत ? केषाम (तेषाम् )अत्यन्तपरोक्षत्वेन परै[3]रभ्युपगमात् । [५२५क] अनुमानाभासस्यापि तत्रा[4]संभवादनिदर्शनात[5] । अथ योगिनां व्यापकद्रव्येषु भेदबुद्धिर्यन्निमित्ता तेऽन्त्या विशेषाः ; न ; तेषु स्वयमेव तद्बुद्धिभावात , अन्यथा तत्रापि[6] तेषां[7] तद्बुद्धिरपरतत्पूर्विका[8] इत्यनवस्था । २०

ननु सामान्यादयो न स्वतः, नापि [प]रतः सत्तासामान्ये तदन्तराभावात[9] तत्कथं ते निदर्शनमिति चेन ? अत्राह–**यदि पुनः** इत्यादि । सुगममुत्तरमत्र **स्वपक्षघाती** वैशेषिकादिः **कथमनुन्मत्तः** उन्मत्त एव । सामान्यादेरभावप्रतिपादनेन सर्वाभावाभ्युपगमात ।

पुनरपि परस्य दुश्चेष्टितं चिन्तयन्नाह–**कश्च** इत्यादि । चेदि(च इति) दूषणसमुच्चये **कः** न कश्चिद्विशेषः । क ? **सद्भावे द्रव्यादीनां** सत्त्वे । कुतः ? इत्याह– **स्वतः परतो वा** २५ स्यात **यतो** विशेषात् **सत्तासम्बन्धेन अर्थो** द्रव्यादिः **विशिष्येत** । तथाहि–गुणदोषदर्शनाभ्यां कश्चित् पक्षपातेतरौ सतां युक्तौ, नान्यथा । न च स्वतः सद्भावे अर्थस्य दोषम् लेश (दोषलेश)-स्यापि दर्शनम् । तथाऽदर्शनमेव त[10]द्दर्शनमिति चेत् ; किं पुनः स्वतोऽसतां शशशृङ्गादीनां दर्शनमस्ति ? विरोधात् ।

(१) निराकरोति । (२) सत्तासम्बन्धे । (३) वैशेषिकैः । (४) अन्त्यविशेषेषु । (५) निदर्शनरूपेण अकथनात् । (६) विशेषेष्वपि । (७) योगिनाम् । (८) अपरविशेषपूर्विका । (९) सामान्यान्तराभावात् । (१०) दोषलेशदर्शनम् ।

स्यान्मतम्–अर्थस्य स्वतःसद्भावे अपरसामान्याभावः सत्तादिवत् स्यादिति ; न ; उक्तमत्र– चित्रत्वाद्भावानाम् । कस्यचित् स्वतः सतोऽपरजातिः न शब्दस्य तथाऽदर्शनात् गुणसंयोगवत् । ननु न सर्वस्य स्वतोऽसतो दर्शनमिष्यते किन्तु सत्तासम्बन्धित इति चेत् ; अत्राह– **यदि पुनः** इत्यादि । **तयोः** सत्तासमवाययोः **नित्यत्वात्** । उपलक्षणमेतत् व्यापित्वा[त्][1]
५ च **उत्पन्ना** नष्टा **इदानीमभाववार्त्ता** खरविषाणादीनामपि [५२५ख] सत्त्वापत्तेः, यत एवं **तन्नेयं परकीया वाचोयुक्तिरुपपद्यते** इत्युपसंहारः । एतदन्यत्रातिदिशन्नाह–**सत्तावत्** इत्यादि । सत्तायामिव **सामान्यान्तरेषु** द्रव्यत्वादिषु **अयम्** अनन्तरः **समानश्चर्चः** परीक्षा । तथाहि–जीवादीनां द्रव्यादिस्वभावोपलब्धौ किं द्रव्यत्वादिना भिन्नेन ? स्वयमद्रव्यादीनां द्रव्यत्वाद्यदि(त्वादि)सम्बन्धे नाद्रव्यादिः कश्चित् स्यात् । शेषमत्रापि समानम् ।
१० **तन्न** इत्याद्युपसंहारः । कुतः ? इत्याह–**परस्पर** इत्यादि ।

सांप्रतं सांख्य नैगमाभासं दर्शयन्नाह–**द्रव्यं शुद्धम्** इत्यादि ।

**[द्रव्यं शुद्धमशुद्धं च संश्रित्यान्योऽस्ति नैगमः ।**
**चित्प्रधानप्रपञ्चेन यथा लक्ष्येत दुर्णयः ॥१०॥**

**चिच्छक्तेरात्मनोऽदर्शितविषयवतो नानात्मैकत्वं च समाश्रित्य प्रधानं कार्यकारण-**
१५ **भावमासाद्य महदादिक्रमेण विवर्तमानमात्मानं तदर्थं समर्पयति इति नैगमो दुर्णयः, प्रधानपुरुषयोः परिणामस्वभावव्यवस्थापनात् । तदेकपुरुषमनेकपुरुषं च अनीश्वरेतरभेदात् भिद्यते । प्रधानस्य पुरुषार्थप्रवृत्तिसंभवेन अनीश्वरभेदः तत्प्रवृत्तेरसंभवेन सेश्वरभेदः ; अपरिणामिनश्चैतन्यस्य वस्तुत्वं प्रत्युक्तम् सामान्यादिना । कादाचित्कम् कुतः··· । हर्षविषादाद्यनेकाकारविवर्तज्ञानवृत्तेः प्रकृतेरपरां चैतन्यवृत्तिं कः प्रेक्षावान्**
२० **प्रतिजानीते ? अनुपयोगात् । प्रकृतदर्शितविषयवतः पुरुषस्य अविकारित्वविशेषतो दुरन्वयम् । पुरुषस्य भोक्तृस्वभावनित्यात्वे प्रकृतेः भोग्यात्मनो नित्यत्वे सति तत्प्रवृत्तिनिवृत्ती इति दुरन्वयम् । प्रकृतेः परिणामे वा चिच्छक्तेरपि विवर्तः तद्दर्शितविषयत्वात् । अचेतनभेदानां सुखदुःखमोहात्मकप्रधानमित्यभिधानात्मा जातिः प्रकृतिरेव, न पुनः सर्वपुरुषाणां संवेदनजातिः सामान्यमिति दुरन्वयमेतत् । तन्न···]**
२५ **द्रव्यं** पुरुषरूपम् , किंभूतम् ? **शुद्धम्** सुखादिभेदरहितम् **अशुद्धं** च महदादिपर्याय-परिकरितं द्रव्यं प्रधानलक्षणं **संश्रित्य अन्यो** नैयायिको (क) नैगमात् भिन्नोऽस्ति **नैगमः चित्**पुरुषः । **प्रधानं**[3] मूलप्रकृतिः तयोः **प्रपञ्चेन** । कथमस्ति इह ? **यथा** येन प्रमाणानुपपन्नत्वप्रकारेण **लक्ष्येत** निश्चीयेत **दुर्णयः** तथास्ति ।

कारिकार्थं कथयन्नाह–**चिच्छक्तिः(चिच्छक्तेः)** इत्यादि । **प्रधानं** कर्तृ **समर्पयति** ।
३० कस्य ? इत्याह–**आत्मनः** पुरुषस्य । किंभूतस्य ? इत्याह–**चिच्छक्तेः** चित् चेतना शक्तिः

(१) इत्यपि गृह्यते । (२) प्रकृतिः प्रधानं बहुधानकम् इत्यादिना व्यपदिश्यमानमित्यर्थः । (३) आद्यकारणम् ।

स्वभावो यस्य तस्य **चिच्छक्तेः** *"चैतन्यं पुरुषस्य स्वरूपम्" [योगभा० १।९] इति वचनात्। किं कृत्वा ? इत्याह–**समाश्रित्य** अवलम्ब्य। किम् ? इत्याह–**नानात्वम्** * "पुरुषबहुत्वं सिद्धम्" [सांख्यका० १८] इत्यादिवचनात् त्रिदण्डिमतेन (म्)। **एकत्वं च** 'आत्मनः' इत्युभयत्र सम्बध्यते। एकदण्डिदर्शनमिदम्–

*"एकमेकं हि (एक एव हि)भूतात्मा भूते भूते व्यवस्थितः। ५
एक वा(धा)नेक वा(धा)चैव दृश्यते जलचन्द्रवत् ॥"

[ब्र० बि० १२]

इति वचनात्। पुनरपि किंभूतस्य [५०६क] तस्य ? इत्याह–**अदर्शित** इत्यादि। इन्द्रियवृत्तिदर्शितविषयवतः साक्षाद्विषयादर्शित(र्शिन) इत्यर्थः। किं समर्पयति ? इत्याह–**आत्मानं** स्वस्वरूपम्। किं कृत्वा ? इत्याह–**आसाद्य** लब्ध्वा। किम् ? **कार्यकारणभावम्**, अनेन हेतुफलैक्यमाह। तदेव दर्शयन्नाह–**विवर्त्तमान**मिति। केन **क्रमेण** ? इत्याह–**महानि**त्यादि। १० *"**प्रकृतेर्महान्**" [सांख्यका० २२] इत्यादि। किमर्थम् ? इत्याह–**तदर्थम्** आत्मोपभोगार्थम् इत्येवं **दुर्णयः**। किन्नाम ? इत्याह–**नैगमः** इति। कुतः ? इत्याह–**प्रधानपुरुषयोः** इत्यादि। प्रधानस्य [पुरुषस्य च] **परिणामस्वभावस्य व्यवस्थापनात्**। पुनरपि किंभूतम् प्रधानम् ? इत्याह–**तदि**त्यादि। **तत्** प्रधानम् **एकपुरुषम्** एकपुरुषभोग्यम् **अनेकपुरुषम्** अनेकपुरुषभोग्यम् १५ इत्यर्थः। **च** इति समुच्चये। पुनरपि प्रधानभेदं कथयन्नाह–**अनीश्वरेतरभेदाद् भिद्यते** इति '**तत्**' इत्यनुवर्त्तते। **तत्** प्रधानं **भिद्यते**। कुतः ? **अनीश्वरभेदात्** न विद्यते ईश्वरः प्रवर्त्तको यस्य *"**वत्सविवृद्धिनिमित्तं** ते **चेतनं यथा क्षीरम्**" इत्यादि वचनात्, तस्यविशेषात्। इतरभेदात् शश्वद्विशेषात् *"**अज्ञो जन्तुरनीशोऽयम्**" [महा० वनपर्व ३०।२८] इत्याद्यभिधानात्। अज्ञोऽचेतनो जन्तुः प्रकृतिरेव इह उच्यते। कुतः सः भेदः ? इत्याह–**प्रधानस्य** इत्यादि। **प्रधा**- २० **नस्य** विचेतनस्य **पुरुषार्थिप्रवृत्तेः संभवेन** 'स्वतः' इत्यध्याहारो[ऽनी]**श्वरभेदः तत्प्रवृत्तेरसंभवेन सेश्वरभेदः**। कुतः स 'दुर्णयः' इत्यध्याहारः ? [**अ**]**परिणामिन** इत्यादि। परिणामविकलस्य **चैतन्यस्य** पुरुषस्य **वस्तुत्वं प्रत्युक्तम्** अपाकृतम्। केन ? इत्याह–**सामान्यादिना** जात्यादिदूषणेन। न केवलमेतदेव प्रत्युक्तम् [५२६ख] अपि तु परमपि इत्याह–**कादाचित्कम्** इति हेतोः। न हि अपरिणामिन एकदा विषयानुभवनम्, अन्यदा तद्विपर्ययो युक्त इति विचारितम्। २५ ततः किं जातम् ? इत्याह–**कुतः** इत्यादि। स्पष्टम्।

अधुना चैतन्यस्य सतोऽपि वैफल्यं दर्शयन्नाह–**हर्ष** इत्यादि। **प्रकृतेः** सकाशाद**पराम्** अन्यां **चैतन्यवृत्तिं** विषयानुभवलक्षणां **कः प्रेक्षावान्** प्र(प्रा)माणिकः **प्रतिजानीते**। किंभूतायाः प्रकृतेः ? इत्याह–**हर्षविषादाद्यनेकाकारो विवर्त्तः** परिणामो यस्य तत्तथोक्तम् तच **तज्ज्ञानं**

(१) "एक एव हि भूतात्मा···एकधा बहुधा चैव···"–त्रि० ता० ५।१२। (२) 'ततोऽहङ्कारः तस्माद्गणश्च षोडशकः। तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि॥' इति शेषः। (३) "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥"–सांख्यका० ५७। (४) 'आत्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् श्वभ्रं वा स्वर्गमेव वा।' इति शेषः। (५)विषयानुभवरहितत्वम्।

च तदैव **वृत्तिः** वर्त्तनं यस्याः तस्या इति । कुतो न प्रतिजानीते ? इत्याह–**अनुपयोगात्** चैतन्यशक्तेः क्वचिद् व्यापाराभावात, तत्प्रयोजनस्य प्रकृत्या करणात् । **'विशेषतः'** इत्यादिना पुनरपि तत्र दोषं योजयन्नाह–विशेषेण **विशेषतः** । अनेन पूर्वदोषादस्य अतिशयमाह–**प्रकृत्या दर्शितो** दर्शनगोचरतां नीतो यो **विषयः तद्वतः** तदनुभवतः **पुरुषस्य अविकारित्वं दुरन्वयम्** अप्रमाणम् , एवं मन्यते–सरसि अपरापरतारानिकुरुम्बस्येव पुंसि प्रकृतिदर्शिताऽपरापरविषयं(य)-प्रतिभासनमत्र तस्याविकारित्वमिति युक्तं यदि तत्र प्रमाणं प्रवर्त्तेत, वचनमात्रकात्तदसिद्धि-(द्धे)रिति ।

परमपि तत्र दुरन्वयं कथयन्नाह–**तो कृतस्व(भोक्तृस्व)भावनित्यत्वे दर्शनरूपनित्यत्वे पुरुषस्य प्रकृतेर्भोग्यात्मनो** दृश्यभावस्य **नित्यत्वे** सति **तस्याः प्रवृत्तिः** संसारदशायां **निवृत्ति[:]** निर्वाणे इति **दुरन्वयमेतत्** , [५२७क] सर्वदा दर्शनमदर्शनं वा स्यादिति भावः । दूषणान्तरमाह–**प्रकृतेः** इत्यादि । **प्रकृतेः परिणामे वा** भोग्यस्वभावपरिहारेण अभोग्य-स्वभावविकारे वा **चिच्छक्तेरपि** पुरुषस्यापि **विवर्त्तः** भोक्तृस्वभावपरिहारेण अभोक्तृस्वभाव-परिणामः । कुतः ? इत्याह–**तद्** इत्यादि । **तया** प्रकृत्या **दर्शितो विषयः** स यस्यास्ति तस्य **भावात्** तत्त्वात । एतदुक्तं भवति–यथा यदा पुरुषेण युज्येत प्रकृति[:] तदैव तस्या भोग्यता नान्यदा, तथा यदा प्रकृत्या पुंसो विषयः प्रदर्श्यते तदैव तस्य भोक्तृता, विशेषाभावादिति ।

एवं पुरुषं निराकृत्य अधुना प्रकृतिं निराकुर्वन्नाह–सुख इत्यादि । **जातिः प्रकृतिरेव,** किंभूता ? **सुखदुःखमोहात्मकप्रधानम् इत्यभिधानात्मा** । केषाम् ? इत्याह–**अचेतनभेदानाम न पुनः संवेदनजातिः सर्वपुरुषाणां सामान्यमिति दुरन्वयमेतत्** । एतेन प्रधानसाधनानां भेदानां परिमाणादिहेतूनां[3] व्यभिचारमाह । **'तत्र'** इत्यादि उपसंहारः ।

परमपि नैगमाभासं दर्शयन्नाह–**तथा** इत्यादि ।

[तथा,

**सत्ता द्रव्यत्वगोत्वादिसामान्यव्यपदेशभाक् ।**
**समवायिविशेषैः स्यादेकसामान्यवादिनाम् ॥११॥**

**विना···व्यापित्वे···भावस्यैव सामान्यविशेषभावोपपत्तेः समवायिविशेषात् ; सत्तासमवायिनोर्भेदैकान्ते अयमपि परः नैगमो दुर्णयः ।**

तमेव दर्शयन्नाह–**सत्ता** इत्यादि । **सत्ता स्याद्** भवेत् । किंभूता ? **द्रव्यत्वे(त्व)-गोत्वादिसामान्यस्यपदेस(न्यव्यपदेश)भागिति** । कैः ? इत्याह–**समवायि-विशेषैः** । सत्तायाः समवायो येषामस्ति द्रव्यादिखण्डादीनां ते समवायिनः, तेषां ते वा विशेषाः तैरिति । तदुक्तम्–

(१) प्रकृतेः । (२) पुरुषस्य । (३) "भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च । कारणकार्य-विभागादविभागाद्वैश्वरूप्यस्य ॥"–सांख्यका० १५ ।

"तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा यामाहुः त्वतलादयः ॥" [वाक्यप० ३।३४] इति।

ननु यत्रअवान्तरे(र) गोत्वादिजातयः समवेता[:] तत्रैव सत्ता, [५२७ ख] तस्मादेकार्थसमवायात् सा तद्व्यपदेशभागिति चेत्; अत्राह–**विना** इत्यादि।

ननु यौगपक्षोपक्षिप्तमत्र दूषणं कुतो नेति चेत्? अत्राह–**व्यापित्वे** इत्यादि। विचारितमनन्तरमिति। दोषानुषङ्ग एव न भवति **एकसामान्यवादिना** सत्ताजातिवादिनाम्। कुतः? इत्याह–**भावस्यैव** सत्ताया एव **सामान्यविशेषभावोपपत्तेः** द्रव्यत्वगोत्वादिसामान्यभेदोपपत्तेः। कुतः? इत्याह–**समवायिविशेषात्** सोणादि(गोत्वादि) व्यपदेशभाक्त वा (भाक्तया) प्रकृतापि इति **सत्तासमवायिनोर्भेदैकान्ते** अयमपि दुर्णयः। पूर्वविधिना अत एव उक्तम् **तथा** तेन प्रकारेण **परोऽन्यो नैगमो दुर्णय** इति। १०

संप्रति सौगतेन नैगमस्य सर्वस्य दुर्णयत्वं चिन्तितं दूषयन्नाह–**सत्ताम्** इत्यादि।

**[सत्तां बिभ्रते यस्माज्ज्ञानशब्दकृतः इति।
व्यक्तयः सन्तु तस्मादर्थाकारे विदां समम् ॥१२॥**

**येन···इति यत् चोद्यं तत् संविदां विषयाकारप्रतिपत्तावपि सामानम्।]**

यद् **यस्माद्** योग्यताविशेषात् **व्यक्तयो** विशेषाः **बिभ्रते** धारयन्ति। किम्? **सत्तां** जात्यन्तरं वा गोत्वादिकं **त[स्मात्]** योग्यताविशेषात् **ज्ञानशब्दकृतो**ऽनुगतज्ञानाभिधानप्रवृत्तिहेतवः सन्त (**सन्तु**) **व्यक्तयः** इत्येवं चोद्यम् **अर्थाकारे** रूपादिलक्षणे ग्राह्ये **विदां** बुद्धीनां **समम्**। तथाहि–यतः पटादयोऽर्थाः रूपादीन् बिभ्रते तत एव स्वयमतदात्मानो रूपादिबुद्धिहेतवो भविष्यन्तीति किं रूपादिकल्पनया? इति निराकारार्थसिद्धिः। अथ रूपाद्यात्मकोऽर्थः प्रतीयते; सामान्यात्मकोऽपि प्रतीयते इति समानम्। १५ २०

कारिकार्थमुपदिशन्नाह–**येन** इत्यादि। सुगमम्। **इति** एवं **यचोद्यं न** (**यच्चोद्यं तत्**) **संविदां विषयाकारप्रतिपत्तावपि समानम्** [५२८ क] अन्यत्रापि असकृदुक्तमेतत्। तथाहि–संविदो 'यतः स्वसंवेद्' यतः स्वसंवेदनात्मतां स्वीकुर्वन्ति तत एव अतदात्मिका सु(काः त)थावभासन्त इत्यपि स्यात्।

तदेव(वं) नैगमं तदाभासं च प्रतिपाद्य संग्रहनयं प्रतिपादयन्नाह–**आयासाद्वा** इत्यादि। २५

**[आयासाद्वा यतो भेदानभेदः स्वीकरोत्ययम्।
स एव भेदसंव्यवहारान् केवलो न करोति किम् ॥१३॥**

**न हि अभिन्नतत्त्वस्य···स्वप्नादौ दर्शनात्।** भेदवादिनोऽपि निरंशमवर्णाद्यात्मकं तज्ज्ञानं रूपादिकं स्थूलत्वाद्यनेकधर्माभिन्नं सांशमिव तद्व्यवहारं प्रथयत्येव

(१) सत्ता। (२) रूपादिरहिताः। (३) 'यतः स्वसंवेद' इति पुनर्लिखितमाभाति।

तत्त्वदर्शनस्य सर्वथानुपपत्तेः। प्रमाणेतरनिमित्तभूतौ संवादविसंवादावपि तत्र अविशेषतः स्याताम्। तत् सर्वविकल्पातीतं सन्मात्रं तत्त्वमिति संग्रहनयः। संवित्तेरेव बहिरिव प्रतिभासनात्, तत्पुनरदृष्टपरमार्थमेव मिथ्या...। तत्र स्वपरसन्तानक्षणक्षयविकल्पव्यवस्थेयं अविद्यात्मनः आभासेत बहिरर्थावभासवदिति। तदर्थासंभवेऽपि विप्लवान्तरवत्। पारम्पर्येणापि चेतनान्तरसंभवनियमः कुशकाशावलम्बनम् व्यापारादिभावात्तन्नियमः।...प्रतिपिद्धार्थप्रतिप्रसवप्रसङ्गात् बहिरन्तर्भेदात्।]

**आयासाद्यन्नाद्यतो(–सात्** यत्नतः**यतो) वा** इति पक्षान्तरद्योतकः, **भेदान्** चेतनेतरविशेषान् **अभेदः** सत्तामात्रं **स्वीकरोति** अय(**अयं**) **भेदसंव्यवहारान् किं न करोति सोऽभेदः केवलः** सकलभेदविकलः।

ननु यदि अभेदः; भेदव्यवहारः ततः कथम् ? अन्यथा नीलात् पीतव्यवहारः स्यात् इति चेत्; अत्राह–**नहि अभिन्नतत्त्वस्य** इत्यादि। कुतः ? इत्यत्राह–**स्वप्नादौ दर्शनात्**। अत्र **आदि**शब्देन द्विचन्द्रादिपरिग्रहः। स्वप्ने हि कृशोऽपि स्थूलतया, अन्यकालादिः अन्यकालादितया, देवदत्त एकोऽपि अनेकतया, जागरणे चन्द्रः तथा सुत्ति कान(शुक्तिका अन) कतया प्रतिभातीति भावः। परस्यापि एतदस्तीति दर्शयन्नाह–**भेदवादिनोऽपि** न केवलमभेदवादिनः तज्ज्ञानं (**तज्ज्ञानं**) भेदवादिज्ञानम्; किंभूतम् ? **निरंशम्**, पुनरपि किंभूतम् ? **अवर्णाद्यात्मकं** रूपरसादिरहितम्, **रूपादिकं स्थूलत्वाद्यनेकधर्माभिन्नं** न च निरंशे तद्युक्तम्। किं करोति ? इत्याह–**तद्व्यवहारं** भेदव्यवहारं **प्रथयत्येव**। किंभूतम् ? **सांशमिव** वर्णादिनिर्भासमिव, [च] शब्दोऽत्रापि योज्यः।

ननु यथा भेदः प्रतिभाति नैवमभेदः, ततोऽस्त्यनयोः[3]विशेष इति चेत्; अत्राह **तत्त्व** इत्यादि। **तत्त्वस्य** निरंशात्मनो **यद्दर्शनं** तस्य **सर्वथा** सर्वेण प्रत्यक्षादिप्रकारेण स्वतः परतः [५२८ ख] इति वा प्रकारेण **अनुपपत्तेः**। कल्पनया तदुपपत्तिः, उभयत्रापि।

स्यान्मतम्–न ज्ञानं (तज्ज्ञानं) निरंशमवर्णाद्यात्मकं तथैव [व्यव]हारं प्रथयति इति; तत्राह–**तत्त्व** इत्यादि। व्याख्यानम् तदेव। यदि वा, यदि ज्ञानं सांशमेव वर्णादिनिर्भासं व्यवहारं प्रथयति तथैव तदिति **तत्त्व[म्]** इत्यादि सौगतस्य यत्तस्य **दर्शनस्य सर्वथानुपपत्तेर्वा** '**भेदवादिनोऽपि**' इत्यादिना सम्बन्धः।

ननु यदि अभेदः तर्हि जाग्रद्दशायामविसंवादोयः प्रमाणव्यवस्थानिमित्तं स्वप्ने यश्च विसंवादोऽप्रमाणव्यवस्थाकारणं[4]तौ कथं स्याताम् ? भेदे तस्या (न स्या)तामिति चेत्; अत्राह–**संवाद**

---

(१) तुलना–"स्वजात्यविरोधेनैकध्यमुपनीय पर्यायानाक्रान्तभेदान् अविशेषेण समस्तग्रहणात् संग्रहः।"–स० सि० १।३३। त० वा० १।३३। तत्त्वार्थाधि० भा० १।३६। "शुद्धं द्रव्यमभिप्रैति संग्रहस्तदभेदतः। भेदानां नासदात्मैकोऽप्यस्ति भेदो विरोधतः॥"–लघी० श्लो० ३२। धवलाटी० सत्प्ररू०। त० श्लो० पृ० ७०। नयवि० श्लो० ६७। सन्मति० टी० पृ० २७२। नयचक्र० गा० ३४। तत्त्वार्थसा० पृ० १०७। प्र० नय० ७।१३। स्या० मं०पृ० ३११। जैनतर्कभा० पृ० २२। "संगहिय पिंडियत्थं संग्रहवयणं समासओ विंति।"–अनु० द्वा० ४। आ० नि० गा० ७५६। विशेषा० गा० २६९९। (२)अर्धरात्रे मध्याह्नस्वप्नदर्शनं भवति। (३) भेदाभेदयोः। (४) अविसंवाद-विसंवादौ।

इत्यादि । **संवादासंवादौ** । किंभूतौ ? **प्रमाणेतरनिमित्तभूतौ** यथासंख्येन प्रमाणाप्रमाणहेतुभूतौ **तत्र** तयोः भेदाभेदयोः **स्याताम्** । कुतः ? इत्याह–**अविशेषतः** वासनादार्ढ्याऽदार्ढ्य-(र्ढ्या)भेदतः । यत एवं **तत्** तस्मात् **सर्वविकल्पातीतं तत्त्वम्** । किं तत् ? इत्याह–**सन्मात्रम्** इत्येवं **संग्रहनयः** । अत्र यदुक्तं सौगतेन दूषणम् *"**कथं बहिरन्तः प्रतिभासभेदे सन्मात्रं तत्त्वम् ? तद्विभ्रमे सन्मात्रे कः समाश्वासः**" इति ; तदेग(तदेतत्) तस्यापि[1] समानमिति दर्शयन्नाह– **संवित्तेरेव** इत्यादि । भेदवादिनो बौद्धस्य विज्ञप्तिमात्रं बुद्धिमात्रं तत्त्वं यथा संग्रहवादिनः सन्मात्रम् ।

ननु तस्य बहिरन्तर्वा भेदोऽप्यस्ति इति चेत् ; अत्राह–**संवित्तेरेव** नान्यस्य **बहिरिव प्रतिभासनात्** ततो यथा अस्याऽबाह्यमपि बाह्यतया चकास्ति तथा परस्यै अभिन्नं भिन्नतया [४२९क] इति मन्यते ।

स्यान्मतम्–यथा विज्ञप्तिमात्रं दृश्य(श्यं) न तथा अन्यदिति चेत् ; अत्राह–**तद्** विज्ञप्तिमात्रं **पुनः अदृष्टपरमार्थमेव** । नहि निरंशं भ्रष्टुं(द्रष्टुं) शक्यम् , अन्यत्रापि प्रसङ्गात् । तत्किम् ? इत्याह–**मिथ्या** इत्यादि । ततो यथा भेदव्यवहारस्य मिथ्यात्वेऽपि न संवित्तेमत(त्तेः तत्) तथा अन्यत्रापि इति भावः ।

ननु विज्ञप्तिमात्रे स्वपरसन्तानभेदः क्षणक्षयादिभेदश्च पारमार्थिक इति चेत् ; अत्राह–**तत्र** इत्यादि । **तत्र** विज्ञप्तिमात्रे **स्वपरसन्तानाश्च क्षणक्षयश्च** ते एव तेषां वा **विकल्पा** भेदाः, यदि वा, मानसाः प्रत्ययाः, तेषां **व्यवस्थयं(य)माभासेत** । कुतः ? इत्याह–[अ]**विद्यात्मनः** [अ]विद्यास्वभावात् कुतश्चिद् विकल्पवासनातः, तत्र परस्य प्रमाणाभावात् । अत्र निदर्शनमाह–**बहिरर्थावभासवदिति** । निदर्शनसमर्थनमाह–**तदर्थासंभवेऽपि** इत्यादि । जाग्रद्व्यापारादि-**विप्लवात्** स्वप्नादितद्विप्लव सुदतरी (**वस्तदन्तरम्**) तत्रैव तद्वदिति ।

ननु जाग्रद्दशायां साक्षाद् व्यापारादिनिर्भासः, परचेतसः शरीरान्तरे स्वप्ने परम्प[र]येत्यव्यभिचार इति चेत् ; अत्राह–'**पारम्पर्येणापि**' इत्यादि । **चेतनान्तरसंभवे(व)नियमः** सन्तानान्तरचेतनेयोः (तनायाः) सकाशात् **संभवस्य** उत्पादस्य **नियमः कुशकाशावलम्बनम्** । कस्यात्तनि(कस्मात्तन्नि)यमः ? इत्याह–**व्यापार** इत्यादि । केन प्रकारेण सः ? इत्याह–न केवलं जागरणे साक्षात्तस्याः तन्नियमः, तदवलम्बनस्वशरीरेऽपि निरंशबुद्धिव्यापारयोरन्वयग्रहणाभावात् सकलव्याप्तेरसिद्धेः प्रमाणविरहात्, स्वापादौ चैतन्याभावेऽपि व्यापारादिभावात् , शौल्कादि(देः) [५२९ख] शालूकादिभ्यो दृष्टावपि पुनर्गोमयादेः दर्शनात् संभाव्यव्यभिचारित्वात्, व्यापार-प्रतिभासस्य सर्वत्रार्थप्रतिभासवद् भ्रान्तत्वात् , अपि तु **पारम्पर्येणापि** जागरणे साक्षात् चेतनान्तरः तस्यास्तन्नियमः स्वप्ने पारम्पर्येण बुद्धेरेव तद्बुद्धिसंभवात् , तद्विभ्रमस्तदवलम्बते उक्तदोषेण अनुमानाप्रवृत्तेः, शरीरप्रभृतेः सर्वस्य भ्रान्तत्वाच्च । कुतः ? इत्याह–**प्रतिषिद्धार्थ** इत्यादि । **प्रतिषिद्धः** सौगतेन निराकृतो **योऽर्थः** अचेतनो घटादिः तस्य **प्रतिप्रसवः** प्रत्युज्जीवनं तस्य

(१) बौद्धस्यापि । (२) अभेदवादिनः । (३) मिथ्यात्वम् । (४) शालूकः वृश्चिकः ।

प्रसङ्गात्। एतदपि कुतः ? इत्याह–बहिरन्तर्भेदात् बाह्येतरभेदसिद्धिरिति भावः। तथाहि–स्वप्नेऽपि बुद्धिव्यापारयोः परमार्थतो यदि कुतश्चित् हेतुफलभावः प्रतीयते; व्यक्तं ग्राह्यग्राहकभावः समापतति।

एतेन व्याप्तिग्रहणमपि चिन्तितम्। 'वासनातः सकलं ज्ञानम्' इत्यत्रापि न्यायोऽयं योज्यः।

५ ननु अर्थः प्रतिभासात् सिध्यति, स च स्वप्ने तदभावेऽपि भवन्ननैकान्तिक इति चेत्; न; व्यापारादिरपि तथैव स्यादिति दोषात्, तत्रास्य पारम्पर्येण परचेतसः सभावो (सद्भावो) नार्थप्रतिभासस्य इति किंकृतमेतत् ?

अपरे मन्यन्ते–तत्रापि स्वप्रान्तिकशरीरस्य परमार्थतोऽभ्युपगमात् साक्षात् परचेतस एव स इति; तेषां तत्र स्तम्भादिप्रतिभासोऽपि सत्य इति *"कल्पनापोढमभ्रान्तं प्रत्यक्षम्"

१० [न्यायबि० १।४] इति अभ्रान्तग्रहणमनर्थकं निवर्त्याभावात्, तच्छरीरवत् द्विचन्द्रादेरपि [४३०क] सत्यताप्राप्तेः। व्यवहारेण अभ्रान्तग्रहणमिति चेत्; न; तेनैव तच्छरीरस्यापि सत्यत्वोपगमात्, व्यवहारेण परलोकसाधनात्, इतरथा कुतः प्रतिभासाद्वैतम् ? *"निरालम्बनाः सर्वे प्रत्ययाः प्रत्ययत्वात्" [प्र० वार्तिकाल० पृ० ३६१] इत्यत्र वा किं वा निदर्शनम् ? स्वरूपालम्बनत्वेऽपि अनेकान्तार्थप्रति स्य बद्ध (प्रतिबद्ध) स्य प्रतिप्रसवप्रसङ्गः, शरीरादेः सांशत्वेन

१५ प्रतिभासनात्। ततो न किंचिदेतत्।

अन्येषां दर्शनम्–न सन्तानः सन्तानान्तरं वा अन्यत्र संवृतेः इति तदभावसाधनं सिद्धसाधनमिति, तेषामप्युत्तरमुक्तम् नेह पुनरुच्यते, चित्रज्ञाने नीलादीनाम् अन्योऽन्याननुगमे सन्तानान्तरसिद्धिः। परस्परादर्शनेऽपि सद्भावे इतरथा सकलशून्यता, तदनुगमे अनेकान्तसिद्धिरिति। तन्न परस्य स्वर (स्वपर) सन्तानादिभेदसिद्धिः।

२० क्वचिद् 'बहिर[न्त]भेदात्' इति पाठेत्र (पाठे तु) बाह्येतरयोरविशेषादित्यर्थः।

स्यान्मतम्–प्रागभावादिचतुष्टयप्रतीतेः कथं सन्मात्रं तत्त्वमिति ? तत्राह–**विज्ञेयम्** इत्यादि।

**[विज्ञेयं विद्यमानार्थबुद्ध्याऽभावचतुष्टयम्।**
**कथञ्चिन्नान्यथा न्यायाद् बुद्धिः सन्मात्रगोचरा ॥१४॥**

२५ **नहि अभावचतुष्टयज्ञानं सर्वथा निर्विषयं युक्तम्, अर्थान्तरालम्बनोपगमात्। सः परमाणुपर्यन्तज्ञानस्वरूपपरीक्षासमये स्वरूपमवलम्बेत नार्थभेदम्। तदभावे संविद्व्यपदेशानुपपत्तेः। तन्न भावव्यतिरिक्तो विशेषः क्वचित् कथञ्चित् प्रमेयतां प्रतिपद्येत।]**

**विज्ञेयं** परिच्छेद्यकेम(द्यं। किम् ?) **अभावचतुष्टयं** प्रागभावाद्यभावचतुष्टयम्। कया ? **विद्यमानार्थबुद्ध्या** भावज्ञानेन। **कथंचित्** केनापि तदुत्पत्तियोग्यताप्रकारेण

(१) प्रतिभासः। (२) अर्थाभावेऽपि। (३) प्रज्ञाकरगुप्तादयः। (४) स्वप्नान्तिकशरीरवत्। (५) सन्तानान्तराभावसाधनम्।

**नान्यथा** बुद्ध्या विज्ञेयत्वाभा[व]प्रकारेण **बुद्धिः** 'अभावचतुष्टये' इति सम्बन्धः । प्रत्य-यादिवेदनतो **न्यायात् सन्मात्रगोचरी(रा)** बुद्धिरिति ।

कारिकार्थं विवृणोति । **नहि अभावचतुष्टयज्ञानं सर्वथा निर्विषयं** विषयरहितं तुच्छा-भावगोचरमेव नहि **युक्तम्** । ननु यदभावविषयं कथं निर्विषयमुच्यते इति चेत् ; न ; सौगता-पेक्षयैवमभिधानात् । [५३०ख] स हि अभावं नेच्छति । कुतो न निर्विषयमिति चेत् ; ५
अत्रा[ह-अ]**र्थान्तर** इत्यादि । विवक्षितादर्थाद् अन्योऽर्थः **तदन्तरम्** तद् **अवलम्बनं** यस्य तस्य **उपगमात्**[1] सौगतेन ।

न्ववेनमपि (नन्वेवमपि) परस्परविविक्तभावावलम्बनात् कथं सन्मात्रगोचरा बुद्धिरिति चेदनदत्त (चेदत्राह) **स** इत्यादि । तदभावचतुष्टयज्ञानमात्र[म]त्र **सः परमाणुपर्यन्तज्ञानस्वरूप-परीक्षासमये स्वरूपमवलम्बेत नार्थभेदम्** । कुतः ? इत्याह-**तदभावे** स्वरूपावलम्बनाभावे १०
**संविद्व्यपदेशानुपपत्तेः** । अर्थग्रहणात् ज्ञानस्य तद्व्यपदेशो न स्वरूपावलम्बनादिति चेत् ; ननु 'अर्थग्रहणं बुद्धिः' इति केनावगम्यते ? तयैव बुद्ध्या इति चेत् ; न ; स्वरूपग्रहणप्रसङ्गात्, तद्ग्रहे 'ममार्थग्रहणम्' इति प्रतिपत्त्ययोगात् । बुध्यान्तरया (था) इति चेत् ; सापि स्वरूपसंवेदनविकला 'बुद्धिः' इति कथमवगम्यते ? आद्यज्ञानार्थग्रहणात् ; तदपि कुत इति तदवस्थं चोद्यम् अनवस्था च ।

नन्वर्थो यतो दृश्यते तज्ज्ञानमिति चेत् ; सत्यम् ; दृश्यते, नाऽस्वसंवेदनज्ञानात् ; १५
इतरथा परज्ञानादपि दृश्येत इत्युक्तम् । एतेन मीमांसकोऽपि कृतोत्तरः । भवतु स्वरूपावलम्बनं ज्ञानम्, तत् स्वरूपमन्यते (तो) व्यावृत्तमवलम्ब्यत इति चेत ; अत्राह-**तन्न** इत्यादि । **तत्** तस्मात् स्वरूपमवलम्बेत इति न्यायात् **न भावव्यतिरिक्तो** ज्ञानसत्ताभिन्नो न **विशेषो** भेदः **क्वचिद्** विज्ञाने अन्यत्र वा **कथंचिदे**कानेकादिरूपेण **प्रमेयतां प्रतिपद्येत** । नहि स्वरूपमग्नं ज्ञानम् अन्यदविषयीकुर्वाणं ततः [५३१ क] कस्यचिद्भेदम् अन्यद्वा प्रतिपद्यत इति । २०

स्यादेतत्-यदि ज्ञानं स्वरूपमेव लंबि (व अवलम्बि), तदेव प्रतिभासाद्वैतमायातम्, तच्च सौगतस्य नानिष्टम् अभ्युपगमात् । अथ तथा सत्ताद्वैतम् ; तन्न ; [2]अप्रत्ययात्, चित्र-प्रतिभासात् । [3]अस्य मिथ्यात्वे ततो[4] भेदे न [5]सत्ताद्वैतमिति चेत् ; अत्राह-**मिथ्यैकान्त** इत्यादि ।

**[मिथ्यैकान्तविविधनिर्भासप्रतिभासैक्यतत्त्वयोः ।** २५
**आत्मनोऽत्यन्तभेदोऽयं समः क्षणिकसंविदः ॥१५॥**

**यथा परमात्मनः सद्रूपस्य तत्त्वम् अदृश्यात्मनः सकलविकल्पात् सर्वथा व्यति-रिच्येत अदृष्टं यतः खरविषाणवदिति तथा क्षणिकसंविदोऽपि तत्त्वं ततस्तथा व्यतिरि-च्येत, यथातत्त्वं स्वयमेव संवेदनात् । मिथ्या ग्राह्यग्राहिकायाः भेदात्मनाऽनुभवात् ।]**

**अन्तम्** अवसानम् अतिक्रान्तोऽन्तः (**ऽत्यन्तः**) स चासौ **भेदश्च** विशेषः निरव- ३०

(१) भावान्तरस्वभावत्वादभावस्य । (२) अविषयीकृतार्थात् । (३) अप्रतीतेरित्यर्थः । (४) चित्र-प्रतिभासस्य । (५) चित्रज्ञानात् । (६) यस्मात् चित्रज्ञानाद् व्यावर्तते यच्च व्यावर्तते तदपेक्षया द्वैतं स्यात् ।

मानो विशेषोऽग्रं परेण उच्यमानः सन्मात्रपक्षे **समः** सदृशः । कस्य ? **आत्मनः** स्वस्य । कस्याः ? इत्याह–**क्षणिकसंविदः** सौगतसम्बन्धिबुद्धेः । कयोः सतोः ? इत्याह–**मिथ्या** इत्यादि । **मिथ्यात्वम एकान्तो** यस्य स तथोक्तः स चासौ **विविधः** स्थूलत्वदीर्घत्ववर्तुलत्वादिना चित्रो **निर्भासश्च** घटादिप्रतिभासः तेन विद्यते **प्रतिभासो** दर्शनं ययोः **ऐक्य-**

५ **तत्त्वयोः** निरंशत्वस्वसंवेदनस्वरूपयोः सतोः **आत्मनः क्षणिकसंविदः** । एतदुक्तं भवति–यथा मिथ्याचेतनेतरनिर्भासतिरस्कृतत्वात् न सत्तामात्रस्य नित्यत्वादि स्वरूपं वाऽवभासते, तथा स्थूलत्वादिचित्रप्रतिभासेन प्रतिहतप्रसरत्वा न(त्त) संविदात्मनोरैक्यतत्त्वयोः प्रतिभासनमिति ।

**यथा** इत्यादिना कारिकार्थमाह–**यथातत्त्वं** स्वरूपम् । कस्य ? **द्रव्यस्य** । किं[भू]तस्य ?

१० **सद्रूपस्य** सत्तात्मकस्य । पुनरपि किंभूतस्य ? **परमात्मनः** परमः सर्वाधिक आत्मा रूपं यस्य तस्य इति । तत्तत्त्वं किं स्यात् ? इत्याह–**व्यतिरिच्येत** स्वयं भिद्येत । कुतः ? इत्याह–**सकलविकल्पात्** [५३१ ख] निखिलचेतनेतरभेदात् । किंभूतात् ? इत्याह–**अदृश्यात्मनः** । कथम् ? इत्याह–**सर्वथा** सर्वेण वस्तुगतधर्मकलापप्रकारेण । कुतः ? इत्याह–**अदृष्टं** 'यत'[1] **यतः खरविषाणवदिति तथा क्षणिकसंविदोऽपि तत्त्वं ततः तथा व्यतिरिच्येत** । कुतः ? इत्याह–

१५ **यथातत्त्वम्** [इत्यादि] । **यथा[तत्त्वं]स्वयमेव संवेदनात्** क्षणिकसंविदः । एतदपि कुतः ? इत्याह–**मिथ्या** इत्यादि । **मिथ्या ग्राह्यग्राहकौ** यस्याः *"नान्योऽनुभाव्यो बुद्ध्यास्ति" [प्र० वा० २।३२७]इत्यादि वचनात्, तस्या **भेदात्मना** नानास्वभावेन **अनुभवात्** । अनेन विरुद्धोपलब्धिं दर्शयति ।

ननु सत्ता व्यापिनी नित्यैका न्ते(चे)ष्यते,न च तत्र प्रमाणमिति क्षणभङ्गे निरूपितम् ।

२० संवित्तिः पुनः क्षणिका अनेका, तत्र प्रमाणमस्ति इति चेत्; अत्राह–**नहि** इत्यादि ।

**[न हि तत्त्वोपलम्भानवस्थापयति कल्पना ।**
**मिथ्या दोषान् निराकृत्य स्वस्मादवर्णात्मिका ॥१३॥**

**स्वप्नादौ विभ्रमे वा अवर्णात्मिकैव संवित्तिः वर्णाद्यात्मना निरंशैव सांशेव अवभासते। नैतावता स्वयमदृश्यात्मैव यतो दृश्यात् सर्वथा भिद्येत इति समाधिः परमात्मनः**

२५ **द्रव्यमात्रेऽपि समः ।]**

क्षणिकसन्तानभेद**कल्पना** । अनेन नित्यैव(क)त्वव्यापित्ववद् अन्यत्रापि[2] कल्पनातो नान्या गतिरिति दर्शयति । किंभूता सा ? इत्याह–**मिथ्या** असत्या, नित्यत्वेऽ**वस्थापयति न** खलु । कान् ? इत्याह–**तत्त्वोपलम्भ** इत्यादि । तान् किं कृत्वा इत्याह–**स्वस्माद्** आत्मनः सकाशात् **निराकृत्य तद्दोषान्** इति, समानत्वात् उभयत्र तद्दोषाणाम् इति भावः ।

३० ननु सत्तावन्नादृश्या संवित्तिः, तस्या एव अन्यथा प्रतिभासनात्, मरुष्विवाल्पस्य[3] महत्त्वेन इति चेत्; अत्राह–**अवर्णात्मिका** । गतार्थमेतत् ।

(१) 'यत' इति व्यर्थमत्र । (२) क्षणिकपक्षेऽपि । (३) यथा मरुभूमिषु दूरे अल्पोऽपि महान् दृश्यते ।

कारिकासूत्रं व्याचष्टे **स्वप्नादौ** इत्यादिना । [**स्वप्नादौ**] विभ्रमे वा **अवर्णात्मिकेव (कैव)** स्थूलार्थाकाररहितैव **संवित्तिः वर्णाद्यात्मना** [५३२क] **यथा** विप्लवसामर्थ्यप्रकारेण **अवभासते** तथा **निरंशैव** अविभागैव **सांशेव अवभासते नैतावता स्वयमदृश्यात्मैव** अदृश्य आत्मा स्वरूपं यस्या इति, तस्या एव तथावभासनादिति । **यतो** यस्माददृश्यात्मकत्वात् **दृश्यात्** ग्राह्यादिविप्लवात् **सर्वथा** सर्वेण स्वभावेन **भिद्येत** इत्येवमुच्यमानः **समाधिः समः** । क ? ५ इत्याह–**द्रव्यमात्रे**ऽपि । कुतः ? इत्याह–**परमात्मन** इत्यादि ।

संग्रहनयेन सौगतं दूषयित्वा संग्रहाभासमधुना व्यवहारनयेन अपहस्तयन्नाह–**भेद** इत्यादि ।

**[भेदाः कर्मफलादीनामिह लोके परत्र वा ।**
**भेदे सति प्रवर्तन्ते नाभेदे सः प्रवर्तते ॥१७॥** १०

लोकद्वैतं···]

**भेदे सति** । केषाम् ? **कर्मफलादीनाम् आदि**शब्देन कर्मसाधनादिपरिग्रहः । किं स्यात् ? इत्याह–**प्रवर्त्तन्ते** । क ? इत्याह–**इहलोको**ऽत्र (**लोके** अत्र) **कर्म**शब्देन क्रिया गृह्यते फलवच[ने]नोदनादिकम् । **परत्र वा** अत्रापि **कर्म** शुभाशुभमदृष्टं **फलं** स्वर्गादिकम् । अभेदेऽपि **सः प्रवर्त्तते** इति चेत्; अत्राह–**नाभेद** इत्यादि । १५

**लोकद्वैतम्** इत्यादिना कारिकार्थमाह । सर्वं सुगमम् ।

यदुक्तम्–*"नहि अभिन्नतत्त्वस्य भेदप्रतिभासव्यवहारो विप्रतिषिद्धः स्वप्नादौ **दर्शनात्**" इति दूषयन्नाह–**मिथ्यात्वम्** इत्यादि ।

**[मिथ्यात्वं संविदां वीक्ष्य क्वचित् सर्वत्र तद्विदः ।**
**त्यजेत् संग्रहवादः सन्मात्रं स्वाभिमतं तथा ॥१८॥** २०

**प्रमाणतः सन्मात्रप्रतिपत्तेः प्रमाणसन्मात्रभेदसिद्धेः स्वाभिमतं त्यजेत् । प्रमाणादृते तद्व्यवस्थितेरभावादतिप्रसङ्गात् । आस्तां तावत् द्रव्यमात्रं पर्यायमात्रमिव । सम्यङ्मिथ्यात्ववेदकमन्तरेण क्वचित् कस्यचित् कथञ्चित्तदसिद्धेः । कुतः···तत्त्वमिदन्तया अन्यथा वा व्यवस्थापयितुकामेन तत्त्वज्ञानं प्रमाणमन्वेष्यम्, अनुपायोपेयासिद्धेः ।]**

**संविदां** भेदज्ञानानाम् **मिथ्यात्वम्** असत्यत्वं **वीक्ष्य क्वचित्** स्वप्नादौ **सर्वत्र** २५ जाग्रद्दशायामपि या तद्वित् मिथ्यात्वं (मिथ्या) संवित् तस्याः **तद्विदः** सकाशात् **त्यजेत् संग्रहवादो स्वाभिमत (तं) सन्मात्रम्** । यथैव हि क्वचिद् भेदविभ्रमदर्शनात् सर्वत्र

(१) तुलना–"संग्रहः सर्वभेदैक्यमभिप्रैति सदात्मना । ब्रह्मवादस्तदाभासः स्वार्थभेदनिराकृतेः ॥"–लघी० श्लो० ३८ । त० श्लो० पृ० २७० । नयवि० श्लो० ६८ । न्यायावता० टी० पृ० ८५ । प्र० नय० ७ । १५-२१ । जैनतर्कभा० पृ० २४ । (२) तुलना–"कर्मद्वैतं फलद्वैतं लोकद्वैतं च नो भवेत् । विद्याविद्याद्वयं न स्याद् बन्धमोक्षद्वयं तथा ॥"–आप्तमी० श्लो० २५ ।

तद्(द्)भ्रमः, तथा अविशेषेण विशेषविभ्रमदर्शनात् सन्मात्रभ्रमोऽपि स्यादिति मन्यते । नहि तद् विशेषादन्यदेव उपलभ्यते, यतोऽयं भेदः स्यात् । [५३२ ख]

ननु द्विचाद् (द्विचात्) चन्द्रत्वादिकं भिन्नमुपलभ्यते, तथापि तदेव सत् न द्वित्वम्, तथा अत्रापि स्यादिति चेत्; तदसत्; भेदेऽपि तथा सत्येतरव्यवस्थापत्तेः । अपि च, प्रमाणात्,

५ अन्यतो वा सन्मात्रं प्रतीयेत ? प्रथमपक्षे—धाते (?) प्रमाणात्, प्रमाणमन्तरेण न तद्व्यवस्थितिः, अपि तु प्रमाणतः सन्मात्रप्रतिपत्तेः स्वाभिमतं त्यजेत्, प्रमाणसन्मात्रभेदसिद्धेः । स्यादेवं यदि भिन्नात् प्रमाणान्न(णात् तत्) ज्ञायेत, यावता आत्मनि तदेव प्रमाणं नासं (?) प्रत्ययाद् भेदसिद्धेः । द्वितीयेऽपि पक्षे एतदेव वाच्यम् प्रमाणादृते तदन्तरेण तद्व्यवस्थितः (तेः) सन्मात्राभिनिवेशमात्रादिति(द् अति)प्रसङ्गात् ।

१० ननु यथा विभ्रमवादिनः प्रमाणमन्तरेण स्वाभिमतं सिध्यति तथा ममापि इति चेत्; अत्राह—आस्तां तावत् इत्यादि । आस्तां तिष्ठन्तु तावत् । किं ? द्रव्यमात्रम् । किमिव ? पर्यायमात्रमिव । सन्मात्रवादिनः सिद्धमिदं निदर्शनम् । किन्तु मिथ्यैकान्त एव न सिध्येत् । किमन्तरेण ? इत्याह—सम्यङ्मिथ्यात्ववेदकमन्तरेण क्वचिद् बहिरन्तर्वा स्वप्नादौ अन्यत्र वा कस्यचित् प्रत्यक्षस्य अन्यस्य वा कथंचित् अभिमतप्रकारेण सम्यक्त्वम् अन्यथापि विपर्यय

१५ इति प्रकारेण तदसिद्धेः । फलं दर्शयन्नाह—कुतः इत्यादि । अनेन साध्यसमत्ता(तां) निदर्शनस्य दर्शयति । यदि वा, शून्यता अनेन निरस्ता । न मया परबलेन तत्त्वं व्यवस्थाप्यते अपि तु [५३३ क] स्वबलेन इति चेत्; अत्राह—तत्त्वम् इत्यादि । तत्त्वं भावस्वरूपमिदंतया सन्मात्रतया अन्यथा वा व्यवस्थापयितुकामेन संग्रहवादिना तत्त्वज्ञानं तच्च प्रमाणमन्वेष्य(ष्यम्) । कुतः ? इत्याह—अनुपायोपेयासिद्धेः ।

२० तत्त्वम् इदन्तया नेदन्तया वा अवाच्यमिति चेत्; अत्राह—प्राकृतात् इत्यादि ।

**[प्राकृताद् भिद्यते विद्वान् सम्यग्ज्ञानावलम्बनात् ।**
**तदभावेऽप्यवाच्यत्वे व्यक्तं निद्रायितं जगत् ॥१९॥**

**सदसद्व्यवहारनिबन्धनं सम्यग्ज्ञानम् । तदन्वयैकान्ते कः प्राकृतबुद्धिः बोद्धा वा क्वचित् किञ्चिदाश्रित्य न तिष्ठेत् प्रतिष्ठेत अपसरेद्वा हितान्वेषी । कथञ्चित् तत्त्वमिथ्यात्व-**
**२५ व्यवस्थापनम् अनेकान्त···मिथ्यैकान्त···अपेक्ष्य तत्रैव प्रवर्तयति]**

**प्राकृतः** अतत्त्वज्ञः नित्यत्वादिधर्मैः वस्तुवाच्यताभिनिविष्टः तस्माद् **भिद्यते** विशिष्टो भवति । कः ? **विद्वान्** तत्त्वज्ञः सर्वथा [अ]वाच्यतत्त्वप्रतिपत्ता । कुतः ततो भिद्यते ? इत्याह—**सम्यग्ज्ञानावलम्बनात्,** अवाच्यतत्त्वगोचरम् अबाधितप्रसरं समीचीनं ज्ञानं सम्यग्ज्ञानं तस्यावलम्बनात् स्वीकारात् । यदा हि श्वग(शृङ्ग)ग्राहिकया तत्तत्वं कुतश्चित् प्रति-

(१) सन्मात्रम् । (२) चन्द्रत्वमेव । (३) ज्ञापक-ज्ञेयरूपेण भेदः स्यात् । (४) सन्मात्रम् । (५) प्रतिनियतव्यक्तिरूपेण ।

पद्यते, तदा स ततोऽन्यथा सर्वेऽपि प्राकृता इति न [अ]वाच्यतत्त्वावतारः । तथापि तदवतारे दोषमाह–**तदभावेऽपि** सम्यग्ज्ञानावलम्बनाभावेऽपि **अवाच्यत्वे** तत्त्वस्य अभ्युपगम्यमाने **व्यक्तं** यथा भवति तथा **निद्रायितः** निद्राक्रान्तः पुरुषो निद्रितमिवाचरति स्म । किं तत् ? इत्याह–**जगद्** अवाच्यतत्त्ववादिलोकः । एवं मन्यते–यथा निद्राकान्तः अदृष्टतत्त्वोऽपि किंचिद्-सम्बद्धं प्रलपति तथाऽयमपि इति । ५

कारिकां स्पष्टयन्नाह–**सदसद्व्यवहार** इत्यादि । सदसदद्वैतम् (सद् अद्वैतं) एकत्वादि-धर्मैरवाच्यम् **असत्** नीलादिभेदजातं तयोर्व्यवहारस्य व्यवस्थायाः **निबन्धनं**, किम् ? **सम्यग्ज्ञानं तदन्वयैकान्ते, कः प्राकृतबुद्धिः** अतत्त्वबुद्धिः न कश्चित् । सम्यग्ज्ञानेन बाध्य न बुद्धिः[1]... द्धिरित्युच्यते, तदभावे न किंचिद्बाध्यते केनचित् **कः** [५३३ख] **बोद्धा वा** तत्त्वज्ञो बोद्धा सोऽपि तदभावे...'ति हेतोः **क्वचित्** सम्मात्रादवावाच्ये (त्रावाच्ये) **किंचिदागमादिकमाश्रित्य न** १० **तिष्ठेत्** स्थितिं न कुर्यात् भ र्तृ ह रिः **न प्रतिष्ठेत न वाऽपसरेद्वा** कुतश्चित भेदवर्गात् । '**क्वचित्**' इति कुतश्चि[दि]ति जातविभक्तिपरिणामः सम्बध्यते । किंभूतः ? **हितान्वेषी** स्वर्गापवर्गमार्गा-न्वेषणशीलः ।

सम्यग्ज्ञानावलम्बने परस्यानिष्टमापततीति दर्शयन्नाह–**कथंचित्** इत्यादि । केनापि प्रत्यक्षादिप्रकारेण **तत्त्वमिथ्यात्वव्यवस्थापनं** कर्तृ पेक्षा (अपेक्ष्यं) कारणं **प्रवर्त्तयति** । किंभूतं १५ तत् ? इत्याह–**अनेकान्त** इत्यादि । क ? इत्याह–**तत्रैव** अनेकान्तसिद्धावेव । के ने ह(केन ? इत्याह) **मिथ्यैकान्त** इत्यादि ।

प्रकृतोपसंहारकारिकामाह–**सन्तान** इत्यादिकाम ।

**[सन्तानसमुदायादिनैकान्ताभेदभेदयोः ।**
**ततश्च व्यवहारो न संग्रहे ऋजुसूत्रवत् ॥२०॥** २०

**प्रभवः तदन्यथा च...इति व्यवहारनयः]**[2]

चशब्द इवार्थो भिन्नक्रमः **ऋजुसूत्र** इत्यस्यानन्तरं द्रष्टव्यः । ततोऽयमर्थः–**ततः** तद्धर्मात् उक्तात् न्यायात् **संग्रहे व्यवहारो न** स्यात् **ऋजुसूत्र** [:]क इव(**त्रवत्**, तदिव) कुतः ? इत्याह–**सन्तानः** हेतुफलभावविशेषः **समुदायः** स्कन्धः **आदिशब्देन** अन्योऽपि जगन्निवासी गृह्यते, स **न**, क ? **एकान्ताभेदभेदयोः** यतः इति निरूपितमेतदसकृत् । २५

कारिकाविवरणमाह–**प्रभव** इत्यादि **तदन्यथा** 'तदन्यथा'[3] सोऽन्यथा च कार्यव्यतिरेक-

---

(१)अत्र प्रतिर्धृष्टा ।(२) तुलना–"लौकिकसमः उपचारप्रायो विस्तृतार्थो व्यवहारः । आह च–लोकोप-चारनियतं व्यवहारं विस्तृतं विद्यात् ।"–तत्त्वार्थाधि० भा० १।३५। "संग्रहनयाक्षिप्तानामर्थानां विधिपूर्वकमव-हरणं व्यवहारः ।"–स० सि० १।३३ । "व्यवहाराविसंवादी नयः स्याद् दुर्नयोऽन्यथा । बहिरर्थोऽस्ति विज्ञप्तिमात्रं शून्यमितीदृशः ॥"–लघी० श्लो० ४२ । (३) 'तदन्यथा' इति द्विर्लिखितम् ।

साधनञ्च शेषं सुगमम् । इत्येवं व्यवहारनयः ।

व्य[व]हारम् ऋजुसूत्रो दर्श(दृष)यन्नाह–तत्र इत्यादि ।

**[तत्र भेदे यथा नृणां सन्तानैक्यं तथा नयन् ।**
**ऋजुसूत्रनयोऽभेदे असर्व[विषयत्वतः] ॥२१॥**

५ **कल्पनाशिल्पिघटितत्वाद् व्यवहारो मिथ्यैव । तद्वशादेकत्वव्यवस्थापनमयुक्तं सूर्यवंशादिवत् । स्मृतिप्रत्यवमर्शकर्मफलसम्बन्धादयः क्वचित् स्युः हेतुफलभावविशेषात् इह नियतवृत्तयः स्मृत्यादयः न पुनरैक्यात्, विप्रतिषेधात् । न चानेकतत्त्वस्य दर्शनादेरेकत्वे क्वचिदनेकत्वं युक्तम् । विकल्पशब्दव्यवहाराणां भेददर्शनात् ।]**

**तत्र** व्यवहारनये 'नृणाम्' इत्यध्याहारः । किम् ? इत्याह–**सन्तानैक्यं** सन्तत्यभेदः, १० केषाम् ? **नृणाम्** पुरुषाणाम् । उपलक्षणमेतत् तेन [५३४क] अचेतनानामपि । कस्मिन् सति ? इत्याह–**भेदे** नानात्वे । कथम् ? इत्याह–**यथा** येन कल्पनारोपितप्रकारेण **अभेदे** संग्रह इत्यर्थः । **तथा नयन्** वस्तु गमयन् **ऋजुसूत्रनयो** 'भवति' इत्यध्याहारः । तदैक्यं भावतः कुतो न इति चेत ; अत्राह–**असर्व** इत्यादि ।

कारिकां विवृण्वन्नाह–**कल्पना** इत्यादि । **व्यवहारो मिथ्यैव** । कुतः ? इत्याह–**कल्पना-** १५ **शिल्पिघटितत्वात्** व्यवहारस्य इति । ततः किं जातम् ? इत्याह–**तद्वयसा इ (तद्वशात्)** व्यवहारवशाद् **एकत्वव्यवस्थापनमयुक्तम्** । अत्र निदर्शनमाह–**सूर्यवंशादिवत्** सूर्यवंशादेरिव ।

तु (ननु) प्रमातरि पूर्वापरप्रत्यययोर्यद्येकत्वं न स्यात् सत्त्वान्तरवत् स्मृत्यादयो न स्युः इति चेत ; अत्राह–**स्मृति** इत्यादि । **स्मृतिश्च** स इति ज्ञानं **प्रत्यवमर्शश्च** प्रत्यभिज्ञानं **कर्म च** क्रिया अदृष्टं वा **फलं** बोद (च ओद)नादि स्वर्गादि च, तयोः **सम्बन्धश्च** ते **आदयो** येषाम् २० ऊहादीनाम् ते तथोक्ताः **क्वचिद्** एकस्मिन् सन्ताने **स्युः** भवेयुः । कुतः ? इत्याह–**हेतुफलभाव-** **विशेषात्** हेतुः अनुभवः फलं स्मरणम् तयोर्भावः तस्य विशेषात् अतिशयात् । किम् ? **इह** **नियतवृत्तयः स्मृत्यादयः** । तथाहि–स्वसन्तानगतोऽनुभवः तद्गतस्मरणजननस[मर्थ] एव तदेव जनयति नान्यो विपर्ययात् , इतरथा आत्मवादिनोऽप्ययं समानो दोषः । अन्यस्य अनुभवः

(१) "ऋजुसूत्रस्य पर्यायः प्रधानं चित्रसंविदः । चेतनाणुसमूहत्वात् स्याद् भेदानुपलक्षणम् ॥" –लघी० श्लो० ४३ । "पच्चुप्पन्नग्गाही उज्जुसुओ णयविही मुणेयव्वो ।"–अनु० द्वा० ४ । "सतां साम्प्रतानामभिधानपरिज्ञानमृजुसूत्रः ।"–तत्त्वार्थाधि० भा० १।३५ । "ऋजुं प्रगुणं सूत्रयति तन्त्रयत इति ऋजुसूत्रः । –स० सि० १।३३ । "सूत्रपातवद् ऋजुत्वात् ऋजुसूत्रः ।"–त० वा० १।३३ । "ऋजु प्रगुणं सूत्रयति नयत इति ऋजुसूत्रः । सूत्रपातवद् ऋजुसूत्र इति ।"–नयच० वृ० पृ० लि० पृ० ५४ ख० । धवलाटी० सत्प्ररू० । "ऋजुसूत्रं क्षणध्वंसि वस्तुसत् सूत्रयेदृजु । प्राधान्येन गुणीभावाद् द्रव्यस्यानर्पणात् सतः ॥" –त० श्लो० पृ० २७१ । नयवि० श्लो० ७७ । सन्मति टी० पृ० ३११ । नयचक्र० गा० ३८ । तत्त्वार्थसा० पृ० १०७ । प्र० नय० ७।२८ । स्या० मं० पृ० ३१२ । जैनतर्कभा० पृ० २२ । (२) तुलना–"पूर्वापरास्त्रिकालविषयानतिशय्य वर्तमानकालविषयानादत्ते । अतीतानागतयोर्विनष्टानुत्पन्नत्वेन व्यवहाराभावात् ।" –स० सि०, त० वा० १।३३ । (३) प्राण्यन्तरवत् ।

अन्यस्य स्मरणं कुतो[न] जनयति ? असामर्थ्यात्[1]; अन्यत्र समानम् । एकत्वाभावात्[2]; स्वपरयोः एकत्वमपि कुतो न ? तद्धेतोः तथा सामर्थ्यात्[3]; आनुगत(अनुगतः) प्रसङ्गः । तथादर्शनात्[1]; किं पुनः परानुभवतोऽन्यस्मरणमुपलभ्यते ? [५३४ ख]

[एते] न प्रत्यवमर्शादयो व्याख्याताः ।

ननु यावत्तद्विशेषान्नियतवृत्तयः ते तावदैक्यात् कुतो न भवन्ति ? तत्राह–**न पुनरैक्यात्** । ५ सुः (स्युः) । कुतः ? इत्याह–**विप्रतिषेधात्** कि (वि)शेषेण निषेधात् ऐक्यस्य । यदि वा, विरोधात् । तथाहि–यदि दर्शनस्मरणादयो ऽनर्था(योऽर्था)न्तरभूताः; नैक्यम् । तच्चेत; न ते[3] इति । अथ अनेकान्तेऽयमदोषः; तत्राह–**नच** इत्यादि । **नच** नैव **अनेकसत्त्वस्य** परस्पर-भिन्नतत्त्वस्य **दर्शनादेर व त्वे(रेकत्वे)** अङ्गीक्रियमाणे **क्वचित्** पादादौ(पादपादौ) **अनेकत्वं युक्तम्** सर्वस्य ऐक्यं स्यात् इत्यर्थः । इतश्च तन्न युक्तम्; इत्याह–**एकत्वानेकत्वयोः विप्रति-** १० **षेधात्** विरोधात् कथमेकं तत्त्वम् [अनेकम् ?] अनेकं वा एकमिति ? अतश्च न तत्तथा; इत्याह–**विकल्प**इत्यादि । एतदुक्तं भवति–एकत्र अनित्यत्वाद्यनेकधर्मविकल्पशब्दव्यवहाराणां **भेददर्शनात्** तत्र भेदसिद्धिः प्रार्थ्यते, तेषां च वस्तुतत्त्वे नियमानुपपत्तिः । तन्न युक्तम् *"**संज्ञासंख्याविशेषाच्च**" [आप्तमी० श्लो० ७२] इत्यादि[4] । वस्तुस्वभावानन्वयाच्च तत्तथा न संगतमिति । १५

ननु भेदैकान्ते कथमुपादानोपादेयभावः यतः तथा स्मृत्यादय इति चेत् ? अत्राह–**स्वभावानन्वये** इत्यादि ।

**[स्वाभावानन्वयेऽन्यत्र स्याद्धेतुफलयोर्यथा ।**
**कार्यकारणभावो वा ततस्तत्त्वं निरन्वयम् ॥२२॥**

**नावश्यं [कारणानि कार्यवन्ति भवन्ति] अतिप्रसङ्गात् । सादृश्यविशेषात् तद्विशेषे** २० **क्वचिदन्वयप्रतिपत्तिः मायागोलकवत् । यमलकयोरकार्यकारणत्वेऽपि सादृश्यं तद्विशेष-प्रतिपत्तेः । तद्...]**

**अन्यत्र** सहकारिकारणे स्वापादौ वा वल्लीदाह-देशान्तरपर्णकोथयोर्वा **कार्यकारण-भावो यथा** येन योग्यताप्रकारेण **स्वभावानन्वये** कार्यकारणोरूपा[णयोरुपादानोपादेया] ननुगमे सति **स्याद्** भवेद् विवादविषये **हेतुफलयोः** उपादानोपादेययोः तद्वत्तद्भावः, २५ **ततः तत्त्वं निरन्वयम्** । [५३५ क]

कारिकार्थमुपदिशन्नाह–**नावश्यम्** इत्यादि । कुतः ? इत्याह–**अतिप्रसङ्गात्** कुलाल-घटयोः स्वापप्रबोधयोः प्राप्तेः ।

स्यान्मतम् पूर्वापरक्षणयोः निरन्तरोपलभ्यमानयोः उपादानोपादेयभूतयोः अन्वयोऽपि

(१) इति चेत्; । (२) ऐक्यं चेत् । (३) दर्शनस्मरणादयः पृथक् । (४) "द्रव्यपर्याययोरैक्यं तयोर-व्यतिरेकतः । संज्ञासंख्याविशेषाच्च तन्नानात्वं न सर्वथा ॥"–आप्तमी० ।

प्रतीयते इति; तत्राह–**तद्विशेष** हेतुफलभेदे उपादानोपादेयभूते क्वचिन्निरन्तरोपलभ्यमाने **अन्वयप्रतिपत्तिः** एकत्वसंवित्तिः। कुतः ? इत्याह–**सादृश्यविशेषात् मायागोलकवत्**। तदुक्तम्–*(१)"सदृशापर" इत्यादि। अथ तद्विशेष एव हेतुफलयोस्तादात्म्यम्; तत्राह–**सादृश्यम्** इत्यादि। कुतः ? इत्याह–**अकार्यकारणत्वेऽपि यमलकयोः तद्विशेषस्य** सादृश्यविशेषस्य **प्रतिपत्तेः**।
५ भ्रान्तः स तत्र इति चेत्; अत्राह–**तद्** इत्यादि। एवं ऋजुसूत्रदुर्णयौ दर्शितः।

कथमयं दुर्णय इति चेत् ? अत्राह–**प्रत्यक्षेतरयोरैक्यम्** इत्यादि।

**[प्रत्यक्षेतरयोरैक्यं प्रतिपन्नं विरुणद्धि चेत्।**
**अनेकान्तं कुतः को वा विजयेतर्जुसूत्रकम् ॥२३॥**

**यदि एकान्तविरोधात् न संविदः प्रत्यक्षादिभिरेकत्वं प्रतिपद्येत; किं केन प्रति-**
१० **पद्येत तद्व्यतिरेकेण स्वरुचिविरचितनिरंशतत्त्वस्यानुपलब्धेः गत्यन्तराभावादिति।]**

**प्रत्यक्षः** प्रत्यक्षज्ञानपरिच्छेद्यः चन्द्रत्वादिः, **इतरः** तदपरिच्छेद्यः विभ्रमे एकत्वादिः। अथवा तत्रैव **प्रत्यक्ष(क्षं)** कल्पनापोढमभ्रान्तं ज्ञानस्य रूपं वा वलयादिना (वर्तुलत्वादिना) **इतरत्** तदाभासं द्वित्वादिना। यदि वा, **प्रत्यक्षं** विकल्पबुद्धेः स्वरूपम् **इतरद्** अप्रत्यक्षम् अर्थोऽनभिलाप्यं रूपं **तयोरैक्यं प्रतिपन्नम**भ्युपगतं **चेत्** यदि सौगतेन, कुतः
१५ **अनेकान्तं** सौगतदर्शन(नं) **विरुणद्धि** व्याहन्ति। विरुणद्ध्येव तदन्यत्रापि तथाऽनेकान्तानिवारणात्। अथ तदप्रतिपन्नम्; तत्राह–**को वा** इत्यादि। **न** इत्यनुवर्त्तते। ततोऽयमर्थः–**को वा न विजयेत** अपि किन्तु सर्वोऽपि विजयेत [५३५ ख] **ऋजुसूत्रकम्**। अदृष्टमेकान्तं कल्पयतः सर्वैः बाधनसंभवात्, तस्य वा सर्वैः कल्पनसंभवादिति भावः।

इतरस्य सुगमत्वात्, '**को वा**' इत्यादि विवृण्वन्नाह–**संविद्** इत्यादि। **संविदो** ज्ञानस्य
२० **प्रत्यक्षादिभिरेकत्वं** संवित्प्रत्यक्षविकल्पाविकल्पविभ्रमैकत्वं **तद्यदि** सौगतो **न प्रतिपद्येत** नाभ्युपगच्छेत। अत्र हेतुमाह–**एकान्तविरोधादिति**। तत्र दूषणमाह–**किं** क्षणक्षयादि **केन** प्रत्यक्षादिना न केनचित् **प्रतिपद्येत**। कुतः ? इत्याह–**तद्व्यतिरेकेण** इत्यादि। संवित्प्रत्यक्षाद्यैव (द्येकत्व) व्यतिरेकेण **स्वरुचिविरचितस्य निरंशतत्त्वस्यानुपलब्धेः**। न जैनोपगताद्(२) शेषि (त सांशऽपि) निरंशात् संविद्रूपात् किंचित् प्रतिपद्यते अपि तु अन्यतः इति चेत्; अत्राह–
२५ **गत्यन्तराभावादिति**।

ननु सौत्रान्तिका(क)(४)नयापेक्षया भवतु ज्ञानं निर्दिष्टप्रकारं न ज्ञानवादि(५)नयापेक्षया, तत्र हि *"**स्वरूपस्य स्वतो गतिः**"[प्र० वा० १।५] इति चेत्; अत्राह–**अन्यथा** इत्यादि।

(१) "सदृशापरापरोत्पत्तिविप्रलब्धो वा लूनपुनर्जातनखादिवत्"–प्र० वार्तिकाल० पृ० १४४। (२) "निराकरोति यद् द्रव्यं बहिरन्तश्च सर्वदा। स तदाभोऽभिमन्तव्यः प्रतीतेरपलापतः॥–त० श्लो० पृ० २७१। श्लो० ७८। न्यायावता० टी० पृ० ८८। प्र० नय० ७।३०,३१। जैनतर्कभा० पृ० २४। (३) द्विचन्द्रज्ञाने।(४) मतापेक्षया। (५) योगाचार।

**[अन्यथा संविदस्तत्त्वं प्रतिभासोऽन्यथेत्यपि ।**
**सुखोत्पाद…मतं प्राप्नोति संग्रहः ॥२४॥**

संविदस्तत्त्वं निरंशमभिन्नं कुतश्चित् भिन्नप्रतिभासमिवेति कल्पनायां संग्रहेऽपि तथैव किन्न कल्प्येत, यतः क्षणक्षयादिसाधनमायास [मात्रफलम्] अवलम्बेत ।]

अ[यम]भिप्रायः–नीलादेः अन्यनीलादिरिव वा, संविद्रूपं स्यात ? प्रथमपक्षे **अन्यथा** ५ अन्येन निरंशप्रकारेण **संविदः तत्त्वं** स्वरूपं **प्रतिभासः** संविदः **अन्यथा** ग्राह्यादिभेद-प्रकारेण । एवं मन्यते–यदा नीलादेरन्य त(त्त्)त्त्वं तदा नीलादिभेदप्रतिभासः । तद्विप्लव एव इति चेत् ; अत्राह–**इत्यपि** इत्यादि । एवमपि **मतं संग्रहः प्राप्नोति** संग्रहाक्रान्तं भवेत् इत्यर्थः । कुतः ? इत्याह–**सुखोत्पाद** इत्यादि ।

**तत्त्वम्** इत्यादिना कारिकार्थमाह–**तत्त्वमभिन्नं निरंशं संविदः** [५३६क] **कुतश्चिद्** १० आन्तरविभ्रमकारणवशात **भिन्नप्रतिभासमिव** इत्येवं **कल्पनायां संग्रहेऽपि** न केवलं ऋजुसूत्रे **तथैव किन्न कल्प्येत** । विवृतमेतत् । **यतो**ऽकल्पनात् **क्षणक्षयादिसाधनमवलम्बेत** । किंभूतम् ? इत्याह–**आयास** इत्यादि ।

ननु संग्रहे नित्यं तत्त्वम्, इतरत्रानित्यं हेतुफलात्मकमिति तयोर्भेद इति तत्साधनमिति चेत् ; अत्राह–**अप्राप्त** इत्यादि ।  १५

**[अप्राप्तकार्यकालस्य कारणत्वमनिश्चितम् ।**
**सर्वथा सर्वदाऽदृष्टं अश्रद्धेयमतिबह्विदम् ॥२५॥**

कार्यक्षणम् ।…यथा कार्योत्पत्तिक्षणसमये कारणात्मलाभोऽकिञ्चित्करः तथा तत्कृतोपकारानपेक्षस्य समनन्तरसंभवश्च । यतो नैरन्तर्यविशेषमेव प्रभवमाचक्षीत । न च पौर्वापर्यमेव उपकारः । तादृशामुपादानेतरव्यवस्था कीदृशी ? तदर्थक्रियायाः नित्यत्वे २० क्षणिकत्वे चासंभवे कथमकार्यकारणं सर्वं न स्यात्, यद्यनेकान्तसिद्धिर्न भवेत् ।]

**अप्राप्तः कार्यकालो** येन निरंशेन, पूर्वमेव सर्वथा नाशात् तस्य **कारणत्वमनिश्चितम्** । तदनुभवपथप्रथोऽपि न भवति तत्कथं कारणत्वनिश्चय इति भावः । एतदेवाह–**सर्वथा** क्षणक्ष-यादिरूपेणैव (णेव) सच्चेतनादिरूपेणापि **सर्वदा** विकल्पावस्थायामिव [1]संहृतविकल्पेऽपि, यदि वा स्वाप इव जागरणेऽपि **अदृष्टं अश्रद्धेयम् अतिबह्विदं** संविदस्तत्त्वम् ।  २५

कारिकाविवरणं **कार्यक्षणम्** इत्यादि । सर्वं सुगमम् ।

ननु न पूर्वमुत्पन्नं विनष्टं कारणम् अपि तु समनन्तरमिति चेत् ; अत्राह–**कार्य** इत्यादि । **कार्योत्पत्तेः क्षणसमये कारणात्मलाभो यथा** येन तदुपत्त्यकारणप्रकारेण, नहि सहसंभविनो-रेकमन्यस्य जनकम्, द्वयोरपि अन्योऽन्यं जनकत्वे अन्योऽन्याश्रयदोषात, **न किंचित्करः तथा समनन्तरसंभवश्च** अकिंचित्करः । तथाहि–पूर्वं समनन्तरं यावदुत्तरस्य कारणम् ; तावदुत्तरं ३०

(१) निर्विकल्पावस्थायामपि ।

तथाविधं पूर्वस्य कुतो न भवति ? अविनाभावस्य उभयापेक्षयापि समानत्वात् । तथा सति अन्योऽन्यसंश्रयः तदवस्थः ।

स्यान्मतम्–यथा सहभाविनोरितरेण [५३६ख] नान्यस्य उपकारः तथा समनन्तरयोरपि, तथाप्येकमन्यस्य कारणं नियमेन तदनन्तरभावादिति ; तत्राह–**तत्कृतोपकारानपेक्षस्य** इत्यादि। ५ अन्यथा सर्वं सर्वस्मात् नियमेन अनन्तरं स्यात् । **यतो** यस्मात् तन्नियमश्रद्धानात् **नैरन्तर्य-विशेषमेव प्रभवं** हेतुफलभावमाचक्षीत सौगतः । अत्रैव दोषान्तरमाह–**न च** इत्यादि । **च** इति दूषणसमुच्चये । **न पौर्वापर्यमेव उपकारः** सर्वेषामपि पूर्वापरीभूतानां स भवेत् इति भावः। **तादृशाम्** अनन्तरवर्णितस्वभावानाम **उपादानेतरव्यवस्था** नाम **कीदृशी** ?

ननु न किंचित् कस्यचित् कारणम् *"अशक्तं सर्वम्" [प्र० वा० २।४] इत्यादि १० वचनादिति चेत् ; अत्राह–**तदर्थं** इत्यादि । **सा** चासौ *"**यदेवार्थक्रिया[कारि]तदेव परमार्थसत्**" इति वचनात् सौगताभ्युपगता**र्थक्रिया च तस्याः नित्यत्वे क्षणिकत्वे च असंभवे** अङ्गीक्रियमाणे **कथमकार्यकारणं सर्वं न स्याद्** भवेत् । तथा च ब्रह्मवदनित्यपक्षेऽपि सर्वहेत्वादिव्यवहारापहार इति भावः ।

ननु स्वात्पतिता स्वबुद्धिः प्रतिभासाद्वैतवादिनः, तेनाभ्युपगमादिति चेत् ; अत्राह–**यदि** १५ **अनेकान्तसिद्धिर्न भवेत्** स्याद् अकार्यकारणं सर्वमिति सम्बन्धः । यावता नीलादिस्वभावामपि संविदं वदतोऽनेकान्तसिद्धिः हेतुफलभावाविरोधिनी भवेत् इत्युक्तम् ।

नन्वनेकान्ते विरोधादिदोषात् कथं तत्सिद्धिः ? इत्यत्राह–**विरोधात्** इत्यादि। [५३७क]

**[विरोधाद्विभ्यतस्तस्य तव कथन्न विरुध्यते ।**
**शून्यता बहिरन्तश्च मानमेयनिराकृतेः ॥२३॥**

२० **बहिरन्तरनुभवविषयं प्रत्यक्षगोचरमनेकान्तत्वं विरोधशङ्कया परिहरतस्ते क्षणक्षयैकान्तोपलम्भावलम्बनं बहिरर्थनिराकरणं गण्डूपदभयादजगरमुखप्रवेशमनुसरति ।]**

उपलक्षणमेतत्, तेन वैयधिकरण्यसंशयानवस्थाऽभावदोषपरिग्रहः । **तस्य** अनेकान्तस्य सम्बन्धी यो **विरोधः** तस्माद् **बिभ्यतः तव** सौगतस्य **कथं न विरुध्यते** । का ? **शून्यता** । क्व ? **बहिरन्तश्च** । कुतः ? **मानमेयनिराकृतेः** इति । एवं मन्यते–अनेका-२५ न्तस्य विरोधादिनान्यस्यानुपलम्भनात् (नुपलम्भनात्) सकलशून्यता मानत्राणरहिता सुतरां विरोधमास्तिघ्नुते इति ।

'**बहिरन्तरनुभवविषयम्**' इत्यादि कारिकाविवरणम् । **अनेकान्तत्वं प्रत्यक्षगोचरं विरोधं** (ध)**शङ्कया** कृत्वा **परिहरतः** त्यजतः **ते** सौगतस्य [क्षण]**क्षयैकान्तोपलम्भावलम्बनं** तदेकान्त-दर्शनस्वीकरणं कर्तृ **गण्डूपदभयात्** मूकसर्पोऽजगरः तस्य **मुखप्रवेशमनुसरति** । तदनेकान्त-

(१) उपकारः । (२) "अर्थक्रियासमर्थं यत्तदत्र परमार्थसत् । अन्यत् संवृतिसत्प्रोक्तं ते स्वसामान्यलक्षणे ॥"–प्र० वा० २।३ । (३) नित्यब्रह्मवत्

परित्यागे एकपरमाणुमात्रं तत्त्वं भवेत् इत्युक्तम्, तस्य वानुपलम्भनमिति किमाश्रयं तदेकान्तोपलम्भनम्। परमपि तत्प्रवेशमनुसरति इत्याह–**बहिरर्थनिराकरणम्** इत्यादि। सुविवेचितमेतत्।

ननु नयदुर्णयचिन्तेयम् आगम एव सिद्धा, तत्किमनया परमार्थविचार इति चेत्? अत्राह–**सापेक्षा** इत्यादि।

**[सापेक्षा नया सिद्धाः दुर्णया अपि लोकतः।** ५
**स्याद्वादिनां व्यवहारात् कुक्कुटग्रामवासिनम् ॥२७॥**

**लोकव्यवहार···कुक्कुटेन ग्रामवासितमिति संग्रहाभिप्रायः। नवै ग्रामवासितम् अपि तु तत्पाटके गृहे वृक्षे शाखायां मुखादौ वा व्यवहारदर्शनात्। नयाः सामान्याद्यर्पणात् अन्यथा दुर्णयाः।]**

भिन्नप्रक्रमः **अपि**शब्दः **लोकत** इत्यस्यानन्तरं द्रष्टव्यः। ततोऽयमर्थः **स्याद्वादिनां** १० जैनानां लोकात् लोकतोऽपि न केवलम् आगमत एव **सिद्धा** निश्चयमुपागताः। के? इत्याह–**नयाः।** किंभूताः? इत्याह–**सापेक्षाः** नयान्तरगोचरानिषेद्धारः। दुर्णयाश्च ततोऽपि सिद्धाः, इत्याह–**दुर्णया** लोकतोऽपि [५३७ख] **सिद्धा** इति। किंभूताः? **निरपेक्षाः** परविषयनिषेद्धारः। तां दुर्णयत्वेद त्यो(ते दुर्णयाः।)

[ननु] एकान्तवादिनः कुतः लोकतः सिद्धाः? इत्याह–**लोकव्यवहार** इत्यादि। १५ निदर्शनमत्राह–**कुक्कुटेन ग्रामे** गृहविशेषविशिष्टदेशे **वासितम्** इति **संग्रहाभिप्रायः** सामान्यमात्रस्यार्पणात्[1]। **नवै** नैव **ग्रामे** सर्वत्र **वासितम् अपि तु तत्पाटके** ग्रामैकदेशे इति नैगमसिद्धिः प्रधानेतरभावेन उभयार्पणात। व्यवहारं दर्शयन्नाह–**गृह** इत्यादि। अत्रापि न चैतत् पाटके अपि तु **गृहे वृक्षे शाखायां वासितम्** इति योज्यम्। ऋजुसूत्रमाह–**मुख(मुखे)** इत्यादि। **आदि**शब्देन ताल्वादिपरिग्रहः **व्यवहारदर्शनात् नयाः।** कथम्? इत्याह–**सामान्य** इत्यादि। २० दुर्णयानाह–**अन्यथा** इत्यादिना।

कृतार्थस्मरणार्थं **भेदा** इत्यादि प्रस्तावान्ते वृत्तमाह–

**[भेदाभेदात्मनिष्ठेष्वपि मतिविषयेषु स्युर्नया लक्ष्यमाणाः,**
**लोके सापेक्षवृत्त्या जिनपतिसमये चार्थमात्रावलम्बे।**
**विज्ञेया दुर्णयाश्च कुमतिभूताः कोविदैः कोविदानाम्,** २५
**अन्यथा इदंतया······को नु विदधीत मानम् ॥२८॥]**

**भेदाभेदौ** व्याख्यातलक्षणौ तावेवा**त्मानौ** वस्तुनः स्वभावौ, नैकान्तेन भिन्नौ, **तन्निष्ठेषु** तत्परेष्व[पी]स्यस्यानन्तरे पठितव्यः। किंभूतेषु? इत्याह–**मतिविषयेष्वपि** श्रुतविषयेष्वपिशब्दात्। तेषु किम्? इत्याह–**नयाः स्युः** ज्ञात्रभिसन्धयो भवेयुः। किंभूताः? **लक्ष्यमाणाः।** क? इत्याह–**लोके जिनपतिसमये च** जिनागमे च। कथं लक्ष्यमाणाः? ३०

(१) नयान्तरविषयगौणकारकाः। (२) मुखे एव वासितं शब्द इति भवति इति ऋजुसूत्राभिप्रायः।

इत्याह-**सापेक्षवृत्त्या** । किंभूते ? इत्याह-**अर्थमात्रालंबा(मात्रावलम्बे अ)र्थमात्रम्** उपलक्षणमेतत्, तेन [५३८ क] पर्यायमात्रग्रहणम्, तदवलम्बान(लम्बे न) केवलं नयो-(नया) **दुर्णयाश्च** स्युः । किंभूताः ? इत्याह-**क्रमनि(कुमनि)** इत्यादि । पूर्वेण विषयः अनेन हेतुः निर्दिष्टः । **नयाः दुर्णयाश्च विज्ञेयाः कोविदानां कोविदैः** पण्डितैः ५ इत्यर्थः । तत्प्रयोजनमाह-**मान** इत्यादि । **अन्यथा** नयाभावप्रकारेण **को नु विदधीत** न कश्चित् । कथम् ? इत्याह-**इदन्तया**।। कम् ? इत्याह-**मान** इत्यादि ।।छ।।

इति रविभद्रपादोपजीवि-अनन्तवीर्यविरचितायां सिद्धिविनिश्चयटीकायाम् अर्थनयसिद्धिः दशमः प्रस्तावः ।

## [एकादशमः प्रस्तावः]

### [११ शब्दनयसिद्धिः]

शेषास्तु य(पाः त्रयः) शब्दनया इत्युक्तम्[1], तत्र **शेषा** व्याख्यातुं तन्निबन्धनभूतं शब्दं निरूपयन्नाह–**प्रोक्त** इत्यादि ।

**[प्रोक्ते व्याकरणे पुराऽक्षरपदान्युद्दिश्य तत्राक्षरम्,**
**द्रव्यात्माणुमयं मतोऽनुपवनं गत्यापि मूर्तं यतः ।**
**जन्मानन्तविवर्तिनः समुदयः तेषां पदं कृत्रिमम्,** ५
**नित्यं जन्मपरिग्रहादसदनुत्पत्त्या लभेत आतताम् ॥१॥**

**नित्यस्य सर्वथैव [सतः उत्पत्त्ययोगात्] तदभावैकान्ताविशेषे अक्षरादेः कारणमस्ति नेतरस्येति किंकृतमेतत् ? खरशृङ्गस्य पुनः यथा अनुत्पत्तेरसत्त्वम्, असत्त्वाच्चानुत्पत्तिरित्यन्योऽन्यसंश्रयदूषणं तथा अकारणत्वादनुत्पत्तिः अनुत्पत्तेरकारणत्वमिति समानम् । स्वस्माद्भावस्य जन्म व्याहतम् आत्मनि क्रियाविरोधादिति चेत्; कथमसति** १० **पूर्वमुत्पद्य कार्यकालं गत्वा तत्करणे क्षणिकत्वम् ? यदि मायासुतः पूर्वं संसारी कथं पुनः तत्त्वाभ्यासाद् बुद्धो जातः ? कथञ्चित् सन्नेव सुगतत्वं प्राप्नोतीति समञ्जसम् । नापि मायासुतादन्यो बुद्धः संभाव्यते यतः परस्मादेव जन्म स्यात्, तत्त्वाभ्यासतत्फलयोः भिन्नाधिकरणत्वप्रसङ्गात् । सन्तानापेक्षया एकत्वेऽपि वस्त्वपेक्षया नानात्वं पितापुत्रयोरप्यस्ति । तत्र सन्ताननानात्वं नेतरत्रेति नापरं कारणमुत्प्रेक्षामहे अन्यत्र** १५ **द्रव्यभेदात् । कथं पुनः···? उक्तमत्र···]**

प्रथमम् उक्तम् **प्रोक्तं** तस्मिन् । कस्मिन् ? इत्याह–**व्याकरणे** साधुशनैः(शब्दानुशासन)लक्षणसमुदायरूपे । ननु नेदानीं तत्[2] केनचित् प्रथममुक्तम्, न हि कश्चिदाचष्टे पूर्वमेकान्तेन असद् व्याकरणतत्त्वमिदं मया इदानीं प्रादुर्भावितमिति चे[त्; अ]त्राह–**पुरा** इति । भगवतः प्रथमतीर्थकरस्य पुरुदेवनाम्नः काले । एवं हि श्रूयते–पुरा पुरुदेवो भरतादीन्[3] २० पाठयितुं पञ्चशताध्यायपरिमाणं स्व य म्भू ना म कं व्याकरणं चकार इति ।

ननु तस्यापि[4] अन्यतः तदध्ययनम् अस्मदादिवदिति चेत्; भर[भा र]ता दि वत् करणे[5] को विरोधः ? वेदाङ्गत्वविरोध इति चेत्; न; वेदस्यापि कृत्रिमत्वप्रतिपादनात् । न च तदङ्गत्वमस्य सिद्धम् । अथ केश्चित् तदङ्गत्वेन केनचित् तिरितरोद्भवद् ([6]तित्तिरोद्भववद्[7]); वेदस्यापि कृतत्वप्राप्तेः । '[8]नहि देवदस्यापि कृत्व प्राप्तेः' । नहि देवदत्तस्या [५३८ ख] गम(स्याङ्ग)- २५

---

(१) पृ० ६६२ । (२) व्याकरणम् ।(३) स्वपुत्रान् । (४) भगवतः । (५)महाभारत । (६) तित्तिरोपनिषद्वत् । (७) इति चेत्; । (८) 'नहि देवदस्यापि कृत्वप्राप्तेः'इतिद्विर्लिखितम् ।

दर्शनेन स मर्दितः स्यात्, अतिप्रसङ्गश्चैवम्। सर्वस्यापि ब्राह्मणकृतस्य नास्तिकादिशास्त्रस्य तदङ्गताप्राप्तेः, तथा च[न]दर्थानुष्ठानम्। अथ ब्राह्मणोऽसौ न भवति; कुत एतत् ? अप्रमाणार्थाभिधानात्; शब्दसाधुत्वे किं प्रमाणं येन तदनुवादकरणात् पा णि निः ब्राह्मणः स्यात्। श्र(शा)स्त्र मिति चेत्; अन्यत्र समानम्, अन्यस्यापि वेदाङ्गत्वप्रतिपादनात्। धर्महेतुतत्साधुत्व-
५ कथनात् स ब्राह्मण इति चेत्; न; अत्रापि प्रमाणाभावात्। अथ वैदिकशब्दानुशासनात् ब्राह्मणोऽसौ; अन्योऽपि वैदिकमात्रिकविवाहाद्यर्थानुशासनाद् ब्राह्मणोऽस्तु। वेदे सोऽर्थो नास्तीति चेत्; न; तच्छास्त्रस्य वेदाङ्गत्वात्। पुरुषकृतस्य कथं तदिति चेत्; न तर्हि पा णि ने स्तदङ्गता। पाणि नि ना तत्स्मृतमिति चेत्; प्रकृतेऽपि समानमेतत्।

किंच, जै ने न्द्रं पू ज्य पा दे न तीर्थङ्करादधीतं पुनर्विस्मृतं स्मृतमिति किन्नेष्यते ?

१० स्यान्मतम्–पा णि नि मतानुसरणं तत्र श्रूयते, दृश्यते च; तत्रापि परमतानुसरणं श्रूयते दृश्यते च इति समानं परस्यापि परानुसरणम्। यथा च इदानीम् अन्यमतानुसरणात् केषांचिद् व्याकरणं तथा द्विजानामपि पुरा परमतानुसरणात् तत्करणे को विरोधः ? तन्न अतो व्याकरणस्य तदङ्गता।

अथ वेदार्थप्रत्यायना[त्] तदङ्गता; न; तत्र शब्दाः केवलं व्युत्पाद्यन्ते, तैत्र ते
१५ व्युत्पादिताः तदर्थवद् अन्यमपि सङ्केतात् कथयन्ति। यथा च [५३९क] क्वचित् सामान्यलक्षणा-(ण)परिगृहीता वैदिकाः शब्दा व्युत्पाद्यन्ते तथा अन्यत्र अन्य इति समानम्। यदि मतम्–वेदोक्तशब्दाश्रयणात् तदिति तत्तदङ्गमिति; तदास्तां तावत्। तत्र तदनादि इतरशास्त्रवत्।

किं कृत्वा प्रोक्तम् ? इत्याह–**उद्दिश्य** अवलम्ब्य। कानि ? **अक्षरपदानि** *"**अचीको-यश्चि**"("**अचीको यण्**")[जैनेन्द्र० ४।३।६५] इत्यादावक्षराणि *"**सुम्मिङन्तं पदम्**"[जैने-
२० न्द्र० १।२।१०३] इत्यादौ पदानि "**ननु धुयोगे**" *("**धुयोगे त्वा**") [जैनेन्द्र० २।४।१] इत्यादौ वाक्यान्यपि उद्दिश्य तत्प्रोक्तम्, तत्कथमिह तदग्र[ह]णमिति चेत् ? न; तदुपलक्षणत्वाद् अस्य। द्वयोज(योरु)पादानमनर्थकम् एकेन उपलक्षणादिति चेत्; न; मीमांसकं प्रति दृष्टान्तार्थत्वात् पदोपादानस्य। तथाहि–यथा 'गौः इत्यत्र न गकारादिव्यतिरेकेण पदम्, *"**अथ गौः इत्यत्र कः शब्दः ? गकारौकारविसर्जनीयाः इति भगवानुपवर्षः।**" [शाबरभा० १।१।५]
२५ इति वचनात्, तथा नाक्षरं तदवयवव्यतिरेकेण। सावयव(वं) चाक्षरं यद्वक्ष्यति '**अणुमयम्**' इति तन्मयस्य घटादिवत् सावयवत्वात्। तथापि अक्षरभाववत् तदभावोऽपि इति तत्र किम् ? इत्याह–**तत्र** इत्यादि। अनेन शब्दनिरूपणे स्वातन्त्र्यमात्मनो निराकरोति। **तत्र** व्याकरणे, 'तेषु वा मध्ये' इत्येके, **अक्षरं** वर्णजात्यपेक्षम् एकवचनम्। किम् ? इत्याह–**द्रव्यात्म** द्रव्यस्वभावम्। पुनरपि किंभूत(तम् ?) इत्याह–**अणुमयम्** भाषापरमाणुविकाररूपम्।

३० ननु परमाणुविकारस्य घटादिवद् द्रव्यात्मकत्वाव्यभिचारात् किं द्रव्यात्मपदेन इति चेत्; न; एकान्ताभावात्। तद्विकारो हि कश्चिद् गुणः श्यामत्वरक्तत्वादिवत्, अपरः कर्म गमनादिवत्,

(१) देवनन्दिना आचार्येण। (२) इति चेत्;। (३) वेदाङ्गता। (४) व्याकरणे। (५) अक्षरपदयोः। (६) अणुमयस्य। (७) व्याख्याकाराः। (८) परमाणुविकारः।

अन्यो द्रव्यं कुम्भादिवत्, तत इतरव्यवच्छेदेनास्य [५३९ख] प्रतिपादनार्थं द्रव्यात्मग्रहणम्। तदपि किमर्थमिति चेत्? उच्यते-*"**गुणः शब्दः निषिध्यमानद्रव्य[कर्म]भावत्वे सति सत्तासम्बन्धित्वात् रूपादिवत्**" इत्यत्र असिद्धताप्रतिपादनार्थं हेतोः तत्। तथाहि-शब्दे निषिद्ध्यमानकर्मभावत्वे सत्यपि द्रव्यत्वनिषेधाभावात्, प्रमाणबाधनात्। किं तत् प्रमाणमिति चेत्? कथ्यते-द्रव्यमक्षरं क्रियावत्त्वात् लोष्टवत्। क्रियावतो हि परेणापि द्रव्यत्वमिष्यते-*"**क्रियावद्गुणवत्समवायिकारणं द्रव्यम्**" [वैशे० सू० १।१।१५] इत्यभिधानात्। न च क्रियावत्त्वं तत्राऽसिद्धम्; अक्षरं क्रियावत् क्रमेण देशाद्देशान्तरप्राप्तिमत्त्वात् वाणवत्। परेणापि तथा वक्तृमुखदेशात् श्रोतृश्रवणदेशप्राप्तस्य ग्रहणोपगमात् *"**चक्षुःश्रोत्रमनसाम् अप्राप्तकारित्वम्**" इति वचनात्। ५

उत्पत्तिदेश एव गृह्यते इत्येके; तेषाम् अनुवातप्रतिवाताभ्यां तद्ग्रहणाग्रहणे न स्याताम् स्तम्भवत्। नहि स्तम्भः स्वदेशस्थो गृह्यमाणः अनुवाते गृह्यते न प्रतिवात इति दृष्टम्। अथ प्रतिवातेन प्रतिघातः श्रोत्रस्य विधीयते; ननु प्राप्तः सः प्रतिघातकारी नान्यथा, अतिप्रसङ्गात्। ततः शब्ददेशाद् यदा श्रोतृदेशं याति वायुः तदा शब्दग्रहणं भवेत्। तस्य तेन प्रतिघातान्नेति चेत्; न; अन्यत्र तथा[ऽ]दर्शनात्। एतत्(तु)स्यात, प्रतिवायुना श्रवणप्रतिकूलदेशोपनीतो नोपलभ्यते तूलादिवदिति योग्यतावदिति(ग्यसामग्री)विरहात् प्रतिवचने अग्रहणो (प्रतिवाते अग्रहणम् अ)योग्यत्वात, अन्यथा समे अनुकूले वा मरुति ग्रहणं न स्यात्। सैव सामग्रीति [५४०क] चेत्; निर्वाते न ग्रहो भवेत्। अत्रापि सैव सामग्रीति चेत्; स्या[द्य]दि वाताभावः पदार्थान्तरं भवेत्। शब्दरूपमेव इति चेत्; तत् प्रतिकूलेऽपि अनिले अविकलम्। 'तेन तस्य ग्राह्यता शक्तिः प्रतिहता' इत्यपि नोत्तरम्; तत्रस्थस्यैव तच्छक्तिः प्रतिहता, उत देशान्तरं नीत इति [न] निश्चयहेतुरस्ति। वयं तु ब्रूमः 'देशान्तरं नीतः' तत्रस्थैः श्रवणात्। नच क्षणिकवादिनो गन्धादिवद् भिन्नदेशोत्पत्तिः शब्दे विरुद्ध्यते। तथापि न श्रोत्रप्रदेशं प्रति तदुत्पत्तिरिति चेत्; तद्भावेऽपि न किंचिद् विरुद्ध्यते। 'दूरे शब्दः' इति प्रतीतिर्विरुध्यते इति चेत्; तत्र [तन्न;] गन्धेऽपि तत्प्रतीतिभावात्। ततोऽक्षर(रं) क्रियावदेव। आह-**अनुपवनं गत्यापी**ति पवनेन सह अनुपवनं शब्दस्य या गतिः तया तद्द्रव्यात्मा **अपि**शब्दः उक्तहेतुसमुच्चये, तेन स्पर्शसंख्यावत्त्वेन इत्यादि ग्राह्यम्। १० १५ २० २५

ननु गन्धस्य अनुवचनं(अनुपवनं) गतिरस्ति तथापि न द्रव्यम् अतो व्यभिचार इति; न; पक्षीकरणात्। गन्धवद् द्रव्यम् अनुपवनं गतिमत् न गन्धः, तथापि उपचारेण सोऽपि

(१) अनुमाने। (२) बौद्धः प्राह। (३) "अप्राप्तान्यक्षिमनःश्रोत्राणि"-अभि० को० १।४३। "चक्षुःश्रोत्रमनोऽप्राप्तविषयमुपात्तानुपात्तमहाहेतुः शब्द इति सिद्धान्तात्।"-तत्त्वसं० प० पृ० ६०३। उद्धृतमिदम्-न्यायकुमु० पृ० ८३। सन्मति० टी० पृ० ५४५। स्या० रत्ना० पृ० ३३३। (४) बौद्धाः। (५) प्रतिवातः। (६) अथवा। (७) इति। (८) देशान्तरस्थैः। (९) शब्दोत्पत्तिः। (१०) स्पर्शवत्त्वात्, संख्यावत्त्वात्, संयोगवत्त्वात् इत्यादि ग्राह्यम्। (११) गन्धोऽपि।

तद्वान् व्यपदिश्यते यथा तथा अक्षरमपि चेत्; किं पुनः गन्धाधारस्य द्रव्यस्येव शब्दाधारस्य गतिरस्ति येनैवम् ? नो चेत्; कथम् उपचारकल्पना ? अथ वायुगतेः अक्षरे अध्यारोपात् तद्वत्[1]; तथा गमनमपि भवेत्।

स्यान्मतम्, गगने तदध्यारोपनिमित्तं नास्ति; किं पुनरक्षरे अस्ति ? तत्साहचर्यमिति
५ चेत्; न; निष्क्रियस्य तस्य कीदृशं वायुना साहचर्यम् ? न हि घोटकारूढराजवत् वाय्वारूढस्य देशान्तरे प्राप्तिरस्ति। भावे वा शब्दे [५४०ख] संयोगवृत्तिः[4]।

अथ मतम्, यं देशमुपसर्पति वायुः तत्र देशे समवायिकारणाद् आकाशाद् असमवायिकारणात् पूर्वशब्दाद् विनश्यतात् (विनश्यतस्तात्-) तोऽपरापरशब्दभावात् साहचर्यमिति[5]; पांश्वादिवत् तस्यैव गतिपरिणामे को दोषः ? क्षणिकत्वान्न तत्परिणामः; कुतः क्षणिकत्व-
१० मुच्यते ? 'क्षणिकः शब्दः अस्मदादिप्रत्यक्षत्वे सति विभुद्रव्यविशेषगुणत्वात् सुखादिवत्' इति चेत्; न; वक्ष्यमाणगुणा(णो)त्तरत्वात्। यद्वक्ष्यति **नित्यं जन्मपरिग्रहात्** इति। चर्चितं चैतदस्माभिः द्रव्यसिद्धिप्रकरणे। ततः स्थितम्–**अक्षरं द्रव्यात्मा अनुपवनं गत्यापि** लोष्टवदिति।

स्यान्मतम्–द्रव्यात्मत्वेऽपि नानुपवनं गतिः, सर्वगताऽमूर्तत्वात् आकाशवदिति चेत्;
१५ अत्राह–**अणुमयम्** इति। **अणवो** भाषापरमाणवः तद्विकारः तन्मयम्[8] ततोऽसिद्धो हेतुः 'सर्वगतामूर्तत्वात्' इति। नहि तद्विकारस्य तत्त्वम्; विरोधात्। तन्मयं कुत इति चेत् ? आह–**मूर्त्तं (र्त्तं)** रूपरसगन्धस्पर्शवन्मूर्त्तं पूर्वाचार्यैरभ्युपगतं यतः। तथाहि–अक्षरमणुमयं मूर्त्तत्वात् पटादिवत्। मूर्त्तत्वं च *"शब्दः पुद्गलपर्यायः" [सिद्धिवि० ७।२] इत्यत्रावसरे प्रतिपादितम् नेह पुनरुच्यते। यदि वा, द्रव्यस्वभावमपि मीमांसककल्पितं न(तत्)
२० स्यात्; इत्यत्राह–**अणुमयं**। तदपि कुतः ? इत्याह–**मूर्त्तं यतः**। एतदपि केन ? इत्याह–**अनुपवनं गत्यापि मतं** न केवलं शरीरावयवविशेषस्प(स्पृ)ष्टादिनैव इति **अपि**शब्दः[9] तथाहि–अनुपवनं गत्या तस्य तृणादिवत्तेन संयोगविशेषोऽनुमीयते [५४१क] तदभावे तदभावात्। ततश्च स्पर्शविशेषः, तस्माच्च रूपादिः इति।

परः प्राह–ताल्वादिसंयोगविभागजाः शब्दाभिव्यक्तिहेतवः पवनेन वायवः प्रेर्यन्ते,
२५ तैस्तु यथावस्थितमक्षरं व्यज्यते, अतोऽनुपवनं गतिरस्य असिद्धा इति; तन्न; नित्यस्य व्यक्तिनिषेधात्। भवतु अक्षरं[10] तन्मयम्, तदभिव्यङ्ग्यं पदं नित्य मूर्त्तत्वं (त्यममूर्त्तं) स्यादिति चेत्; अत्राह–**पद(पदं)समुदयः तेषा**मक्षराणां तद्व्यतिरेकेण तदनुपलब्धेः इति भावः। ततः किम् ? इत्याह–**मतम्** अभ्युपगतम् **कृत्रिमं** कृतकपदम्। नहि कृतकसमुदायोऽन्यथा[11]; अतिप्रसङ्गात्। क्षणिकत्वात्तस्य, नानुपचारादिति[12] वैशेषिकादिः; तं प्रत्याह–**नित्यम्**

(१) अक्षरं गतिमत् भाति। (२) वायुगत्यध्यारोपात् क्रियावत् भवेत्। (३) शब्दस्य। (४) संयोगसम्बन्धस्वीकारे सुतरां द्रव्यत्वोपपत्तिः। (५) इति चेत्;। (६) शब्दस्यैव। (७) इति चेत्;। (८) विकारार्थे मयट्। (९) अपिशब्दार्थः। (१०) अणुमयम्। (११) नित्यः। (१२) किन्तु उपचारादेव इति।

इत्यादि । **नित्यं** ध्रुवम् कथंचिदक्षरम् । कुतः ? इत्याह–**जन्मपरिग्रहात्** । ननु विरुद्धोऽयं हेतुः ; प्रागसतः पुनरात्मपरिग्रहलक्षणत्वात् जन्मनः, नित्ये च कालत्रय[नुया]यिनि तन्न संभवति इति चेत् ; अत्राह–**असदनुत्पत्त(त्त्या)** इत्यादि । [न] सतो विद्यमानस्य आत्मलाभः । कया ? इत्याह–**असतः** खरविषाणसमानस्य **अनुत्पत्त्या** । तस्य कुतश्चिदात्मलाभो विरुद्ध्यते इति चेत् ; अत्राह–**जन्म** इत्यादि । **जन्मन्येव अनन्तविवर्त्ताः** परिणामाः ५ तद्वतः, एकान्तेन सतः आत्मलाभ(भो) विरुद्धो न परिणामिनि इति भावः । सप्रपञ्चं तन्नित्यत्वं साधयन्नाह–**नित्यम्** इत्यादि । परिणामनित्यम क्षरम् । कुतः ? **उत्पत्तेः** । विरुद्धो हेतुः इति चेत् ; अत्राह–**लभेन** इत्यादि । कुत एतदपि ? इत्याह–**जात** इत्यादि । सुगमम् ।

विरुद्धतां परिहरन् कारिकार्थमाह–**नित्यस्य** इत्यादिना । सर्वथा असत उत्पत्तौ को दोष इति चेत् ? अत्राह–**सर्वथैव** इत्यादि । [५४१ख] स्यान्मतम्, अक्षरा(रस्य आ)काशादिकं १० कारणमस्ति तेन उत्पद्यते, न तु खरशृङ्गादि विपर्ययादिति चेत् ; अत्राह–**तदभावैकान्तो(न्ताऽ)-विशेष** इत्यादि । **तयोः** अक्षरादिखरविषाणयोः **अभावैकान्ताविशेष** सति **अक्षरादेः कारणमस्ति न इतरस्य** खरशृङ्गस्य इत्येवं **किंकृतमेतत्** ।

ननु खरशृङ्गमकारणम् अनुत्पत्तेः नाक्षरादिः विपर्ययादिति चेत् ; अत्राह–**पुनः** इत्यादि । [अयम्]अभिप्रायः, खरविषाणामकारणम् इति साध्यम्, अनुत्पत्तेरिति हेतुः, तेन च सिद्धेन १५ भाव्यमिति, तस्य कुतः सिद्धिः ? असत्त्वादिति चेत् ; उच्यते–**पुनः** इति वितर्के, **खरशृङ्गस्य यथानुत्पत्तेः** सकाशादसत्त्वं सिद्ध्यति **असत्त्वाच्च अनुत्पत्तिः** इति **एवमन्योऽन्यसंश्रयदूषणं तथा** तेन प्रकारस्य(रेण) **अकारणत्वादनुत्पत्तिः अनुत्पत्तेरकारणत्वम्** इत्येवं **समानम्** अन्योऽन्यसंश्रयदा(यापादनम्) ।

परो ब्रूयात् न असत्त्वात् तदनुत्पत्तिः साध्यते यतोऽयं दोषः, अपि तु कारणाभावादिति, २० तदा इदं वक्तव्यम् इत्यभिप्रायः । तदेवमनुत्पत्तेरसिद्धेः अकार(रादि) विशेषणमनुत्पत्तिः इत्यसमञ्जसम् ।

ननु सर्वगमिदं चोद्यम् । तथाहि–जीवः पुद्गलादुपादानकारणात् कुतो न भवति ? तस्य तदकारणत्वादिति चेत् ; एतदपि कुतः ? ततोऽनुत्पत्तेः इति चेत् ; सापि कुतः ? तदाकारणत्वात्[1] ; पूर्ववदन्योऽन्यसंश्रयः । तत्र तस्य असत्त्वादनुत्पत्तिः इति चेत् ; असत्त्वं कुतः ? २५ अनुत्पत्तेश्चेत् ; स एव प्रसङ्गः । एवं सर्वत्र कत्तव्यम्(वक्तव्यम्) । अथ जीवस्य द्रव्यसतः पुद्गलोपादेयतया [५४२क] अदर्शनात् तत्रासत्त्वम् अतश्च ततस्तदनुपपत्तिः अस्यास्तेन्तदकारणम् इत्यन्योऽन्यसंश्रयाभावः, एवमन्यत्रापि तदभावः स्यादिति चेत् ; सत्यं स्यात्, किन्तु प्रतीतिरनुसृता स्यात्, न विचारमात्रम् । तथा सति मृत्पिण्डात् घटादिकं तत्र मृद्द्रव्यादिरूपेण सदेवं(सदेव) जायते तथाप्रतीतेः, न खरविषाणं विपर्ययात् । यद्वक्ष्यति–*"**बहिरन्तश्च**" ३० [सिद्धिवि० ११।३] इत्यादि । परमतमाशङ्कते **स्वसादि**[त्यादि] **भावस्य** कार्यपदार्थस्य

(१) इति चेत् । (२) जीवो न पुद्गलकारणकः ।

जन्म उत्पत्तिः व्याहतम्। कुतः ? इत्याह–स्वस्मात् आत्मनः सकाशात्, आत्मनि क्रियाविरोधात् इत्येवं चेत् ; एतद् दूषयन्नाह–कथम् इत्यादि । सति कारणे तस्य जन्म इत्यदोष इति चेत ; अत्राह–असतीत्यात्र[यम]भिप्रायः–पूर्वमुत्पद्य 'कार्यं' कार्यकालं गत्वा तत्करणे क्षणिकत्वम् ? कार्येण सह कारणोत्पत्तौ सन्तानोच्छेदः इति विरोधः ।

५ पुनरपि 'यदि' इत्यादिना पराभिप्रायमाशङ्कते, 'कथम्' इत्यादि अत्र दूषणम् । मायासुतः माया नाम सुगतस्य जननी तस्याः पुत्रः पूर्वं संसारी पुनः पश्चात् तत्त्वाभ्यासाद् बुद्धो विधूतकल्पनाजालपर्यायस्वभावो जातः । एतदपि नेष्यते इति चेत् ; अत्राह–कथंचित् सच्चेतनादिरूपेण सन्नेव सुगतत्वम् अपुनरावृत्त्यादिधर्मकत्वं प्राप्नोति इति समञ्जसम् वन्ध्यासुतवत्।

ननु न मायासुतः सुगतो भवति *"गन्ता नास्ति शिवाय चास्ति गमनम्"इति वचनात्,

१० अपि तु तद (तदु)पादानादन्य एव सुगतो भवतीति चेत ; अत्राह–नापि इत्यादि । मायासुतात् कारणभूता[दन्यः] बुद्धो जातः संभाव्यते नापि यतः संभावनात [५४२ख] परस्मादेव वस्त्वन्तरादेव जन्म स्याद् बुद्धस्य । कुतो न संभाव्य इति चेत ? तत्त्वाभ्यासतत्फलयोः भिन्नाधिकरणत्वप्रसङ्गात् ।

परस्य मतमाशङ्कते–सन्तान इत्यादि । मायासुत-सुगतत्वयोः सन्तानापेक्षया एकत्वेऽपि

१५ वस्त्वपेक्षया मायासुतसुगतस्वलक्षणापेक्षया ना(नाना)त्वमिति चेत ; अत्राह–पिता इत्यादि । हेतुफललक्षणप्रबन्धः सन्तानः पितापुत्रयोरप्यस्तीति भावः ।

स्यान्मतम्–हेतुफललक्षणप्रबन्धविशेषः स तयोर्नास्ति इति भिन्नसन्तानत्वमिति चेत् ; अत्राह–तत्र इत्यादि । तयोः पितापुत्रयोः सन्ताननानात्वं नेतरत्र इतरयोः मायासुतसुगतयोर्न सन्ताननानात्वं तत्र तदेकत्वम् इत्यर्थः, इत्येवं मते नापरं कारणमुत्प्रेक्षामहे । कुतो ना-

२० परम ? इत्याह–द्रव्य इत्यादि । यत्र(अन्यत्र) द्रव्यभेदस्तु(भेदात्) । [यत्र द्रव्यभेदः] तत्र सन्तानस्य नानात्वं यत्र तदभेदः तत्र एकत्वम्, अन्यथा हेतुफलभावविशेषोऽपि दुर्लभ इति निरूपितम् ।

पुनरपि परमतमाशङ्कते–कथं पुनः इत्यादि ; तत्रोत्तरम्–उक्तमत्र इत्यादि ।

तदेव दर्शयन्नाह–स्थूल इत्यादि ।

२५ [स्थूलमेकं सकृत्तत्त्वं बाह्यं जायेत घटादि चेत् ।
क्रमेणान्तर्विवर्तेत वेद्यवेदकलक्षणम् ॥२॥

एकस्य···]

बाह्यं घटादि तत्त्वं चेत् यदि । किंभूतम् ? इत्याह–स्थूल इत्यादि । विद्वेद्यवेदकलक्षणं चान्तः तत्त्वमिति गम्यते, सकृदेकदा जायेत तर्हि क्रमेण एकं तत्त्वं विवर्त्तेत

३० इत्युक्तम् ।

(१) 'कार्यं' इति व्यर्थमत्र । (२) पितापुत्रयोः ।

कारिकाविवरणम्–**एकस्य** इत्यादि । अनेकधा विवृतार्थमिति नेह विव्रियते ।

ननु सर्वस्य विचारतोऽयोगात् कस्य कुतोऽनेकान्तसाधनमिति चेत् ? अत्राह–**बहिरन्त:** इत्यादि ।

**[बहिरन्तश्च परीक्षायामेकान्तेष्वनवस्थितिः ।**
**साक्षात्कृतमनेकान्ततत्त्वं सम्प्रतिपादयेत् ॥३॥**　५

**यथैव हि एकान्तवादिनः अणूनामप्रतिभासनान्न चक्षुरादिविषयहेतुत्वमिति न किञ्चित् प्रत्यक्षव्यपदेशभाक् । परमाणुषु स्थूलैकाकाराभावात्, तद्व्यतिरिक्तस्य च कस्यचिदभावात् । कस्यचित्परस्याभावात् कस्य वा स्वसंवेदनम् ? यथाप्रतिभासमसम्भवात् । अप्रामाणिक···तथैव स्वयमभिमतं व्यवस्थापयन् एकान्तमवलम्ब्य पुनरपि विचारभङ्गुरत्वं पुनरपि सत्तां निवर्तयन् न केवलं स्वामेव वृत्तिं स्ववाचा विडम्बयति अपितु अनेकान्ततत्त्वं**　१०
**समर्थयति ।]**

**एकान्तेषु** [५४३क] सकलशून्यतादिनियमप्रवादेषु । क ? इत्याह–**बहिरन्तरि**[ति] तेषु किम् ? इत्याह–**अनवस्थितिः** । **बहिरन्त**स्तत्त्वस्य पूर्वकारिकोपात्तं **तत्त्व**पदं जात-[1]विभक्तिपरिणाममिह सम्बध्यते । कस्यां सत्याम् ? इत्याह–**परीक्षायां** विचारे सति इत्यर्थः । सा किं कुर्यात् ? इत्याह–**संप्रतिपादयेत्** । किम् ? **अनेकान्ततत्त्वम्** । किंभूतम् ? इत्याह–　१५
**साक्षात्कृतमि**ति । [2]कैम्पर्यमत्र सकलस्य एकान्तस्य अनवस्थानात् न तदवलम्बनेन कचिद् विधिप्रतिषेधव्यवहारः । सांप्रतम् अनेकान्ततत्त्वावभासनमवशिष्यते । तच्चेत मिथ्या ; निरालम्बा विधिप्रतिषेधव्यवस्था । ततः परमार्थदर्शि[नम]नेकान्ततत्त्वं विधिप्रतिषेधव्यवहारान्यथानुपपत्तेः इति ।

'**यथैव हि**' इत्यादिना कारिकां विवृणोति–य(त)**थै**वेति गम्यते यत्तदोः नित्यसम्बन्धात् ।　२०
ततोऽयमर्थः–**यथैव हि किम् ? न किंचित् प्रत्यक्षव्यपदेशभाग् एकान्तवादिनः** । कुतः ? इत्याह–**चक्षुरादिविषयहेतुत्वमणूनां** यतः । कुतः ? इत्याह–**अप्रतिभासना**त्तेषामिति । यद्वक्ष्यति–*"**न चैकरूपेना(पेण अ)नेकार्थानुकरणं विरुद्धम्**" [सिद्धिवि० ११।२१] इत्यादि ।

स्यान्मतम्–परमाणुत्वा (णुभ्वा) त्मभूतः कश्चिदेकः स्थूल उपकारोऽस्ति स तद्व्यपदेशभाक् स्यादिति चेत् ; अत्राह–**परमाणुषु स्थूलस्यैकस्य आकारस्याऽसंभवात्** । किंभूतेषु ? **संचितेष्वपि**　२५
न केवल(लं) पृथगवस्थितेषु घटादिवत् परमाणुत्वविरोधात् किं प्रत्यक्षस्य व्यपदेशभागिति ।

अथ मतम्–तेभ्यो भिन्न[ः] क्रियागुणवान् दृश्य आकारः तद्व्यपदेशभागिति चेत् ; अत्राह–**तद्व्यतिरिक्तस्य च** परमाणुभ्यो भिन्नस्य च [५४३क] **कस्यचिदवयव्यादेरभावात् किं प्रत्यक्षव्यपदेशभाक्** ? विचारितश्चायं परो (पक्षो) नेह विचार्यते । अत एव*"**स्वरूपस्य च स्वतो गतिः**" [प्र० वा० १।५] इति चेत् ; अत्राह–**कस्यचिद्** इत्यादि । परमाणु[षु] स्थूलैका-　३०

(१) षष्ठी । (२) तात्पर्यमित्यर्थः । (३) परमार्थदर्शनविषयीकृतम् ।

कारत्र्यनिरेकेण परस्य अभावात् कस्य वा स्वसंवेदनम् ? न कस्यचित् । स्वसंवेदनधर्मस्य धर्मिनिष्ठत्वात्, अन्यथा स्वरविषाणं स्वसंवेदनं भवेत् ।

ननु नीलादि यथावभासते तत्तथैव स्वसंवेदनम्, *"यद् यथैव अवभासते तत्तथैव परमार्थसत्" इत्यादेः *"यदवभासते तज्ज्ञानम्" इत्यादेश (श्च) वचनादिति चेत्; अत्राह–
५ यथाप्रतिभासम् इत्यादि । प्रतिभासानुसारेण यथाप्रतिभासमसंभवात् तत्त्वस्य किन्तु (किन्तु) तद्व्यपदेशभाक् कस्य वा स्वसंवेदनम् ? तदसंभवश्च विचारायोगात् । सकलशून्यता स्यादिति चेत्; अत्राह–अप्रामाणिक इत्यादि । तथैव स्वयम् आत्मना अभिमतम् एकान्ततत्त्वम् व्यवस्थापयन् न केवलं स्वस्यैव वृत्तिं चरितं स्ववाचा विडम्बयचेत् साधयति(यति कुत्सापयति) अपि तु समर्थयति अनेकान्ततत्त्वं तदन्तरेण प्रतिभासाद्वैतादेरप्यसंभवात् । किं-
१० कुर्वन् स्ववृत्तिं वाचा विडम्बयति ? इत्याह–एकान्त इत्यादि । प्रथमं क्षणिकत्वाद्येकान्तमव-लम्ब्य पुनरपि विचारचंचुर(चारभङ्गुरत्वम)वलम्ब्य पुनरपि विचारत (रान्ते)कान्तदर्शनात सत्तां विरागात्मतां निवर्त्तयन् अभ्युपगतत्वं दूषयन्नित्यर्थः ।

एकान्तदर्शनमाश्रितं नहि व्यवस्थापयति इति चेत् ; अत्राह–भाव इत्यादि ।

[भावो येनात्मना सिद्धः कथञ्चित्तेन जायते ।
१५ ज्ञानं येनात्मना सिद्धं यथा तेनावभासते ॥४॥

द्रव्यस्य सदादिरूपेण भाव्यम्, येन प्रत्युत्पादं भिद्येत । पर्यायः अक्षरादिव्यप-देशभाक् सदसदात्मकत्वात्तस्य । भेदैकान्तदर्शनेऽपि तदनिराकृतेः । यथा चित्रमेकं ज्ञानं बोधाकारेण सर्वत्राविशिष्टं तं स्वभावं बिभर्त्ति येन प्रतिविषयं भिद्येत इति तथा प्रकृतमपि । न चायमाकारः विरुद्धधर्माध्यासभयात् परमार्थतोऽङ्गीक्रियते । तदनेकान्ता-
२० त्मकत्वे परिणामाविरोधात् । भेद''' सर्वथा तत्त्वप्रतीतिनान्तरीयकत्वादतत्त्वप्रतिभास-ज्ञानस्य । यथा''']

भावो जीवादिः येनात्मना सच्चेतनादिस्वभावेन सिद्धः [५४४ क] सर्वदा लब्धात्मलाभः, तेन जायते उत्पत्ति[मान् भवति] उपलक्षणमेतत्, तेन विनश्यति[तिष्ठति] च । किं सर्वथा[सर्वा]त्मना ? न, इत्याह–कथंचित् इति । एतदुक्तं भवति–भाव एव उद्यति (उदेति)
२५ विनश्यति तिष्ठति नान्ये पर्याया इति । अत्र निदर्शनमाह–'ज्ञानम्' इत्यादि । ज्ञानं स्वसंवेदनं येनात्मना सच्चेतनादिस्वभावेन सर्वत्र साधारणेन सिद्धं ज्ञानं (ज्ञातं) निष्पन्नं वा यथा तेनावभासते प्रति[भासते] 'कथंचित' इति सम्बन्धः । तथाहि–सौत्रान्तिकमते न तत् क्षणक्षपाव (क्षण्यव) भासते; तदनुमानवैयर्थ्यापत्तेः । नापि स्वकारणात्; अर्थस्य नीलाकारेणैव-(णेव) जडाकारेणापि;[3] जडतापत्तेः । नच चित्रज्ञानं बोधा[का]रेणैव[4], नीलाकारेणापि पीताद्या-
३० कारे प्रति[भासने] चित्रताहानेः । सुगतज्ञानम् आत्मानं यथास्वम् अतीतपूर्वक्षणोपादेयं पश्यति

(१) स्वसंवेदनविषयम् ।(२) अनेकान्तमन्तरेण । (३) ज्ञाने आकाराधायकत्वे सति । (४) ज्ञानस्य । (५) प्रतिभासते ।

नैवं तथाविधोत्तरक्षणोपादेयम् ; विभ्रमप्राप्तेः हेतुफलभावानवस्थितेर्वा[1] इति । योगाचारदर्शने तत् ग्राह्याकारविवेकम् आत्मनो न पश्यति भ्रान्त्यभावप्रसङ्गात् । भ्रान्तैकान्तेऽपि न विभ्रमम्[2] । अत एव सर्वविकल्पातीततत्त्वे[3] तदतीतत्वम्, स्थूलादिदर्शनादिति ।

कारिकां विवृण्वन्नाह–**द्रव्यस्य** इत्यादि । **द्रव्यस्य** जीवादेः **सदादिरूपेण** स्वरूपादिचतुष्टयेन यत्सत्त्वं **तदादिर्यस्य** पररूपादिचतुष्टयेन असत्त्वादेः तत्तथोक्तम् । तच्च **तद्रूपं च** ५ तेन **भावम्(भाव्यम्)** अन्यथा तद[4]व्यवस्थितिः इति दे वा ग मा दे[5] वगन्तव्यम् । **येन** तद्रूपेण **प्रत्युत्पादं भिद्येत** नाना भवेत् द्रव्यम् । अक्षरादिरेव द्रव्यं प्रत्युत्पादं भिद्यते । [५४४ ख] तदुक्तम्–

*"अनादिनिधनं शब्दब्रह्मतत्त्वं यदक्षरम् ।
विवर्त्तते अर्थभावेन प्रक्रिया जगतो यतः ॥" [वाक्यप० १।१] १०

इति चेत्; अत्राह–**अक्षरादिव्यपदेशभाक्** । किम् ? इत्याह–**पर्यायः** पुद्गलादिद्रव्यविकारो न मूलद्रव्यमित्यर्थः । कुतः ? इत्याह–**सदसदात्मकत्वात्** उपलभ्यमानः पर्यायः सन्, तद्विपरीतः पूर्वोऽपरश्च असन् तौ आत्मानौ यस्य तस्य भावात् तत्त्वात् **तस्य** द्रव्यस्य इति । न च अक्षरादि तथाविधम् । यदि वा, यदुक्तम्–'**द्रव्यस्य सदादिरूपेण भाव्यम्**' इति; कुत एतत् ? इत्याह–**सदे**त्यादि । १५

ननु द्रव्यादेकान्तेन उत्पादादयो भिन्नाः; तत्कथं प्रत्युत्पादं तद्भिद्येत ? नहि अन्यस्य भेदे अन्यद्भिद्यते इति चेत्; अत्राह–**भेदैकान्तदर्शनेऽपि** इत्यादि । द्रव्यपर्याययोः भेद एव **भेदैकान्तः** तस्य **दर्शने** मते **अपिशब्दः** भावनायां तद्दर्शनस्य पूर्वं निरासात् । किम् ? इत्याह–**तद्** इत्याह (त्यादि) । **तत्** प्रत्युत्पादं द्रव्यभेदस्वभावस्य **अनिराकृतेः** कारणात '**येन प्रत्युत्पादं भिद्येत**' इति सम्बन्धः, द्रव्यस्य स्वभावभेदमन्तरेण भिन्नोत्पादाद्ययोगात् इति प्रत्ययादि[ति] । ततो २० यदुक्तम्–*"**शब्दाधारो द्रव्यं विभु द्रव्यत्वे सति अस्मदादिप्रत्यक्षविशेषगुणत्वात् आत्मवत्**" इति; तन्निरस्तम्; साध्यदृष्टान्तयोः नित्यत्वैकान्त(न्ताऽ)सिद्धेः । निषिद्धं चात्मनि विभुत्वम् । विभुनोऽप्रत्यक्षस्य गगनस्य अन्यस्य वा गुणश्चेत् शब्दः; न अस्मदादिप्रत्यक्ष इत्युक्तम् । तन्न किंचिदेतत् ।

कथमेकमनेकाकारमिति चेत् ? अत्राह–**यथा** इत्यादि । [५४५ क] **ज्ञानं चित्रमेकं** २५ संवेदनं **बोधाकारेण** सर्वत्र नीलादौ बाह्येऽविशिष्टं **तं स्वभावं बिभर्त्ति येन प्रतिविषयं भिद्येत इति** एवं यथा **तथा प्रकृतमपि** इति । एतत् सौत्रान्तिकं प्रति उक्तम् । योगाचारं प्रत्याह **नच** इत्यादि । **न चायमाकारः** स्थूलाकारः **अस्य** ज्ञानस्य **परमार्थतोऽङ्गीक्रियते** सौगतेन एकत्र **विरुद्धधर्माध्यासभयात्** । एवं मन्यते–यदि अयमस्य भ्रान्त आकारः एकस्य विभ्रमेतरात्मता न भवति विषयविवेकादर्शना[द्] दृश्येतररूपता इति नीलाद्याकारैश्चित्रमेकं तदि- ३०

(१) प्राप्तेः । (२) स्वयमेव पश्यति । (३) सर्वविकल्पातीतत्वं स्वयमेव न पश्यति । (४) द्रव्याव्यवस्थितिः । (५) आप्तमीमांसाग्रन्थात् । (६) अतीतो भविष्यंश्च ।

ज्यते इति चेत ; अत्राह–**तद्** इत्यादि । **तस्य ज्ञानस्य अनेकान्तात्मकत्वे** अङ्गीक्रियमाणे **परिणामाविरोधात्** । '**द्रव्यस्य**' इत्यादि सम्बन्धः । भ्रान्तमनेकान्तात्मकत्वमिति चेत् ; अत्राह–**भेद** इत्यादि । कुतः ? इत्याह–**सर्वथा** इत्यादि । **तत्त्वप्रतीतिनान्तरीयकत्वाद-तत्त्वप्रतिभासज्ञानस्य** इति । तथापि तदुपपत्तौ दूषणमाह–**यथा** इत्यादि । सुगमम् ।

५ एवमक्षरमभिधाय पदमभिधातुकामः प्राह–**वर्णम्** इत्यादि ।

**[वर्णमेकमनेकं वा पदं शंसन्ति नान्यत् ।**
**ध्वनिव्यङ्ग्यं नित्यं वा प्रत्येकमदर्शनात् ॥५॥**

**द्योतकत्वेऽपि पदत्वात् ततोऽर्थः प्रतीयते । न च नित्यत्वैकान्ते वाचकं ध्वनिव्यङ्ग्यम् । अनभिव्यक्तमात्मानं विहाय आत्मान्तरमासादयतोऽनित्यताप्रसङ्गात् ।**
१० **व्यक्तेः न च तादात्म्यं हि परिणामलक्षणम् ।]**

**वर्णमेकम**सहाय**मनेकं वा वर्णं पदं शंसन्ति** पूर्वाचार्याः तदेव पदं वा एकम् अर्थप्रतिपादकं संति (शंसन्ति) । ततः किं जातम् ? इत्याह–**न** इत्यादि । उक्तपदात् **अन्यत्** पदं नास्ति । किंभूतम ? इत्याह–**ध्वनिव्यङ्ग्यम्** अकारादिप्रकारादिप्रकाश्यम् । पुनरपि किं भूतम ? इत्याह–**नित्य (त्यम्)** इत्यादि । घटाद्यर्थप्रतिपत्त्यन्यथानुपपत्त्या तत्पातत्परि (त्त्या
१५ तत्परि) कल्पनम्[2], मा चोन्त (चान्त्य) पद एव उपयुक्तशक्तिका इति न ततः तत्परिकल्पना इति भावः ।

ननु यद्येकोऽपि [५४५ ख] वर्णः पदं किमर्थमुक्तम्–*"**पद (दं) समुच्च (द)यः तेषाम्**" [सिद्धिवि० ११।१] इति चेत ; अत्राह–**वर्ण** इत्यादि । कुतः ? इत्यत्राह–**प्रत्येकम्** इत्यादि ।
२० '**[अ]दर्शनात्**' इत्यनेन एतद्दर्शयति प्रति प्रतिपत्तुः कृतसङ्गीतेरकारादिश्रवणाद् वासुदेवादिप्रतिपत्तिरुपलभ्यते, सा अकारादेः, अन्यतो वा संभवन्ती भवेत् ? प्रथमपक्षे सिद्धं वर्णानां वाचकत्वमिति स्फोटोऽनर्थकः । अकारादिरेव स्फोट इति चेत ; न ; तस्य अणुमयत्वप्रतिपादनात् स्फोटोऽमूर्तो नित्यश्च स्यात् ।

किं च, सोऽभिव्यक्तः, अन्यथा वा तत्प्रतीतिहेतुः ? आद्ये मते कुतः तस्याऽभिव्यक्तिः ?
२५ श्रोत्रादेरिति चेत ; तर्हि घट इत्यत्रापि तत एव तदभिव्यक्तेर्घकारादिकमनर्थकम् । घकारादेः इति चेत् ; *"**इः कामदेवः**" इत्यत्र परस्य ध्वनेः व्यञ्जकस्याभावादनभिव्यक्तिः । अत्र ताल्वादिप्रेरिता वायवो व्यञ्जका नान्यत्र इति किंकृतो विभागः ? अथ अन्यत्र घकारादेर्व्यञ्जकस्य भावात् न ते तद्व्यञ्जकाः ; किं तत्र वायवो न विद्यन्ते ? सन्ति तथापि ते घकारादीनां व्यञ्जकाः, घादयश्च स्फोटस्य इति चेत् ; तदितरत्र समानम् । शक्यं हि वक्तुम्–
३० वायोः अकाराभिव्यक्तिः, ततः स्फोटस्य इति । तथाऽदर्शनमुभयत्र हेतुः इति सर्वदा ततः तत्प्रतीतिः स्यादविशेषात् । तत्र प्रथमः पक्षः श्रेयान् परस्य । द्वितीयः स्यादिति चेत् ; न ;

(१) अविनाभावित्वात् । (२) नित्यत्वपरिकल्पनम् । (३) घटाद्यर्थप्रतिपत्त्यन्यथानुपपत्तिः । (४) 'प्रति' इति निरर्थकमत्र । (५) गृहीतसङ्केतस्य । (६) अकारो वासुदेवः इति कोशानुसारेण । (७) 'घटः' इत्यत्र ।

अकारादेरेव प्रतीतिभावात्। तथापि अन्यतः तत्कल्पने ; धूमोऽपि पावककृतो[न]भवेत्। अपि च, अकारादिरनर्थकः क्वचिदनुपयोगात् [५४६ क] तदभिव्यक्ता[वु]पयोग इति चेत्; न; ततः तद्वदर्थाभिव्यक्तिप्रसङ्गात्। नहि एकस्मिन्नकारे [1]प्रत्येक-समुदायविचारावतार इति।

ननु विसर्जनीयादिर्वाचको दृश्यते न केवलः तथा च वैयाकरणमतम्-*"न केवला प्रकृतिः प्रयोक्तव्या न च केवलः [प्रत्य]यः" इति[2]; ततः समुदायस्यैव पदत्वात् कथ- ५ मुक्तम्[3]-*"वर्णसमुदायः पदमिति प्राति(अभि)प्रायिकमेतत्" इति। अथ सम्बोधनादौ विभक्तिलोपापेक्षया इदमुच्यते ; न ; लोपेऽपि पदत्वं प्रत्युपयोगात्।

स्यान्मतम्, *"स्वादावघे" [जैनेन्द्र० १।२।१०६]इत्यनेन पूर्वस्य पदत्वे केवलोऽकारादिः पदमिति ; तन्न सारम्; यतः वाचकस्य पदत्वात्, वाचकं च सविभक्तिकम्, पूर्वस्य तु प्रयोजनविशेषापेक्षया पदत्वं पारिभाषिकम् इति। १०

अत्र प्रतिविधीयते- न*"सुप्मिङन्तं पदम्" [जैनेन्द्र० १।२।१०३] इति 'पारिभाषिकपदमिति[4]' पारिभाषिकपदमिह गृह्यते, अपि तु पद्यते गम्यते येनार्थः तत्पदम्, अर्थश्च अविभक्तिकादपि शब्दात् अन्वयव्यतिरेकाभ्यां गम्यते, इतरथा वित्तरसुत्पत्तेः (विभक्त्युत्पत्तेः) प्राक् अर्थवत्त्वापरिज्ञानात् न प्रातिपदिकसंज्ञाविधानम् इत्यनर्थकमिति न सूक्तम् *"अर्थतद्धातुप्रज्ञायः (अर्थवद् धातुरप्रत्ययः) प्रातिपदिकम्" [पाणिनि० १।२।४५] इति। १५ तस्मात् केवलादपि अर्थः प्रतीयते।

नन्वेवं नियतोप(निपातोप)सर्गाणाम् पदत्वं[न]स्यात्, नहि तैः कश्चिदर्थोऽपूर्वो गम्यते प्रकृत्यर्थद्योतकत्वादिति चेत्; अत्राह-**द्योतकत्वेऽपि** इत्यादि। न केवलं वाचकत्वे **अपि तु द्योतकत्वे पदत्वात्ततोऽप्यर्थः प्रतीयते** अन्यथा[५४६ ख] तत्प्रयोगानर्थक्यम्। एतेन अन्यानुकरणशब्दाः व्याख्याताः। यदि पद्यते येनार्थः तत्पदम्[5]; स्फोट एव स्यात्, तेन २० हि अकारादिर्व्यंजेन (व्यङ्ग्येन) अर्थः गम्यते इति चेत्; अत्राह-**न च नैव वाचकं** युक्त (उक्त)न्यायेन। किम् ? इत्याह-**ध्वनिव्यंग्य (व्यङ्ग्यं)** ध्वनिभिः अकारादिभिः प्रकास्थां (प्रकाश्यम्) ध्वनिभ्य एव अर्थप्रतीतिदर्शनात् इत्युक्तम्। दूषणान्तरमाह-**नित्यत्वैकान्त** इत्यादि। तदपि कुतः ? इत्याह-**अनभिव्यक्तम्** अदृश्य(श्यम् आ)त्मानं स्वभावं विहाय आत्मान्तरं दृश्यस्वभावमासादयतोऽनित्यताप्रसङ्गात्। एतदपि कुतः ? इत्याह-**तादा- २५ त्म्यं व्यक्तेन च** आत्मत्वं हि**र्यस्मात्** **परिणामलक्षणम्।**

अथ ध्वनिभिः तस्य न किञ्चिदसतीयते च प (दसज्जन्यते सच्चाप)नीयते वा तत्त्व थ (तत्त्व)मनित्यत्वम्, अत्राह-**नया(अनपा)योपजनेत्यादि**।

---

(१) प्रत्येकं व्यञ्जयन्ति समुदिता वा इति। (२) तुलना-"उभयनियमोऽयं प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः प्रत्ययपरैव च प्रकृतिः।"-पात० महा० ३।१।२। "न केवला....."-लघुशब्देन्दु० ३।१।२। (३) "यदाह अकलङ्कः सिद्धिविनिश्चये-वर्णसमुदायः पदमिति प्रायिकमेतत्, प्रत्येकमकारादेः कादाचित्कत्वदर्शनात्।"-स्या० र०ना० पृ०६४१। (४) 'पारिभाषिकपदमिति' पुनर्लिखितमत्र। (५) इति चेत्;। (६) उपजननम् अपायश्च अनित्यत्वमित्यर्थः।

[अनपायोपजनमविकारमविशेषनः ॥३॥

तादृशां नियमेन नित्यत्वे निष्कलत्वे अभिव्यक्तौ घटादेस्तथाभावः किन्न कल्प्येत अविशेषात्। ध्वनिभ्योऽर्थाः···न च···ततो न सत् कूटस्थं नाम तद्बुद्धेरमश्चाग्प्रसङ्गात्। ननु क्षणिकत्वेऽपि तद्बुद्ध्यसंचारदोषः तदभावाविशेषात् अनन्तर-
५ क्षणवत् अन्यदापि प्रसङ्गात्। सत्यम्, एवमेतत्।]

**आपायो** विनाश उपजननम् **उपजनः** जन्म, न विद्येते अपायोपजनौ यस्य स तथोक्तः। स (न) **विकारो** यस्य तदपि तथोक्तम् **अविकारम्** इत्यर्थः। तत्प्रतिध्वनीनाम् अकिञ्चित्करत्वात् कथं व्यञ्जकत्वं तेषामिति ? किं च तस्य नैर्योगपद्ये नाभिव्यक्तौ घेनं एकेन सर्वात्मनाभिव्यक्तत्वात् टकारादीनां वैयर्थ्यम्, प्रकाशितप्रकाशनदोषात्। क्रमेण इति चेत्;
१० अत्राह–**अविशेषन** इत्यादि। स्पष्टम्।

अत्रैव दोषान्तरमाह–**तादृशाम्** इत्यादि। **तादृशां** ध्वनिव्यापारात् पूर्वम् एकान्तेनानुपलभ्यमानानां तद्व्यापारे च उपलभ्यमानानां **नियमेन नित्यत्वे निष्कलत्वे** निरंशत्वे अङ्गीक्रियमाणे **तादृशां** स्फोटादीनामभि**व्यक्तौ च** चाङ्गीक्रियमाणायां **घटादेः** [५४७ क] **तथा** नित्यत्वनिष्कलत्वाभिव्यङ्ग्यत्वप्रकारेण **भावः** सत्ता **किन्न कल्पे**(ल्प्ये)त ? कुतः ? इत्याह–
१५ **अविशेषात्** अतिशयाभावात्। 'घटादिरपि नित्यो निरवयवश्चक्रादिभिरभिव्यज्यते न क्रियते' इत्यपि स्यात्। दीपादिर्वैयर्थ्यमिति चेत्; न; एकत्र प्रकाशकद्वयाविरोधात् रूपे चक्षुरालोकवत्। सदा चक्रादिसहितस्यैव दीपादेः तत्प्रकाशनं चेत्; न; कदाचित् निरालोकस्यै चक्षुष एव प्रकाशकत्वदर्शनात्। अथ घटादेः प्रदीपादिरिव(पादिरिव) व्यञ्जकः; चक्रादिः किं भविष्यति, अकिञ्चित्करस्य अपेक्षणीयत्वायोगात् ? कारक इति चेत्; कुत एतत् ? प्रागसतः तत आत्म-
२० लाभात् घटादेरिति चेत्; 'प्रागसतः' इति कुतः ? दृश्यस्यादर्शनादिति चेत्; स्फोटस्य ध्वनिव्यापारात् प्राक् किं दर्शनमस्ति ? तथा चेत्; तद्व्यापारवैफल्यम्। नो चेत्; कुतः सत्त्वम् ? पुनरुपलम्भात्, इतरथा खरविषाणवत् तदयोगादिति चेत्; तदेतत् घटादौ समानम्। घ्यास्या-(अदृश्या)त्मकत्वे ध्वनिभ्योऽपि न दर्शनमिति साध्वी तेषां व्यञ्जकत्वकल्पना। पूर्वं तदात्मकत्वं न पश्चात्; इतरत्र समानम्।

२५ स्यान्मतम्–ध्वनीनां कारकत्वे व्यञ्जकं किं तस्य ? तैलादेः कारकत्वे दीपादेर्व्यञ्जकान्तरं मृग्यम् इत्यलं प्रसङ्गेन।

स्यान्मतम्–घटादेः सावयवस्य प्रतीतेः तथाभावो निष्कलभावः कल्प्येत, स्फोटस्यापि क्रमशोऽभिव्यज्यमानस्य सावयवत्वप्रतीतिः तदवस्था। 'भ्रान्तिः' इत्यपि नोत्तरम्; अन्यत्र प्रसङ्गात्। निष्कलरूपादर्शनमुभयत्र। ततः स्थितम्–**अविशेषादिति** चक्रादेरनन्त[रं] घटादे-
३० रुपलम्भात्। भवतु [५४७ ख] तस्य ततोऽभिव्यक्तिः न ध्वनिभ्यः स्फोटस्य विपर्ययादिति

(१) 'घटः' इत्यत्र आद्येन घकारेण। (२) आलोकरहितस्य नक्तंचरचक्षुषः। (३) ध्वनिव्यापार। (४) अदृश्यात्मकत्वम्। (५) इति चेत्;। (६) शब्दस्य। (७) अभिव्यङ्ग्यत्वभावः। (८) निरवयवत्वम्

दर्शयन्नाह–**ध्वनिभ्योऽर्था**···[५४८ क, ख ५४९ क, ख इति द्वे पत्रे अलिखिते एव वर्तेते] ···कर्षमन्तरेण प्रत्ययहेतुः स्यात् तत्र गोत्वं भिन्नं विनियतं सिद्ध्यति । राजपुरुषवत् स्यादिति चेत्; न; तत्रोपकारभावात् । अन्यत्रापि तथाकल्पनायां सूक्ष्मम् **न च** इत्यादि ।

ननु यदुक्तं 'केनचित् किंचिद् [क्रियमाणं] वक्ष्यमानं(व्यज्यमानं) वा तत्कृतोपकारमपेक्षते नाम' इति ; तदयुक्तम् ; ज्ञानस्यैव तेन तत्र ज[न]नात् । इदमत्र चिन्त्यते–सामान्यं स्वविज्ञान- ५ जनन योग्यम्, अन्यथा वा ? योग्यं चेत् ; व्यक्त्यभावेऽपि जनयेत । शेषं च चिन्तितमत्र।

प्रकृतं निगमयन्नाह–**ततो न सद् विद्यमानं कूटस्थ(स्थं) नाम** । कुतः ? इत्यत्राह– **तद्बुद्धेरसंचारप्रसङ्गात्** । कूटस्थस्य बुद्धेः **तद्बुद्धेः** संचरणं देशकालान्तरगमनं **संचारः** न संचारोऽसंचारः तस्य प्रसङ्गात् । तथाहि–यदा एकस्मिन् क्षणे देशे वा तस्य[1] सत्त्वम् ; ततः कालान्तरादितत्सम्बन्धस्य एकान्तेन अभेदे तावन्मात्रं तदिति द्वितीयादिक्षणानां तच्छून्यत्वमिति १० न तत्र[2] तद्बुद्ध्यवतारो निर्विषयत्वभयात् । भेदे वा क्षणिकत्वम् । यदि वा, येन स्वभावेन कचिद् देशादौ स्वज्ञानं जनयति तत् तेनैव, अन्यत्र अन्यदा तज्जनने सर्वतत्कार्यस्यैकदा एकत्र प्रसव इति न कालदैर्घ्यादिप्रतीतिः । नन्वेवम्–प्र ज्ञा क रि णै व (क रे णे व) भवतापि क्षणिकत्वं कक्षीकृतं स्यात्, त च नक्षमृते अत्यक्षा(तच्च न क्षमते अध्यक्षा)दात्मानं क्षणमात्रमपि भेदे- न व्यवस्थापयितुम् ; इत्याह–**ननु** इत्यादि । न केवलं कूटस्थे किन्तु **क्षणिकत्वेऽपि समानः** तस्य १५ क्षणिकत्वस्य बुद्धिः तस्याः असंचारः स एव दोषः **तद्बुद्ध्यसंचारदोषः** । कुतः ? इत्यत्राह– [५५० क] **तदभावाविशेषादिति** । तयोः कूटस्थक्षणिकत्वयोः अभावस्य अविशेषात् । यथैव हि कूटस्थस्य पूर्वापरसत्त्वयोर्मध्यसत्त्वाभेदभावः, तथाहि निरंशक्षणिकपरमाणुसंवेदनस्य पुरुषान्तर- संवेदनादभेदादभावः । कल्पनया उभयसत्त्वम् । यदि वा, क्षणिकेतरपक्षयोः बुद्धिसंचार(रा)- भावात् । यथैव हि कूटस्थे समर्थे एकत्र क्षणे सकलबुद्ध्युत्पादः तथा क्षणिकेऽपि तत्काल एव २० बुद्धिभावात् सन्तानसंचरणाभावः । द्वितीयक्षणे तत्कार्यमिति चेत् ; अत्राह–**अनन्तरक्षणवत्** इत्यादि । कारणक्षणाद् द्वितीयः क्षणः अनन्तरक्षणः तत्र इव तद्वत् **अन्यदापि** कालान्तरेऽपि **प्रसङ्गात्** कार्यस्य पारतन्त्र्याभावात् । अन्यत्रापि प्रसङ्गोऽस्त्येव जाग्रद्दर्शनात् प्रबोधभावादिति चेत् ; न ; तदनन्तरं तन्निश्चयानुदयप्रसङ्गेन क्षणक्षयादिवत् तद्व्यवहारोच्छेद इत्युक्तमिति । अत्रोत्तरमाह–**सत्यम्** इत्यादि । यदुक्तं कूटस्थवत् क्षणिकत्वेऽपि बुद्ध्यसंचार इति **सत्यमेव**- २५ मुक्तप्रकारेण(णै)तत्, उभयात्मकतत्त्वोपगमादिति भावः ।

तत्रापि उभयदोषप्रसङ्गः । नहि चौरसमुदायोऽ[चौर]इष्ट इति चेत् ; अत्राह–**स्याद्धेतु- फलतादात्म्ये** इत्यादि ।

**[स्याद्धेतुफलतादात्म्ये महत्स्थूलाणुतत्त्ववत् ।**
**उभयैकान्तादिदोषा न वेद्यवेदकज्ञानवत् ॥६॥** ३०

---

(१) कूटस्थस्य । (२) द्वितीयादिक्षणे ।

**कथञ्चिन्नित्यत्वेऽपि पूर्वापरयोः***यथा नित्यत्वे क्षणक्षये वा परमाणूनां पारिमण्डल्यमजहतामेव स्थूलत्वे स्थूलाकारेणापि नानुपलम्भप्रसङ्गः पारिमण्डल्यवत् । यथा वा ज्ञानस्य संवेदनवत् नीलाद्याकारस्य नाविशेषप्रसङ्गः कथञ्चित्तादात्म्यात् , तथा सर्वस्य स्यात् , हेतुफलयोस्तादात्म्येनैवोपलब्धेः इति]**

५ **स्यात्** कथंचित् **हेतुफलयोः** उपादानोपादेययोः **तादात्म्ये** सति न **उभयैकान्तदोषः आदिशब्देन** विरोधादिपरिग्रहः । वैशेषिकप्रसिद्धनिदर्शनमाह–**महत्स्थूलाणुतत्त्ववत्** इति । **स्थूलं** च तदवयव्यपेक्षया **अणु च** अवयवापेक्षया तदेव च **तत्त्वं महच्च** तत् **स्थूलाणु** [५५०ख] तत्रेव तद्वदिति । यथा अवयवावयविनोः कथंचित्तादात्म्ये स न दोषः, तथा अन्यत्रापि । चिन्तितमेतत् । बौद्धप्रसिद्धं[निदर्शन]माह–**चेत्र** इत्यादि ।

१० कारिकाविवरणमाह–**कथंचिद्** इत्यादि । **यथा** इत्यादिना दृष्टान्तद्वयं व्याचष्टे । [1]क्षणक्षयेति **नित्यत्वे क्षणक्षये वा परमाणूनां पारिमण्डल्यं** निरंशवर्तुलत्वमजहतामेव [त]त्परित्यागे अभागोऽवयवी सकलावरणादिदोषभाग् भवेत् । **स्थूलत्वे** स्थूलपरिणात्मकत्वेऽपि **नानुपलम्भप्रसङ्गः** । केन ? **स्थूलाकारेणापि** । केनेव ? इत्याह–**पारिमण्डल्येनेव तद्व**दिति स्थूलाकारवद्वा तेषां न पारिमण्डल्योपलब्धिः । निदर्शनान्तरमाह–**यथा चा (वा)**

१५ **ज्ञानस्य** चित्रबोधस्य यो **नीलादिराकारः** तस्य **नाविशेषप्रसङ्गः** । कस्य वा ? इत्याह–**संवेदनवत्** संवेद[न]स्येव । एतदुक्तं भवति–यथा ज्ञानस्य स्वनीलाद्याकारे संवेदनमविशिष्टं नैव (वं)नीलादिः(देः) चित्रत्वा(चित्रत्वा)भावप्रसङ्गादिति । संवित्तेर्वा नीलवदचेतनत्वम् । यथा वा न तात्पर्य (ताद्रूप्य) संवित्ति[:]नीलेन नीलाकारतया समानापि न जडतया समा इति । कुतः ? इत्यत्राह–**कथंचित्तादात्म्यात्** । कथंचिदिति, संवित्तेर्वा कथंचित्ता(त्त)दात्मना कील(नील)-

२० सदृशात्मकत्वात् ।

ननु यदि नाम दृष्टान्तत्वेनोपात्ते वस्तुनि कथंचिद्भेदः तथोपलब्धेः **पूर्वापरयोः** किमायातम्, येनोच्यते **कथंचिन्नित्यत्वेऽपि** इति चेत्; अत्राह–**स्यात्** कथंचित् **हेतुफलयोः यत्ता[दा]त्म्यं तेनैव उपलब्धेः सर्वस्य** इति । तत्र(तन्न) बहिस्तत्त्वम् अन्तस्तत्त्वं [५५१ क] वा अविकल्पे निरंशक्षणिकतया चकास्ति ।

२५ [2]विपरीतप्रतिभासस्तु मिथ्याविकल्प इति चेत्; अत्राह–**नित्यक्षणिकतत्त्वार्थ** इत्यादि ।

**[नित्यक्षणिकतत्त्वार्थमिथ्यैकान्तविकल्पयोः ।**
**अविकल्पाप्रसिद्धिः स्यादनियोगग्रहोऽनयोः ॥७॥**

**यथैव***दृष्टे प्रमाणान्तरवृत्तेः । असमारोपित***न***समारोपव्यवच्छेदस्यैव**

३० **व्यवसायात्मकत्वात् इत्युक्तप्रायम् । स्वसंवित्तेः स्वतः व्यवसायोपपत्तेश्च, अन्यथा अन-**

(१) उदाहरणमाह । (२) क्षणक्षयेति पुनर्लिखितं भाति । (३) 'वा' इत्यर्थे । (४) कथञ्चिन्नित्यानित्यतया ।

**वस्थानादप्रतिपत्तिः परतः…तस्मात् तत्त्वतः इष्टानिष्टग्रहत्यागयोः नियोगतः अनुपपत्तेः प्रेक्षावान् कुतः प्रवर्तेत ?]**

कचित् परिच्छेद्ये कर्मणि नियोजनमिति नियोगि(गः) नित्यं क्षणिकं वा विषयीकुर्विति, न विद्यते नियोगोऽस्य इति **अनियोगः** स चासौ **ग्रहश्च** निर्विषयग्रह इत्यर्थः । कयोः ? इत्याह–**अनयोः** नित्यक्षणिकतत्त्वार्थयोः **स्याद्** भवेत । कयोः सतोः ? इत्याह–**नित्य** ५ इत्यादि । [1]'नित्यादि' **नित्यक्षणिकतत्त्वे** सर्वोपायो (**तत्त्वे एवार्थौ** ययो)स्तौ च तौ **मिथ्यैकान्तविकल्पौ** च तयोः सतोः इति । निर्विकल्पे सति स नियोगग्रहोऽनयोरि[ति] चेत; अत्राह–**अविकल्पाप्रसिद्धिः** अविकल्पस्य अविकल्पेन च **अप्रसिद्धिः** अनयोरिति व्याख्याने । अत्र विवरणम्–**यथैव** इत्यादि भविष्यति ।

इदमपरं [2]व्याख्यानम्–**नित्यक्षणिकतत्त्वार्थमिथ्यैकान्तविकल्पयोरन(नि)- १० योगग्रहः ।** कुतः ? इत्याह–**अविकल्पेनाप्रसिद्धिः स्यादनयोः यतः,** तदुक्तमत्र पूर्वम् *"अङ्गीकृतात्मसंवित्तेः" [सिद्धिवि० १।१८] इत्यादि । विवरणम् अत्रापि **अन्यथाऽनवस्थानात्** इत्यादि । तथा इदमपरं **तद्विकल्पयोरनियोगग्रहः** क्षणिकविकल्पस्य प्रमाणत्वेन स्वीकारो नेतरस्य इति यो नियोगो नियमः तस्य अभावो यस्मिन् तथोक्तो ग्रहः द्वयोर्ग्रहणमग्रहणं वा इत्यर्थः । अथ क्षणिकविकल्पस्य वस्तुनि प्रतिबन्धात्[3] तस्याविकल्पेन १५ प्रतिपत्तेः तस्यैव ग्रह इति चेत; अत्राह–**अविकल्प(ल्पाऽ)प्रसिद्धेः(द्धिः)** [५५१ख] **अविकल्पेन** तत्त्वस्या**सिद्धिः** । वृत्ति (कुत इति) चेत ; अत्राह–**[अ]विकल्प** इत्यादि ।

कारिकार्थमुपदिशन्नाह–**यथैव** इत्यादि । कृत (कुतः ?) इत्याह–**दृष्टे** प्रत्यक्षेण प्रतिपात्र (पन्ने) क्षणिकत्वादौ **प्रमाणान्तरस्य** अनुमानस्य **वृत्तेः** इतरथा तन्न वर्त्तेत ।

स्यान्मतम्–यत्र समारोपो नास्ति तस्य निश्चयमन्तरेणापि सिद्धिः, तदाह–**असमारोपित** २० इत्यादि । अत्रोत्तरमाह–**न** इत्यादि । परेण यदुक्तं **तन्न** । कुतः ? इत्याह–**समारोप** इत्यादि । **समारोपस्य** व्यवच्छेदो यस्मिन् ज्ञाने **तस्यैव व्यवसायात्मकत्वात् इत्युक्तप्रायम्** प्रथमप्रस्तावे । एतेन अभ्यासदशापि चिन्तिता तस्यामपि सांशस्यैव प्रवेदनादि [ति] ; तत्र (तन्न ;) इत्याह–**स्वसंवित्तेः** इत्यादि । व्यवसायस्य या आत्मवित्तिः तस्याः **स्वतः** आत्मनैव **व्यवसायोपपत्तेश्च** तत्र **अन्यथा** स्वतो व्यवसायाभावप्रकारेण **अनवस्थानादप्रतिपत्तिः** व्यवसायस्वरूपनिश्चायकस्यापि निश्चयस्य अन्यतो निश्चयात् । अत्र निदर्शनमाह–**परत** इत्यादि । उपसंहरन्नाह–**तस्मात्** इत्यादि । सुगमम् ? ततः किं जातम् ? इत्याह–**तत्त्वत** इत्यादि । परमार्थतः तत्त्वेष्टमिष्टं(**इष्टं च अनिष्टं च) तयोः ग्रहत्यागयोः नियोगतः** स्वयमनुपपत्तेः **प्रेक्षावान् कुतो** नित्यविकल्पाद् [4]अन्यतो वा **प्रवर्त्तेत** तद्यदि अनेकान्तप्रतिपत्तिरिति । ततः स्थितम्–**अक्षरं नित्यमर्थप्रतिपादकं** चेति । ३०

नित्यमपि व्यापि स्यादिति मीमांसकः ; तत्राह– **नित्यत्वेऽपि** इत्यादि ।

(१) 'नित्यादि' इति पुनर्लिखितम् । (२) व्याख्यानम् । (३) सम्बन्धात् । (४) क्षणिकविकल्पाद्वा ।

**[नित्यत्वेऽपि शब्दानां सर्वेषां स्यात्सकृच्छ्रुतिः ।**
**समाक्षग्रहणयोग्यत्वात् व्यापिनां समवस्थितेः ॥८॥**

तत्कृतमुपकारमात्मसात्कुर्वतः तद्देशवृत्तिनियमभावात् । कूटस्थस्य नियमेन तद्देशवृत्तिर्न संभवत्येव । सर्वगतत्वेऽपि विवक्षितैकशब्दश्रुतिर्न स्यात् । नहि समानदेशानां[1]
५ समानाक्षविषयाणामेतत् न्याय्यम् । प्रत्येकं व्यञ्जकनियमे कलकलश्रुतेरनुपपत्तेः । व्यक्ताव्यक्तस्वभावप्राप्तिपरिहारमन्तरेण कुतो व्यक्तिः ? तत्त्यागोपादानाभ्यामृते कुतः तिरोधानम् ?]

**नित्यत्वे** कूटस्थत्वे**ऽपि शब्दाना**मक्षराणां [५५२क] न केवलं क(का)दाचित्कश्रवणं न संभवति श्रवणैकस्वभावानां सर्वदा श्रवणं संभवति इत्यर्थः । अथ यदा ज्ञानं तदा श्रवणम्,
१० अन्यदा विपर्ययः ; न ज्ञानं कुतः तेभ्यः सर्वदा स्यात् ? नित्यस्यापेक्षणं च निरस्तम् ।

स्यान्मतम्–आवरणसद्भावे अश्रवणं तदभावे श्रवणम् ; उपपन्नमेतत्–यस्यावरणेन तेषां[2] तज्जननसामर्थ्यमपसार्यते । समर्थं तु व्यवहितमपि स्वकार्यं जनयति यथा संभूतचक्षुः तिमिरव्यवहितं रूपस्य । ततो न केवलं कादाचित्कश्रवणं न संभवति विवक्षितैकश्रुतिनियमश्च न संभवति **सकृत् सर्वेषां श्रुतिः स्यात्** इत्यर्थः । अथ सर्वत्र सर्वदा सर्वेषां सन्निधानेऽपि यस्य यत्र व्यञ्जक-
१५ सन्निधिः तत्र तस्य श्रवणमिति ; तत्राह–**समाक्ष** इत्यादि । इष्टस्य अकारस्य अन्यस्य वा ताल्वादिप्रेरितात् ध्वनेरभिव्यक्तिः प्रकाशनं नेतरस्य इति योऽयं तद्व्यक्तिनियमः स न । कुतः ? इत्याह–**समाक्षग्रहणयोग्यत्वात्** एकेन्द्रियग्राह्यत्वात् ।

ननु एकेन्द्रियग्रहणयोग्या अपि देशादिभिन्ना घटादयो नैकप्रदीपव्यङ्ग्या इति चेत् ; अत्राह–**व्यापिनां** तेषां **समवस्थितेः** एकदेशे स्थितेः अतः तन्नियमाभावात् **सर्वेषा**मक्षराणां
२० **सकृच्छ्रुतिः** । न खलु समानदेशेषु समानेन्द्रियग्रहणयोग्येषु व्यक्तिनियमो दृष्टः येन अन्यत्रापि कल्प्यते ।

ननु घटादौ दृष्टो धर्मो नान्यत्र योजनमर्हति, अन्यथा रथ्यापुरुषे उपलब्धो धर्मः पुरुष(षे) स्वयमभिमते योजनमर्हेत् । अथ पुरुषातिशयोऽप्यस्ति ; व्यञ्जकातिशयोऽपि तथास्तु । [५५२ख]

स्यान्मतम्–अनुपदेशाऽलिङ्गाऽव्यभिचारिनष्टमुष्ट्याद्युपदेशान्यथानुपपत्तेः तत्कल्पनमिति ;
२५ तर्हि व्यापिनां समाक्षग्रहयोग्यानां कादाचित्काऽश्रवणान्यथानुपपत्त्या प्रतिनियतावरणम्, तथा-

(१) तुलना–"सर्वशब्दानां युगपद्ग्रहणप्रसङ्गात् । श्रोत्रं तावत् समानेन्द्रियग्राह्यसमानदेशसमानधर्मोपसन्नार्थानां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्यं न भवति इन्द्रियत्वात् चक्षुर्वत् । शब्दा वा प्रतिनियतसंस्कारकसंस्कार्या न भवन्ति समानेन्द्रियग्राह्यसमानधर्मोपपन्नत्वे सति युगपदिन्द्रियसम्बद्धत्वात् घटादिवत् ।" –न्यायसा० पृ० ३० । प्रश० व्यो० पृ० ६४८ । न्यायवा० पृ० २८८ । "समानकरणानां तादृशामभिव्यक्तिनियमायोगात् सर्वत्र सर्वदा सर्वेषां संकुला श्रुतिः स्यात् ।"–अष्टश० अष्टस० पृ० १०५ । न्यायकुमु० पृ० ७०८ । प्रमेयक० पृ० ४२३ । सन्मति० टी० पृ० ३६ । स्या० रत्ना० पृ० ६८३ । प्रमेयरत्नमा० ३।१००। शास्त्रवा० टी० पृ० ३७८ । (२) शब्दानाम् । (३) नक्तंचरचक्षुः । (४) असर्वज्ञत्वलक्षणः । (५) पुरुषातिशयस्य कल्पनमिति । तुलना–"अनुपदेशालिङ्गानन्वयव्यतिरेकपूर्वकाविसंवादिनष्टमुष्टिचिन्तालाभालाभसुखदुःखग्रहोपरागाद्युपदेशकरणान्यथानुपपत्तेः ।"–बृहत्सर्वज्ञ० पृ० १३० ।

विधश्रवणान्यथानुपपत्तेः प्रतिनियतव्यञ्जकानां वा इति कल्पनमस्तु अविशेषादिति ; न ; प्रतिनियतावरणनिषेधात्, तत्स्वरूपाखण्डनात् । अथ इन्द्रियस्य तद्ग्रहणयोग्यता तेन प्रतिहन्यते ; सापि न साध्वी कल्पना ; विषयस्य दर्शनजननयोग्यस्य भावे दर्शनस्य अवश्यम्भावात । सहकारिणः प्रतिहतप्रसरत्वान्नेति चेत् ; न ; नित्यस्य तदपेक्षायोगात् । आत्मनः सा तेन प्रतिहन्यत इत्यपि मिथ्या ; नित्यत्वात्तस्य । कार्योत्पत्तिप्रतिबन्धः क्रियते चेत ; न ; समर्थे कारणे तस्याऽवश्यंभावात, ५ इतरथा कारणं जनयति तच्च प्रतिबध्नातीति काचपच्यं भावाना (नाम) । तस्माद् व्यवधायकमेव आवरणं व्यापिनाम् । तदपि कथमिति चेत् ? अयमपरोऽस्य दोषोऽस्तु, केवलं वयमभ्युपगमवादिनः । तच्च व्यवधायकमेकमपि समानदेशानां समानेन्द्रियग्राह्याणां समानमिति केनचित्तदपसारणे सर्वेषां युगपद्ग्रहणम्, कट(कट)पटापसारणे तथाविध (तथाविध)घटानामिव ।

येऽपि मन्यन्ते—आत्मा मनसा युज्यते तदपि नभसा श्रवणेन्द्रियेण, तत्पुनरर्थेन शब्देन । १० अत्र इन्द्रियार्थयोः समवायः [५५३क] सम्बन्ध इति ; तेऽपि एतेन निर्वर्त्तितोत्तराः ; तेषामपि सकृत सर्वेषां शब्दानां श्रुतिः स्या[त] व्याप्येकान्ततः श्रोत्रम्, तत्र समवेताः सर्वे शब्दा इति संयुक्तसमवायः मनसा विवक्षितवत सम्बन्धोऽविशिष्ट इति । विशिष्टादृष्ट[स्य] नियामकत्वे ; मानो[मनोऽ]तिरिच्यत[10] इत्युक्तमत्रैव सर्वज्ञसिद्धौ । किंच, समवायोऽप्येवं[11] न ग्रहणकारणम् । अदृष्टवशाद् गगनसमवेतस्य कर्णशष्कुलीश्रोत्रेणाविरोधात ग्रहणस्य, घटसमवेतरूपस्येव १५ चक्षुषा । शब्दस्य आकाशगुणत्वं च निषिद्धम् । तत्र युक्तम्—*[12]"**शब्दः स्वसमानजातीयविशेषगुणवता इन्द्रियेण गृह्यते बाह्यैकेन्द्रियग्राह्यत्वात् रूपादिवत् ।**"

स्यान्मतम्—अनेकत्वात् नभसो नायं दोष इति ; तथाहि—देवदत्तकर्णशष्कुलीपरिकरपरिरुद्धमत्र (मन्यत्) नभोऽन्यदत्तः(न्यच्च यज्ञदत्तस्य) तत्र समवेतस्य नान्येन ग्रहणम् । तत्रेदं चिन्त्यते—किं तस्य कारणमिति ? तदेव नभः इति चेदं(चेत् ; अ)समवायिकारणं वाच्यम् ? न २० च तदन्तरेण परस्य गुणभावः । भेरीदण्डसंयोग इति चेत् ; न ; तत्र [13]तदभावात्, स्वकारणसमवायि वा समवायि कारण (स्वसमवायिकारणसमवेतत्वात ) ध्वनेः । व्युपरते च [14]तत्संयोगे पुनः तच्छ्रवणं न स्यात । क्षणिकत्वात् ध्वनेः न तस्य तत् ; "**शब्दान्न (च) शब्दनिष्पत्तिः**" [वैशे० सू० २।२।३१] इति[15] व्याहन्यते । अथ पूर्वः शब्दोऽसमवायिकारणम् स [16]नभोऽन्तरसमवेतो त (न) तत्कारणम्, अन्यथा कपालरूपादयः पटरूपादीनां [17]तत्कारणं स्युः । २५

यदि पुनरेतन्मतम्—पूर्वशब्दाकाशेः तदाकाश(शं) जन्यते, ततः स्वकारणसमवायि वा[ऽ]

---

(१) प्रतिनियत । (२) शब्दग्रहणयोग्यता । (३) आवरणेन । (४) योग्यता । (५) कटश्च पटश्च आवरणभूतौ तयोः । (६) समानदेशसमानेन्द्रियग्राह्य । (७) नैयायिकाः । (८) मनः (९) श्रवणशब्दयोः गुणिगुणभूतयोः । (१०) युगपज्ज्ञानानुत्पत्तिरपि विशिष्टादृष्टादेव स्यादिति मनःकल्पना व्यर्था स्यादिति भावः (११) व्यापित्वात् । (१२) तुलना—"यस्य बाह्यैकेन्द्रियग्राह्यविशेषगुणग्राहकं यदिन्द्रियं तत्तद्गुणकं यथा रूपग्राहकं चक्षू रूपाधिकरणम्, श्रोत्रं च तथाभूतस्य शब्दस्य ग्राहकं तस्मात्तदपि शब्दगुणकम् ।"—प्रश० कन्द० पृ० ६३ (१३) शब्दाभावात् । (१४) भेरीदण्डसंयोगे । (१५) "संयोगाद्विभागात् शब्दाच्च शब्दनिष्पत्तिः ।"—वैशे० सू० । (१६) आकाशान्तर । (१७) असमवायिकारण ।

समवायिकारणं न विरुध्येते(ध्यते)। [५५३ख]तानि तस्य समवायिकारणं चेत्; प्रथमशब्दाकाश-मारब्धानामेव परेषामुत्पत्तिरिति नाकाशवृद्धिः, सति कारणे कार्योत्पत्तौ सन्तानावृद्धिवत्। अन्यत्वे तदवस्थो दोषः। एवं च तन्नित्यत्वव्यापित्वविलोपात् आकाशद्रव्यं(द्रव्यं न) योगस्य। अथ शब्दः अन्तःकरणप्रत्यासन्नो गृह्यते विभुद्रव्यविशेषगुणत्वात् सुखादिवत्; अत्रापि ५ नभसोऽनेकत्वे पूर्ववद् दोषः। एकत्वे; गगनमनसोरनंशयोः [संयो]गे सर्वेषां शब्दानां तत्प्रत्या-सत्तिः समाना इति स्थितमिदम्-**सर्वेषां सकृच्छ्रुतिरिति।**

कारिकां विवृण्वन्नाह-**तत्कृत**मित्यादि। अ[यम]भिप्रायः-व्यञ्जकेन व्यङ्ग्याभिमतस्य कश्चिदतिशयः क्रियते, न वा ? प्रथमपक्षे **तत्कृतं** व्यञ्जक[कृत]म् **उपकारं** ग्राह्यतालक्षण-मिति(णमति)शय**मात्मसात्कुर्वतः** स्वभावभूतमवलम्बमानस्य **तद्देशवृत्ति[नि]यमा(म)भावात्** १० व्यञ्जकदेशवर्त्तननियमात्। श्रवणेन्द्रियग्राह्यस्वभावः पदार्थः शब्दः, स यत्रैव श्रूयते तत्रैवास्ति, व्यञ्जकदेशे च श्रूयते। न खलु घटोऽन्यत्र दृश्यमानः अन्यत्राप्यस्ति, सर्वगतत्व-प्रसङ्गादिति भावः। तन्नियमात् किम् ? इत्याह-**कूटस्थस्य** नित्याभिमता क्ष(तार्थ)स्य **नियमे** तद्देश (**मेन तद्देश**)**वृत्तिरेव**[त]तः किम् ? इत्याह-**न संभवति** 'सर्वगतत्वम्' इत्यध्याहारः। अनेन '**व्यापिनाम्**' इति निरस्तम्।

१५ सर्वगतत्वमभ्युपगम्य दूषणं दर्शयन्नाह-**सर्वगतत्वेऽपि** इत्यादि। संभावनायाम् **अपि**-शब्दः। **सर्वगतत्वे सत्यपि** शब्दानां **विवक्षितैकशब्दश्रुतिर्न स्यात्**, सर्वेषां [५५४क] स्यादित्यर्थः, श्रवणग्रहणयोग्यत्वात्।

ननु नियतव्यञ्जककृता नियतश्रुतिः, इत्यत्राह-**नहि** इत्यादि। **न हि**र्यस्मात् **समानदेशानां समानाक्षविषयाणामेतत्** नियतव्यञ्जक(व्यङ्ग्य)त्वम् **नाप्यं(न्याय्यम्)** प्रमाणोपपन्नं कचित् २० तथा[ऽ]दर्शनात् व्यवधायकतदपसारणयोः सर्वत्र साधारणत्वात्। व्यञ्जकनियममभ्युपगम्य दूषयन्नाह-**प्रत्येकम्** इत्यादि। एकमेकं वर्णं प्रति **प्रत्येकम् व्यञ्जकनियमे** अकारस्य व्यञ्जको नापरस्य इति नियोगे अङ्गीक्रियमाणे **कलकलश्रुतेरनुपपत्तेः** कारणात् **एतन्न्याय्यम् नहि**। तथा हि-आवरणविगमकारिणि व्यञ्जके तन्नियमो न संभवति इत्युक्तम्। व्यङ्ग्यातिशया वापि ने(शयो व्यापिनि) तु संभवति किन्तु तस्यानित्यत्वम्, श्रोत्रातिशयाधाय्यकिञ्चित्करम् २५ इत्युक्तम्। केवलं तद्बुद्धिजनकं व्यञ्जकमवशिष्यते, तस्य व्यक्तिरपि बुद्धिरेव। तत्रैकत्वेन बुद्धिः कस्यचित् केनचिदुत्पादिता यदा भवति, तदा सतोऽप्यन्यान् न गृह्णीयात्। विवक्षितैः व्यञ्जकैः सह संभूय सैका जन्यत इति चेत्; न सदेतत्; यतः व्यञ्जकानियमप्रसङ्गात्, अन्यव्यञ्जकैरपि अन्यबुद्धिजननात्। नवांशेन(न चांशेन) तज्जननं युक्तम्, एकान्तहानेः। तद्वद्वर्णेष्वपि सावयवत्वप्रसङ्गात् तथाप्रतीतेः। तन्न कलकलश्रुतिः। एको वर्णः कलकल इति चेत्; ३० न; वर्णभेदप्रतीतेः।

(१) आकाशनित्यत्वव्यापित्वलोपात् (२) निराकरणमित्यर्थः। (३) ध्वनिना। (४) शब्दस्य। (५) समानेन्द्रियगोचराणाम्। (६) आवरण। (७) नियतव्यञ्जकव्यङ्ग्यत्वम्। (८) बुद्धिः।

अथ व्यञ्जकेन तस्य न किंचित् क्रियते तथापि ततो व्यक्तिः ; तत्राह–**व्यक्त** इत्यादि । व्यञ्जकव्यापारदशायां **व्यक्तश्च** तद्व्यापारा[त]पूर्वम**व्यक्तस्य** (श्च)तौ **स्वभावौ च योतः प्राप्तिश्च परिहारश्च** याथासंख्येन[५५४ख] **तावन्तरेण कुतो व्यक्तिः ?** अधुना व्यक्तस्य तिरोधानं दूषयन्नाह–**तत्** इत्यादि । तयोः व्यक्ताव्यक्तस्वभावयोः याथासंख्येन **त्यागश्चोपादानं च ताभ्यामृते कुतः तिरोधानम्** इत्युक्तप्रायम । ५

नास्ति सर्वगतत्वमिति चेत् ; अत्राह–**सत्या(त्यां)च** इत्यादि । किम् ? इत्याह–**व्यञ्जक** इत्यादि ।

[सत्यां च

**व्यञ्जकव्यापृतौ न स्याद् व्यङ्ग्यस्य नियमाद्गतिः ।**
**नावश्यंभावनियमः श्रुतेरुच्चारणात्ततः ॥९॥** १०

शब्दानामव्यापित्वे सत्यपि व्यञ्जकव्यापारे व्यक्तिरवश्यम्भाविनी न भवेत् जातिसम्बन्धवत् । न हि व्यक्तिजन्मदेशे प्राक् असत्या जात्या सम्बन्धो युज्यते ।]

**व्यञ्जकस्य** ताल्वादेः तज्जनितवायोर्वा **व्यापृतौ न स्याद् व्यङ्ग्यस्य** शब्दस्य **नियमाद्गतिः** । नहि प्रदीपव्यापारे नियमेन घटगतिः । ततः किम् ? इत्याह–**नावश्यंभावनियमः श्रुतेः** शब्दस्य **उच्चारणात्** ताल्वादिव्यापारात्**ततः** । १५

कारिकां विवृण्वन्नाह–**शब्दानामव्यापित्वे** अङ्गीक्रियमाणे **सत्यपि** विद्यमानेऽपि व्यञ्जकव्यापारे **व्यक्तिरवश्यंभाविनी न भवेत्** । निदर्शनमाह–**जातिसम्बन्धवत्** ।जात्या व्यक्तेः **सम्बन्धः** तस्येव **तद्वत्** । व्यक्तिगतजातिमपेक्ष्य इदमुक्तम् । एतदेव समर्थयते–**नहि** इत्यादिना । **नहि प्राक्** व्यक्त्युत्पत्तेः पूर्वम् **असत्या जात्या** । क ? इत्याह–**व्यक्तिजन्मदेशे सम्बन्धो युज्यत** इति । २०

सौगतेन उच्यमानमिदं मीमांसकदूषणं तस्यपि लगतीति दर्शयन्नाह–**सन्निवे(धे)**रित्यादि ।

**[सन्निधेरेकाक्षसम्बन्धे एकदाऽशेषतः श्रुतिः ।**
**न बहिरन्तरभिप्रेतानंशक्षणिकसंविदः ॥१०॥**

क्षणिकपरमाणुपु मोहोद्रेकात् तद्विपरीतस्वभावोपलब्धौ न तत्त्वोलब्धिः । तथा २५ अन्तस्तत्त्वे समानम् । वेद्य···इत्यभ्युपेत्य सौगतः प्रतिपत्तुः यथासन्निधानं सकलोपलम्भाशक्तेः कथञ्चित् कस्यचित् श्रुतिरिति ब्रुवाणं मीमांसकं कथं प्रतिक्षिपेत् ? विषयविषयिणोः अविसंवादनियमस्य अनेकान्ताकर्पणात् तदन्यथानुपपत्तेः, असंभवात् । स्वेष्टार्थाविसंवादे लक्षणं न प्रमाणं स्वाकारज्ञानहेतुता । नहि···परम्परयापि स्वलक्षणानि हेतवो न भवन्त्येव क्षणिकत्वे···अतः सर्वथा न संभवत्यर्थस्य अविसंवादलक्षणम् । तत ३०

(१) घट उपलभ्यते ।

**एव ज्ञानस्यापि तदाकारस्य, तद्विषयतायाः सौगतैरनभ्युपगमात् तत्प्रतिभासविरोधाच्च कथमव्याप्तिः ? उपादानोपादेयसंविदोः । विज्ञान···]**

**एकदा** एकस्मिन् क्षणे **श्रुतिः** श्रवणं(णं) 'संभवेन' इत्युपस्कारः । कथम् ? इत्याह–**अशेषतः** अशेषरूपेण, सदादिनेव क्षणक्षयादिनापि इत्यर्थः । केषाम् ? '**शब्दानाम्**'
५ इत्यनुवर्तनं । कुतः ? इत्याह–**सन्निधेः** शब्दत्वादि(दे)रिव सन्निधानात् क्षणक्षयादेरपि । कस्मिन् सति ? इत्याह–**एकाक्षसम्बन्धे** एकेन अक्षेण सम्बन्धे सति [५५५क] येनाक्षेण सदादेः तेन क्षणक्षयादेरपि । एवं मन्यते–यदि समानदेशानां समानेन्द्रियग्राह्याणां नियमेन युगपच्छ्रुतिः तर्हि सदादिक्षणक्षयादेः युगपच्छ्रवणं(पद् ग्रहणं) भवेद् एकाधारैकेन्द्रियग्राह्यत्वात्, तथा च व्यापककान्तरवत् प्रमाणान्तरमनर्थकमिति भावः । अशेषतः श्रुतिरस्त्येव–*"**एकस्यार्थ-**
१० **स्वभावस्य**"[प्र० वा० ३।४२] इत्यादि वचनात्, इति चेत् ; अत्राह–**न इत्यादि**ने(त्यादि ।) न केवलम् [अन्त]रभिप्रेतानंशक्षणिकसंविदो न **बहिरप्यभिप्रेतानंशक्षणिकसंविदो न** तथाप्रतीतिः इति भावः । चर्चितमेतत् ।

कारिकां व्याख्यातुमाह–**क्षणिकपरमाणुषु** इत्यादि । **क्षणिकेषु परमाणुषु न तत्त्वस्य** निरंशक्षणिकस्वभावस्य **उपलब्धिः** । कस्मिन् सति ? इत्याह–**तद्विपरीत** इत्यादि । क्षणिक-
१५ परमाणुप्रत्यनीकस्व**भावोपलब्धौ** सत्यां । कुतः ? **मोहोद्रेकात्** अज्ञानमाहात्म्यात् । अनेन '**बहिरभिप्रेतानंशक्षणिकसंविदः**' इति व्याख्यातम् । तथा **अन्तस्तत्त्वे समानं** 'न तत्त्वोपलब्धिः' इत्येतत्सदृशम् । कस्मिन् सति ? इत्याह–**वेद्य** इत्यादि । अनेन '**नान्तरभि-प्रेतानंशक्षणिकसंविदः**' इति व्याख्यातम् । इत्येवम् **अभ्युपेत्य** अभ्युपगम्य **सौगतः कथं प्रतिक्षिपेत्** निराकुर्यात् ? किं कुर्वन्तम् ? इत्याह–**प्रतिपत्तुः** इत्यादि । **प्रतिपत्तुः** पुरुषस्य
२० **यथा[सन्निधानं]** सन्निधानानतिक्रमेण सकलस्य शब्दराशेः **उपलम्भाशक्तेः कथंचित्** केनापि नियतदेशादिप्रकारेण **कस्यचिद्** अकारस्य अन्यस्य वा शब्दात्मनः **श्रुतिरित्येवं ब्रुवाणं** मीमांसकम् । यथा बहिःपरमाणूनां नीलतामात्रस्य अन्तःसंवेदनस्य सच्चेतनादेरुपलम्भेऽपि [५५५ख] सन्निहितस्यापि न क्षणक्षयादेरुपलम्भः तथा अकारोपलम्भे सन्निहितस्यापीत[र]स्य न श्रुतिः प्रतिपत्तिः तथाशक्तेः इति भावः ।

२५ ननु नान्तर्बहिर्वा परमार्थतो निरंशक्षणिकपरमाणुरूपं तत्त्वं येनायं दोषः स्यात् अपि तु यथाऽविसंवादनियममिति चेत् ; अत्राह–**विषय** इत्यादि । **विषयो** घटादिः **विषयि** ज्ञानं तयोः यो**ऽविसंवादनियमः** तस्य **अनेकान्ताकर्षणात्** तेन तदाकर्षणादिति द्रष्टव्यम् । कुतः ? इत्याह–**तस्य** तन्नियमस्य **अन्यथा** तदाकर्षणाभावप्रकारेण **अनुपपत्तेः** ।

ननु यदुक्तम्–'**न बहिरभिप्रेतानंशक्षणिकसंविदः**' इति, **नियमस्य अनेकान्ता-**
३० **कर्षणात्**' इति च; तन्न युक्तम् ; परमाणुभ्योऽनंशक्षणिकाकारसंविदो[ऽ]भावा[त्] । तन्नियमोऽपि

(१) 'प्रत्यक्षस्य सतः स्वयं । कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ।'–प्र० वा० । (२) धकारादेः ।

तत्रैव इति चेत ; अत्राह–**असंभवात्** इत्यादि । **स्वस्य** सौगतस्य **इष्टो**ऽर्थः क्षणिकनिरंशपरमाणुलक्षणः तस्याऽ**विसंवादे** संप्रतिपत्तौ क्रियमाणायां **लक्षणं न प्रमाणम्** *"**सारूप्यमस्य प्रमाणम्**" [न्यायवि० १।२०] इति वचनात । किम् ? इत्याह–**स्वाकारज्ञानं(न)हेतुता** स्वस्य अर्थस्य आकार इव आकारो यस्य ज्ञानस्य हेतोः भावः तत्ता । अत्र हेतुत्रयमाह–**असंभवात्** इत्यादि । प्रथमं दर्शयति–**नहि** इत्यादिना । अनेन स्वलक्षणानां प्रत्यक्षग्राह्यत्वं निषेधतिस्म । तर्हि स्वलक्षणेभ्यः ५
कार्यं किंचिल्लिङ्गभूतं ततः तदाकारं ज्ञानम् अतः परम्परया तानि स्वाकारज्ञानहेतव इति ; तत्राह–**परम्परयापि** उक्तया न केवलं साक्षात **हेतवो न भवन्ति** [५५६क] **एव स्वलक्षणानि** । कुतः ? इत्याह–**क्षणिकत्वे** इत्यादि । विवेचितमसकृत । अनेन अनुमेयत्वम् । **अतो**ऽस्मान्न्यायात **सर्वथा** प्रत्यक्षानुमानप्रकारेण **न संभवत्यर्थस्य** परपरिकल्पितवस्तुनोऽ**विसंवादात्**(दल)**क्षणमव्यभिचारि प्रमाणम्** । माभूत बहिः स्वलक्षणानामविसंवादलक्षणं(वादलक्षणं) सौगतैः तन्निषे- १०
धात, ज्ञानस्य तु स्यादिति चेत ; अत्राह–**तत** इत्यादि । **तत एव** स्थूलैकान्वयिनः साक्षाद्दर्शनादेव **ज्ञानस्यापि** न केवलं बहिःस्वलक्षणानाम । किंभूतस्य ? **तदाकारस्य** स्वलक्षणाकारस्य **सर्वथा न संभवति तल्लक्षणमिति** पदघटना । *"**यद्यथावभासते तत्तथैव परमार्थसद्व्यवहारावतारि**" इत्यादि वचनात स्थूलैकान्वयिविषयमेव ज्ञानमस्तु इति चेत ; अत्राह–**तद्** इत्यादि । **तद्** इत्यनेन स्थूलैकान्वयी परामृश्यते स **विषयो** यस्य ज्ञानस्य [तस्य]**भावः तत्ता** १५
**तस्याः सौगतैरनभ्युपगमात्** क्षणभङ्गादिभङ्गभयात । हेत्वन्तरमाह–**तत्प्रति[भा]सविरोधाच्च** इति । **तस्य** स्थूलैकान्वयिनः **प्रतिभासः** तदाकारता ज्ञानस्य तस्य **विरोधात्** । उपलक्षणमेतत वैयधिकरण्यदः(ण्यादेः) । '**च**' इति हेतुसमुच्चये ।

द्वितीयं हेतुं व्याख्यातुं परेण आत्मानं पयुति (प्रश्नयति) '**कथमव्याप्तिः**' इति ; उत्तरमाह–**उपादानोपादेयसंविदोः** इत्यादि । सर्वं गतार्थम । अव्याप्तिं व्याख्यातुं प्रश्नयति– २०
'**कथमव्याप्तिः**' इति ? तत्रोत्तरं **विज्ञान** इत्यादि तादृगेवं ।

भवतु वा सदादिनेव क्ष[ण]यादिनापि भावस्य ग्रहणं तथापि सौगतस्य मीमांसको दुर्जय इति दर्शयन्नाह–**भिन्नस्य** इत्यादि ।

**[भिन्नस्य सर्वतोऽन्यस्मात् भेदं तद्व्यवसाययेत् ।**
**प्रत्यक्षं सर्वतः तद्वत् नियमः स्याद् गिरां श्रुतेः ॥११॥** २५

**स्वलक्षणस्य स्वभाव[विलक्षणस्य] दर्शनं तत्स्वभावविशेषसन्निधानाविशेषेऽपि [क्वचित्] यदि साक्षाद् व्यवसायं जनयति, गिरां··बुद्धिः अखण्डं स्वं परं वा खण्डयन्ती कथं नियमात् सन्निहितसकलार्थग्राहिणी नाम , न वै विकल्पबुद्धिः [अपरमार्थविषया] प्रोक्तम्···]**

**भिन्नस्य** व्यावृत्तस्य व्यावृत न तयो···[५५६ख]···रस्मात(?) । किं भूतात ? **सर्वतः** ३०

(१) "अर्थसारूप्यमस्य प्रमाणम्"–न्यायवि० । (२) 'निषेधतिस्म' इति सम्बन्धः । (३) बहिरर्थनिषेधात् । (४) गतार्थम् । (५) प्रतौ रिक्तमेतत् स्थलम् ।

सजातीयेतररूपात् संवन्धि यत् **प्रत्यक्षं तद् व्यवसायये** निश्चायेय(**साययेत्** निश्चाय) येत । किम् ? **भेदं** व्यावृत्तिम् न (तत्) सर्वतः विजातीयात्तं व्यवसाययेन्न सजातीयपूर्वोत्तरक्षणाभ्यां क्षणिकत्वानुमानवैफल्यापत्तेः यद्वत् **तद्वदिति** श्रवणादेवं गम्यते **तद्वन्नियमः स्यात् गिरां श्रुतेः** ।

५ कारिक(कां) विवृण्वन्नाह–**स्वभाव** इत्यादि । **स्वलक्षणस्य** । तस्य विशेषणमाह–**स्वभाव** इत्यादि । तस्य किम् ? इत्याह–**दर्शनम्** । तत कथं कुर्वन् किं करोति ? इत्याह–**साक्षाद्** अव्यवधानेन **व्यवसायं** निश्चयं **जनयन्(यति)**मतत (?) सर्वव्यावृत्तिप्रसङ्गात् । कस्मिन् सत्यपि ? इत्याह–**तत्स्वभाव** इत्यादि । सः स्वानुभूते व्यवसायजनकः **स्वभावविशेषो** यस्य, अन्यथा नीलादा व(दौ व्यव)सायो न भवेद् असक्त(अशक्त)स्याजनकत्वात्, तज्जनकेतर-
१० भेदात् तद्भेदो वा, तत्तथोक्तं दर्शनं तस्य **सन्निधानस्याऽविशेषेऽपि यदि** । परिहारमाह–**गिराम्** इत्यादि । दर्शनपाटवाद्यभावस्य उभयत्र समानत्वात् । अथ नीलादिवत् क्षणक्षयादौ व्यवसायजनकः तद्विशेषः तस्य नास्ति ; तत्राह–**अखण्डम्** इत्यादि । **अखण्डमद्वयं स्वम्** आत्मानं **बुद्धिः खण्डयन्ती** स्वविषये अध्यवसायजननसमर्थेतररूपतया सांशं कुर्वन्ती । ननु नीलादौ तज्जनन[सामर्थ्यमेव [2]अन्यत्राऽ]सामर्थ्यम्[3], अतोऽयमदोष इति चेत् ; नित्यस्यापि एकदा सामर्थ्य-
१५ मन्यदा असामर्थ्यं स्यात्, ततो यथा नित्यं स्वकार्ये युगपत् सर्वदात्मानं भिन्नन्ति (भिनत्ति) तथा बुद्धिरपि इति[५५७क]स्थितम् **परं** वा[ऽ]**खण्डं** [4]**खंण्डं खण्डयन्ती** । तथाहि–नीले निश्चयं जनयति न क्षणक्षये, ततो गृहीतेतरयोरिव निश्चितेतरयोरपि भेदः । **कथं नियमात्** नियमेन **सन्निहितसकलार्थग्राहिणी नाम** । यथाहि दर्शनं स्वविषयत्वाऽविशेषेऽपि सन्निहितयोरपि [5]'नीलक्षणिकत्वयोरपि' नीलक्षणिकत्वयोर्विभागेन निश्चयं जनयति तथा श्रोत्रं स्वविषयेषु रा(ग)-
२० कारादिषु इति भावः ।

ननु स्यादेवं यदि दर्शनवद् अर्थविषया विकल्पबुद्धिः स्यात्, यावता निर्विषयता तत्कथं तद्भेदादर्थभेद इति ? तदाह–**न वै विकल्पबुद्धिः** इत्यादिना । तत्र परिहारं पठति **प्रोक्तम्** इत्यादिक(कम् ।)

दर्शनं नीलवत् क्षणक्षये प्रवृत्तमपि सहकारिवैफ(क)ल्यादविशेषेण[न] निश्चय[मुत्पा-
२५ दय]ति इत्यत्र दर्शने[6] पुनरपि दूषणं दर्शयन्नाह–**साकल्येन** इत्यादि ।

**[साकल्येन गृहीतेऽपि शब्दराशौ सकृद्धिया ।**
**शब्दः प्रतीयते नान्यो यद्व्यवसायेऽस्ति प्रत्ययः ॥१२॥**

**सर्वतः···]**

**साकल्येन** सामस्त्येन **गृहीतेऽपि शब्दराशौ** अकारि(कारादि) हकारपर्यन्तवर्णसमूहे
३० **सकृद्धिया (सकृत् धिया)**श्रवणज्ञानेन, यस्य शब्दस्य व्यवसायो **यद्व्यवसायः** तस्मिन्

(१) स्वभावविशेषः । (२) क्षणक्षयादौ । (३) अस्ति । (४) 'खण्डम्' इति द्विर्लिखितम् । (५) 'नीलक्षणिकत्वयोरपि' इति द्विर्लिखितम् । (६) मते ।

कर्त्तव्ये **अस्ति प्रत्ययः** सहकारिकारणं विद्यते श(?)**शब्दः प्रतीयते नान्य** इति ।

कारिकार्थं दर्शयन्नाह–**सर्वत** इत्यादि । सुगमम् ।

दर्शनस्य विभागेन विकल्प[ज]नकत्वमभ्युपगम्य इदमुक्तम्, इदानीं तदेव नास्तीति दर्शयन्नाह–**यथा** इत्यादि ।

**[यथार्थोऽनुभवं साक्षात् स्वापेक्षं कर्तुमर्हति ।**　५
**तथार्थानुभवः साक्षादनन्यव्यवसायकृत् ॥१३॥**

**यथा रूपस्वलक्षणं साक्षादुपनिपत्य विज्ञानं जनयत् आत्मनान्तरीयकमाकारं पुरस्कर्तुं नायुक्तं तथा तद्दर्शनं व्यवसायं तेन विशेषः व्यवसीयेत । दृष्टेः स्वभावभूतविशेषव्यवसायाभावे कुतः सजातीयस्मृतिः क्षणक्षयादिवत् ?]**

**यथा** [येन]योग्यताप्रकारेण **अर्थो** रूपादिः **अनुभवं** दर्शनं **साक्षाद्** अव्यवधानेन　१० **कर्तुमर्हति** । किंभूतम् ? इत्याह–**स्वापेक्षं स्वशब्देन अर्थः** परामृश्यते तस्मिन् **अपेक्षा** तदनुभवनाकाङ्क्षा [५५७ख] यस्य तत्तथोक्तम् स्वाकारम् इत्यर्थः । **तथा** तेन प्रकारेण **अर्थानुभवः साक्षाद[न]न्यव्यवसायकृत्** न विद्यते अन्य[त्] स्वरूपान्तरं यस्य तत् अ[न]न्यत् स्वलक्षणमिति यावत्, तस्य व्यवसायः तत्कृत(त्) । चर्चितमेतत्–*"**अभेदात् सदृशस्मृत्याम्**" [सिद्धिवि० १।६] इत्यादिना ।　१५

कारिकार्थं दर्शयन्नाह–**रूपस्वलक्षणम्** इत्यादि । रूपग्रहणमुपलक्षणं रसादेः तदेव **स्वलक्षणं साक्षादुपनिपत्य** उपढौक्य **विज्ञानं** स्वानुभवं **जनयता(यत्) यथा** येन वस्तुस्वभावप्रकारेण **नायुक्तमेव[म्] आत्मनान्तरीयकम्** आत्मानम(त्मनि)विद्यमान**माकारं पुरस्कर्तुम् तथा तद्दर्शनं** स्वलक्षणानुभवः साक्षादुपनिपत्य **व्यवसायं** नात्मानन्तरीयकमाकारं पुरस्कर्तु मा-(र्तुं ना)युक्तम्, **तेन** कारणेन **विशेषः** स्वलक्षणं **व्यवसीयेत** ।　२०

अधुना प्रकारान्तरेण दर्शनस्य व्यवसायहेतुत्वं निराकुर्वन्नाह–**दृष्ट(ष्टे**रित्यादि । अयम)-भिप्रायः– स्वयं व्यवसायात्मिका दृष्टिः, अन्यथा वा स्यात ? तत्राद्यपक्षे ; किमपरेण व्यवसाये-[न] ? द्वितीये ; **दृष्टेः स्वभावभूतो विशेषव्यवसायः** तस्या**भावे** अविकल्पकत्वे, **कुतः सजातीयस्मृतिः** ? नैव । अत्र निदर्शनमाह–**क्षण** इत्यादि । तदुक्तम्–*"**व्यवसायात्मनो दृष्टेः**" [सिद्धिवि० १।४] इत्यादि । अस्ति च परस्य तत्स्मृतिः, ततस्तदन्यथानुपपत्तेः[2] व्यवसायात्मिका दृष्टिरिति ।　२५

अधुना श्रोत्रियवत्[3] स्फोटवाद्यपि परस्य दुर्जय इति दर्शयन्नाह–**व्यवस्थायाम्** इत्यादि ।

**[व्यवस्थायां कुतस्तत्त्वं स्याद्विकल्पाविकल्पयोः ।**
**यतः स्वलक्षणं शब्दः स्फोटो नेति व्यवस्थितिः ॥१४॥**

**स्वलक्षणविषयमविकल्पकं ज्ञानं न तावत् सर्वथा स्वार्थसाधनम्, अध्यवसायात्म-**　३०

(१) विकल्पजनकत्वमेव । (२) स्मृत्यन्यथानुपपत्तेः । (३) मीमांसकवत् । (४) बौद्धस्य ।

त्वात् सिद्धेः। कुतोऽन्यथा अनुभूतं अनुमानम् अनुमितवत्। सामान्यविषयं भावतो निर्विषयत्वं तस्य अभावात्मकत्वात्। तद्भावं विषयीकरोति विकल्पकमिति न परिच्छिनत्तीति अकिञ्चित्करो विकल्पः कुतः साधनम् यतः तत्त्वसिद्धिः समयान्तरवत्? तदयं किंप्रमाणः परमुपालभेत अशब्दरूपम्···?]

५ तत्त्वमिदं नेदमिति स्थितिः **व्यवस्था तस्याम्**, अवि (अधि) करण[५५८क]भूतायां **स्याद्** भवेत तत्त्वं वस्तुस्वरूपं **कुतो विकल्पाविकल्पयोर्**मध्ये विकल्पादविकल्पाद्वा न कुतश्चित् द्वयोरपि तदध्यवसायक(यात्म)त्वादिति भावः। **यतः** तयोः कुतश्चित्तत्र तद्भावात् **स्वलक्षणं शब्दः स्फोटः** शब्दो नेति **व्यवस्थितिः** द्वयोरप्यदृष्टकल्पना[ऽ]विशेषात्।

कारिकां विवृण्वन्नाह–**स्वलक्षणविषयम्** इत्यादि। जातिविषयव्यवच्छेदार्थं **स्वलक्षण-**
१० **विषय**ग्रहणम्। [अ]**विकल्पकं**। किम्? **ज्ञानम् स्वार्थसाधनं न तावत् सर्वथा** नीलादिप्रकारेण च(एव)क्षणक्षयादिनापि। कुतः? इत्याह–**अध्यवसायात्मत्वात्**। ततोऽपि प्रतीतिमात्ररूपा सिद्धिः स्यादिति चेत्; अत्राह–**सिद्धेः** इत्यादि। **कुतोऽन्यथा** [त]स्याः तल्लक्षणत्वाभावप्रकारेण **अनुभूतं** अविकल्पकगृहीतं **अनुमानं** क्षणक्षयादौ प्रमाणं स्यात्। दृष्टान्तमाह–अनुमितं इव **अनुमितवत्** इति। समारोपव्यवच्छेदकरणा[त्] तत्प्रमाणतापि चिन्तिता।
१५ तन्न अविकल्पात्तत्त्वसिद्धिः। विकल्पात् स्यादिति चेत्; अत्राह–'**विकल्पज्ञानम्**' इत्यनुवर्त्तते **सामान्यविषयं**। ततः किम्? इत्याह– **भावतो निर्विषयत्वं** [वि]कल्पकस्य इति। कुतः? इत्याह–**तस्य** इत्यादि। **तस्य** सामान्यस्य **अभावात्मकत्वाद्** अन्यते(तो)व्यावृत्त्यात्मकत्वात्। भवत्वभावः सामान्यम्, ततः किम्? इत्याह–**तद्भावम्** इत्यादि। **तद्भावे**(वं) विजातीयव्यावृत्तिं **विषयीकरोति विकल्पकमित्येवं न 'परिच्छिनत्ति' इति** प्राप्तम् ततोऽ**किञ्चित्करो विकल्पः**
२० **कुतः** [५५८ख] **साधनं** प्रमाणं **यतः** साधनत्वात् **तत्त्वसिद्धि**[ः] विकल्पात् इति **समयान्तरे-**(न्तर)**इव** तद्वदिति निदर्शनम्।

प्रकृतमुपसंहरन्नाह–**तदयम्** इत्यादि। यत एवं **तस्मादयं** सौगतः **किंप्रमाण**[ः] **परं** प्रतिवादिनम् **उपालभेत**। केन रूपेण? इत्याह–**अशब्दरूपम्** इत्यादि।

एवं परमते सौगतदोषपरिहारं विधाय इदानीं जैनमते यदुक्तं तेन–रूपादिमत्पुद्गलविका-
२५ रस्य ध्वनेः शब्दरूपस्य केनचिद् ग्रहणे तदव्यतिरेकिणो रूपादेः तेनैव ग्रहणात् *"**तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः**" [प्र० वा० ३।४४] इति वचनात् अन्यत्रापि शेषेन्द्रियवैफल्यमिति। तत्परिहरन्नाह–**अशब्दादिव्यवच्छिन्नम्**।

**[अशब्दादिव्यवच्छिन्नं प्रत्यक्षमेकमेव तत्।**
**गन्धवद् व्यवसीयेत कथञ्चित् केनचित् क्वचित् ॥१५॥**

३० **स्वलक्षणमेकं सन्निहितं प्रत्यक्षम्, तस्य यावन्ति पररूपाणि तावत्यो व्यावृत्तयः,**

(१) तन्निश्चायकत्वादिति भावः। (२) सामान्यविषय। (३) सिद्धेः। (४) बौद्धेन। (५) श्रोत्रेन्द्रियेण। (६) जैनमतेऽपि।

तत्र काचित् केनचित् प्रतीयते ततो न प्रतिज्ञार्थैकदेशासिद्धो हेतुः, अप्रतीत···नाम···
अतोऽन्यापोहः तेषां विषय इति, तथा स्वलक्षणं शब्दाद्यात्मकम्, तत्र श्रोत्रादिसामग्रीं
पुरस्कृत्य अनुभवात् अशब्दव्यवच्छेदः केवलं प्रतीयते, । तन्न पुद्गलस्वलक्षणस्यैकत्वेऽपि
शेषेन्द्रियाणां कैमर्थक्यं स्यात् । प्रत्यक्षतः शब्दादिस्वलक्षणभेदप्रतीतेः असमानम् ;
तन्न ; स्वलक्षणस्य अव्यवसेयत्वात् । निर्जितान्यसमारोपमनसः स्वार्थानुभवस्य व्यव- ५
सायात्मकतोपपत्तेः निश्चयारोपमनसोर्बाध्यबाधकभावः अन्यथा नोपपद्येत । दृष्टेः खण्डशः
पाटवादिसंभवे अनेकान्तप्रसङ्गात् तथा अर्थोपलब्धिः, किन्न प्रतिपद्येत ? यतः अनु-
पात्तस्पर्शाद्यात्मनः शब्दपुद्गलस्य श्रुतिर्न स्यात् । तन्नायं विकल्पानामेव अपराधः यतः
दृष्टस्य अर्थस्य अखिलो गुणः दृष्ट एवेत्येकान्तः शोभेत ।

**अशब्दः** शब्दाभावः न पुनः शब्दादन्यः रूपादीनामपि ततोऽन्यथा **द ('अ) १०
शब्दव्यवच्छिन्नम्'** इति वक्तव्यं स्यात , स **आदि** र्येषां रूपादीनां तेभ्यः स्वयं व्यवच्छि-
द्यते स्म **तदव्यवच्छिन्नं** शब्दरूपरसस्पर्शगन्धात्माम् (त्मकम्) इत्यर्थः । घटादिवदेकं न
स्यादिति चेत ; आह–**एकमेव** विरुद्धधर्माध्यासस्य एकान्तेन अभेदकत्वात् इति भावः । **तत्
प्रत्यक्षं** विशदवेदनवेद्यं यथा भवति तथा **व्यवसीयेत** निश्चीयेत । अनेन प्रत्यक्षव्यवसाय-
योरेकत्वमाह–**कथंचिदशब्दव्यवच्छिन्न**प्रकारेण नारूपादिव्यवच्छिन्नेन **केनचित्** श्रोत्रेण न १५
चक्षुरादिना । अत्र **गन्धद्रव्यं** निदर्शनम् । **क्वचित्** न सर्वत्र देशे । अनेन तस्य व्यापित्वं
निषेधति ।

सोपपत्तिकं कारिकार्थं दर्शयति **यथा** इत्यादिना । **यथा** [५५९क] सौगतस्य **स्वलक्षणमेकं**
प्रत्येकं **प्रत्यक्षम्** । किंभूतम् ? इत्याह–**सन्नि[हि]ते**त्यादि । **तस्य** स्वलक्षणस्य [3]**यावन्ति पर-
रूपाणि तावत्यो व्यावृत्तयः तत्र** तासु व्यावृत्तिषु मध्ये **काचिदशब्दादिव्यावृत्तिः केनचित्** २०
शब्दादिविकल्पेन शब्देन शब्द[ब्दा]द्यभिधाने वा (धानेन) करणभूतेन **प्रतीयते** । नहि शब्द इति
विकल्पेन अभिधानेन वा नित्यव्यावृत्तिः प्रतीयते **ततः** तस्मान्न्यायात् **न प्रतिज्ञार्थैकदेशा-
सिद्धो हेतुः** सत्त्वादिः । कुतः ? इत्याह–**अप्रतीते**त्यादि । केषाम् ? इत्याह–**नाम** इत्यादि ।
**अतः** अस्मात् करणात् **अन्यापोहः तेषा**मभिधानविकल्पान्तराणां **विषय इति तथा** तेन प्रकारेण
**स्वलक्षणं** शब्दरूपम् । किंभूतम् ? इत्याह–**शब्दाद्यात्मकम्** इति यावत् । **तत्र** स्वलक्षणे २५
**श्रोत्रादिसामग्रीं पुरस्कृत्यो**त्यत्राद (त्यादिताद) **नुभवात्** प्रत्यक्षात् **अशब्दव्यवच्छेदः केवलं
प्रतीयेत** नाऽस्पर्शादिव्यवच्छेदः । विकल्पवदनुभवस्यापि व्यवच्छेदविषयत्वात् इति मन्यते । यत
एवं **तत्**तस्मात् **न शेषेन्द्रियाणाम्** [4]**कैमर्थक्यं** वैयर्थ्यं **स्यात्** तेषामप्रतीतप्रत्यायनार्थत्वात् ।
कस्मिन् सत्यपि ? इत्याह–**पुद्गलस्वलक्षणस्यैकत्वेऽपि** इति ।

---

(१) कश्चित् पदार्थः । (२) भेदकत्वाभावात् । (३) अत्रायं पूर्वपक्षः–"तस्मादेकस्य भावस्य यावन्ति पररूपाणि तावन्त्यस्तदपेक्षया तदसंभाविकार्यकारणस्तस्य तद्भेदात् यावत्यश्च व्यावृत्तयः तावत्यः श्रुतयोऽतत्कार्यकारणपरिहारेण व्यवहारार्थाः ।"–प्र० वा० स्ववृ० १।४४। (४) अन्यापोह । (५) किमर्थस्य भावः कैमर्थक्यम् कस्मै प्रयोजनाय इति भावः ।

ननु चक्षुषा रूपं प्रतीयते रसनेन रसः, एवं शेषेन्द्रियेष्वपि वाच्यम्, न च तत्र अपरमाभाति, न च इन्द्रियान्तरमस्ति यत्र वस्त्वन्तरप्रतिभासः, ततो न रूपादिभ्यः किम[पि]परं पुद्गलस्वलक्षणमेकम्, तदाह-**प्रत्यक्षत** इत्यादि। **प्रत्यक्षात्** श्रोत्रादिज्ञानाद् [५५९ख] उक्तविधिना **शब्दादिस्वलक्षणभेदप्रतीतेः** कारणाद**समानं** यथा विकल्पेन अन्यतो व्यवच्छेदः प्रतीयते ५ तथा प्रत्यक्षेणापि इति असदृशमिति चेत; उत्तरमाह-**न** इत्यादि। यदुक्तं परेण **तन्न** । कुतः ? **स्वलक्षणस्य** रूपादिपरमाणुलक्षणस्य **अव्यवसेयत्वाद्** अनिश्चेयत्वात्। एवं मन्यते यथा चक्षुषा केव[लं] रूपं प्रतीयते नान्यात्मकं नाप्यन्या वा (न्यथा) न प्रमाणान्तरापेक्षणमस्ति । स्वार्थानुभवादेव अन्यसमारोपव्यवच्छेदेन तत्त्वसिद्धिरिति चेत; अत्राह-**स्वार्थानुभवस्य** स्वपरदर्शनस्य **व्यवसायात्मकतोपपत्तेः** 'तदपपत्तेः'[1] **तदपेक्षणादिति** । किंभूतस्य ? इत्याह-
१० **निर्जितान्यसमारोपमनसः** (मनसः) । भविष्यति तदनुभवो न च व्यवसायात्मक इति चेत; अत्राह-**निश्चय** इत्यादि । **निश्चयश्च आरोपमनश्च तयोः बाध्यबाधकभावः** परेण **इष्टः**[2] **अन्यथा** तदनुभवस्य व्यवसायात्मकताभावप्रकारेण **नोपपद्येत** न घटेत अविकल्पान्यसमारोपमनसोरपि बाध्यबाधकभावोपगमात, तथा च अनुभवगन्धादेव नष्टव्यं समारोपेण इति, 'न'[3] समारोपवार्त्तापि न भवेत ।

१५ ननु नीलादौ अन्यसमारोपमनसो नानुभावाद् व्यवच्छेदः, अपि [तु] सादृश्यदर्शनस्य तत्क (तत्का)रणस्याभावात् स्वयमेवानुत्पाद इति चेत; न, प्रधानादिसमारोपस्य[4] सदृशदर्शनाभावेऽपि भावात । अनाद्यन्तर्वासना तत्र कारणमिति चेत; न; अवान्तरवासनातोऽपि समारोपदर्शनात् श्रोत्रियत्रियजोहिद्ध(त्रियोन्मत्त)स्येव अशुचौ शुचित्वस्य। भवत्वेवम्, को दोष इति चेत् ? नीलादौ तथा अनीलादिसमारोपः स्यात् । तन्निश्चयान्नेति चेत; इदमत्र चिन्त्यते-किम् अनुभवात , उत
२० उत्तरविकल्पाद्वा ? आद्यविकल्पः (ल्पे) अनुकूलमाचरसि 'स्वार्थानुभवस्य' इत्याद्यनिवारणा-[त] । द्वितीये अन्तराले समारोपप्रवेशे निश्चयो दुर्लभः । अथ अनुभवो हठान्निश्चयमुपजनयति;[5] अनीलवासना अनीलसमारोपम्[6] इति काचपच्यम् ।

किंच, क्षणिकनिश्चयमपि स[6] तथोपजनयेत । असामर्थ्यान्नेति चेत; नीलादावपि तदस्तु । तत्र सामर्थ्यं नान्यत्रे वि (ति) कल्पनायां **दृष्टेः** सांशत्वे मे (त्वमने) कान्तं प्रतिवहति ।
२५ तदाह-**दृष्टेः खण्डशः** नीलादौ न क्षणक्षयादौ **पाटवं** निश्चयोपजन[न]सामर्थ्य**मादि**र्यस्य अभ्यासादेः तस्य **संभवे अनेकान्तप्रसङ्गात्** कारणात् **तथा** तेन खण्डश इति प्रकारेण **अर्थोपलब्धिः** अर्थदृष्टिः **किन्न प्रतिपद्येत** स्वीक्रियेत तो(यतः)अस्वीकारात् **शब्दपुद्गलस्य श्रुतिर्न स्यात्** । किंभूतस्य ? **अनुपात्तस्पर्शाद्यात्मनः** अनुपात्तः सन्नपि अगृहीतः स्पर्शाद्यात्मा यस्य इति ।

(१) 'तदपपत्तेः' इति पुनर्लिखितमिव भाति । (२) "निश्चयारोपमनसोर्बाध्यबाधकभावतः ।"-प्र० वा० ३।४८ । (३) 'न' इति निरर्थकमत्र । (४)सांख्याभिमतप्रधानादिविकल्पस्य । (५)हठाज्जनयेदिति । (६) अनुभवः ।

प्रकृतोपसंहारमाह–**तन्न** इत्यादिना । यत एवं **तत्तस्मादयं** खण्डशः प्रतिपत्तिलक्षणः **अपराधो** दोषो **न विकल्पानामेव** किन्तु दृष्टेरपि इति भावः । **यतः** तेषामेवापराधात् [(2)] **दृष्टस्य अर्थस्य अखिलो गुणोदृष्ट एव इत्येकान्तः शोभेत** ।

ननु शब्दरूपादीनां पुद्गलद्रव्यधर्मत्वाऽविशेषेऽपि शब्दस्यैव ग्रहणं न रूपादीनाम् इति कुतोऽयं विभागः ? तथा,[५६०ख] सहोपलम्भनियमाभावेऽपि च तादात्म्यमिति कुतः ? ५ इति चेत् ; अत्राह–**द्रव्याणाम्** इत्यादि ।

**[द्रव्याणामुपलम्भश्च स्वीयैरुद्भूतवृत्तिभिः ।**
**न गुणैस्तेजोद्रव्यादेर्यथानुद्भूतवृत्तिभिः ॥१६॥**

**नहि शब्दादीनामेकसामग्र्यधीनानामविनिर्भागवृत्तिभाजां सहोपलम्भनियमाभावेऽपि परस्परमतादात्म्यैकान्तः परमाणुस्थूलाकारवत् । तदन्यतरापाये अर्थस्यानुपपत्तेः ।** १० **व्यतिरेकैकान्ते पृथक्सिद्धिप्रसङ्गात्, सम्बन्धासिद्धेः । अभेदैकान्ते सहोपलम्भनियमात् व्यर्थमिन्द्रियनानात्वम् । कथञ्चित्तादात्म्येऽपि रूपादेः सन्निहितस्य तत्कारणान्तरसाकल्येऽपि सहानुपलम्भः उद्भूतगुणत्वात् । तद्यथा तजोद्रव्यस्य क्वचित् कदाचित् उद्भूतस्पर्शस्योपलम्भेऽपि न रूपोपलब्धिः तदनुद्भूतवृत्तेः, आलोकस्य रूपोपलब्धौ स्पर्शानुपलक्षणम् । क्वचिदुभयोपलब्धिः उद्भूतवृत्तेरेव यथा अग्निरिति ।** १५ **पार्थिवादीनां गन्धाद्युपलब्धावपि अयं क्रमः लक्ष्यते । तथा पुद्गलस्य रसाद्यात्मनोऽपि शब्दात्मनोपलब्धिः तदुद्भूतिनियमात् । विचित्रा हि परिणामवृत्तिः । स्वसंवित्तेरपि... अन्यतो व्यावृत्त्या प्रतिभासनात् । सकृत्...]**

**द्रव्याणाम् उपलम्भो दर्शनं गुणैः** सह न केवलानाम् । किंभूतैः ? इत्याह–**स्वीयैः** आत्मीयैः न द्रव्यान्तरगतैः । अनेन [(3)] मुक्तिदशायां विशेषगुणरहितस्य आत्मनोऽनुप- २० लम्भं दर्शयति । पुनरपि किंभूतैः ? इत्याह–**उद्भूतवृत्तिभिः उद्भूता** पुरुषमात्रस्य ज्ञानग्रहणयोग्या **वृत्तिः** परिणामो येषां तैः इति । **च** शब्दो भिन्नप्रकमः, अस्यानन्तरं द्रष्टव्यः । नानुद्भूतवृत्तिभिः; अत आह–**नानुद्भूतवृत्तिभिः** । अत्र निदर्शनमाह–**यथा** इत्यादि । **तेजोद्रव्यादेः** आदिशब्देन गन्धद्रव्यादिपरिग्रहः स्तोता (श्रोत्रा) दिभिः उद्भूतगुणैरुपलम्भ इति उद्भूतवृत्तिः (वृत्तिभिः) नानुद्भूतवृत्तिभिः इति, अनेन 'सहोपलम्भनियमात्' इत्यस्य व्यभिचार- २५ माह ।

**नहि** इत्यादिना एतदेव दर्शयति–**शब्दा आदिर्येषां** रूपादीनां तेषाम् । किंभूतानाम् ? **एकसाम्यधीना[ना]म् अविनिर्भागवृत्तिभाजा(जां)सहोपलम्भनियमाभावेऽपि परस्परमतादात्म्यैकान्तो** भेदैकान्तो **नहि** । केषामिव ? इत्याह–**परमाणुस्थूलाकारवत्** । परमाणवश्च स्थूलाकारश्च तेषामिव तद्वद् इति । **स्थूलाकारोपलम्भेऽपि न तदारम्भकपरमाणूपलम्भः** ३०

(१) निर्विकल्पकस्यापि । (२) "तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः ।"–प्र०वा० ३। ४४ ।
(३) वैशेषिकाभिमतस्य । (४) उपलम्भाविषयत्वम् ।

तथापि न तद्भेदैकान्तः । अनेन शब्दपुद्गलस्य शब्दरूपादीनां भेदैकान्तसाधने सहोपलम्भनियमाभावस्य व्यभिचारं दर्शयति । परमाणूनामुपलम्भद(म्भाभावाद्) भाव इत्येके[१] [५६१क]स्थूलाकारस्य[२] इत्यपरे तत्कथं तैर्व्यभिचारो हेतोः इति; तत्राह–**तदन्यतरापाय** इत्यादि । तयोः परमाणुस्थूलाकारयोः अन्यतरः, तस्यापाये **अर्थस्य** घटादे**रनुपपत्तेः** तद्वत् न तेषामतादात्म्यैकान्तः । तथाहि–स्थूलाकारापाये परमाणव एव, तेषामनुपलम्भेन असत्त्वम्, परमाणू(ण्व)पाये स्थूलाकारमात्रमनवयवं[३], तथा सति एकदेशचलनादिप्रसङ्गः । दृश्याः भंगाः(भागाः) सन्ति नान्य इति चेत्; तर्हि प्रागसतां मेघादीनां कुतः प्रादुर्भावः ? अहेतुक इति चेत्; सर्वः तथा स्यादिति हेतुफलभावविलोपः । निषिद्धोऽद्वैतादिवादः । सूक्ष्मपार्थिवादिभागेभ्यः इति चेत्; अनुकूलमाचरसि, परमाण्वनिषेधात् । स्वयं वा[ऽ]दृश्यपरमाणुभ्यो दृश्यपरमाणूत्पादमभ्युपगम्य ते तः(तेभ्यः) स्थूलोत्पादं कथं नेच्छेत ? ।

स्यान्मतम्, अस्तु सूक्ष्मं कार्यकाले कारणविलयात्; उक्तमत्र अहेतुकत्वप्रसङ्गादिति । ततः सूक्तम्–**परमाणुस्थूलाकारवदिति** ।

ननु परमाणुभ्यः स्थूलमन्यदेव, कारणात् कार्यस्य अन्यत्वात्, अतः तेषामपि पक्षीकरणात् न तैर्व्यभिचार इति चेत्; अत्राह–**व्यतिरेकैकान्ते** भेदैकान्ते **पृथक्सिद्धिप्रसङ्गात्** अन्यत्र लौकिके देशे अवयवानाम् अन्यत्र अवयविनः सिद्धिः उपलब्धिः पितापुत्रवत्, तस्याः प्रसङ्गात् । कुतः ? इत्याह–**सम्बन्धासिद्धेः** समवायि(य)निषेधात् । तन्न नैयायिकपक्षो युक्तः ।

सांख्यपक्षः स्यादिति चेत्; अत्राह–**अभेदैकान्ते** परमाणुस्थूलाकारयोः [५६१ख] 'एकत्वैकारयोः'[४], एकत्वैकान्ते **सहोपलम्भनियमात्** कारणात् **व्यर्थम् इन्द्रियनानात्वम्** । एवं सत (एवं न) परमाणूपलम्भः, तत्कथं तदभेदैकान्तः ? तथापि तदुपलम्भकल्पने चक्षुषा रूपोपलम्भे रसादीनामुपलम्भ इति व्यर्थमिन्द्रियनानात्वमिति । कथंचित्पक्षे कुतोऽयं न दोष इति चेत् ? अत्राह–**कथंचित्तादात्म्येऽपि** न केवलं विपर्यये **रूपादेः** अपिशब्दः अत्रापि द्रष्टव्यः, न केवलं परमाणुतदाकारयोः, **सन्निहितस्य सहानुपलम्भः** । कस्मिन् सत्यपि ? इत्याह–**तत्करणान्तरसाकल्येऽपि तत्कारणं** रूपज्ञानकारणं चक्षुः तदन्तरं रसनादिः तस्य **साकल्येऽपि** । कुतः ? इत्याह–**उद्भूतगुण** इत्यादि । ततः स्थितम्–**परमाणुस्थूलाकारवत्** इति । यदि वा, शब्दादीनां सहोपलम्भनियमाभावे परस्परम् एकसामग्र्यधीनानाम् माभूताद(माभूद्)तादात्म्यैकान्तः शब्दोपलम्भे रूपाद्यनुपलम्भात्, अभावैकान्तस्तु भवेदिति चेत्; अत्राह–**परमाणुस्थूलाकारवदिति** । स्थूलाकारोपलम्भे परमाणुवत् शब्दोपलम्भे रूपाद्यनुपलम्भेऽपि 'नाभावः' इत्यध्याहारः । कुतः ? इत्याह–**तदन्यतरापाये** सदा (स चाऽ)सावन्यतरश्च शब्दो रूपादिश्चान्तस्योपाये(श्च तस्यापाये) **अर्थस्य** चेतनस्ये[तरस्य] **वानुपपत्तेः** । तथाहि–प्रतीयमानस्य शब्दस्य अभावे घटादौ कः समाश्वासः ? अनुमीयमानस्य तस्य तत्र रूपादेरभावे स्थूले परमाणुषु

(१) चार्वाकाः । (२) अभाव इति बौद्धाः । (३) अवयवशून्यः निरंश इति यावत् । (४) 'एकत्वैकारयोः' इति व्यर्थमत्र पुनर्लिखितम् ।

नाश्वासः। तदुक्तम्-"अनुपवनं गत्यापि मूर्तं मतम्" [सिद्धिवि० ११।१] इति [५६२क]।
भवन्तु शब्दे रूपादयोऽपि तत्र भिन्ना इति चेत्; अत्राह-**व्यतिरेकैकान्त** इत्यादि। अव्यतिरेकैकान्ते दोषमाह-**अभेदैकान्त** इत्यादि। शेषं पूर्ववत्। उदाहरणं दर्शयति **तद्यथा** इत्यादिना। **तेजोद्रव्यस्य क्वचिद्**वातान्धकारपूरितापवरकादौ **का(कदा)चिद्** भैष्मरात्रिसमये[2] **उद्भूतस्पर्शस्य** उद्भूतः स्पर्शो यस्य तस्य **उपलम्भेऽपि न रूपोपलब्धिः**। कुतः? इत्याह-**तदनुद्भूतवृत्तेः** तस्य रूपस्य याऽनुद्भूतवृत्तिः तस्या इति। तथा, **आलोकस्य** प्रदीपाद्यालोकस्य **रूपोपलब्धौ स्पर्शानुपलक्षणम्**। **क्वचिदुभयोपलब्धिः** स्पर्शरूपोपलब्धिः। कुतः? इत्याह-**उद्भूतवृत्तेरेव यथा अग्निरिति**।

ननु यथा उभयोपलब्धिः उद्भूतवृत्तेरुपदर्शिता तथा उभयानुपलब्धिः विपर्ययात्[3] कस्मान्न दर्शिता? विषयाभावादिति चेत्; न; नायनरश्मिरूपस्य विषयस्य भावात्। नैतदस्ति, यतः सर्वविशेषगुणानुद्भूता व (तौ च) एवं भावस्य अनुद्भूतसकलगुणस्य घटादेः सर्वत्र भाव इति सांख्यदर्शनम्। नायनरश्मिषु अनुमानात्[4], अन्यत्र विपर्ययात् असमानमिति चेत्; न; तन्निषेधात् इत्यभिप्रायः तथावदतः।

ननु पृथिव्यां क्वचित् सन्नपि गन्धो नोपलभ्यते यथा घटे, एवं रूपादयोऽपि वक्तव्याः। तथा सर्वत्र अप्सु गन्धः, तेजसि गन्धरसौ, वायौ रूपरसगन्धाः, तत्र का वार्ता इति? जलादौ गन्धाद्यभाव इत्येके। तत्राह-**पार्थिव** इत्यादि। प्रत्येकम् **आदि**शब्दः सम्बध्यते **पार्थिवादिः गन्धादिरिति**। ततोऽयमर्थः-पृथिव्येव **पार्थिवम् आदिर्येषाम्** [५६२ख] अबादीनां तेषां **गन्धादयः** तेषामुपलब्धावपि न केवलमनुपलब्धौ **क्रमोऽयमनन्तरोक्तो लक्ष्यते**। तथाहि-पृथिव्याः गन्धादयो योगिनां प्रत्यक्षा एव उद्भूतत्वात्, अस्मादृशाम् उभयथा उद्भूतानुद्भूतवृत्तित्वात्। न च यदानुद्भूतिः तदा तदभावः; चरमक्षणनिषेधात्[6], रसात् रूपाद्यनुमानाभावप्रसङ्गाच्च। जलादौ योगिनामेव गन्धाद्युपलब्धिः, अस्मादृशां विपर्ययः अनुद्भूतत्वात्। अस्मादृशः प्रति पार्थिवगन्धादिग्रहणं परं प्रति दृष्टान्तार्थम्। यथा सतामपि पार्थिवगन्धादीनाम् अनुद्भूतिः तथा अबादीनामपि। तत्र सद्भावे किं प्रमाणमिति चेत्? स्पर्शवत्त्वं ब्रूमः।

एवं दृष्टान्तं व्याख्याय दार्ष्टान्तिके योजयति **तथा** इत्यादिना। **तथा पुद्गलस्य** प्रकृतस्य **रसाद्यात्मनोऽपि** शब्दात्मनोऽपि **शब्दात्मनोपलब्धिः**। कुतः? इत्याह-**तद्** इत्यादि। **तस्य** शब्दात्मन **उद्भूतिनियमात्**।

ननु पृथिव्यामिव जलादौ गन्धादिसद्भावे क्वचित्तज्जातीये तदभिव्यक्तिः, हेमसजातीये पावके उष्णताव्यक्तिवत्, न चैवम्, इति चेत्; अत्राह-**विचित्रा हि** इत्यादि। **विचित्रा**

(१) वायुशून्य। (२) भीषणरात्रिकाले। (३) अनुद्भूतवृत्तेः। (४) अनुद्भूतरूपस्पर्शसिद्धिः। (५) नोपलभ्यन्ते।। (६) रूपादिप्रवाहस्वीकारात्। (७) यदि अनुद्भूतिकाले अभावस्तदा। (८) गन्धाद्यभिव्यक्तिः स्यात्।

नानारूपा हि(र्य)स्मान् वृत्तिः वर्त्तनं परिणामानाम् । तथाहि–क्वचित् तत्र तज्जातीये च गुणाभिव्यक्तिः, यथा सर्वत्रात्मनि ज्ञाना(ज्ञाना)भिव्यक्तिः । क्वचित् तत्रानभिव्यक्तिः तज्जातीये व्यक्तिः उक्तवत् । क्वचित् तत्र तज्जातीये वा किं व्यक्ति(वाऽनभिव्यक्तिः) परमतेऽपि आत्मादिविभुत्ववत् । आश्रयादर्शनात्तदर्शनमिति चेत् ; न ; शब्दाग्रहणप्रसङ्गात्[३] । यस्य च पुद्गलविकारा[ः] पृथिव्यादयः

५ तस्य [५६३क] जलादिशशर्भीये(सजातीये)पार्थिवविकारे गन्धाद्यभिव्यक्तिः सुलभैव इति सर्वं सुस्थम् । सौगतं प्रति तत्प्रसिद्धं निदर्शनमाह–**स्वसंवित्तेरपि** इत्यादि । चर्चि[तं]तदत्रैव । कुतः तदसंभवः ? इत्यत्राह–**तस्याः** स्वसंवित्तेः **अन्यतो** ग्राह्याद्याकाराद् या [**व्या**]**वृत्तिः** तया **प्रतिभासनात्** । सिद्धं फलं दर्शयन्नाह–'**सकृत्**' इत्यादि । सुगमम् ।

यत एव परिणामसिद्धिः अत एव सि[द्धम् ; इ]त्याह–**सामान्यस्य** इत्यादि ।

१० **[सामान्यस्याभिलाप्यत्वादेः स्वलक्षणविपर्ययात् ।**
**यदुक्तं तत्प्रतिव्यूढम् अनेकान्तात्मसाधनैः ॥१७॥**

यत्पुनः···न हि सदृशपरिणामसामान्यं प्रतिपद्द्धुं शक्यम् । अतदात्मनः स्वलक्षणस्य स्वाकारज्ञानार्थक्रियायामनुपयोगात् । न हि संवित्तौ···परस्पर···। तदेतत् सामान्यमवस्तु अभिधेयत्वात् अर्थक्रियाऽसमर्थत्वादित्यादि तत्साधनं परिणामसाधनेन

१५ प्रत्युक्तम् । सदृश···स्थूलस्य···असंभावितैकात्मनः संविदः कथञ्चित् प्रत्यक्षत्वात् । क्षणिकपरिमण्डलादिस्वलक्षणस्य चाक्षुषत्वे रसाद्यात्मनापि चाक्षुषत्वं स्यात् । शेषेन्द्रियसामर्थ्यं प्रमाणान्तरवत् पारम्पर्येण समारोपव्यवच्छेदार्थं न विरुध्येत,तन्निर्णयविशेषोपपत्तेः]

**अभिलाप्यत्वम् आदि**र्यस्य वस्तुनः तत्त्वाभासवाच्यत्वादेः स तथोक्तः तस्मात् । हेत्वन्तरमाह–**स्वलक्षणविपर्ययात् स्वलक्षणम्** अर्थक्रियाकारित्वं [**तद्विपर्ययः**] तस्माच्च

२० **सामान्यस्य** यदवस्तुत्वं परेण **उक्तम् तत्प्रतिव्यूढम्** निरस्तम् । कैः ? इत्याह–**अनेकान्तात्मसाधनैः** ।

कारिकार्थमाह–**नहि** इत्यादिना । भवत(तु)सदृशपरिणाम एव सामान्यं तदपि परसमानमिति चेत् ; अत्राह–**यत्पुनः** इत्यादि । **नहि प्रतिपद्द्धुं शक्यम्** दर्शनभ्रान्ततापत्तेः । स्वलक्षणमेव प्रत्यक्षमिति चेत् ; अत्राह–**अतदात्मनः** समानपरिणामस्वभावरहितस्य **स्वलक्ष-**

२५ **णस्य स्वाकारज्ञानं** स्वलक्षणाकारज्ञानं तदेव **अर्थक्रिया तस्या ननु** प्र(तस्याम् **अनुप**)-**योगात्** । कुतः ? इत्याह–**नहि संवित्तौ** इत्यादि । सुगमम् । एतदपि कुतः ? इत्याह–**परस्पर** इत्यादि । परपक्षमुपन्यस्यति दूषयितुं **तदेतत् सामान्यम्** इत्यादि । **तदेतत्** सदृशपरिणामलक्षणं **सामान्यम् अवस्तु** । कुतः ? इत्याह–**अभिधेयत्वात्** इत्यादि । अनेन '**अभिलाप्यादेः**' इति व्याख्यातम् । '**स्वलक्षणविपर्ययात्**' इति कथयन्नाह–**अर्थक्रियाऽसमर्थ-**

(१) शब्दे यथा रूपाद्यनभिव्यक्तिः पुद्गलजातीये घटादौ तदभिव्यक्तिरिति । (२) आत्मादिविभुत्वादेः । (३) तदाश्रयस्य आकाशस्य अप्रत्यक्षत्वात् ।

त्वादि'त्यादिकं परकीयं भाषितं **परिणामसाधनेन**[५६३ख]**प्रत्युक्तम्** निरस्तं **तत्साधनम्** । कुत इति चेत् ? अत्राह–**सदृश** इत्यादि । तदपि कुतः ? इत्याह–'**स्थूलस्य**' इत्यादि । कथंचिदुपलब्धिं साधयन्नाह– [इ–] **संभावितैकात्मनोऽपि** संभावित एकः अखण्ड आत्मा स्वभावो यस्याः[तस्या] अपि । कस्याः ? इत्याह–**संविदः** संवित्तेः । **कथंचित्** चेतनादिरूपेण[न क्षण]क्षयादिना **प्रत्यक्षत्वात्** । क्षणक्षयादिनापि प्रत्यक्षत्वे दूषणमाह–**क्षणिक** इत्यादि । ५ **क्षणिकः परिमण्डलो** निरंशत्वलक्षण **आदि**शब्दात् स्वर्गप्रापणादिर्यस्य तत्तथोक्तं तच्च **तत्स्वलक्षणं** च इति, तस्य **चाक्षुषत्वे,** उपलक्षणमेतत् सर्वाध्यक्षसंवित्तीनाम् , § **रसाद्यात्मनापि चाक्षुषत्वं** नपलक्षणमेतत् सर्वाध्यक्षसंवित्तीनाम् , § **रसाद्यात्मनापि चाक्षुषत्वं** **स्यात्** । तथा[ऽ]प्रतीतिः, उभयत्र समानाः । शेषेन्द्रियवैफल्यं स्यादिति चेत् ; अत्राह–**शेषेन्द्रियसामर्थ्यं प्रमाणान्तरस्य** अनुमानस्येव **तद्वत् , समारोपव्यवच्छेदार्थम्** अनुमानसामर्थ्यं न विरुध्यते तथा चक्षुषा १० रूपवता रसादिके गृहीतेऽपि **न विरुध्येत** । यथा प्रत्यक्षेण नीलवत् क्षणिकत्वे प्रतिपन्नेऽपि तत्समारोपव्यवच्छेदार्थम् अनुमानसामर्थ्यं न विरुध्यते तथा चक्षुषा रूपवत् रसादिके गृहीतेऽपि तत्समारोपव्यवच्छेदार्थं शेषेन्द्रियसामर्थ्यं न विरुध्यते । कथम् ? इत्याह–**पारम्पर्येण** शेषेन्द्रियेभ्यो रसादिज्ञानं ततो विकल्पः तस्मात् समारोपव्यवच्छेदः । नहि शेषेन्द्रियमन्तरेण तज्ज्ञानं तदन्तरेण तद्विकल्पः । तदाह–**तन्निर्णय** इत्यादि । **तस्मात्** शेषेन्द्रियात(यात् तज् )- १५ ज्ञानाद्वा **निर्णयविशेषस्य उपपत्तेः** ।

अधुना अभिधेयत्वादीनां परसाधनानामनैकान्तिकत्वं दर्शयन्नाह–**स्वलक्षणे** इत्यादि । [५६४क]

**[स्वलक्षणेऽभिधेयत्वाद्यस्ति तेनाप्यसाधनम् ।**
**सामान्याभावतत्त्वादेः तदभावं तु साधयेत् ॥१८॥** २०

**चक्षुर्बुद्धेरतदाभासत्वेऽपि यदि स्वलक्षणं विषयः ; शब्दबुद्धेः किन्न स्यात् ? स्पष्टेतर...तन्न...तथा च प्रत्यक्षव्यक्तेः स्वलक्षणानां तत्त्वान्यत्वाभ्यामवाच्यत्वम् । तद्धेतुत्वे साधारणत्वात्सामान्यस्यावस्तुत्वे स्थूलस्य...एतेन...अर्थक्रियाम्...सङ्केत...]**

**स्वलक्षणे अभिधेयत्वादि** आदिशब्दाद् वस्तुनः तत्त्वा[न्यत्वा]भ्यामवाच्यत्वादिपरिग्रहः, **अस्ति** विद्यते **तेनापि** न केवलम[न]न्तरन्यायेन **असाधन**मभिधेयत्वा[द्य]- २५ लिङ्गम् । कस्य ? इत्याह–**सामान्य** इत्यादि । **सामान्याभावतत्त्वम् आदि**र्यस्य अवयव्याद्यभावस्य, तस्य व्यभिचारादिति मन्यते । तस्यापि पक्षीकरणाददोष इति चेत् ; अत्राह–**तु** शब्दः शिर[:]कम्पे । **तदभावं** स्वलक्षणाभावं किं **तु साधये[त्]** तत्साधने सर्वव्यवहारविलोप इति भावः ।

कारिकायाया(कां)व्याख्यातुमाह–**चक्षुर्बुद्धे** इत्यादि । **अतदाभासत्वेऽपि** अस्वलक्षणा- ३० भासत्वेऽपि **यदि स्वलक्षणं विषयः** शब्दद्धेः(शब्दबुद्धेः) **किं न स्यात्** भवेदेव स्वलक्षणं विषयः ।

(१) अन्यथा क्षणक्षयानुमानवैयर्थ्यं स्यात् । (२) § एतदन्तर्गतः पाठो द्विर्लिखितः ।

तत्र युक्तम्–*"शब्देनाव्यापृताक्षस्य" इत्यादि । स्वलक्षणे शाब्देन्द्रियज्ञानयोः न प्रतिभासभेदोऽस्ति, तथापि अभ्युपगम्य उच्यते **स्पष्टेतर** इत्यादि ।

प्रकृतमुपसंहरन्नाह–**तत्र** इत्यादि । परमपि परकीयहेतुं तथाविधं दर्शयन्नाह–**तथा च** इत्यादि । [तथा च ते]नैव च प्रकारेण प्रत्यक्षेण विपर्यीकृता स्थूलाकारा व्यक्तिर्विशेषः **प्रत्यक्षव्यक्तिः** तस्याः सकाशात् **तत्त्वान्यत्वाभ्यामवाच्यत्वम्** । केषाम् ? इत्याह–**स्वलक्षणानाम्** । 'तदहेत(तु)त्वे' इत्यादिना हेत्वन्तरं पुनरपि दूषयन्नाह–**साधारणत्वात् सामान्यस्य अवस्तुत्वे** अङ्गीक्रियमाणे । किम् ? इत्याह–**स्थूलस्य** इत्यादि । अस्य अन्यत्रातिदेशं कुर्वन्नाह–**एतं ते** (एतेन इ)त्यादि । लिङ्गान्तरं दूषयति **अर्थक्रियाम्** इत्यादिना । पुनरपि लिङ्गान्तरं निराचष्टे–[५६४ख] **सङ्केत** इत्यादिना ।

एतदपि कुतः ? इत्याह–**स्वलक्षणम्** इत्यादि ।

**[स्वलक्षणमनिर्श्रेयमसन्निश्चितमित्यपि ।**
**मिथ्यार्थनिश्चयैकान्तात् किल तत्त्वं प्रपद्यते ॥१०॥**

**स्वलक्षणविषयं**···**व्यवस्थापयेत्** । **कथञ्च एतदुभयं तत्त्वं परमार्थतः असदर्थज्ञानाविशिष्टप्रत्ययग्राह्यत्वात् ? नन्वयम् असदर्थज्ञानस्वलक्षणेषु भवन् कथं सामान्याभावं साधयेत् ? साधयन् वा कथं स्वलक्षणाभावं न साधयेत् ? उभयत्र**···**अयमपरोऽस्य दोषोऽस्तु न पुनः स्वलक्षणेष्वस्तीत्येतावता प्रकृतं साधयेत् व्यभिचारात् ।]**

**स्वलक्षणं** परपरिकल्पितपरमाणुलक्षणम् **अनिश्चय(अनिश्रेय)**मविकल्पपरिच्छेद्यम् इति **असद**विद्यमानं **निश्चितमित्यपि मिथ्यार्थनिश्चयैकान्तात् किल तत्त्वं प्रपद्यते** सौगतः ।

कारिकां विवृण्वन्नाह–**स्वलक्षणविषयम्** इत्यादि **व्यवस्थापयेत्** इति पर्यन्तं सुगमम् । **कथं च ?** न कथंचिद् **एतत्** स्वलक्षणविषयमविकल्पकम् असत्सामान्यविषयं विकल्पज्ञानम् इत्युभयं तत्त्वं **परमार्थः** तः(र्थतः;) इत्याह–**असदा(द)र्थ** इत्यादि (?) दृष्टान्तः । नन्वेतन्निदर्शनमसिद्धम्, सामान्यस्याप्यभावे यस्मात् असदर्थज्ञानाविशिष्टा(ष्ट)प्रत्ययग्राह्यत्वादित्ययं हेतुः, स च स्वलक्षणे सत्यप्यस्ति, तदभावे न किञ्चित् स्यात्; तदाह–**अनन्वयम् (नन्वयम्)** इत्यादि । **अयम्** अनन्तरोक्तो हेतुः **असदर्थज्ञानस्वलक्षणेषु** असन्नर्थो यस्य तत्तथोक्तं ज्ञानं येषु तानि तथोक्तानि स्वलक्षणानि तेषु **भवनु(न्) कथं सामान्याभावं साधयेत् ? साधयन् वा** सामान्याभावं **कथं** तत्**स्वलक्षणाभावं न साधयेत्** । कुतः ? इत्यथाह–**उभयत्र** इत्यादि इति नैयायिकादिः ; अत्र उत्तरमाह–**अयमपरोऽस्य** सौगतस्य नानेकान्तवादिनः **दोषोऽस्तु न पुनः**

---

(१) "यच्छाक्षम्–शब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात् । अर्थस्य दृष्टाविवेति"–अपोहसि० पृ० ६ । उद्धृतोऽयम्–"शब्देनाव्यापृताक्षस्य···अर्थस्य दृष्टाविव तदनिर्देशस्य वेदकम् ॥"–सन्मति० टी० पृ० ५२५ । (२) 'समानत्वात्' इति सम्बन्धः ।

**स्वलक्षणेष्वस्ति इत्येतावता प्रकृतं** सौगतं **साधयेत्** । कुतः ? इत्याह-**अव्यभिचारात्** जैनस्य उभयभावं साधयतीति भावः ।

न च जैनप्रसिद्धस्य सामान्यस्य असदर्थज्ञानाविशिष्टप्रत्ययग्राह्यत्वम् ; इत्याह-**स्थूल** इत्यादि । [५६५क] ।

**[स्थूलस्यैकस्य ज्ञानस्य मिथ्या तत्त्वव्यवस्थितिः ।** ५

**कथं मिथ्याविकल्पैः स्यात् स्वांशमात्रावलम्बिभिः ॥२०॥**

**इन्द्रियार्थविकल्पबुद्धिः परमार्थतः स्थूलैक[तत्त्वम् ] इन्द्रियार्थसन्निकर्षमाश्रित्य, बहिरर्थग्राहित्वात् स्वयं ग्राह्याद्याकारां स्वसंवित्तिं वा व्यवस्थापयन्ती कथं भ्रान्तिर्नाम ? सामान्यस्य च···]**

**स्थूलस्यैकस्य** घटादितत्त्वस्य **ज्ञानं** तया(स्य) **मिथ्यातत्त्वव्यवस्थितिः** । १० **कथं मिथ्याविकल्पैः स्यात्** । किंभूतैः ? इत्याह-**स्वांश** इत्यादि । निर्विकल्पनिषेधात न तैः स्यादिति ।

कारिकां विवृण्वन्नाह-**इन्द्रियार्थ** इत्यादि । **विकल्पबुद्धिः** सामान्यबुद्धिः **कथं भ्रान्तिर्नाम ?** किं कुर्वती ? इत्याह-**व्यवस्थापयन्ती परमार्थतः** । किम् ? इत्याह-**स्थूलैक [तत्त्वम्]** इत्यादि । कुतः ? इत्याह-**इन्द्रियार्थसन्निकर्षमाश्रित्य** बहिरर्थापेक्षया इदमुक्तम् । अन्तरङ्गा- १५ पेक्षया आह-**स्वसंवित्तिम्** आत्मसंवेदनं साध्य(ध्यं) **व्यवस्थापयन्ती कथं भ्रान्तिर्नाम ?** किंभूताम् ? इत्याह-**ग्राह्य** इत्यादि । न तत्त्वतः तथा स्वसंवित्तिः, केवलं भ्रान्त्या तथावभासते, तदुक्तम्-*"**अविभागोऽपि बुद्ध्यात्मा**" [प्र०वा० २।३५४] इत्यादि । **बहिरर्थग्राहित्वात्** कारणात् । किम् ? इत्याह-**स्वयम्** इत्यादि । परत्र विपर्ययं दर्शयन्नाह-**सामान्यस्य च** इत्यादि । २०

तदेव दर्शयन्नाह-**प्रत्यक्षम्** इत्यादि ।

**[प्रत्यक्षं मतं न स्यात् कथं सामान्यगोचरम् ।**

**अर्थाकारं समं पश्यत् कार्यकारणस्वार्थयोः ॥२१॥**

**विषयविषयिणोः सदसत्सारूप्यैकानुभवलक्षण···तत्प्रत्यक्षबुद्धेः तत्सारूप्यव्यतिरेकेण यदि अर्थदर्शनं चेत् ; तेन तद्व्यवधानात् सन्निकर्षादिवत् साधकतमत्वं मा भूत्।** २५ **तत्पुनः सारूप्यं संवित्तेरेवानुभूतं रूपं नार्थस्येति कुतः अर्थोपलब्धिरन्यत्रोपचारात् । न चैतत् कार्यकारणभाव एव स्यात् यतः तत्रैव तद्भावात् समकालभाविनो भविष्यतो वा दर्शनं न भवेत् । न चैवं यमलकवदविसंवादो न स्यात् । तदेतत् ज्ञानं त्रिकालविषयसारूप्यं कुतः कारणस्यैव विनियम्येत यतः विकल्पज्ञानवत् सामान्यगोचरं न स्यात् । न चैकरूपेण अनेकार्थानुकरणं विरुद्धम् , संचितालम्बनतोपगमात् पञ्चविज्ञानकायानाम् ।** ३०

---

(१) 'स्वांशमात्रावलम्बिभिः' इति भावः । (२) ग्राह्यग्राहकाद्याकाराम् । (३) ग्राह्याद्याकारा । (४) 'विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ।' इति शेषः ।

**कायग्रहणात् प्रत्येकं संचितालम्बनत्वमेव इति चेत्; न; स्थूलैकप्रतिभासाविरोधात्, सन्तानान्तरवत् ]**

**प्रत्यक्षं सामान्यगोचरं कथं मतम्** अभ्युपगतं सौगतस्य **न स्याद्** भवेदेव। किं कुर्वत ? इत्याह–**पश्यतु(न)** किम ? इत्याह–**अर्थाकारं समं** सदृशम। कयोः ? **स्वार्थयोः।**
५ किंभूतयोः ? इत्याह–**कार्यकारणयोः** यथासंख्येन ।

कारिकां विवृण्वन्नाह–[विषय]विषयिणोः इत्यादि । **सदसत्सारूप्यैकानुभवलक्षण-** पर्यन्तं गतार्थमसकृत । अस्यानभ्युपगमे दूषणमाह–**तत्प्रत्यक्षबुद्धिः(द्धेः)** इत्यादि । **तस्य** स्वलक्षणस्य या **प्रत्यक्षबुद्धिः** तस्याः **तत्सारूप्यव्यतिरेकेण यदि अर्थदर्शनं** निराकारेण ज्ञानेन योगमताबलाच्चेद् अर्थसाक्षात्करणं **तेन** तद्बलेन **तद्वद्य(तद्वच्य)वधानात्** [५६५ ख] **सन्नि-**
१० **कर्षादिवत् साधकतमत्वं मा भूत्** , ततः किं सारूप्यकल्पनया ? सारूप्यमेव साधकतममिति चेत ; अत्राह–**तत्पुनः** सारूप्यं ज्ञानार्थयोः सादृश्यं **संचित्तोरेव(संविचेरेव) रूपं** स्वभावः **अनुभूतम्** । एवकारफलं दर्शयति–**नार्थस्य** तद्रूपमनुभूतमिति । कुतः ? इत्याह–**कुतः** इत्यादि । **कुतः** प्रमाणात परस्य **अर्थोपलब्धिः** न कुतश्चित **अन्यत्रोपचारात्** । तत एव तदुपलब्धिर्यथा चैत्रमित्रयोः चैत्रदर्शनाच्चैत्र[सदृशे मित्रे] दर्शनोपचारः ।

१५ एतदुक्तं भवति–उभयदर्शनात सारूप्यप्रतिपत्तिर्यथा चैत्रमित्रयोः, न च परस्य अर्थदृष्टिः तत्कथं तद्गतसारूप्यप्रतीतिः उपचारात ? इति त्वभ्युपगम्य उक्तम, न भावतः । नहि अदृष्ट-मित्रस्य दर्शनमुपचारतः चैत्रे भवति । तदुपलब्धिः उपाचारादेव तु इति चेत ; अत्राह–**न चैतत्** सारूप्यं **कार्यकारणभाव एव स्यात्** अपि तु तदभावेऽपि यमलकयोरिव स्यादिति भावः, **यतः तत्रैव तद्भावात् समकालभाविनो**ऽर्थस्य **भविष्यतो वा दर्शनं न भवेद्** भवेदेव । तथा च
२० प्र ज्ञा क र स्य कुतो भाविन्येव वर्त्तनात प्रत्यक्षं प्रमाणं स्यात ?

ननु अकारणेन सारूप्ये अविसंवादो न स्यादिति चेत ; अत्राह–**न चैवम् अविसंवादो न स्यात्** भवेदेव **यमलकवत्** ।

प्रकृतमुपसंहरन्नाह–**तद्** इत्यादि । यत एवं **तत्तस्माद् एतन्नी**लाद्याकारं **ज्ञानं त्रिकाल-विषयसारूप्यं** त्रयः कालो विषयो यस्य सारूप्यस्य तद्विभूतसम्भव (तत्तथोक्तम) **कुतः कारणस्यैव**
२५ **विनियम्येत यतो** [५६६ क] विनियमाद् **विकल्पज्ञानवत् सामान्यगोचरं न स्यात्** भवे-देव । कथमेकस्य त्रिकालगोचरार्थानुकरणमविरुद्धमिति चेत ? अत्राह–**न चैकरूपेण** एकस्व-भावेन ज्ञानेन **अनेकार्थानुकरणं विरुद्धम्** । कुतः ? इत्याह–**संचितालम्बनतोपगमात्** । **संचिता[ः]** सन्निवेशविशेषविशिष्टाः परमाणव **आलम्बनं** येषां तेषां भावः **तत्ता** तस्या **उप-गमात्** । केषाम् ? इत्याह–**पञ्चविज्ञानकायानाम्** चक्षुरादिज्ञानसमूहानाम् *"**संचिता-**

(१) योगाचारस्य । (२) परमार्थतः। (३) मित्रम् अजानतः पुरुषस्य । (४)सहजातयोः । (५) "ततो भाव्यर्थविषयं प्रमाणान्तरगोचरम् । प्रमाणमध्यारोपेण व्यवहारावबोधकृत् ॥"–प्र० वार्तिकाल० पृ० ५ । (६) अकारणभूतेन अर्थेन ।

**लम्बनाः पञ्च विज्ञानकायाः**" इति राद्धान्तात् । एवं मन्यते–यथैकज्ञानम् समानकालमनेकमर्थमनुकरोति तथा भिन्नकालमपि इति निराकृतमेतत्–*"**वर्त्तमानमात्रवृत्तिः अक्षाणाम्**" इति[2] ।

ननु ज्ञानसमूहः संचितालम्बनः, प्रत्येकं तु ज्ञानम् एकैकपरमाणुनिष्ठम् । तदाह–**कायग्रहणात्** इत्यादि । समूहाभिधानात् प्रत्येकं संचितालम्बनत्वमय(मेव) ज्ञानानाम् इत्येव(वं) ५ चेद्; अत्रोत्तरमाह–**न** इत्यादि । **न** इति परपक्षप्रतिक्षेपे । कुतः ? इत्याह–**स्थूलैकप्रतिभास(सा)विरोधात्** । निदर्शनमाह–**सन्तानान्तरवदिति** । शेषमत्र चिन्तितम् ।

सारूप्यवशादर्थग्रहणे दूषणान्तरमाह–**एकार्थ** इत्यादि ।

**[एकार्थसन्निकृष्टाक्षदृष्ट्यन्योऽन्यवीक्षणम् ।**
**अन्योऽन्याकारसंविक्त्वान्नो चेन्नैकार्थवीक्षणम् ॥२२॥** १०

सहैकार्थोपनिबद्धदृष्टीनां यथार्थानुकरणं तथा अन्योऽन्यानुकरणमवश्यम्भावि, ततोऽर्थोपलब्धिरिव अन्योऽन्योपलब्धिः विषयरूपतैव [यतो ग्रहणकारणम्] । नाकारणं [विषय इति चेत् ;] न तर्हि अर्थसारूप्यम्, सत्यपि तस्मिन् प्रामाण्यव्यभिचारात्, आलम्बनाभिमतात् कारणाच्च संवित्तिर्नैव विशेषान्तरं प्रतिलभते अन्यत्र तदाकारानुकरणात् । तत्पुनः नीलतयेव जडात्मनापि सुतरां सारूप्यम् । तज्जन्मसारूप्यलक्षणं व्यभिचरति १५ समानार्थदर्शननानैकसन्तानेषु संभवात्[4] । तदध्यवसायहेतुत्वं च[5] । क्वचित्…]

एकस्मिन् नर्त्तकीलक्षणे **अर्थे सन्निकृष्टानि** संसृष्टानि **अक्षाणि** यासां [**दृष्टीनां**] दर्शनानां तासाम् **अन्योऽन्यवीक्षणं** । कुतः ? इत्याह–**अन्योऽन्याकारसंवित्त्वात्**

(१) द्रष्टव्यम्–पृ० २५ टि० १० । (२)तुलना–"योग्यदेशस्थितेऽक्षाणां वृत्तिर्नातीतभाविनि । तदाश्रितं च विज्ञानं न कालान्तरभाविनि ॥"–प्र० वार्तिकाल० पृ० २४६ । (३) अत्रायं पूर्वपक्षः–"तस्माच्चक्षुश्च रूपं च प्रतीत्योदेति नेत्रधीः । (३।१५०) भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥ कार्यं ह्यनेकहेतुत्वेऽप्यनुकुर्वदुदेति यत् । तत्तेनाप्यत्र तद्रूपं गृहीतमिति चोच्यते ॥ (३।२४७-४८) अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपतां । तस्मात् प्रमेयाधिगतेः साधनं मेयरूपता ॥" –प्र० वा० ३। ३०५ । (४) "न तज्जन्म न ताद्रूप्यं न तद्व्यवसितिः सह । प्रत्येकं वा भजन्तीह प्रामाण्यं प्रति हेतुताम् ॥"–लघी० श्लो० ५८ । "तत्सारूप्यतदुत्पत्ती यदि संवेद्यलक्षणम् । संवेद्यं स्यात् समानार्थं विज्ञानं समनन्तरम् ॥"–प्र० वा० ३।३२४ । (५) पूर्वपक्षः–"अविकल्पमपि प्रत्यक्षं विकल्पोत्पत्तिशक्तिमत् । निःशेषव्यवहाराङ्गं तद्द्वारेण भवत्यतः ॥"–तत्त्वसं श्लो० १३०६ । (६) "न केवलं विषयबलात् दृष्टेरुत्पत्तिः अपि तु चक्षुरादिशक्तेश्च । विषयाकारानुकरणाद् दर्शनस्य तत्र विषयः प्रतिभासते न पुनः करणम् तदाकारानुकरणादिति चेत्तर्हि तदर्थवत् करणमनुकर्तुमर्हति न चार्थं विशेषाभावात् । दर्शनस्य तज्जन्मरूपाविशेषेऽपि तदध्यवसायनियमाद् बहिरर्थविषयत्वमित्यसारम् ; वर्णादाविव उपादानेऽप्यध्यवसायप्रसङ्गात् ।" –अष्टश०,अष्टस० पृ० १८८। प्रमेयक० पृ० १०८ । सम्मति० टी० पृ० ५१० । "ताद्रूप्यस्य समानार्थैः तदुत्पत्तेः इन्द्रियादिभिः तद्द्वयस्य समानार्थसमनन्तरप्रत्ययैः, तत्त्रितयस्य शुक्ले शङ्खे पीताकारज्ञानेन व्यभिचारात् ।"–प्रमेयरत्नमा० २।९। प्र० मी० पृ० २० । प्र० नय० ४।४७ । रत्नाकराव० ४।४७ ।

परस्परसदृशत्वात् **नो चेत्** न यदि परस्परवीक्षणं तासां **नैकार्थवीक्षणम्** एकस्यार्थस्य ग्रहणं न भवेत्, तत्रापि सारूप्यमेव [५६६ ख] ग्रहणकारणं तत्तु अव्यभिचारीति भावः ।

कारिकां विवृण्वन्नाह–सह **एकार्थोपनिबद्धदृष्टीनाम्** इत्यादि । सह युगपद् **एकस्मिन्नर्थे उपनिबद्धाः दृष्टयो** येषां तेषां पुरुषाणां **यथार्थानुकरणं तथा अन्योऽन्यानुकरणमवश्यंभावि** ततोऽर्थोपलब्धिरिव **अन्योऽन्योपलब्धिः** । कुतः ? इत्याह–**विषयरूपतैव** इत्यादि ।

परमतमाशङ्कते–*"**नाकारणम्**" इत्यादि । अत्र दूषणमाह–**न तर्हि अर्थसारूप्यम्** इत्यादि । कुतः ? इत्याह–**सत्यपि तस्मिन्** अर्थसारूप्ये **प्रामाण्यव्यभिचारात्** उक्तवा-(उक्तन्या)येन ।

ननु सारूप्यमात्रे तद्व्यभिचारः, कारणाच्च तद्विशेषोऽव्यभिचारी जायत इति चेत्; अत्राह–**कारणाच्च** हेतोरपि । किंभूतात् ? **आलम्बनाभिमतात्** अनेन समनन्तरादिनिरासः **संवित्तिर्न वै नैव विशेषान्तरं प्रतिलभते अन्यत्र तदाकारानुकरणात्** कारणा[नु]करणमेव विशेषं लभत इत्यर्थः । भवत्वेवमिति चेत्; अत्राह–**तत्पुनः** इत्यादि । **नीलतयेव दा(जडा)-त्मनापि सारूप्यम् इति स्वतराम्** (सुतराम्) इत्यनेन दर्शयति । ज(तज्ज)न्मादिकमपि व्यभिचारयन्नाह–**न[ज्ञ]न्मे**त्यादि । कुतः ? इत्याह–**समानार्थ** इत्यादि । **समानः** सदृशोऽर्थो येषां **दर्शनानां** तानि तथोक्तानि दर्शनानि तेषां **नानैकसन्तानाः** तेषु **संभवात्** समानार्थदर्शनानां सन्तानेषु संभवात् तज्जन्मसारूप्ययोः । तथाहि–पितृशरीरात् जायमानमपत्यशरीरं यथा कदाचित्तदाकारं तथा तच्चेतसोऽपत्यचित्तं कदाचित्तदाकारमुपलभ्यते, [५६७क] जन्यजनकयोः प्रायेण समानत्यागादिचित्तव्यवहारप्रसिद्धेः । न चापत्यचित्तं जनकचेतसि प्रमाणम्, इतरथा प्रकृतपुरुषस्य परचित्तप्रत्यक्षता इति व्याहतमेतत्–*"**शरीरप्रत्यक्षत्वेऽपि न बुद्धिः प्रत्यक्षा, बुद्धिविकल्पे संशयात्**" इत्यादि । तथा, समानार्थदर्शनैकसन्तानेषु भिन्ना तेषु (भिन्नेषु) संभवात्तयोः । तथाहि–[नीलात् नीलज्ञानं तस्माच्चापरापराणि] नीलज्ञानानि जायन्ते तद्रूपाणि, न च तानि तत्र प्रमाणम्, बहिस्ततोऽप्रवृत्तिप्रसङ्गात् ।

स्यान्मतम्–तेभ्यो जन्मैव न तद्रूपता; अर्थादपि(अर्थेऽपि) सा न भवेत् । दृश्यते नीलतया इति चेत्; बोधरूपतया बोधादपि इति समानम् । तावन्मात्रेण भवतु न नीलतया इति चेत्; न; अंशेन जन्यजनकभावप्रसङ्गात् । तथा, पूर्वज्ञानम् उत्तरस्य बोधरूपतया जनकं न नीलरूपतया तथा उत्तरं तथैव जन्यथा(जन्यं स्यादिति) यथा बोधात् तद्रूपता तथा नीलादपि (नीलतापि) स्यात् । अर्थस्य वैयर्थ्यमिति चेत्; सार्थकत्वेऽपि पूर्वदोषानतिवृत्तिः । यदि वा, 'नैकस्य नानाकारानुकरणं विरुद्धम्' इत्युक्तम्; कथमन्यथा सर्वदर्शिज्ञानम् अशेषनीलाकारानुकारि

(१) एकार्थे । (२) सारूप्यम् । (३) विषय इति चेत् । द्रष्टव्यम्–पृ० १८८ टि० ७। (४) सारूप्यविशेषः । (५) आदिपदेन सहकार्यधिपतिप्रत्ययौ ग्राह्यौ । (६) तज्जन्मसारूप्यलक्षणं व्यभिचरतीति । (७) पितृचेतसः । (८) समानदानादिप्रवृत्तिदर्शनात् । (९) जन्मसारूप्ययोः । (१०) पूर्वनीलज्ञाने । (११) पूर्वनीलज्ञानेभ्यः जन्मैव उत्तरनीलज्ञानानां न तद्रूपता । (१२) तद्रूपता । (१३) बोधरूपतामात्रेण ।

भवतो भवेत् ? यदि मतम्, आद्यं नीलज्ञानं पूर्वनीलज्ञानमन्तरेण जातं तन्न तस्य नीलता पूर्वज्ञान-नीलताकृता, तथा अन्यत्रापि इति ; तन्न सारम् ; यतः यथासंभवं हेतुफलभावात् । ततः स्थितम्–**तज्जन्मसारूप्यलक्षणं** (2)**व्यभिचरतीति** । तदध्य(तदध्य)वसायसहितं न तथा इति चेत् ; अत्राह–**तदध्यवसायहेतुत्वं च** तस्य अर्थाकारज्ञानस्य व्यवसायकारणत्वं च व्यभिचरति । कुतः ? इत्याह–**क्वचिद्** [3] इत्यादि ।　　५

[५६७ख] नन्वेवं बहिरर्थस्य अग्रहणमेव प्रकारान्तरासंभवादिति पायसे घृतप्लवः सौगत-जनस्य इति चेत् ; अत्राह–**प्रत्यर्थनियता** इत्यादि ।

**[प्रत्यर्थनियता बुद्धिः प्रत्यर्थविषया सती ।**
**तज्जन्म[सारूप्यतदध्यवसायेषु सत्स्वपि] ॥२३॥**

**तथा च समानेऽपि अर्थग्रहणे अकारणं चार्थं विषयीकुर्वतो न कश्चिद् व्याघातः । संवादस्य**···**प्रत्यक्षस्यापि व्यतीतस्य अप्रतिभासनात् । अनागतार्थस्य संप्रत्यभावेऽपि विषयतोपपत्तेः अविसंवादः व्यवहारात् । अक्षशब्दज्ञानयोः स्वार्थप्रतिपत्तिं प्रति नान्तर-मुत्प्रेक्षामहे । प्रतिभासभेदस्य वस्तुभेदकत्वाभावात् ।]**　　१०

**प्रत्यर्थनियता बुद्धिः** । किंभूता ? इत्याह–**प्रत्यर्थ** इत्यादि । केषु सत्स्वपि ? इत्याह–**तज्जन्म** इत्यादि ।　　१५

कारिकार्थं दर्शयति–'**समानेऽपि**' इत्यादिना । **तथा च** तेन प्रकारेण **अर्थग्रहणे** सति अर्थग्रहणेऽ**कारणं च अर्थं विषयीकुर्वतः** संवेदनस्य **न कश्चित्** प्रत्यक्षादिबाधलक्षणो **व्याघातः** । संवादो न स्यादिति चेत् ; अत्राह–**संवादस्य** इत्यादि । प्रतिपादितमेतत् । तथापि स्वकारण एवाऽविसंवाद इति चेत् ; अत्राह–**प्रत्यक्षस्यापि** इत्यादि । **व्यतीतस्य** ज्ञानात्मनि **अप्रति-भासनात्** सारूप्यनिषेधात् भाविकारणनिराकरणादिति भावः ।　　२०

ननु भविष्यदर्थविषया बुद्धिर्निर्विषया, तत्काले तदर्थस्यासंभवेन तत्राप्रतिभासनात्, तदस्याः कथमविसंवाद इति चेत् ? अत्राह–**अनागतस्य** इत्यादि । **अनागतस्य अर्थस्य** मरणादेः **संप्रति** अरिष्टादिकाले **अभावेऽपि विषयतोपपत्तेः** अरिष्टलिङ्गजनितबुद्धिगोचरतोपपत्तेः **अवि-संवादः** । कुतः ? इत्याह–**व्यवहार** इत्यादि ।

ननु भावी चेत् मरणादिः कथं प्राक्प्रतिभासगोचरः ? प्रागनुत्पन्नः 'भावी' इत्युच्यते,　　२५ अनुत्पन्नश्च खरविषाणवत् न तद्गोचरः, इतरथा [५६८क] न भावी, वर्त्तमानघटादिवत्, ततो भविष्यदर्थबुद्धिर्निर्विषया इति चेत् ; अत्राह–**अक्ष** इत्यादि । **अक्षशब्दयोः** कार्यभूते वस्तुज्ञाने, **शब्दज्ञानग्रहणम्** उपलक्षणम् तेन अनागतविषयम् अविशदं सर्वं विज्ञानं गृह्यते । तयोः **स्वार्थ-प्रतिपत्तिं प्रति नान्तरं** भेदमुत्प्रेक्षामहे । एवं मन्यते–यथा भविष्यदर्थः तद्बुद्धिकाले नास्ति,

---

(१) अनुकूलविकल्पोत्पादः तदध्यवसायः । (२) व्यभिचारतीति । (३) शुक्ले शङ्खे पीतकारज्ञानादुत्प-न्नेन समनन्तरज्ञानेन व्यभिचारीति । (४) भविष्यदर्थस्य ।

तथा प्रत्यक्षार्थः तद्देशे नास्ति। नहि प्रत्यक्षपरिच्छेद्याः अर्थाः सर्वे तदाधारे आत्मनि व्यवस्थिताः। अतद्देशाः परिच्छिद्यन्ते नानन्तकाला इति किंकृतो विभागः ? भाविनोऽपि स्वकालसत्ताऽनिषेधः, अन्यथा वर्तमानो भवेत। सोऽपि किंचिदपेक्ष्य भावीति। ननु किमुच्यते–'नान्तरमुच्यते'–'नान्तरमुत्प्रेक्षामहे' इति ? यावता विशदेतरताकृतं तदस्ति इति चेत्; अत्राह–**प्रतिभासभेद**
५ इत्यादि।

स्यान्मतम्–शब्दज्ञानस्य नाविशदत्वात् निर्विषयत्वमुच्यते, किन्तु तद्ग्राह्यसामान्यस्य अवस्तुत्वात्, तदप्यसदर्थप्रत्ययत्वादिति ; तत्राह–**स्वकारण** इत्यादि।

**[स्वकारणस्वलक्षणस्याप्यन्तर्बहिर्विकल्प्यवत्।**
**परमार्थाविसंवादि न प्रत्यक्षं न लैङ्गिकम् ॥२४॥**

१० **प्रमाणाविसंवादकत्वं यथातत्त्वं युक्तम्, प्रतिपत्रभिप्रायाणामप्रतिष्ठानात्। तदनुकरणे स्वमतव्याघातात्। धर्म···तत्त्वतः। परम्परया; नचानर्थविषयैर्विकल्पैः तत्त्वव्यवस्थापनम्। केषांचिन्मिथ्यात्वेऽपि कथञ्चित् केनचित् तत्त्वव्यवसाय इत्यपि मिथ्या विकल्पात् कुतस्तत्त्वप्रतिपत्तिः? यतः स्वलक्षणव्यवस्थाऽविसंवादः। तन्न···विप्रतिपत्तेः। नापि विकल्पकम्, परमार्थतः अतद्विषयत्वात्। तत एवाविकल्पज्ञानं न व्याख्यात्रभि-**
१५ **प्रायेणापि अविसंवादकम्। बहिः यथा···]**

**स्वकारणं** तत्**स्वलक्षणं** च इति त**स्यापि विकल्प**(ल्प्य)**वत्** सामान्यवत् असदर्थप्रत्ययविषयत्वमवगन्तव्यम्। तदाह–**परमार्थ** इत्यादिना। **परमार्थः** क्षणिकनिरंशपरमाणुरूपः **तदविसंवादि न प्रत्यक्षम्** उक्तन्यायात्, अत एव **न लैङ्गिकम्**। कुतः ? इत्याह–**अन्तर्बहिः** इत्यादि।

२० कारिकार्थमाह–**प्रमाण** इत्यादिना। **तदविसंवादकत्वं [यथातत्त्वं]** तत्त्वानतिक्रमेण **युक्तम्** उपपन्नम्। प्रतिपत्रभिप्रायादिति चेत्; अत्राह–**प्रतिपत्रभिप्रायाणामप्रतिष्ठानात्** तथा (यथा)**तत्त्वं युक्तमिति** [५६८ ख] **तदनुकरण(णे)** प्रतिपत्रभिप्रायानुकरणेन **स्वमतव्याघातात्**। तदाह–**धर्म** इत्यादिना। अस्तु यथातत्त्वं तदिति चेत्; अत्राह–**तत्त्वत** इत्यादि।

नन्वविकल्पाद् विकल्पवासनाप्रबोधः, ततो विकल्पः तस्मात् तत्त्वव्यवस्था इति, अतो
२५ विकल्पात् सेति चेत्; अत्राह–**परम्परया** इत्यादि। भवतु तत् तेषामेव इति चेत्; अत्राह–**न चानर्थविषयैर्विकल्पैः तत्त्वव्यवस्थापनम्**। तेभ्योऽपि परम्परया वस्तुप्रतिबद्धेभ्यस्तद्व्यवस्थापनमिति चेत्; अत्राह–**मिथ्यात्वेऽपि** इत्यादि। **मिथ्यात्वेऽपि केषांचित्** विकल्पानां **तत्त्वव्यवसायः कथंचित् केनचित्** परम्पराप्रतिबन्धप्रकारेण **इत्यपि** एवमपि **मिथ्या, विकल्पात् कुतः तत्त्वप्रतिपत्तिः यतो** यस्याः तत्त्वप्रतिपत्तेः अनुमानभ्रान्तेः सकाशात्
३० **स्वलक्षणव्यवस्थाऽविसंवादः**। '**यतः**' इति चाक्षेपे, नैव स्यात्। एवं मन्यते–विकल्पस्य कस्य-

(१) 'नान्तरमुच्यते' इति पुनर्लिखितम्। (२)अन्तरम्। (३) प्रतिभासभेदस्य वस्तुभेदकत्वाभावात्।

चित् परम्परया अर्थप्रतिबन्धो न तावदविकल्पात्[1]; तेन विकल्पाविषयीकरणात्, ततः तत्त्वात सिद्धे(तत्त्वासिद्धे)श्च क्षणक्षयादिवत् । नापि विकल्पा[त्] निर्विषया[त्]; तस्यापि तदन्तरात्[3] प्रतिबन्धसाधने अनवस्था । अथ एकेन विकल्पेन अन्यस्य तेन प्रतिबन्धः साध्यते; अन्योऽन्य-संश्रयः । एतेन विकल्पात्मवेदनात्[4] तत्सिद्धिर्निरस्ता; तेनैं अर्थापरिच्छेदादविकल्पदोषाच्च[5] इति ।

प्रकृतं निगमयन्नाह–**तन्न** इत्यादि । कुतः ? इत्याह–**विप्रतिपत्तेः** विकल्प इति सम्बन्धः । ५ यदि वा, विकल्पापेक्षया विपरीता विरुद्धा वा प्रतिपत्तिः तस्या इति । **विकल्पकं** स्वलक्षणतत्त्वा-विसंवादि स्यादिति चेत्; अत्राह–**नापि** [५६९ क] इत्यादि । कुतः ? इत्याह–**अतद्विषय-त्वात्** स्वलक्षणतत्त्वाविषयत्वात् विकल्पकस्य **परमार्थतः**, कल्पनया केवलं परं स्यात् व्याख्या-त्रभिप्रायवशादविकल्पकं तदविसंवादि इति चेत्; अत्राह–**तत एव** विकल्पस्य अतद्विषयत्वादेव । यदि वा, विकल्पे विप्रतिपत्तेरेव अविकल्पप्रतिपत्तेरेव **अविकल्पज्ञानं व्याख्यात्रभिप्रायेणापि** १० **नाविसंवादकम्** । कुतः ? इत्याह–**बहिः** इत्यादि । तदपि कुतः ? इत्याह–**यथा** इत्यादि ।

एतदेव समर्थयमानः प्राह–**प्रत्यक्ष**मित्यादि ।

**[प्रत्यक्षं निश्चयापेक्षं न प्रमाणं स्वलक्षणे ।**
**सन्निधानेतराभ्याञ्च प्रतिभासभिदा धियः ॥२५॥**

प्रत्यक्षं सर्वतो व्यावृत्तं वस्तु गृह्णदपि अनीलादिसमारोपं व्यवच्छिनत्ति, १५ सामान्य···तन्नैतत् प्रत्यक्षं न चानुमेयम् । न च···कार्यकारणयोः विषयविषयिणोः विनष्टेतरयोः प्रतिभासाविशेषात् । नापि विज्ञप्तिमात्रे एतल्लक्षणम्, स्वप्नादौ तल्ल-क्षणाभावप्रसङ्गात् । सत्यपि स्वप्नादौ कथं तदा चित्तचैत्तानां प्रत्यक्षत्वम् ? कथं च न स्यात् ? निरंशतत्त्वस्य स्पष्टप्रतिभासाभावात् तद्व्यवच्छेदानिर्णयाच्च यतः *"सर्वे" [प्र० वा० ३।३९] इत्यादि भवेत् ।] २०

**प्रत्यक्षं स्वलक्षणे न प्रमाणं** किन्तु सामान्ये । कुतः ? इत्याह–**निश्चयापेक्षं** यतो निश्चये स्वसामान्ये, इतरथा क्षणिकत्वानुमानमनर्थकमेव । तदपेक्षमपि स्वलक्षणे प्रमाणम्; तर्हि तदपेक्षा(क्ष्य) यौगैः[6] । तन्निरपेक्षमेव प्रमाणमिति चेत्; अत्राह–**सन्निवे(धान)** इत्यादि । स्वलक्षणस्य यत् **सन्निधानं** यच्च **इतरद**सन्निधानं ताभ्यां **धियः** प्रत्यक्षबुद्धेः **प्रतिभासभिदा च** न तदाकारासात (कारज्ञान) इत्यर्थः । २५

कारिकां विवृण्वन्नाह–**सर्वतः** सजातीयाद् विजातीयाद् **व्यावृत्त**मपसृतं **वस्तु गृह्णदपि प्रत्यक्षम् अनीलादिसमारोपं व्यवच्छिनत्ति** यत्रांशे निश्चयं जनयति इत्यर्थः । यदि तत्रैव प्रमाणं किं स्यात् ? इत्याह–**सामान्य** इत्यादि । यत एवं **तत्** तस्मात् **नैतत्** स्वलक्षणं **प्रत्यक्षं न चानुमेयम्** प्रत्यक्षाभावे अनुमानाभावात् । स्वानुभूते सर्वत्र प्रमाणमिति चेत्; अत्राह–**नच** इत्यादि । व्याख्यातम् । एतदपि कुतः ? इत्याह–**कार्य** इत्यादि । **कार्यं** ज्ञानं **कारणमर्थः** तयोः । ३०

(१) ज्ञायते । (२) अविकल्पात् । (३) विकल्पान्तरात् । (४) स्वसंवेदन । (५) निर्विकल्पपक्षो-पक्षिप्तदोषानुषङ्गात् । (६) यौगः सन्निकर्षः योग एव यौगः । अथवा, यौगाभिमतः सन्निकर्षः प्रमाणं स्यादिति ।

किंभूतयोः ? **विषयविषयिणोः** विषयोऽर्थः विषयि ज्ञानं तयोः **विनष्टेतरयोः प्रतिभासाविशेषात्** । सर्वदा [५६९ख] स्थूलप्रतिभासादित्यर्थः । तर्हि बहिः स्वलक्षणस्या(स्य) विचार्यमाणस्य अयोगात्, अन्तः स्वलक्षणमस्तु इति चेत्; अत्राह–**नापि** इत्यादि । विज्ञप्तिरेव नार्थः **विज्ञप्तिमात्रं** तस्मिन्नपि न केवलं बहिः, **एतल्लक्षणम्** एतस्य परपरिकल्पितस्वलक्षणस्य लक्षणं
५ दर्शनं नापि । नहि ज्ञानपरमाणवः प्रतिभान्ति पुरुषवत् । सुखादिनीलादितत्त्वस्य परेण प्रतिभास इष्यते । अभ्युपगमे वा नीलादिप्रतिभासः किमसत्य इति चेत्; अन्यत्र कः समाश्वासः ? कुतश्च [1]तदसत्यता ? ग्राह्यत्वेनावभासमानात्; तैमिरिकोपलब्धकेशादिवदिति चेत्; अत्राह–**स्वप्नादावित्यादि** । **स्वप्न आदिर्**यस्य काचकामलादिविभ्रमस्य स तथोक्तः तत्र **तल्लक्षणाभावप्रसङ्गाद्** विज्ञप्तिदर्शनाभावप्रसङ्गात् **नापि तन्मात्रेऽपि तल्लक्षणमिति** । अयमभिप्रायः–
१० यथा विभ्रमे बहिरर्थाभावः, प्रतिभासेऽपि तथा स्वसंवेदनाभावोऽपि । तत्र परसन्तानस्य असतोऽपि प्रतिभासनात् तत्र सत्त्वे, अन्यत्र कः प्रद्वेषः इति विचारितम् । तर्हि प्रतिभासाविशेषात् बाध्यबाधकभावविरहात् जाग्रद्दशावत्(न) स्वप्नादावप्यर्थोऽस्ति इति चेत्; अत्राह–**सद्यपि** (सत्यपि) विद्यमानेऽपि बाह्यार्थे **स्वप्नादौ कथं तदा** स्वप्नादिकाले **चित्तचैत्तानां प्रत्यक्षत्वं** प्रत्यक्षग्राह्यत्वम् ? **'कथं च न स्यात्?'** इति परः पृच्छति । तं प्रत्युत्तरं **स्पष्टप्रतिभासा-**
१५ **भावात् निरंशतत्त्वस्य** इति । हेत्वन्तरमाह–**तद्** इत्यादि । **तस्य** विपरीतारोपस्य व्यवच्छेदोऽभावः तस्यानिर्णयाच्च **यतः** स्पष्टप्रतिभासात् [५७०क] तन्निर्णया [ब] *"सर्वे" [प्र० वा० ३।३९] [2]इत्यादि भवेत् । ततः सर्वदा निरंशज्ञानतत्त्वस्याप्रतिभासनाद् बहिरर्थस्य विपरीतस्य प्रतिभासनात् तावन्मात्रं सौगतस्य तत्त्वं प्रसक्तमिति भावः ।

*"यत्रैव जनयेदेनां[3] तत्रैवास्य[4] प्रमाणता" इत्यत्र पुनरपि दूषणं दर्शयन्नाह–
२० **षण्णां धियामित्यादि** ।

**[षण्णां धियां सकृद्भावे विवेकानुपलक्षणात् ।**
**सकृद्भावः प्रसज्येत सविकल्पमनोधियाम् ॥२६॥**

शब्दादिष्वभिमतेषु युगपत्सन्निहितेषु तद्विज्ञानानां क्रमोत्पत्तौ प्रत्येकं पञ्चभिर्व्यवधानात् प्रत्येकं विच्छेदः प्रतीयेत । भावपक्षस्य [बलीयस्त्वादिति चेत्] स एव
२५ रसः··· ततः··· इति कल्पनायाम् तदन्यव्यवच्छेदव्यवसायात्मनां सविकल्पमनोऽक्षज्ञानानाम् तदविच्छेदप्रतीतौ सहभावः प्रसज्येत । तत्रैव हि विच्छेदानुपलक्षणं युक्तम् तदविशेषात् स्पष्टनिर्भासेऽपि ततः तदन्यव्यवच्छेदव्यवसायात्मनां च सहभावः प्रसज्येत ।]

तात्पर्यमिदमत्र यथाऽनन्तरः परस्य अभ्युपगमः तथा शब्दादिषु युगपत् सन्निहितेषु तथा षट्बुद्धयो जायन्त इति । तत्र **षण्णां** । कासां ? **धियाम्** रूपरसगन्धस्पर्शशब्दविक-
३० ल्पज्ञानानां **भावे** । कदा ? **सकृत्** सह । कुतः तद्भावः ? इत्याह–**विवेकानुपलक्षणात्**

(१) नीलादिप्रतिभासस्य असत्यता । (२) "सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थितेः । स्वभावपरभावाभ्यां यस्मात् व्यावृत्तिभागिनः ॥"–प्र० वा० । (३) विकल्पबुद्धिम् । (४) निर्विकल्पस्य ।

विवेकस्य कर्कटीभक्षणादौ धिया कालविच्छेदस्य अनिश्चात् । एतद् दूषयन्नाह-**सकृद् भावः प्रसज्येत** । केषाम् ? **सविकल्पमनोधियाम्** । समर्थकारणबहुत्वाद् युगपत्कार्यबहुत्व-मनिवार्यम्, तथा च *"अश्वं विकल्पयतोऽपि गोदर्शनात्" इत्यादि विरुध्यते ।

षण्णां धियां सकृद्भावे परकीयां युक्तिं दर्शयन्नाह-**शब्दादिषु** इत्यादि । शब्दः आदि-र्येषां रूपादीनां तेषु । किंभूतेषु ? **अभिमतेषु** युगपत् सन्निहितेषु सत्सु **तद्विज्ञानानां** शब्दादि- ५ धियां **क्रमोत्पत्तौ** अङ्गीक्रियमाणायां **प्रत्येकम्** एकमेकं प्रति **विच्छेदः प्रतीयेत** युगपच्छ-ब्दादिप्रतीतिर्न स्यात् । कुतः ? इत्याह-**प्रत्येकं पञ्चभिर्व्यवधानात्** ।

नैयायिकमतमाशङ्कते सौगतः **भावपक्षस्य** इत्यादि । तत्र दूषणमाह-**स एव रस** इत्यादि । **तत** इत्याद्युपसं[हारः] ।

संप्रत्याचार्यः कारिकां विवृण्वन्नाह-**इति** इत्यादि । **इति** एवं **कल्पनायां** [५७० ख] १० **सहभावः प्रसज्येत** । केषाम् ? इत्याह-**सविकल्प** इत्यादि । **सविकल्पमनश्च अक्षज्ञानानि च** तेषाम् । पुनरपि केषाम् ? इत्याह-**तदन्यव्यवच्छेद** इत्यादि । [अन्यस्य]अन्यतो वा व्यवच्छेदः, तेषां तज्ज्ञानानाम् अन्यव्यवच्छेदः **तदन्यव्यवच्छेदः** तस्य **व्यवसायो** निर्णय **आत्मा** एव (स्व) भावो यासां तासां च 'संविदाम्' इति पदघटना, मनोविकल्पानाम् इत्यर्थः । कस्मिन् सति ? इत्याह-**तदविच्छेदप्रतीतौ** तेषां सविकल्पमनोऽक्षज्ञानानामविच्छेदप्रतीतिर्या तस्यां सत्याम् । नहि १५ तदन्यव्यवच्छेदव्यवसायात्मसंविदामभावे तदविच्छेदप्रतीतिः । किं ताभिः कर्त्तव्यम् तैर्ज्ञानैरेव[1] तत्प्रतीतिसद्भावादिति चेत्; अत्राह-**तत्रैव हि** इत्यादि । तत्रैव तास्वेव व्यवसायात्मकसंवि-त्तिषु सतीषु **हि**र्यस्माद् **विच्छेदस्य** अन्यतो व्यावृत्ते**रनुपलक्षणं युक्तम्** न पुनरविकल्प-ज्ञानेषु सत्सु । कुतः ? इत्याह-**तद्** इत्यादि । **तेषां** न विकल्पज्ञानानां स्वापादिना**ऽविशेषात्** ।

ननु[यतः]स्पष्टनिर्भासाऽन्यविकल्पज्ञानानि इति, [त]त एव तदुपलक्षणमिति चेत्; अत्राह- २० **स्पष्टनिर्भासेऽपि** इत्यादि । **ततः तदन्यवच्छेदव्यवसायात्मनां च सहभावः प्रसज्येत** इति ।

स्यान्मतम्-षण्णां धियाम् अनन्तरमेकं सविकल्पमनोज्ञानं तदव्य (तदध्य) वसायि जायते, ततोऽयमदोष इति; तन्न; अनेकान्तप्रसङ्गादिति प्रतिपादितम ।

एतदेव दर्शयन्नाह-**स्पष्टस्य** इत्यादि ।

**[स्पष्टस्यालातचक्रादेर्विभ्रमस्यापि वीक्षणात् ।** २५
**स्वलक्षणोपलब्धीनां नैकक्षणिकदर्शनम् ॥२७॥**

**प्रतिक्षणं निरंशक्षणिकपरमाणुषु प्रत्यक्षेषु परस्परासम्प्लवे कुतश्चक्रभ्रान्तिः ? सा च भवन्ती कथमनेकान्तसिद्धिर्न भवेत् तदुपलम्भानुपलम्भयोर्विरोधात् ।]**

भिन्नप्रक्रमः **अपि**शब्दः, ततो न केवलम् अन्तरेकविकल्पविभ्रमस्य अपि तु **स्पष्ट-स्यापि अलातचक्रादेः** [५७१क] **विभ्रमस्य वीक्षणात्** 'अनेकान्तसिद्धिः' इत्युपस्कारः । ३०

(१) सविकल्पमनोऽक्षज्ञानैरेव ।

ननु प्रतिपरमाणु प्रतिक्षणं संविदां भेदात् नैकं चित्रम् अलातचक्रज्ञानमिति चेत्; अत्राह–**स्वलक्षणोपलब्धीनाम्** इत्यादि । **नैकक्षणिकपरमाणुदर्शनं** विभ्रमः अति[प्रसङ्गात्] ।

'प्रतिक्षणम्' इत्यादिना [कारि] कार्थमाह–क्षणं क्षणं प्रति **प्रतिक्षणम्** । केषु ? **निरंशक्षणिकपरमाणुषु** प्रत्येकम् एकं परमाणुं प्रति **प्रत्यक्षेषु** दर्शनेषु **परस्परासंप्लवे** एव (एक) चित्र-
५ ज्ञानाभावे **कुतः चक्रभ्रान्तिः** न एकैकारानु (काकार) दर्शनं चक्षु (चक्र) दर्शनं नाम इति भावः । **सा च** चक्रभ्रान्तिर्भवन्ती जायमाना **कथम् अनेकान्तसिद्धिः** अनेकान्तप्रतीतिर्न **भवेत्** ? भवेदेव । अथ अपरदेशोपसर्पिणाम् अलातक्षणानाम् अन्योऽन्यविवेकानुपलम्भेऽपि सर्वसाधारण (ण)-भासुरतामात्रदर्शनात् चक्रभ्रान्तिरिति; तत्राह–**तदुपलम्भ** इत्यादि । तेषाम् अलातस्वलक्षणानां भासुरतामात्रेण य **उपलम्भः** यश्च परस्परविवेक[रू]पेण **अनुपलम्भः** तयोः **विरोधात्**
१० एकस्य इत्येतरताप्राप्तेः अनेकान्तसिद्धिरिति ।

न केवलम् अनन्तरविधिना अनेकान्तसाधनम्, अपि तु तदन्तरेणापि इति दर्शयन्नाह–**प्रत्यक्षात्** इत्यादि ।

**[प्रत्यक्षाचानुमेयादेः अन्येऽर्था मदगोचराः ।**
**इत्यागमाविसंवादि ज्ञानं स्याद्वादशंसनम् ॥२८॥**

१५ **परिगणितप्रमाणवृत्तिनिवृत्त्योः अर्थतत्त्वासिद्धिः अनेकान्तमपेक्षते । प्रत्यक्षं तत्र···]**

**प्रत्यक्षा[त्]** प्रत्यक्षप्रमितादर्थात् **स्याद्वादस्य** स्यादस्ति इत्यादि शासनस्य **शंसनं** । तदनंतरदनु (तदनु) कूळत्वात्तस्य । तथा **अनुमेयादेश्च** अनुमानगम्यम् **अनुमेयं** प्रतिक्षणपरिणामादिकम् **आदिर्यस्य** चित्तादिगोचरस्य स तथोक्तः तस्माच्च **स्याद्वादशंसनम् । अन्ये** प्रत्यक्षानुमेयादिबहिर्भूता **अर्थाः** । किं भूताः ? **मदगोचराः** [५७१
२० ख] अस्मादृशां दर्शनाविषयाः केवलं योगिगम्याः सन्ति वेद्य (सन्ति विद्य) न्त **इति** एवम् **आगमाद्** यद् **अविसंवादिज्ञानं** धर्मादिविषयं तदपि तच्छंसनमिति । किं बहुना उक्तेन, उन्मि[षि]तमपि अनेकान्तमन्तरेण नास्तीति ।

कारिकां व्याख्यातुमाह–**परिगणित** इत्यादि । सौगतादिभिः यानि **परिगणितानि प्रमाणानि तेषां या वृत्तिः** विधिसाधनाय प्रवृत्तिः या च कुतश्चिन निषेध्यान्निवृत्तिः **तयोः**
२५ **अर्थस्य** चेतनेतररूपस्य **तत्त्वं** विधिप्रतिषेधात्मकत्वं तस्य **सिद्धिः अनेकान्तमपेक्षते** प्रत्यक्षं (क्ष) वृत्तेः अर्थतत्त्वसिद्धिः । तदपेक्षां कथयन्नाह–**प्रत्यक्षम्** इत्यादि । कुतः ? इत्याह–**तत्र** इत्यादि । **तत्र** प्रत्यक्षे इत्यर्थः ।

**तथाहि** इत्यादिना तदेव दर्शयति ।

**[तथाहि–**

३० **अविकल्पमसत्कल्पमज्ञेयं स्वलक्षणम् ।**
**अवाच्यं केवलं नेति तथा च प्रतिपादितम् ॥२९॥**

---

(१) एकैकस्य आरस्य चक्रभागस्य । (२) चक्षुष उन्मीलनमपि ।

चित्तानां स्वरूपस्य कथन्न स्वतः सिद्धिः ? अव्यवसायात्मकत्वात्, तादृशां परतश्च न। न च नित्यस्य कादाचित्कदर्शनं युक्तम्, तद्दर्शनस्य परिणामाविनाभावात्। नापि···तद्विषयं प्रत्यक्षमव्यवसायात्मकमिति परकल्पनमनुभवविरुद्धम्, तद्भ्रान्तिविरोधात्। सर्वत्र···विरोध···तदात्मकं तत्त्वम् एकान्त···]

**अविकल्पं 'प्रत्यक्षम्'** इत्यनुवर्त्तते। तत्किंभूतम् ? इत्याह-**असत्कल्पम्** 'अस्ति' ५ इति कल्पनारहितमेतद् अर्थभेदाभेदैकान्तार्थग्राहकं विकल्पकम्। ततः किम् ? इत्याह-**स्वलक्षणमज्ञेयम्**। केवलमवाच्यं तत्[1] इति चेन्; अत्राह-**अवाच्यं केवलम् इति** एवं नैत्येव यु(वमु)क्तम्, न केवलमत्रैव उक्तम् अपि तु अन्यत्रापि इति दर्शयन्नाह-**तथा च [प्रतिपादितम्]**।

किं **प्रतिपादितम्** ? इत्यत्राह-**स्वरूपस्य** इत्यादि। **स्वरूपस्य** आत्मनः **स्वतः** १० **सिद्धिः चित्तानां** निरंशसंवेदनानां **न कथं** न। कुतः ? इत्यत्राह-**अव्यवसायात्मकः [कत्वात्]** तेषां व्यवसायस्वभावस्याभावात्। परतः स्यादिति चेत्; अत्राह-**परतश्च** ज्ञानान्तरा न पि (रादपि) तथा न, **तादृशां** निरंशानां प्रतिभासाभावादिति भावः। भेदैकान्तस्यापि प्रतिभासो [५७२क] नास्तीति दर्शयन्नाह-**न च** इत्यादि। नैव **नित्यस्य** आत्मादेः **कादाचित्कदर्शनं युक्तम्**। कुतः ? इत्याह-**तद्** इत्यादि। **तस्य दर्शनस्य परिणामाविनाभावात्**। परिणामः १५ तस्य स्यादिति चेत्; अत्राह-**नापि** इत्यादि।

ननु विचारयतोऽपि तदेकान्तविषयं निर्णयाध्यक्षं न निवर्त्तत इति चेत्; अत्राह-**तद्** इत्यादि। स तदेकान्तो विषयो यस्य **तत्तद्विषयम्**। किम् ? **प्रत्यक्षम्**। किंभूतम् ? इत्याह-**अव्यवसायात्मकम् इति** एव (वं) **परकल्पनमनुभवविरुद्धम्**, अनेकान्तस्य अनुभवे प्रतिभासनात्। भ्रान्तिरियमिति चेत्; अत्राह-**तद्** इत्यादि। तस्य अनेकान्तप्रतिभासस्य **भ्रान्ति-** २० **विरोधात्**। अर्थैकान्तवद् अनेकान्तस्यापि अप्रतिभासनात् समानं चोद्यमिति चेत्; अत्राह-**सर्वत्र** इत्यादि। भवतु तत्प्रतिपत्तिः[2], तथापि विरोधान्न युक्तमिति चेत्; अत्राह-**विरोध** इत्यादि। ततः किम् ? इत्याह-**तदात्मकम्** अनेकान्तात्मकं **तत्त्वम्**। कुतः ? इत्याह-**एकान्त** इत्यादि।

तत्त्वमवाच्यमिति चेत्; अत्राह-**कथंचिद्** इत्यादि।

**[कथञ्चिदिष्टं तत्त्वस्यावाच्यत्वं न सर्वथा।** २५
**विज्ञप्तिमात्रे का कस्योक्तिश्चार्थक्रियास्थितिः ॥३०॥**

**आस्तां तावत्···]**

**कथंचित्** सकृत् अस्तित्वादिति (त्वादि) धर्मप्रतिपादनप्रकारेण **अवाच्यं (च्यत्वं) तत्त्वस्य इष्टम्**। सर्वथाऽवाच्यमिति चेत्; अत्राह-**सर्वथा** इत्यादि। वाच्यं तर्हि तत्त्वमिति चेत्; अत्राह-**विज्ञप्तिमात्रे** इत्यादि। निरंशज्ञानमात्रे नैरात्म्ये **च का कस्य** पदा- ३०

(१) स्वलक्षणम्। (२) अनेकान्तप्रतिपत्तिः।

र्थस्य **उक्तिः** ? सर्वस्यास्य विचार्यमाणस्यायोगात् इति भावः। दूषणान्तरमाह–**का अर्थक्रिया** इत्यादि। सर्वत्र तदेकान्ते **का** न काचिद**र्थक्रियायाः** कारकज्ञापक[रूपायाः] **स्थितिः**।

कारिकां व्याचष्टे–**आस्तां तावत्** इत्यादिना। [५७२ ख] सर्वं सुगमम्।

एवं शब्दस्वरूपं निरूप्य अधुना तदाश्रितनयान् दर्शयितुम् अन्त्यवृत्तमाह–**भेदैः** ५ इत्यादि।

**[भेदैः शब्दार्थभेदं नयन् स वाच्यः कारकादिस्वभावैः,**
**अभिरूढोऽस्तु नयोऽभिरूढिविषयः पर्यायशब्दार्थभित्।**
**इत्थम्भूतनयः क्रियार्थवचनः स्यात्कारमुद्राङ्कितः।**
**तत्प्रभिन्नोंऽशः कथंचन पृथगिति संविदुः तत्त्वदर्शिनः (?)॥३१॥]**

१० **भेदैः** विशेषैः **शब्दस्य अर्थः** व्यञ्जनपर्यायः तस्य **भेदं** नानात्वं **नयन्** तत्प्रतिपत्तन् प्रापयन् (पत्तिं प्रापयन्) **वाच्यः** कथनीयः। किंभूतैः भेदैः ? इत्याह–**कारक** इत्यादि। अभिरूढं दर्शयन्नाह–**अभिरूढिविषयोऽभिरूढनयः** इत्यर्थः। किंभूतः ? इत्याह–**पर्याय** इत्यादि। **पर्यायैः शब्दार्थभित्**। इत्थंभूतं कथ[य]न्नाह–**इ[त्थम्]भूत[ः] वाच्यः**।

(१) "इच्छइ विसेसियतरं पच्चुप्पण्णो णओ सद्दो।"–अनु० ४ द्वा०। आ० नि० गा० ७५७। विशेषा० गा० २७१८। "लिङ्गसंख्यासाधनादिव्यभिचारनिवृत्तिपरः शब्दः।"–स० सि० १।३३। "कालकारकलिङ्गानां भेदाच्छब्दोऽर्थभेदकृत्। अभिरूढस्तु पर्यायैरित्थम्भूतः क्रियाश्रयः॥"–लघी० श्लो० ४४। शब्दपृष्ठतोऽर्थग्रहणप्रवणः शब्दनयः, लिङ्गसंख्याकालकारकपुरुषोपग्रहव्यभिचारनिवृत्तिपरत्वात्।"–धवलाटी० सत्प्ररू०। त० श्लो० पृ० २७२। नयवि० श्लो० ८४। न्यायकुमु० पृ० ६३९। प्रमेयक० पृ० ६७८। सन्मति० टी० पृ० ३१२। नयचक्रगा० ४०। तत्त्वार्थसा० पृ० १०७। प्र० नय० ७।३२, ३३। स्या० म० पृ० ३१३। जैनतर्कभा० पृ० २२। (२) "वत्थूओ संकमणं होइ अवत्थूनए समभिरूढे।"–अनु० ४ द्वा०। आ० नि० गा० ७५८। विशेषा० गा० २७२७। "सत्स्वर्थेष्वसंक्रमः समभिरूढः"–तत्त्वार्थाधि० भा० १।३५। "नानार्थसमभिरोहणात् समभिरूढः।"–स० सि० १।३३। "अथवा यो यत्राभिरूढः स तत्र समेत्य आभिमुख्येनारोहणात् समभिरूढः।"–त० वा० १।३३। "समभिरूढः एवं सर्वैकीभावेन आभिमुख्ये एक एव रूपादिरर्थ एवेति या ज्ञाना (?) समभिरूढः।"–नयचक्रवृ० प० ४८३ ख। "पर्यायशब्दभेदेन भिन्नार्थस्याधिरोहणात्। नयः समभिरूढः स्यात् पूर्ववच्चास्य निश्चयः॥"–त० श्लो० पृ० २७३। नयवि० श्लो० ९२। प्रमेयक० पृ० ६८०। सन्मति० टी० ३१३। नयच० गा० ४१। तत्त्वार्थसा० पृ० १०७। प्र० नय० ७।३६। स्या० म० पृ० ३१४। जैनतर्कभा० पृ० २२। (३)"वंजण अत्थ तदुभयं एवंभूओ विसेसेइ"–अनु० ४ द्वार। आ० नि० गा० ७५८। विशेषा० गा० २७४३। "व्यञ्जनार्थयोरेवम्भूतः।"–तत्त्वार्थाधि० भा० १।३३। "येनात्मना भूतः तेनैवाध्यवसाययति इत्येवम्भूतः अथवा येनात्मना येन ज्ञानेन भूतः परिणतः तेनैव अध्यवसाययति।"–स० सि० १।३५। धवलाटी० सत्प्र० पृ० ९०। जयध० पृ० २९। "तत्क्रियापरिणामोऽर्थः तथैवेति विनिश्चयात्। एवम्भूतेन नीयेत क्रियान्तरपराङ्मुखः॥"–त० श्लो० पृ० २७४। नयवि० श्लो० ९४। प्रमेयक० पृ० ६८०। सन्मति० टी० पृ० ३१४। नयचक्र० गा० ४३। तत्त्वार्थसा० पृ० १०७। प्र० नय० ७।४०। स्या० म० पृ० ३१५। जैनतर्कभा० पृ० २३। (४) कारकादिस्वभावैः।

किंभूतः ? इत्याह–**क्रियार्थवचनः** एतेषां क्रमेण उदाहरणानि नयप्रवेशकप्रकरणा[1]दवगन्तव्यानि । को वयः (नयः) को वाऽन्यः ? इत्याह–**स्यात्कार** इ[2]त्यादि । परो दुर्णय इति गम्यते। **तत्प्रमितः** तेन सम्यङ्नयेन प्रमितः **अर्थांशः कथंचन** न सर्वात्मना स्वारा (स्वाधा)-रात् **पृथक्** इत्येवं **तत्त्वदर्शिनः** तीर्थंकरादयः **संविदुः** ।

इति सिद्धिविनिश्चयटीकायामनन्तवीर्यविरचितायां

शब्दनयसिद्धिः एकादशमः प्रस्तावः ॥छ॥

---

(१) लघीयस्त्रयान्तर्गतनयप्रवेशकप्रकरणात् । (२) मुद्राङ्कितः इति शेषः ।

## [द्वादशमः प्रस्तावः]

### [१२ निक्षेपसिद्धिः]

नयानन्तरं तत्फलत्वान्निक्षेपान् दर्शयितुं मुखवृत्तमाह–**निक्षेपोऽनन्तकल्प** इत्यादि

**[[1]निक्षेपोऽनन्तकल्पश्चतुरवरविधः प्रस्तुतव्याक्रियार्थः[2],**
**तत्त्वार्थज्ञानहेतुर्द्वयनयविषयः संशयच्छेदकारी ।**
**शब्दार्थप्रत्ययाङ्कं विरचयति यतस्तद्यथाशक्ति भेदम् ,**
५ **वाच्यानां वाचकेषु श्रु[त]विषयविकल्पोपलब्धेस्ततः सः ॥१॥]**

धर्मिणि क्वचिद् धर्माणां नयाधिगतानां निक्षेपणं योजनम् अध्यारोपणं **निक्षेपः** । स कतिविधः ? इत्याह–**अनन्तकल्पः**[3] अनन्तभेदः तद्विषयानन्त्यात् ; कथमन्यत्र[4] चतुर्विधो निक्षेप उक्तः[5] ? इत्याह–**चतुरवरविधः** चत्वारो नामस्थापनाद्रव्यभावलक्षणैः अवर(रा अ) वान्तररूपा विधा भेदो यस्य स तथोक्तः । सः किंप्रयोजनः ? इत्याह–**प्रस्तुतव्याक्रियार्थः** ।
१० प्रस्तावगतं वस्तु **प्रस्तुतं** [५७३क] तस्य **वि**शेषेण अनिष्टनिवृत्त्यादिलक्षणेन **आ** समन्तात् **करणं** व्युत्पादनं **व्याक्रिया** तस्मै तदर्थः । कुतः ? इत्याह–**तत्त्वार्थज्ञानहेतुः** यतः तत्त्वार्था जीवादयः तेषां ज्ञानं तस्य हेतुः कारणम् । नहि शब्दादिनिक्षेपमन्तरेण शब्दादिभ्योऽर्थप्रतीतिः । स किं कारणः ? इत्याह–**द्वयनयविषयः** तन्यत्र (अयमत्र) भावः–द्वयोपलक्षितान्नया[त्] द्रव्यार्थिकपर्यायार्थिकरूपादि(द)न्यतो न भवति किन्तु तत एव इति तद्विषय
१५ इत्युच्यते । न केवलं त[त्त्वार्थ]ज्ञानहेतुरेव, अपि तु **संशयच्छेदकारी** विपर्ययादिव्यवच्छेदोपलक्षणमेतत् । पूर्वेण तत्त्वार्थज्ञानहेतुता अनेन समारोपव्यवच्छेदहेतुता उक्ता इति विभागः ।

(१) "विस्तरेण लक्षणतो विधानतश्चाधिगमार्थं न्यासो निक्षेपः ।"–तत्त्वार्थाधि० भा० १।५। "णिच्छए णिण्णए खिवदि त्ति णिक्खेवो ।"–धवला टी० सत्प्ररू० । (२) "सः किमर्थः ? अप्रकृतनिराकरणाय प्रकृतनिरूपणाय च ।"–स० सि० १।५। लघी० स्ववृ० श्लो० ७६ । "अथ किमिति निक्षेपः क्रियते इति चेत् ; उच्यते–त्रिविधाः श्रोतारः अव्युत्पन्नः अवगताशेषविवक्षितपदार्थः एकदेशतोऽवगतविवक्षितपदार्थ इति । तत्र प्रथमोऽव्युत्पन्नत्वान्नाध्यवस्यतीति विवक्षितपदस्यार्थम् । द्वितीयः संशेते कोऽर्थोऽस्य पदस्याधिकृत इति, प्रकृतार्थादन्यमर्थमादाय विपर्यस्यति वा । द्वितीयवत्तृतीयोऽपि संशेते विपर्यस्यति वा । तत्र यद्यव्युत्पन्नः पर्यायार्थिको भवेन्निक्षेपः ; अव्युत्पन्नव्युत्पादनमुखेन अप्रकृतनिराकरणाय । अथ द्रव्यार्थिकः ; तद्द्वारेण प्रकृतनिरूपणाय अशेषनिक्षेपा उच्यन्ते व्यतिरेकधर्मनिर्णयमन्तरेण विधिनिर्णयानुपपत्तेः । द्वितीयतृतीययोः संशयविनाशायाशेषनिक्षेपकथनम् । तयोरेव विपर्यस्यतोः प्रकृतार्थावधारणार्थं निक्षेपः क्रियते । उक्तं हि–अवगयणिवारणट्ठं पयदस्स परूवणाणिमित्तं च । संसयविणासणट्ठं तच्चत्थवधारणट्ठं च ॥"–धवला टी० सत्प्ररू० पृ० ३० । (३) "जत्थ य जं जाणेज्जा निक्खेवं निक्खिवे निरवसेसं । जत्थ वि अ न जाणेज्जा चउक्कगं निक्खिवे तत्थ ॥"–अनु० सू० ८। (४) तत्त्वार्थसूत्रादौ । (५) "नामस्थापनाद्रव्यभावतस्तन्न्यासः ।"–त० सू० १।५।

त[ज्]**ज्ञानहेतुः** कुतः ? इत्याह–**शब्दार्थप्रत्ययाङ्गम्** इति **शब्दानु**(त्) कारणात् **अर्थस्य** घटादेर्ग्राहकः यः **प्रत्ययः** तस्याङ्गं निमित्तम्। एतदपि कुतः ? इत्याह–**विरचयति यतः**। कम् ? **भेदम्**। कथम् ? **यथाशक्ति**। केषाम् ? **वाच्यानाम्** अभिधेयानाम्। क्व ? **वाचकेषु**। यत एवं **ततः** प्रतिपत्तुः पुरुषस्य **श्रुतविषयविकल्पोपलम्भेः** उपयोगं निक्षेप इति। ५

अस्यानि (अस्मान्नि[1]) बन्धनस्थानादर्थानादाय व्युत्पादयन्नाह–**न्यास** इत्यादि।

**[न्यासः समासतो नामस्थापनाद्रव्यभावतः।**
**व्यासतोऽङ्गप्रविष्टाङ्गबहिःश्रुतविकल्पकः॥२॥**

**यस्य कस्यचित् अनिर्दिष्टविशेषस्य निमित्तान्तरानपेक्षं संज्ञाकर्म नाम[2]। [3]व्यस्तसमस्तैकानेकजीवाजीवविषयतोपपत्तेः। [4]निमित्तान्तरं पुनः जातिः द्रव्यं गुणः क्रिया। १० [5]स्थापना सद्भावासद्भावभेदेन। तत्र··· किमनयेति सौगतः, सोऽयं घोटकारूढोऽपि विस्मृतघोटको जातः। अतोऽन्या असद्भावस्थापना। विवक्षितासाम्प्रतिकपर्यायविशेषस्थितिर्द्रव्यनिक्षेपः[6]। आगम···। तथैवोपयोगपरिणामलक्षणो भावनिक्षेप[7] इति। स व्यासतोऽनन्तविकल्पः तद्भेद···चेतनेतर···सकल···]**

**न्यासो** निक्षेपः **समासतः** संक्षेपेण **नामस्थापनाद्रव्यभावतः** एतानाश्रित्य भवति १५

(१) निबन्धनस्थानं मूलसूत्रमिति यावत्। (२) "नाम संज्ञाकर्म इत्यनर्थान्तरम्"–तत्त्वार्थाधि० भा० १।५। "अतद्गुणे वस्तुनि संव्यवहारार्थं पुरुषकारान्नियुज्यमानं संज्ञाकर्म नाम।"–स० सि० १।५। त० वा०, त० श्लो० १।५। विशेषा० गा० ६५। जैनतर्कभा० पृ० २५। बृहत्कल्पभा० गा० ११। (३) तुलना–"किञ्चिद्धि प्रतीतमेकजीवनाम यथा डित्थ इति, किञ्चिदनेकजीवनाम यथा यूथ इति, किञ्चिदेकाजीवनाम यथा घट इति, किञ्चिदनेकाजीवनाम यथा प्रासाद इति, किञ्चिदेकजीव-एकाजीवनाम यथा प्रतीहार इति, किञ्चिदेकजीवानेकाजीवनाम यथा काहार इति, किञ्चिदेकाजीव-अनेकजीवनाम यथा मन्दुरेति, किञ्चिदनेकजीवाजीवनाम यथा नगरमिति प्रतिविषयमवान्तरभेदाद् बहुधा भिद्यते संव्यवहाराय नाम लोके।"–त० श्लो० पृ० ९८। (४) तुलना–"नाम्नो वक्तुरभिप्रायो निमित्तं कथितं समम्। तस्मादन्यत्तु जात्यादि निमित्तान्तरमिष्यते॥"–त० श्लो० पृ० ९९। (५) "यः काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते जीव इति स्थापनाजीवः। देवताप्रतिकृतिवद् इन्द्रो रुद्रः स्कन्द विष्णुरिति।"–तत्त्वार्थाधि० भा० १।५। "काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु सोऽयमिति स्थाप्यमाना स्थापना।"–स० सि० १।५। "जं पुण तयत्थसुण्णं तयभिपाएण तारिसागारं। कीरइ व णिरागारं इत्तरमियरं व सा ठवणा॥"–विशेषा० गा० २६। "सब्भावमसब्भावे ठवणा पुण इदंकेदुमाईया। इत्तरमणित्तरा या ठवणा णामं तु आवकहं॥"–बृहत्क० भा० गा० १३। "सद्भावस्थापनया नियमः, असद्भावेन वाऽतद्रूपेति स्थूणेन्द्रवत्।"–नयचक्रवृ० लि० पृ० ३८१। जैनतर्कभा० पृ० २५। "आहिदणामगस्स अण्णस्स सोयमिदि ट्ठवणं ठवणा णाम। सा दुविहा सब्भावासब्भावट्ठवणा चेदि। तत्थ आगारवंतए वत्थुम्मि सब्भावट्ठवणा तव्विवरीया असब्भावट्ठवणा।"–धवलाटी० सम्प्ररू०। त० श्लो० पृ० १११। (६) "अनागतपरिणामविशेषं प्रति गृहीताभिमुख्यं द्रव्यम्, अतद्भवं वा।"–त० वा० १।५। त० श्लो० पृ० १११। बृहत्क० भा० गा० १४। विशेषा० गा० २८। जैनतर्कभा० पृ० २५। आ० नि० मलय० पृ० ६। (७) "वर्तमानतत्पर्यायोपलक्षितं द्रव्यं भावः।"–स० सि०, त० वा० १।५। त० श्लो० पृ० ११३। बृहत्क० भा० गा० १५। आ० नि० मलय० पृ० ९।

इति **व्यासनो** विस्तारतः **अङ्गप्रविष्ट-अङ्गबहिःश्रुतविकल्पकः** । आ चा रा दी नि **अङ्गानि** तेषु **प्रविष्टं** तदन्तर्भूतम् । यच्छ्रुतम् **अङ्गेभ्यो बहिः श्रुतं** तस्य **विकल्पा** भेदा यस्य स तथोक्तः ।

कारिकां व्याचष्टे–**यस्य** इत्यादिना । [५७३ ख] **यस्य कस्यचित्** चेतनस्य इतरस्य ५ वा **अनिर्दिष्टविशेषस्य संज्ञाकर्म** । किम् ? **नाम** । किंभूतम् ? इत्याह–**निमित्तान्तरानपेक्षम्** यस्य तत्कर्म क्रियते तत्तस्य निमित्तं ततोऽन्यज्ञा(त जा)त्यादिकं तदन्तरम्, तस्मिन् अनपेक्षा यस्य तत्तथोक्तम् । तस्य नाम्नो भेदं दर्शयन्नाह–**व्यस्त** इत्यादि । अश्च चो (अतश्चो)दाहार्य(र्यं) 'नाम' इति सम्बन्धः । कुतः ? इत्याह–**व्यस्तश्च समस्तश्च एकश्च अनेकश्च** ते एव **जीवाः(जीवाजीवाः)** ते **विषयो(या)** यस्य तत्तथोक्तम् तस्य भावः तत्ता तस्याः **उपपत्तेः** । तथा

१० [व्य]स्तजीवविषयतोपपत्तेः, अयं मांसपिण्डो देवदत्तः अयं देवदत्त इत्यादिवत् । समस्तजीवविषयतोपपत्तेः, एते सर्वे गर्गादय इत्यादिवत् । एकजीवविषयतोपपत्तेः, नाभेयः पुरुदेव इत्यादिवत् । अनेकजीवविषयतोपपत्तेः अयं डित्थः अयं डवित्थः अयं जिनदत्त इति चत्वारो जीवभेदाः । तथा व्यस्ताऽजीवविषयतोपपत्तेः *"स(सः)" [जैनेन्द्र० १।३।२] *"नुत्य(नु वा)" [जैनेन्द्र० ४।४।४] *"क्यच(क्यचि)" [जैनेन्द्र० ५।२।१४२] इत्यादि । समस्ताजीवविषय-

१५ तोपपत्तेः *"भूवादयो धुः" [जैनेन्द्र० १।२।१] इत्यादिवत् । एकाजीवविषयतोपपत्तेः आकाशं कालो धर्मः अधर्म इत्यादिवत् । अनेकाजीवविषयतोपपत्तेः "तौ सत्" [जैनेन्द्र० २।२।१०५] इतिवत् । एतेऽपि चत्वारो विकल्पाः । किं पुनः निमित्तान्तरं यदनपेक्षं तदुच्यते ? इत्याह–**निमित्तान्तरं पुनः** इत्यादि । 'गौः' इत्येवमादौ **जातिः**[4] । 'दण्डी' इत्येवमादौ **द्रव्यम्**[5] । 'शुक्लः पटः' इत्यादौ **गुणः** । 'पाचकः' इत्यादौ **क्रिया**[6] । जत्यादिद्वारेण

२० अन्यत्र शब्दवृत्तेः ।

'ननु जात्यादौ वर्त्तमानः शब्दो यदि निमित्तान्तरमपेक्षते ; अनवस्था[५७४ क] । श्च (स्वतः) तत्र वर्त्तते ; अन्यत्रापि तथैव वर्त्ततां किमन्यनिमित्तवृत्तिकल्पनया' इति चेत् ; न ; उभयथापि शाब्दव्यवहारस्य दर्शनात् । एवं चोदयतापि प्र ज्ञा क रे ण प्रत्यक्षज्ञानग्राह्यतापेक्षया बहिरर्थे प्रत्यक्षव्यपदेशः क्रियते, नान्यथा अतिप्रसङ्गात् । अत एव अक्षाश्रितत्वोपलक्षित-

२५ वैशद्यापेक्षया ज्ञानेषु प्रत्यक्षव्यपदेशः *"तदंशः" [हेतुवि० पृ० ५३ ।] इत्यत्र[7] धर्मे अंशशब्दः न किंचिदपेक्ष्य क्रियते । यदि च, *"शब्दाः सङ्केतितं प्राहुः" [प्र०वा० ३।९१] स च सङ्केतो व्यवहारिजनायत्तः, व्यवहारिण एव जानन्ति किं तत्र भवतः प्रयासेन ? तदनुसारिणा केवलं भवता भाव्यं [व्य]वहारे अत्य(अध्य)क्षादिचिन्तापि दूरोत्सारिता स्यात् यदि भवदनुसारिणो व्यवहारिणः, ते च शाब्द उभयथा दृश्यन्ते इति यत्किंचिदेतत् ।

३० स्यादेतत् जात्यादिद्वारेण विशेषे शब्दनिक्षेपः किन्नामा स्यात् ? 'स्थापनानामा' इति, अन्यशब्दस्य अन्यत्रारोपाद् अर्हच्छब्दस्य असद्भावस्थापनावत् । अत एव नामानन्तरं स्थापनानिर्देशः ।

(१) नाम क्रियते । (२) निमित्तान्तरम् । (३) अजीवस्य । (४) गोत्वजातिः । (५) दण्डद्रव्यम् । (६) पचनक्रिया । (७) "तदंशो ही तद्धर्म एव ।"–हेतुबि० ।

नामानन्तरं स्थापनाभेदमाह–**स्थापना** इत्यादिना । कुतः ? इत्याह–**सद्भाव** इत्यादि। **सद्भावस्थापना(नां)** व्याचष्टे **तत्र** इत्यादिना । किमनया प्रयोजनम् अन्य यात्ति (थाप्ति) तया इति सौगतः ; सोऽयं **घोटकारूढोऽपि विस्मृतघोटको जातः** । स्वयं वहिरर्थसदृशे ज्ञाने [1]तद्व्यवहारप्रवर्त्तनात् । असद्भावस्थापनामाह–'**अतोऽन्या**' इत्यादिना । विकल्पाकारे अर्थसदृशे अर्थव्यवहारं प्रवर्त्तयन् यदि [2]मामनर्थिकां ब्रूयात् तथैव परिहर्त्तव्यः ।　५

द्रव्यनिक्षेपमाह–**द्रव्य** इत्यादिना । कः ? इत्याह–[५७४ख] **विवक्षितश्चासौ असाम्प्रतिको**ऽनागतः **पर्यायविशेष**श्च तत्र **स्थिति**र्यस्य स तथोक्तः ।

दृश्ये प्राप्यसमारोपं कुर्वन् [3]प्रत्यक्षमानता ।
निमित्तं द्रव्यनिक्षेपं कः क्षेप्तुं क्षमते जनः ॥

तद्भेदमाह–**आगम** इत्यादिना ।　१०

भावनिक्षेपमाह–**तथोपयोग** इत्यादिना । **तथैव** विवक्षितप्रकारेणैव **उपयोगो** व्यापारः **परिणामो लक्षणं** यस्य स तथोक्तः '**आगमनोआगमप्रभेदः**' इति अनुवर्त्तते **भावनिक्षेप** इति । किं चत्वार एव भेदा निक्षेपस्य ? न, इत्यादि (त्याह–) स निक्षेपो **व्यासतोऽनन्तविकल्पः** प्रतिपत्तव्यः । कुतः ? इत्याह–**तद्भेद** इत्यादि यतः । एतदपि कुतः ? इत्याह–**चेतनेतर** इत्यादि । पुनरपि कुतः ? इत्याह–**सकल** इत्यादि ।　१५

एतदेव अनन्तरं दर्शयन्नाह–**भाव** इत्यादि ।

**[भावः पर्यायार्थिकस्य शेषा द्रव्यार्थिकास्त्रयः ।**
**प्रस्तुतव्याक्रियार्थः क्रियन्ते[तत्त्वदर्शिभिः] ॥३॥**

**पर्यायमात्रं,...तथा द्रव्यार्थिकस्य प्रत्येतव्यः नाम...सर्वथा शुद्धस्य अशुद्धस्य च द्रव्यस्यैवोपलब्धिः ।]**　२०

**भावः** भावनिक्षेपः **[पर्यायार्थिकस्य] शेषा** निक्षेपाः **द्रव्यार्थिक(काः) क्रियन्ते** । [कति ?] इत्याह–**त्रयः** । कुतस्तेऽभ्युपगम्यते (न्ते) ? इत्याह–**प्रस्तुत** इत्यादि।

कारिकां विवृण्वन्नाह–**पर्यायमात्रम्** इत्यादि । राजपथीकृतमेतदनेकधा । **तथा** तेन प्रकारेण **द्रव्यार्थिकस्य प्रत्येतव्ये(व्यः)**निक्षेपः। कुतः ? इत्याह–**नाम** इत्यादि । नहि पर्यायमात्रे तत्संभवः । न खलु द्रव्यमस्ति, अनुपलब्धेः खरविषाणवत्, तत्कथं [4]तद्वान् नयः, यस्य नामादिनिक्षेपः स्यादिति चेत् ; अत्राह–**सर्वथा** इत्यादि । सर्वेण प्रत्यक्षानुमानप्रकारेण बहिरन्तःप्रकारेण भ्रान्तेतरप्रत्ययाकारणे (कारेण) **द्रव्यस्यैव** उपलब्धिः । किंभूतस्य ? इत्याह–**शुद्धस्य** निर्विशेषणस्य **अशुद्धस्य** सविशेषण[स्य] [५७५क] ।　२५

तदुपलब्धिं दर्शयन्नाह–**अविकल्प(ल्प्य)** इत्यादि ।

(१) अर्थव्यवहार । (२) स्थापनाम् । (३) प्रत्यक्षप्रमाणता । (४) "नामं ठवणा दविए त्ति एस दव्वट्ठियस्स निक्खेवो । भावो उ पज्जवट्ठिअस्स परूवणा एस परमत्थो ॥"–सन्मति० १।६ । (५) द्रव्यार्थिकः ।

**[अविकल्प्य स्वमन्यस्मात् सत्तामात्रमचेतनात् ।
पश्यन् विजानाति द्रव्यादि मतिभेदैर्विकल्पयन् ॥४॥**

**स्वस्मात्\`\`\`स्वप्नादौ विशेषविप्लवेऽपि सन्मात्रे विप्लवमपश्यतां शुद्धद्रव्यग्रहः । ज्ञाने अर्थवति सकृत् स्वार्थस्वभावप्रकाशनभ्रान्तिरपि स्यात् । भ्रान्तिज्ञानं पुनः\`\`\`तन्न**
५ **तथा अवग्रहादिभिः विकल्पयन् अवश्यं स्वपरस्वभावविवेकी । तन्न\`\`\`सर्वथा ।]**

**अविकल्पा(ल्प्य** अ)विच्छिद्य । किम् ? इत्याह–**स्वम्** आत्मानम् । कुतः ? इत्याह–**अन्यस्मात्** । किंभूतात् ? इत्याह–**अचेतन** इत्यादि, तस्मात्मद् (तस्मात्, यत्) **अविकल्प(ल्प्य इ)** ति च द्रष्टव्यम् । **सत्तामात्रं पश्यन्** दर्शनेन विषयीकुर्वन् **आत्मा 'शुद्धस्य'** इति दर्शितम् । तथाहि–यस्य विशेषस्य यद्ग्रहणं तत् तत्सामान्यग्रहणपूर्वकं
१० यथा स्थाणुपुरुषत्वविशेषावायद्व[य]ग्रहणं तदूर्ध्वतासामान्यग्रहणपूर्वकम्, सामान्यविशेषग्रहणं च अवग्रहज्ञानम्, ततः तदपि तत्सामान्यग्रहणपूर्वकम् । न च सत्तातोऽपरं सामान्यम्, यतोऽनवस्था स्यात् । नापि तद्ग्रहणं विशेषग्रहणम् ; यतो हेतोर्व्यभिचारः । सः पश्यन् किं करोति ? [इति] आह–**विजानाति द्रव्यादि** विशिष्टं द्रव्यं जानाति । कैः ? इत्याह–**मतिभेदैरव**(रव)ग्रहादिभिः । किं कुर्वन् ? **विकल्पयन्** व्यवस्यन् । अनेन **'अशुद्धस्य'** इति
१५ कथितम् ।

**स्वस्मादि[त्या]** दि ना कारिकार्थमाह । ननु विषस्या(विशेषस्या)ग्रहणे कथं द्रव्यस्य ग्रहणं तयोर्भेदप्रसङ्गादिति चेत ; अत्राह–**विप्लवेऽपि** इत्यादि । **स्वप्नादौ** आदिशब्देन तैमिरिकादिदशापरिग्रहः, तत्र, यो **विशेषेषु** स्वशरीरादिकृस्ट(कृश)त्वादिभेदेषु **विप्लवः** अन्यथाग्रहः तस्मिन्नपि, न केवलमविप्लवे साति(सति) सिद्धः । कः ? इत्याह–**शुद्धद्रव्यग्रहः** । केषाम् ?
२० इत्याह–**विप्लवमपश्यताम्** । क्वे(क ? इ)त्याह–**सन्मात्रे** इति । एतदुक्तं भवति–यथा स्थौल्यादिग्रहणविप्लवे स्वशरीरादिकाय(र्थाऽ)ग्रहणे पुतणन (?) तथा विशेषाग्रहणेऽपि सन्मात्रग्रहणमिति ।

ननु स्वप्नादौ यथार्थग्रहणं कथं [५७५ख] विप्लवसंभवः यतः तन्निरासार्थं प्रमाणलक्षणप्रणयनमिति चेत् ? अत्राह–**ज्ञाने** । किंभूते ? **अर्थवति** । **सकृ**देकहेलया । **स्वार्थयोः स्वार्थस्य** वा **स्वभावाः** काश्यादयः **तेषां प्रकाशनं** तस्य **भ्रान्तिरपि** न केवलम् अभ्रान्तिः
२५ **स्यात्** । तथाहि–अरिष्टे बाहुस्थौल्यदर्शिनः तत्कार्श्यमपश्यन्तोऽपि बाहुं पश्यन्ति, तददर्शने वा नारिष्टदर्शनं विपरीतदर्शनाभावात्, 'मदीयोऽयं बाहुः' अविसंवादश्च न स्यादिति । शेषं चिन्तितमत्र ।

भवत्वेवं[त]तः किम् ? इत्याह–**भ्रान्तिज्ञानम्** इत्यादि । स्वप्नेत्यादिविप्लवज्ञानं **पुनः** । शेषं पूर्वं व्याख्यातम् । उपसंहरन्नाह–**तन्न** इत्यादि । **तथा** तेन भ्रान्तिज्ञानप्रकारेण
३० **अवग्रहादिभिः विकल्पयन्** वा अवस्यन् **नावश्यं स्वपरस्वभावविवेकी** । **तन्न** इत्यादि अत्रोपसंहारः । कुतः ? इत्याह–**सर्वथा** इत्यादि ।

---

(१) विशेष-द्रव्ययोः ।

पश्यन् स्वलक्षणमेव पश्यतीति चेत्; अत्राह-**स्वतश्च** इत्यादि ।

**[स्वतश्च कार्यतोऽर्थानां संवित्तिः सम्प्रतीयते ।**
**द्रव्यात्मनां वाऽशुद्धानां शुद्धानां न चान्यथा ॥५॥**

**न हि···प्रत्येयम् । बहिरन्तश्च···कथम् ?]**

**स्वतः** स्वरूपेण **कार्यतः** फलरूपेण **च अर्थानां संवित्तिः** संवेदनं सम्बन्धि **संप्रतीयते** । किंभूतानाम् ? इत्याह-**द्रव्यात्मनाम्** द्रव्यस्वभावानाम् । पुनरपि किंभूतानाम् ? **अशुद्धानां शुद्धानां वा नच** नैव **अन्यथा** अन्यथात्मनां संवित्तिः **संप्रतीयते** । अनेन स्वभावकार्योपलब्धि(ब्धिं) दर्शयति । ५

**'नहि'** इत्यादिना **'न चान्यथा'** इति व्याचष्टे, **'प्रत्येयम्'** इति पर्यन्तेन । शेषं विवृण्वन्नाह-**बहिरन्तश्च** इत्यादि । १०

**कथमिति** प्रश्ने; **अवीक्ष्य** इत्यादि उत्तरम् ।

**[अवीक्ष्य पारिमण्डल्यं स्थूलाकृतीक्षणात् ।**
**तथा क्षणक्षयं वार्थं वीक्षेरन् द्रव्यतत्त्वतः ॥६॥**

**पुद्गलानां पारिमण्डल्यादिभेदान् पश्यन्त एव तत्सामान्यमेकं स्थूलं स्वभावं प्रतिक्षणं पश्यन्ति । प्रत्यक्षबुद्धौ [तथा प्रतिभासनात्] तदतिक्रमे तथा तत्क्षणक्षयादिविशेषमदृष्ट्वैव उभयत्र द्रव्यतत्त्वं पश्यन्त्येव अविशेषात् ।]** १५

**अवीक्ष्य** । किम् ? **पारिमण्डल्यं** रूपम् । कुतः ? इत्याहा(ह)-**स्थूलाकृतीक्षणात्** कारणात् **तथा क्षणक्षयं वा**[ऽ]वीक्ष्य तत एव [५७६ ख] किं वीक्षेरन् ? इत्याह-**अर्थं वीक्षेरन्** । केन ? इत्याह-**द्रव्यतत्त्वतो** द्रव्यरूपेण ।

कारिकां विवृण्वन्नाह-**पुद्गलानाम्** इत्यादि । **पुद्गलानां** परमाणुरूपाणां **पारिमण्डल्यादिभेदान् पश्यन्त एव** जनाः । किं कुर्वन्ति ? **पश्यन्ति** । किम् ? इत्याह-**तद्** इत्यादि । **तेषां** पुद्गलानां **सामान्यमेकं स्थूलं स्वभावं** (वम्) । कदा ? इत्याह-**प्रतिक्षणम्** । कुतः ? इत्याह-**प्रत्यक्षबुद्धौ** इत्यादि । तदपि कुतः ? इत्याह-**तदतिक्रम** इत्यादि । **तस्य** तथाप्रतिभासस्य **अतिक्रम** इत्यर्थः । **तथा** तेन प्रकारेण **तेषां क्षणक्षयादिविशेषमदृष्टैव**(**ष्ट्वैव**) **द्रव्यतत्त्वं पश्यन्त्येव** । क्व ? इत्याह-**उभयत्र** बहिरन्तश्च । कुतः ? **अविशेषात्** । २० २५

स्यान्मतम्, तत्सामान्यैकस्थूलस्वभावस्य घनादितद् (वनादिवत्) बहिरन्तश्च भ्रान्तत्वेनायोगात्, अतोऽन्यदेवाद्वयं ज्ञानतत्त्वमिति; तत्राह-**विज्ञानम्** इत्यादि ।

**[विज्ञानं ग्राह्यनिर्भासवैकल्यात्मानमात्मनः ।**
**संविदत्स्वं कथञ्चिच्चेदात्मानं द्रव्यसाधनम् ॥७॥**

---

(१) विपरीतस्वरूपाणाम् । (२) स्थूलाकृतीक्षणादेव । (३) तथा प्रतिभासनात् इति । (४) यथा दूरविरलतरुषु एकं वनमिति प्रत्ययो भ्रान्त्या भवति, यथा वा एकं घनं सघनमिति वा प्रत्ययः ।

ज्ञानं ग्राह्याकारविविक्तमात्मस्वभावमननुभवत् सत्ताद्याकारमात्मनोऽनुभवत् पर्यायैकान्तकल्पनामस्तंगमयेत् क्षणक्षयादि[प्रतिभासाभावात्]। तत एव स्वभावनैरात्म्यं प्रतिपद्यमानः स्वामेव वृत्तिं स्ववाचा विडम्बयति आप्तागमविलोपात्। प्रमाणमन्तरेण तदभावप्रतिपत्तौ भावप्रतिपत्तिरेव किन्न स्यादिति यत्किञ्चिदेतत्, प्रस्तुतेतर-
५ कथनात्।]

**विज्ञानं द्रव्यसाधनम्**। किंकुर्वन ? इत्याह–**संविदन्**। किम् ? इत्याह–**ग्राह्यनिर्भासवैकल्यात्मानं** ग्राह्यो निर्भासो ग्राह्याकारः तस्य वैकल्यम् अभावः तदेव आत्मा स्वभावः तम्। कस्य ? इत्याह–**आत्मनः**। पुनरपि किंकुर्वन ? इत्याह–**कथंचित्** सच्चेतनादिप्रकारेण **स्वम् आत्मानं संविदन्**। एवं मन्यते–तत्सामान्यैकस्थूलस्वभावो
१० बहिरिव ज्ञानस्यापि यदि नास्ति, ज्ञानं तर्हि ततः तत्त्वतो भिन्नम्, तद्भेदं च आत्मनो यदि जानाति, तदेव न तद्भ्रान्तिः। नहि नीलज्ञानं पीताद्भिन्नम् आत्मानं प्रतिपद्यमानं तत्र भ्रान्तम्। अथ तत्स्वभावं पश्यति, स्वं च ततो भिन्नं ततोऽयमदोषः; निराकारदर्शनम्, *"**नान्योऽनुभाव्यो बुद्ध्यास्ति**" [प्र० वा० २।३२७] इत्यादि विरोधश्च। [५७६ ख] असत इव सतोऽपि भिन्नस्य वेदनसंभवाद् बहिरर्थसिद्धिः। तत्र च विभ्रमे; तत्र विभागप्रसाधनात्। अथ
१५ ततो विवेकमात्मनो नावैति[2]; अनेकान्तसिद्धिरिति।

कारिकार्थमुपदिशति '**ज्ञानम्**' इत्यादिना। **ज्ञानम्** आत्मनः स्वभावम्। किंभूतम् ? **ग्राह्याकारविविक्तम् अननुभवत् सत्यता(सत्ता)द्याकारमात्मनोऽनुभवत्**। किं कुर्यात् ? इत्याह–**पर्यायैकान्त** इत्यादि। इतश्च तत्कल्पनामस्तु ग(स्तङ्ग)मयेत्; इत्याह–**क्षणक्षयादि**। इत्यादि। 'तर्हि ग्राह्याकारविवित्तं(क्त)स्वभावमिव सत्ताद्याकारमपि आत्मनो नानुभवति' इति
२० शून्यवादी; तत्राह–**तत एव** इत्यादि। **तत एव** अनन्तरन्यायात् **स्वभावनैरात्म्यं** सकलशून्यत्वं **प्रतिपद्यमानः** सौगतः **स्वामेव वृत्तिं** स्वचेष्टितं शून्यताभ्युपगमलक्षणं **स्ववाचा विडम्बयति** वित्सारयति, तत्प्रतिपादकवचनाभ्युपगमे तदयोगात्।

न्यायान्तरं ज्ञातुं परः पृच्छति। **कथमितं(ति)** ? तं प्रत्युत्तरमाह–**आप्तागम** इत्यादि। तद्विलोपः तत्त्वत इष्यते, संवृत्या तदभ्युपगमादिति चेत; अत्राह–**प्रमाणमन्तरेण तदभाव-**
२५ **प्रतिपत्तौ** तेषाम् आप्तादीनाम् अभावसंवित्तौ अङ्गीक्रियमाणायां **भावप्रतिपत्तिरेव** आत्मादीनां **किन्न स्यात्** भवेदेव[इति] **यत्किञ्चिदेतत्** न किंचिदेतत् परमतम्। कुतः ? इत्याह–**प्रस्तुतेरत(प्रस्तुतेतर)** इत्यादि।

[एतदन्यत्रातिदिशन्नाह–**शब्द** इत्यादि।

**[शब्दनिर्णययोरन्यापोहैकान्तसमाश्रयः।**
३० **प्रतिपन्नः सौगतेन प्रतिव्यूढोऽनया दिशा ॥८॥**

(१) स्वस्वरूपम्। (२) इति चेत्। (३) प्रतिभासाभावात्। (४) शकलशून्यताऽयोगात्, वचनस्य सद्भावस्वीकारात्। (५) आप्तागमविलोपः। (६) 'कथनात्' इति।

**न हि···पुनः···एतदपि तादृगेव। शब्दो निर्णयो वा तत्त्वाप्रत्यायनात् किं कुर्वाणोऽन्यापोहं करोति ? प्रतिपत्रभिप्रायानुसरणेऽपि यथा अन्यापोहोऽर्थः, तथैव स्वार्थप्रत्यायनमविशेषात्। अन्यथा-]**

शब्दनिर्ण[य]योः सम्बन्धी यः। कः ? इत्याह-**अन्यापोहैकान्तसमाश्रयः।** किंभूतः ? **प्रतिपन्नः सौगतेन** अङ्गीकृतः। स किम् ? इत्याह-**प्रतिव्यूढो** [५७७क] ५ निरस्तः। केन ? इत्याह-**अनया दिशा 'स्वामेव वृत्तिस्ववाचा'** इत्यादिना मार्गेण।

कारिकार्थं स्पष्टयति **नहि** इत्यादिना। गतार्थमेतत्। सविकल्पं तत्साधयतीति चेत् अत्राह-**पुर(पुन)** रित्यादो(दि। ए)**तदपि तादृगेव**।

ननु यद्यपि निर्विषयो विकल्पः, तथापि अन्यापोहकरणात् व्यवहारोपयोगी इति चेत्; अत्राह-**किं कुर्वाण** इत्यादि। **किं कुर्वाणः** न किंचित्कुर्वन् **शब्दो निर्णयो वा अन्यापोहं करोति** १० इत्युच्यते। एवं मन्यते-यदि सः तत्त्वं विपर्यासीकरोति; तदैत भूत्वमन्यतोऽस्मात् वाक्याद्व्यावृत्तमिति(तदा एतत्तत्त्वमन्यतः अन्यस्माद् वाक्याद् व्यावृत्तमिति) प्रतिपद्यमानः अन्यापोहं करोति इत्युच्यते अन्यथा वचनमात्रकमिति। तदाह-**तत्त्वाप्रत्यायनादि**ति।

ननु परमार्थतोऽन्यापोहकरोऽप्यसौ न भवति, केवलं प्रतिपत्रभिप्रायवशादेवमुच्यते इति चेत्; अत्राह-**प्रतिपत्रभिप्राय** इत्यादि। 'शब्दादे[र्व]स्तुनो नित्यादिव्यावृत्तिरेव अनित्यादि- १५ शब्दनिर्णयाभ्यां क्रियते, न वस्तु विधिरूपतया विपर्यासीक्रियते' इति यः **प्रतिपत्तॄणामभिप्रायः** तस्यानुसरणेऽपि **यथा अन्यापोहः** शब्दनिर्णययोरर्थः **तथैव स्वार्थप्रत्यायनं** तदभिप्रायस्य तत्राप्यविशेषात्। युक्तिबाधनमुभयत्र।

तदनङ्गीकरण(णे) दूषणमाह-**अन्यथा** इत्यादि। एवं मन्यते-अन्यापोहः पर्युदासरूपः, प्रसज्यरूपो वा स्यात् ? प्रथमपक्षे तयोर्वस्तुविषयत्वम्। अन्यत्र; **अन्यथा** इत्यादि दूषणमिति। २०

तदाह-**निर्विकल्पात्** इत्यादिना।

**[निर्विकल्पात् कुतः सिद्धिः ? सिद्धिश्चेन्निर्णयात्मिका।**
**सविकल्पात् कुतः सिद्धिः ? तत्त्वं चेन्नास्य गोचरः ॥९॥**

**जीवे अजीवे वा पर्यायतत्त्वं निक्षिपन् सौगतो न प्रत्यक्षतो निक्षेप्तुमर्हति, तद् [अनिर्णयात्मकत्वात्] समारोप[व्यवच्छेदकत्वाभावात्] अन्यथा [अतिप्रसङ्गात्]** २५ **नापि विकल्पतः; तद्भावाविपर्यत्वात् विपक्षाविशेषाच्च। स्वलक्षणदर्शने प्रभवविकल्पस्यापि सर्वथा मिथ्यात्वात् कुत एव भावनिक्षेपः ? तदुपेक्षिततत्त्वार्थैः यथाविकल्पप्रतिभासनं निक्षेपकरणे द्रव्यनिक्षेपोऽपि किन्न स्यात् ?]**

---

(१) पृ० ७४४। (२) शब्दो निर्णयो वा। (३) शब्दोऽनित्यः इत्यत्र। (४) "तेनान्यापोहविषयाः प्रोक्ताः सामान्यगोचराः। शब्दाश्च बुद्धयश्चैव वस्तुन्येषामसंभवात् ॥-अन्यापोहविषया आचार्येण प्रोक्ताः। अपोहः शब्दलिङ्गाभ्यां प्रतिपाद्यते इति ब्रुवता।"-प्र० वा०, मनोरथ० ३।१३३। (५) शब्दनिर्णययोः। (६) प्रसज्यपक्षे।

**निर्विकल्पात्** प्रत्यक्षात् **कुतो** नैव **सिद्धिः** तत्त्वप्रतिपत्तिः[७७७ख] सिद्धिश्चेद् यदि **निर्णयात्मिका सविकल्पात् कुतः सिद्धिः तत्त्वं चेत् तस्य(नास्य)** सविकल्पस्य **गोचर** इति व्यापाराविशेषप्रसङ्गः।

कारिकां विवृण्वन्नाह–**पर्यायतत्त्वम्** इत्यादि। **जीवे अजीवे वा पर्यायतत्त्वं निक्षिपन्** ५ योजयन् **सौगतः न प्रत्यक्षतो निक्षेप्तुं योजयितुमर्हति**। कुतः? इत्याह–**तद्** इत्यादि। **तद्** इत्यनेन प्रत्यक्षमविकल्पकं प्रत्यवमृशति। तदपि कुतः? इत्याह–**समारोप** इत्यादि। तदनभ्युपगमे दूषणमाह–**अन्यथा** इत्यादि। **विकल्पतो** निक्षेप्तुमर्हति इति चेत्; अत्राह–**नापि** इत्यादि। कुतः? इत्याह–**तद्भावाविषयत्वात्** पर्यायसत्ताऽगोचरत्वाद् विकल्पस्य। हेत्वन्तरमाह–**विपक्ष** इत्यादि। **विपक्षो** द्रव्यतत्त्वं तत्र **अविशेषाच्च** तस्य। अथ अनुमान-
१० विकल्पाद्(ल्पो) वस्तुप्रतिबन्धेन प्रमाणम्, तन्निक्षेप्तुमर्हतीत्युच्यते; तत्राह–**[स्व]लक्षणदर्शन** इत्यादि। **स्वलक्षण**मात्रतत्त्वमिति यद्दर्शनं मतं तस्मिन् **स्वलक्षणदर्शने** अङ्गीक्रियमाणे **प्रभवविकल्पस्यापि** हेतुफलनिर्णयस्यापि न केवलं तादात्म्यनिर्णयस्य **सर्वथा मिथ्यात्वात् कुत एव भावनिक्षेपः?** हेतुफलभावोऽपि विकल्पमाध्ये(ध्यो) नाविकल्पमाध्य इति मन्यते।

स्यान्मतम्–भवतु प्रभवविकल्पः सर्वथा मिथ्या, तथापि तत एव व्यवहार(र)भङ्गभयात्
१५ हेतुफलभावं प्रतिपाद्य अनुमानानुमेयव्यवहारं प्रतियन्ति सौगताः ततोऽनुमानविकल्पात् तन्निक्षेप इति; तत्राह–**तदुपेक्षित** इत्यादि। स क्षणस्थायी निरंशः [५७८क] **उपेक्षितोऽ**वज्ञातः **तत्त्वार्थो** यैः सौगतैः तैः **यथाविकल्पप्रतिभासनं** विकल्पप्रतिभासनानतिक्रमेण, **निक्षेपकरणे द्रव्यनिक्षेपोऽपि किन्न स्यात्?** तत्रापि कल्पनया हेतुफलभावस्य अनुमानादिव्यवहारनिमित्तस्य भावादिति भावः।

२० ननु परमार्थतो निरंशं प्रतिभासाद्वैततत्त्वम् अन्यत् सर्वं मिथ्या विकल्पबुद्धेरुपप्लवमात्रम्, तद्वशात् पर्यायतत्त्वनिक्षेप इति चेत्; अत्राह–**मिथ्या** इत्यादि।

**[मिथ्याविकल्पनिक्षेपे संग्रहः संश्रितो वरम्।**
**सन्तानान्तरमुत्सृज्य क्षणभङ्गमनन्वयम् ॥१०॥**

**सर्वमेकात्मकं तत्त्वं केवलमविद्या आत्मनि विनिर्भासभेदादसतां जन्म दर्शयतीति**
२५ **एतावता सर्वं सुस्थितम्। नहि...भेदलक्षणं। स्वयं...न चापरम्। तदशक्यः...नहि व्यापारव्याहारादिनिर्भासज्ञानं स्वोपादानप्रकृतेर्भवितुमर्हति इति किं कारणान्तरकल्पनया? मिथ्यैकान्त...]**

**मिथ्याविकल्पेन निक्षेपे** पर्यायतत्त्वयोजने अभ्युपगम्यमाने **संग्रहसंसृतो (संग्रहः संश्रितो) वरम्।** किं कृत्वा? इत्याह–**क्षणभङ्गमुत्सृज्य** त्यक्त्वा। किंभूतम्?

(१) अनिर्णयात्मकत्वात्। (२) व्यवच्छेदकत्वाभावात्। (३) अतिप्रसङ्गात्। (४) विकल्पतः। (५) परम्परया। (६) द्रव्यनिक्षेपेऽपि। (७) अद्वैततत्त्वस्वीकारात्।

**अनन्वयं** दृष्टान्तरहितम् । अथवा, द्रव्यानश्यति रहित (द्रव्यान्वयविरहितं) **सन्तानान्तरं** च **उत्सृज्य ।**

कारिकां व्याचष्टे **सर्वम्** इत्यादिना । नीलादिसुखादिनान(ज्ञानं) **सर्वम् एकात्मकम्** एकस्वभावं **तत्त्वं** परमार्थरूपम् । कथं चित्रप्रतिभास इति चेत् ? अत्राह–**केवलम्** इत्यादि । **अविद्या कर्त्री(कर्त्री)दर्शयति** । किम् ? इत्याह–**जन्म** इत्यादि । किंभूता[ना]म् ?**असताम्** । ५ क्व ? इत्याह–**आत्मनि** । कुतः ? इत्याह–**निर्भासभेदात्** तद्भेदमाश्रित्य इत्येवम् **एतावता सर्वं सुस्थितम्** । स्यादेतत्, प्रतिभासभेदात् विरुद्धधर्माध्यासाच्च नानात्वमेव युक्तमिति कथं सर्वमेकात्मकमिति चेत् ? अत्राह–**नहि** इत्यादि[1] **भेदलक्षण**पर्यन्तं सुगमम् । कुतः ? इत्याह **स्वयम्** इत्यादि । ततोऽन्यद्भेदलक्षणमिति चेत् ; अत्राह–**न चापरम्** इत्यादि । प्रकृतं निगमयन्नाह– **तदशक्य** इत्यादि । १०

ननु माभूदन्वयः, तथापि अन्यथानुपपत्त्या सत्त्वादिकं क्षणभङ्गं साधयति इति चेत् ; अत्राह–**नहि** [५७८ख] इत्यादि । सुगमम् । कथं सन्तानान्तरव्यसनं वादिनः प्रेक्षाकारितां व्याहन्ति इति चेत् ? अत्राह–**व्यापार** इत्यादि । **[व्यापारव्याहारादि] निर्भासज्ञानं स्वोपादानं(न)प्रकृते**रविद्याप्रकृतेः **भवितुमर्हति इति** एवं हेतोर्वा[2] **किं कारणान्तरस्य** सन्तानान्तरलक्षणस्य **कल्पनया ?** कुतः ? इत्याह–**मिथ्यैकान्त** इत्यादि । तत्सिद्धेः सन्तानान्तरसिद्धि- १५ रिति ।

एवं संग्रहनयान् (हनयान्) कुर्व[त]स्तन्निक्षेपमाह–**विद्या** इत्यादिना ।

**[विद्याविद्याविनिर्भासात् नित्यानित्यत्वसंभवात् ।**
**स्वार्थस्वरूपयोः सिद्धिः द्वयरूपेति नैगमः ॥११॥**

साकल्येन नित्यक्षणिकैकान्तयोः ग्राह्यग्राहकबहिरन्तर्मुखप्रतिभास इति व्यवस्था । २० तत्र स्वसंविन्मात्रं नित्यं तावतः सर्वत्राविशेषात् । शेषं कादाचित्कम् । एतदुक्तं च–

*"अभिन्नः संविदात्मार्थः भाति भेदीव सः पुनः ।
प्रतिभासादिभेदं स्वापप्रबोधादौ न भिद्यते॥" इति ।

बोधाकारेण सर्वत्राविशेषोऽविप्रतिपत्तेः । तदभावे मिद्धादेरनुपपत्तेः अवस्थाचतुष्टयाभावस्तदवस्थ एव । तथा तदागन्तुभिः सुखादिनीलादिनिर्भासैः भेदिनीमिव वृत्ति- २५ मनुभवति ।]

**विद्या** तत्त्वज्ञानम् **अविद्या** विभ्रमज्ञानं तयो**र्विनिर्भासात्** प्रतीतेः **नित्यानित्यत्वसंभवो** य एकत्र **तस्मात् स्वार्थस्वरूपयोः** स्वस्वरूपस्य अर्थ(अर्थ)स्वरूपस्य च **सिद्धिः** निष्पत्तिः निर्णीतिर्वा **द्वयरूपा** नित्यानित्यत्वस्वभावा **इत्येवं नैगमः ।**

**साकल्येन** इत्यादिना कारिकां व्याचष्टे–**साकल्येन** अनवयवेन **नित्यक्षणिकैकान्तयोः** ३०

(१) 'नहि' इति प्रारभ्य । (२) हेतुः ।

नित्यैकान्ते क्षणिकैकान्ते च अयं **ग्राह्याकारो** नीलादिस्थूलाद्याकारः अयं **ग्राहकाकारः** अयं **बहिर्मुखप्रतिभासः अयमन्तर्मुखप्रतिभासः** इत्येवं **व्यवस्था** स्थितिः । किं कृत्वा ? इत्याह– **तत्र** इत्यादि । **तत्र** तस्मिन्नत्र(स्मिन् अनन्तर)न्याये सति **स्वसंविन्मात्रम्** स्वशब्देन परसंविदं निराचष्टे[1] **नित्यं** कालान्तरस्थायि । कुतः ? इह(एतत ?) **तावतः** स्वसंविन्मात्रस्य **सर्वत्र**
५ स्वसन्तानसुखादौ **अविशेषात्** । **शेषं** सुगमादि । किंभूतम ? **कादाचित्कम्** अनित्यमेव । अन्य[त्रा]प्येतदुक्तमिति दर्शयन्नाह–**एतदुक्तं च** इत्यादि । कथमुक्तमिति चेत् ? उच्यते– **अभिन्नोऽखण्डः** । कः ? इत्याह–**संविदात्मा स एवार्थः** संवित्स्वभावो जीव इत्यर्थः । किमभिन्न एव ? न, इत्याह–[५७९ क] **भेदा(दी)व भाति** मनाक् भेदी प्रतिभातीत्यर्थः । कुतः ? इत्याह–**प्रतिभासादिभेदेन** आदिशब्दात् प्रयोजनादिभेदो गृह्यते । कुतो[ऽ]भिन्नम् ?
१० (न्नः ?) इत्याह–**स** इत्यादि । [**सः** संविदा]त्मार्थः **[पुनः] स्वापप्रबोधादौ** आदिशब्देन जन्ममरणादिपरिग्रहः, **न भिद्यते** सन्तानान्तरं (रं वन) नाना न भवति इति । एतदेव व्याचष्टे– **बोधाकारेण** चेतनारूपेण **सर्वत्र** स्वसुखादावविशेषा[ऽ]भेदो ज्ञानस्य । कुतः ? इत्याह– **अविप्रतिपत्तेः** इत्यादि । तदपि कुतः ? इत्याह–**स्वाप** इत्यादि । ननु स्वापे ज्ञानं नास्त्येव इति चेत्; अत्राह–**तदभाव** [इत्यादि । **तदभावे**] ज्ञानस्य असति **मिद्धादेः अनुपपत्तेः**
१५ इति । **मिद्धो** निद्रा **आदिर्यस्य** मूर्च्छादेः तस्यानुपपत्तेः मरणोपपत्तेः **अवस्थाचतुष्टयाभावः**[2] **तदवस्था(स्थ) एव** । पुनस्तत्रैव ज्ञानोदयात् नायं प्रसङ्ग इति चेत् ; न; अहेतुकोदयायोगात् । जाग्रज्ज्ञानहेतुकत्वं[6] निरस्तम् , चिरविनष्टस्य अकारणत्वात् , इतरथा अन्त्यचित्तं पुनः तत्रैव शरीरे चित्र(चित्त)कारणमिति न मरणं नाम इति । अर्थावेधकर्मवशात् देहान्तरं तदारम्भकमिष्यते; न; तद्व्यतिरेकेण कर्मणोऽभावात् । तदेव विशिष्टं कर्म इति चेत् ; न; विशिष्टस्य
२० (विनष्टस्य) खरविषाणोवम(पम)स्य का विशिष्टता नाम ? स्वकाले सर्वस्यापि सत्त्वमिति न स्वप्नादिदर्शनम् अनर्थकहेतुकं स्यात् । तथाव्यवहाराभावात् स्यादिति चेत् ; इतरत्र समानम् । तन्न स्वप्नादौ ज्ञानाभावः ।

ननु कोऽयं मिद्धादिर्नाम ? ज्ञानाभावश्चेत् ; स्वापाभावः । तदभावश्चेत् ; विरुद्धो हेतुः इति चेत् ; 'अनुपलक्षितज्ञानभावः' इति प्रतिपादितम् । तदस्तित्वं 'सुखेनाहं सुप्तः' इति
२५ [५७९ख] पुनर्विकल्पोदयात् *"पुनर्विकल्पयन् किंचित्" [प्र० वा० २।१२५] इत्यादिवत्[10] । तदनित्यतां दर्शयन्नाह–**तथा** इत्यादि । तेन स्वापप्रबोधादौ चैतन्यानतिशयप्रकारेण । **तदित्यादि** क्वचित् पाठः । तच्चैतन्यम् इत्यर्थः । **[आ]गन्तुभिः** कादाचित्कैः **सुखादिनीलादिनिर्भासैः** सुखादिभिः नीलादिनिर्भासैः तदनुभवे **भेदिनीमिव वृत्तिमनुभवति** ज्ञानमिति ।

(१) निराकरोति । (२) प्रतौ चतुरक्षरमितं स्थानं रिक्तमस्ति । (३) प्रतौ अष्टाक्षरमितं स्थानं रिक्तं वर्तते । (४) जाग्रत्स्वप्नसुषुप्तिमरणलक्षणावस्थाचतुष्टय । (५) आत्मनि । (६) प्रबोधज्ञानस्य । (७) जाग्रज्ज्ञानस्य । (८) आवेधः संस्कारः । (९) स्वापादौ ज्ञानसत्त्वम् । (१०) 'किंचिदासीन्मे कल्पनेदृशी ।' यथा विकल्पावस्थाया ऊर्ध्वं पुनर्विकल्पयन् पुमान् आसीत् मे कल्पनेदृशीति वेत्ति ।'–प्र० वा० मनोरथ० । (११) सिद्धमिति ।

ततः किं सिद्धम् इत्याह–**यथा** इत्यादि ।

**[यथा चैतन्यभेदोऽयं भवेदागन्तुकैस्तथा ।**
**जातिभेदस्ततस्तत्त्वं पृथक् च नित्यात्मकम् ॥१२॥**

**चित्रसंविदः संभाव्यनिरंशस्वभावस्य सर्वथानुपलब्धौ निरुपाख्यतैव स्यात् अनवस्थाप्रसङ्गात् । न च तस्याः प्रतिपत्तिः प्रमाणाभावात् । तदेतेन सम्बन्धपरीक्षा प्रतिव्यूढा । कथं हि सम्बन्धाभावे बहिरन्तर्मुखादिप्रतिभासनियमः क्वचित् प्रतीयेत ? नहि···कुतः ग्राह्याद्याकाराणां स्वभावभेदः तदेकत्वहानेः इति नामस्थापनाद्रव्यभेदात् निक्षेपस्तत्रैव ।]**

**यथा चैतन्यस्य भेदोऽयं** नानात्वमिदं **भवेत्** । कैः ? इत्याह–**आगन्तुकैः** अनन्तरोक्तैः **तथा जातिभेदः** सत्ता[न]नानात्वं **ततः तत्त्वं** नित्यात्मकम् । संकरः स्यादिति चेत्; अत्राह–**पृथक्** परस्परं भिन्नं **च** अनेन *"**सर्वस्योभयरूपत्वे**" [प्र०वा० ३।१८१] [1]इत्यादि निरस्तम् ।

कारिकां विवृण्वन्नाह–**चित्र** इत्यादि । ननु चित्रता एकस्याः संविदोऽपि नेष्यते *"**किं स्यात् सा चित्रतैकस्याम्**" [प्र०वा० २।२१०] [2]इत्यादि वचनात्, केवलं सा निरंशापि सांशेव भाति इति चेत्; अत्राह–**संभाव्य** इत्यादि । **संभाव्यः** संविदो यः **निरंशः स्वभावः तस्य सर्वथा** प्रत्यक्षानुमानप्रकारेण **अनुपलब्धौ** सत्य[म]नुपलब्धस्वभावस्य सभेदस्य तथा विरोधप्रकारेण संभावनायाम् **निरुपाख्यतैव** नैरात्म्यमेव **स्यात्** । कुतः ? इत्याह–**अनवस्थाप्रसङ्गात्** । क्वचित्तत्त्वे अवस्थितेरभावानुषङ्गात् *"**मायामरीचिप्रभृतिप्रतिभासवदसत्त्वेऽप्यदोषः**" [प्र० वार्तिकाल० ३।२११] इति वचनात् इष्यते एव तदिति चेत्; अत्राह–**न च** इत्यादि । नैव **तस्याः** निरुपाख्यतायाः **प्रतिपत्तिः** । [५८०क] कुतः ? इत्याह–**प्रमाणाभावात्** । स्वसंवेदनाध्यक्षं तत्र प्रमाणमित्येके । विवत्तदेकम् (?) इत्यपरे । तथा च किं जातम् ? इत्याह–**तदेतेन** इत्यादि । **तेन एतेन** संविद एकस्याः चित्रतापादनेन च **संबन्धपरीक्षा** [3] सम्बन्धनिराक्रिया धर्मकीर्त्तिसम्बन्धिनी **प्रतिव्यूढा** । कुतः ? इत्याह–**कथं** हिर्यस्मात् **सम्बन्धाभावे बहिरन्तर्मुखादिप्रतिभासनियमो** ग्राह्यग्राहकसंवेदनाकाराणां नियमः नियतज्ञानायत्तता **क्वचित् प्रतीयेत** ? तादात्म्यान्नियम इति चेत्; अत्राह–**नहि** इत्यादि । **कुतः स्वभावभेदो ग्राह्याद्याकाराणाम्** । तथापि तादात्म्यैकान्ते दूषणमाह–**तदेकत्व** इत्यादि । तत्तस्मात् **एकत्वहानेः** कारणात् इत्येवं **निक्षेपः** । कुतः ? इत्याह–**तत्रैव** निगमनिक्षेप एव **नामस्थापनाद्रव्यभेदात्** ।

व्यवहारनयनिक्षेपं दर्शयन्नाह– [4]

(१) 'तद्विशेषनिराकृतेः । चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥' इति शेषः । (२) 'न स्यात्तस्यां मतावपि । यदीदं स्वयमर्थेभ्यो रोचते तत्र के वयम् ॥' इति शेषः । (३) एतन्नामकं प्रकरणं धर्मकीर्तिकृतम् । इयं प्रमेयकमलमार्तण्डे (पृ० ५०९) संपूर्णा समुद्धृता । (४) 'व्यवहारः प्रवर्तते' इति सम्बन्धः ।

**[स्याच्चेतनादिनिक्षेपे व्यवहारैर्विना जगत् ।**
**सर्वथार्थक्रियाऽयोगो नित्यत्वे च क्षणक्षये ॥१३॥**

क्षणिकाक्षणिकयोः अन्योऽन्यापेक्षायां [व्यवहारः प्रवर्त्तते ।]

**स्यात्** भवेत् **व्यवहारैः विना जगत्** । कस्मिन् ? इत्याह-**नित्यत्वे क्षणक्षये**
५ **च चेतनादिनिक्षेपे** क्रियमाणे । कुतः ? इत्याह-**सर्वथा** क्रमयौगपद्यप्रकारेण **अर्थक्रियाऽयोगो** नित्यत्वे क्षणक्षये च इति सम्बन्धः ।

कारिकार्थमुपदर्शयन्नाह-**क्षणिक** इत्यादि । कस्याम् ? इत्याह-**परस्पर** इत्यादि । **क्षणिकाक्षणिकयोः अन्योऽन्यापेक्षायां** सत्याम् ।

कथं तर्हि व्यवहारनिक्षेपः प्रवर्त्तते ? इत्याह-**जीवादि** इत्यादि ।

१० **[जीवादिभेदमाश्रित्य तत्पर्यायांश्च निक्षिपन् ।**
**प्रसिद्धं हि व्यवहारस्य मिथ्यात्वं भेदसंश्रितम् ॥१४॥**

द्रव्यपर्याययोर्भेदैकान्तमवलम्ब्यापि द्रव्यस्य पर्यायात्मता अङ्गीकर्त्तव्या । अन्यथा अभावाविशेषात् । तथा च किं पृथक् पर्यायकल्पनया ? तावता यतो व्यवहारसिद्धिः इति व्यवहारनयस्तथैव विनिक्षिपेत् ।]

१५ **जीव आदि**र्यस्य पुद्गलादेः स तथोक्तः तस्य **भेदं** नानात्वम् **आश्रित्य तत्पर्यायांश्च** जीवादिपर्यायांश्च आश्रित्य **निक्षिपन्** जीवादीन्यपा(न् पर्या)येषु पर्यायान् [५८०ख] जीवादौ योजयन् **'व्यवहारः प्रवर्त्तते'** इत्युपस्कारः । कुतः ? इत्याह-**प्रसिद्धं हि** यस्मात् **मिथ्यात्वं व्यवहारस्य भेदसंश्रितं** द्रव्यपर्यायनानात्वाश्रितम् ।

कारिकार्थं कथयति **द्रव्या(व्येत्या)दिना** : **द्रव्यपर्याययोः भेदैकान्तमवलम्ब्यापि**
२० वैशेषिकादिभिः **द्रव्यस्य** आत्मादेः **पर्यायात्मता** अपरापरकार्योत्पादकापरसामर्थ्यपरिणामात्मता **अङ्गीकर्त्तव्या** । कुतः ? इत्याह-**अन्यथा** इत्यादि । **अन्यथा** तदनङ्गीकरणप्रकारेण **अभावाविशेषात्** शशविषाणाद्यविशेषात् द्रव्यस्य सा अङ्गीकर्त्तव्या इति । तदङ्गीकरणमस्तु इति चेत्; अत्राह-**तथा च** तदङ्गीकरणप्रकारेण च **किं पृथक् पर्यायकल्पनया ?** कुतः ? इत्याह-**तावता** तत्सामर्थ्यपरिणाममात्रेण **व्यवहारसिद्धिर्यतः इति** एवं **व्यवहारनयः** । **तथैव**
२५ तेनैव प्रकारेण **विनिक्षेपे(विनिक्षिपेत्)** द्रव्यपर्यायान् इत्यध्याहारः ।

शब्दादिनयानां निक्षेपं दर्शयन्नाह-**काल**[1] इत्यादि । व्याख्यातार्थमेतत् ।

(१) तुलना-"कालकारकलिङ्गानां भेदाच्छब्दोऽर्थभेदकृत् । अभिरूढस्तु पर्यायैरित्थम्भूतः क्रियाश्रयः ॥४४॥ कालभेदात् तावद्भूत् भवति भविष्यति इति, कारकभेदात् करोति क्रियते इत्यादि, लिङ्गभेदात् देवदत्तो देवदत्ता इति, तथा पर्यायभेदात् इन्द्रः शक्रः पुरन्दर इति तथैतौ शब्दसमभिरूढौ । क्रियाश्रय एवम्भूतः, कुर्वत एव कारकत्वम् ।"-लघी०स्ववृ०श्लो० ४४ ।

[काल.................................।
...................................॥१५॥

न केवलम्। लिङ्गभेदाद् वस्तुस्वभावभेदं धिषणा...न केवलं लिङ्ग...यथा इन्द्रः। इत्थम्भूतस्य...तदेवम्...]

'न केवलम्' इत्यादिना कारिकार्थमाह। लिङ्गभेदाद् वस्तुस्वभावभेदं उदाहरणमाह– धिषणा इत्यादि। ५

समभिरूढं दर्शयति। न केवलं लिङ्ग इत्यादिना। यथा इन्द्रः इत्यादि निदर्शनम् अत्रैव। इत्थम्भूतस्य इत्यादिना। शास्त्रार्थमुपसंहरन्नाह–तदेवम् इत्यादि।

शास्त्रान्ते मङ्गलमाह–जीयात् इत्यादि।

[जीयात्.................................. १०
........................................
........................................
........................................॥१६॥]

इति सि द्धि वि नि श्च य टी का याम् अ न न्त वी र्य विरचितायां
निक्षेपसिद्धिः द्वादशमः प्रस्तावः समाप्तमिति (प्र इति) ॥छ॥ १५

---

# [ समाप्तोऽयं ग्रन्थः ]

---

(१) उदाहरणम्।

## [दातुः लेखकस्य च प्रशस्तिः]

श्रीतोज्जृम्भितबोधनिष्ठुर [५८१ क] नखैः मिथ्येभकुम्भस्थलम् ,
ध्वस्तं येन तुकोद्भवोद्भवमृगो दृप्तिस्वनैस्त्रासितः ।
यश्चानु (णु) व्रतभूरिबन्धुरसटाटोपैरलं भ्राजितः ,
राजत्येष कवीन्द्रसंस्तुतगुणः श्री शा न्ति कण्ठीरवः ॥१॥
पात्रेष्वेव करोति दत्तिमतुलां सत्यं विवेकार्णदि ,
स्वान्ताकल्पितगोचरां बहुतरां छायैद्धकल्पद्रुमः ।
हित्वानेककुपात्रदत्तिमहितां स्वैरं स्वयं सर्वथा ,
प्राप्नोत्येव तदोपमां जनतुतां श्री शा न्ति भव्यात्मनः ॥२॥
यो गोत्रोन्नतबन्धुकैरववने संपूर्णचन्द्रायते ,
स्वस्वान्तम (न्ते च वि) शुद्धिशीतलकराकान्तो कृतात्मा वरः ।
यस्य प्रोर्जितभूरिकीर्त्तिजलधौ डिण्डीरपिण्डायते ।
मध्यीभूतमिदं जगत्त्रयमसौ शा न्ति गुणी (न्तिर्गुणी) भ्राजताम् ॥३॥
तेनाणुव्रतधारिणा गुणभृता भव्यात्मना शा न्ति ना ,
भाष्यं सि द्धि वि नि श्च यस्य विशदं संलेखयित्वा परम् ।
निर्वाणोन्नतमारकूटशिखरं सोपानमारोहताम् ।
संदत्तं गणि ना ग दे व यमिने स्याद्वादविद्याविदे ॥४॥

❀

मंगलमहा श्री । संवत १६६२ वर्षे लिखितं विष्णुदासेनं (न) ।

❀

श्रीआर्यरक्षितगुरोः प्रसूते विशाले गच्छे लसन्मुनिकुले विधिपक्षनाम्नि ।
सूरीश्वरा गुणनिधानसुनामधेया आसन् विशुद्धयशो(शसो) जगति प्रसिद्धाः ॥१॥
तत्पट्टैकतरणिः तरणिर्भवाब्धौ श्री ध र्म मू र्तिरिति सूरिवरो विभाति ।
सौभाग्यभाग्यसुखसद्गुणरत्नरत्नगोत्रः पवित्रचरितो महितो विनेयैः ॥२॥

[५८१ ख]

❀

श्रेयसे ज्ञानभाण्डागारलिखिते सिद्धिविनिश्चयटीका वाच्यमाना चानन्दतु ।
नामडागोत्रजो ···················· गिराः ।
साधुः श्री ध न रा जा ह्वो ग्रन्थमेनमलीलिखत् ॥१॥